आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः २०

अच्युतरायमोडकविरचितपूर्णानन्देन्दुकौमुद्याख्यव्याख्यसमेतः

श्रीमद्विद्यारण्यमुनिविरचितः

# जीवन्मुक्तिविवेकः ।

एतत्पुस्तकं

वेदशास्त्रसंपन्नैः पणशीकरोपाह्वैर्वासुदेवशास्त्रिभिः

कै० वे० शा० रा० गोखले इत्युपाह्वैर्गणेश-

शास्त्रिभिश्च संशोधितम्

तच्च

हरि नारायण आपटे

इत्येतैः

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८३८

खिस्ताब्दाः १९१६



मूल्यं पादोनं रूपकचतुष्टयम् ( ३।१२ )

आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः २०

अच्युतरायमोडकविरचितपूर्णानन्देन्दुकौमुद्याख्यव्याख्यसमेतः

श्रीमद्विद्यारण्यमुनिविरचितः

# जीवन्मुक्तिविवेकः ।

एतत्पुस्तकं

वेदशास्त्रसंपन्नैः पणशीकरोपाह्ववासुदेवशास्त्रिभिः

वे० शा० रा० गोखले इत्युपाह्वगणेश-

शास्त्रिभिश्च संशोधितम्

तच्च

हरि नारायण आपटे

इत्येतैः

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८३८

खिस्ताब्दाः १९१६



मूल्यं पादोनं रूपकचतुष्टयम् ( ३।१२ )

ॐ तत्सद्ब्रह्मणे नमः ।

अच्युतरायमोडकविरचितपूर्णानन्देन्दुकौमुद्याख्यव्याख्यासमेतः

# श्रीमद्विद्यारण्यमुनिविरचितः
# जीवन्मुक्तिविवेकः ।

## तत्र प्रथमं जीवन्मुक्तिप्रमाणप्रकरणम् ।

यं वेदान्तवसन्तलब्धिजनितस्वाचार्यसत्कोकिल-
घोतद्वाक्यकलादवाप्य निजमात्मानं तदीयार्भकाः ॥
पञ्चम्यादिकभूमिकाम्रलतिकास्वद्वैतविद्यामनः-
संस्कारक्षतिमञ्जरीकलनतः क्रीडन्ति तं नौम्यहम् ॥ १ ॥
मत्स्यः श्रीपूज्यपादः कमठवपुरसौ विश्वरूपो वराहः ।
पद्माङ्घ्रिस्त्रोटकाख्यो नरहरिरथ हस्तामलो वामनोऽभूत् ॥
सर्वज्ञात्मा भृगुभ्राड्रविकुलतिलकोऽसौ प्रकाशात्मना आ+ ।
नन्दज्ञानस्तु कृष्णो भवभुजगभयान्मामिमे मोचयन्तु ॥ २ ॥
अत्यन्तद्रुतहेमवर्णरुचिरं कारुण्यरत्नाकरं
श्रुत्यन्तस्थिरलोचनाम्बुजयुगं सर्वात्मनासर्वगम् ॥
संपूर्णामृतकान्तिकान्तवदनं भक्तेष्टसंवर्धनं
दत्तात्रेयमुपास्महे गुरुवरं भस्मैकभूषाम्बरम् ॥ ३ ॥
वेदस्वःशाखिशाखाविकसनमतुलं लेभिरे यत्र नित्यं
किं चाऽऽस्वादि द्विजेन्द्रैरमृतफलमपि स्वेच्छमानन्दसान्द्रैः ॥
यत्रैवाऽऽमोदसौदेरगणितसुमनोलिड्वैररप्यगुञ्जि
विद्यारण्येऽद्य तस्मिन्मम चिरममृतैर्मानसं पूर्णमस्तु ॥ ४ ॥
नित्यं यद्धृदि वेदमौलिविलसल्लक्ष्मीः सुखं राजते
यत्कण्ठे पदवाक्यमानविकसद्रेखात्रयं भ्राजते ॥
यो वादीन्द्रमहोग्रदैत्यनिचयं विध्वस्य भेजे यशः
श्रीनारायणदेशिकेशमनिशं तं नौमि पूर्णाशिषम् ॥ ५ ॥

---

+ छन्दोभङ्गभिया संधिर्न कृतः ।

गोपालकृष्णभजनैकसुधासमुद्रे शेते विरक्तिरमया सह यः सदैव ॥
वन्दे महापदविराजितदेवसंज्ञं श्रीसद्गुरुं शिवपदस्मरणप्रदं मे ॥ ६ ॥

योऽज्ञानेशधनुर्बभञ्ज यमद्यन्नैश्वर्यमाशावशं
येनानाशि तमश्वरावलिरदाद्यस्मै स्वसख्यं हरिः ॥
यस्माद्रात्रिचरेडबिभ्यददलद्यस्येक्षणेनाऽऽसुरी
संपद्यत्र रघूत्तमे गुरुवरे दृश्यं स मां पात्वलम् ॥ ७ ॥

श्रीविद्यारण्यवाणी क गहनविततार्द्वैतसत्यार्थयुक्ता
काहं नित्यं प्रकृत्याऽन्तरपि बहिरपि स्पष्टमालिन्यशाली ॥
एवं सत्यप्यहं स्यां किमु न पटुरलं तद्गतार्थप्रकाशे
सद्दृष्टिं प्राप्य सिद्धाञ्जनकण इव वै गूढरत्नाढ्यभूमौ ॥ ८ ॥

अवलम्बाय पदं मे नैव न वाक्यं न चास्ति मानमपि ।
मुनिमनस इव तथाऽपि श्रीगुरुकरुणाबलाद्यते स्वमुदे ॥ ९ ॥

संन्यासो वेदनेच्छाकृत इह गदितो विद्यया च द्विधाऽपि
जीवन्मुक्तेः स्वरूपं बहुलरमुदितं लक्षणं च प्रमाणम् ॥
अप्युक्तो वासनानां क्षय उपगदितश्चेतसोऽपि प्रणाशः ।
पश्चास्याः स्युः फलानीत्यभिहितमथ तद्बोधिवेदान्तवृत्तिः ॥ १० ॥

अथ पूर्णानन्देन्दुकौमुद्याः षोडशप्रकाशस्य जीवन्मुक्तिविवेकटीकात्मकस्य मङ्गलश्लोकदशकीयविषमविवृतिः—यं वेदान्तेति । वेदेत्यादि कलादित्यन्तमेकं पदम् । वेदान्त उपनिषद्भागः स एव वसन्त इत्यादौ सर्वत्राग्रे रूपकम् । तदीयेत्यत्र लुप्तोपमैव विद्याजन्मभ्यामपि वंशदर्शनात् । तथा चाऽऽथर्वणिकाः समामनन्ति—‘ त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसि ’ इति ॥ १ ॥

एवं शब्दापरोक्षवादप्रतिपादनपूर्वकं प्रकृतप्रकरणप्रतिपाद्यमवद्योत्य श्रीमद्भाष्यकारादीन्प्रधानपूर्वाचार्यानष्टमूर्त्यभिन्नत्वेनैव ध्वनयन्मत्स्याद्यष्टावेव भगवदवतारत्वेन श्रीकृष्णान्तान्सांप्रदायिकत्वसिद्ध्यर्थं प्रार्थयते—

मत्स्य इति । श्रीति । वेदवद्वेदान्तोद्धरणलीलासाम्याद्भगवति भाष्यकारे भगवदवतारीभूतमत्स्यरूपकम् । कमठेत्यादि । संसाराब्धिमथनपूर्वकविवेकाद्यद्वैतब्रह्मात्मैक्यसाक्षात्कारान्तरत्ननिष्कासनसाधनमन्दरधारणसमानवार्तिकविरचनलीलातौल्येन श्रीमत्सुरेश्वरापराभिधविश्वरूपाचार्ये कूर्मरूपकमपि । वराह इत्यादि । पञ्चपादिकाभिधायाः श्रीशारीरकभाष्यटीकायाः प्रकटनच्छलेनाद्वैतब्रह्मविद्याया एव भुव इव समुद्धरणलीलासाम्येन पद्मपादाचार्ये वराहरूपकमपि । त्रोटकेति । त्रोटकाचार्ये नृसिंहरूपकं तु ‘ भव शंकरदेशिक मे शरणम् ’ इत्यादित्रोटकवृत्तमात्रघटितश्रीमद्भाष्यकाराभिधस्वगुरुस्तोत्रकृतिलीलयैव मोहमहासुरसंहारपूर्वकं भक्ति-

मार्गैकप्रतिष्ठापनत एव। अथशब्दः प्रतिज्ञाताष्टव्यक्तिपूर्वदलतिर्यग्वैलक्षण्यार्थः। हस्तेति। हस्तामलकाचार्यः प्रसिद्ध एव। तत्र—

'घनच्छन्नदृष्टिर्घनच्छन्नमर्कं यथा मन्यते निष्प्रभं चातिमूढः।
तथा बद्धवद्भाति यो मूढदृष्टेः स नित्योपलब्धिस्वरूपोऽहमात्मा'॥

इत्यादिप्रसिद्धस्वात्मानुभवमात्रनिवेदनेन त्रिपादपरिमितभूमिमात्रयाचनात्त्रैलोक्यव्यापनवदखिलाद्वैतशास्त्ररहस्योक्तेस्तद्रूपकम्। सर्वेति सर्वज्ञात्ममुनीश्वरः संक्षेपशारीरकाचार्यः। तत्र भृगुभ्राजः परशुरामस्य रूपकं तु यावद्भेदवादिराजसादिसंपद्विदलनेन ब्राह्मणश्रेष्ठ एव स्वाराज्यप्रतिष्ठापनेनैव। रवीत्यादि। प्रकाशात्मेति। विवरणाचार्यः सुप्रथित एव। तत्रापि श्रीरामरूपकं मीमांसकोपलक्षितनिखिलभेदवादिराक्षसक्षपणादिना समुचितमेव। आनन्देति। आनन्दगिरिरितिभाष्यादिटीकाकारः प्रख्यात एव। तुशब्दोऽत्रानेकग्रन्थकर्तृत्वरूपवैलक्षण्यायैव। तेनात्रानन्तलीलाकर्तृश्रीकृष्णरूपकमपि सुघटमेव। फलितमाह भवेत्यादिशेषेण। अत्र भुजगरूपकेण द्वैतरूपसंसारस्य कल्पितत्वादि द्योत्यते॥ २॥

अथ श्रीदत्तात्रेयमप्युसंधत्ते—अत्यन्तेति॥ ३॥

इदानीं मूलकारं श्रीविद्यारण्यं महीकुर्वंस्तदवच्छेदेन स्वाभिमतं याचते—

वेदेति। वेद एव स्वःशाखी कल्पद्रुमस्तस्य याः शाखाः शाकलतैत्तिरीयाद्याः प्रसिद्धा एव। आमोदेति। 'आमोदः सोऽतिनिर्हारी' इत्यमरात्सुरभिगन्धस्तेन मोदैर्भोगमोक्षानन्दैः। अगणितेत्यादि। असंख्यातभृङ्गश्रेष्ठैरित्यर्थः। पक्षेऽनेकशुद्धनिरुद्धमनःसुखास्वादधुरंधरैरपीत्यर्थः। अगुञ्जि। 'एतत्साम गायन्नास्ते' इत्यादिश्रुतेः स्वानुभवप्रकाशनमप्यकारि। अमृतैः पञ्चम्यादिभूमिकानन्दैः। शिष्टं तु स्पष्टमेव॥ ४॥

अथाद्वैतशास्त्रप्रदं स्वाचार्यं प्रणमति—

नित्यमिति। वेदेति। सर्वोपनिषद्रहस्यविचारात्मकोत्तरमीमांसात्मकाद्वैतविद्यारूपश्रीरित्यर्थः। अपरं तु सरलमेव॥ ५॥

एवं शिवभक्त्युपदेशप्रदं श्रीगुरुमपि प्रणमति—

गोपालेति। महापदेति। महादेवाभिधम्। शिष्टं तु स्पष्टमेव॥ ६॥

अथ श्रीरघुवीरं क्षेत्रनियन्तारं परमगुरुवरं प्रार्थयन्सप्तकाण्डरामायणार्थं मङ्गलाष्टकरूपवाक्यसार्थं नवरसलक्षणव्यङ्ग्यार्थं च कथयति प्रथमादिसप्तविभक्तिभिरपि य इत्यादिना—

यः। अज्ञानेति। अज्ञानमेवेशधनुर्निर्गुणत्वाद्दुर्भेद्यत्वात्त्रैयम्बकशरासनं बभञ्जाखण्डयदित्यर्थः। अत्र प्रथमा विभक्तिर्बालकाण्डार्थो रौद्रो रसः। यमित्यादि। यमैश्वर्यं सार्वभौमराज्यं पक्षेऽणिमादि, आशावशं तृष्णापरं न धान्नत्र संपादयामासेत्यर्थः। अत्र द्वितीया विभक्तिः, अयोध्याकाण्डार्थः, शान्तो रसः। येनेत्यादि। येन तमश्चरावलिः खरादिचतु-

देशसहस्रराक्षसपङ्क्तिः । पक्षे कामक्रोधाद्यासुरसंपत् । अनाशि विध्वंसिता । अत्र तृतीया विभक्तिः, अरण्यकाण्डार्थः, अद्भुतो रसः । अदादित्यादि । हरिः सुग्रीवः, पक्षे परमात्मा यस्मै स्वसख्यमदाद्दत्तवान् । अत्र चतुर्थी विभक्तिः, किष्किन्धाकाण्डार्थः, हास्यो रसः । यस्मादित्यादि । अत्र पञ्चमी विभक्तिः, सुन्दरकाण्डार्थः । रात्रीति । रावणः पक्षे महामोहः । अबिभ्यद्भीतिं प्रापेति भयानको रसः । अदलदित्यादि । यस्येक्षणेन क्रूरतरकटाक्षेणैवाऽऽसुरी संपत्सकलसकुलरावणश्रीः पक्षे दम्भदर्पाद्यासुरसंपत्प्रसिद्धैव, अदलद्विदीर्णाऽभूदित्यर्थः । अत्र षष्ठी विभक्तिः, वीरो बीभत्सश्च रसः, युद्धकाण्डार्थः । यत्रेत्यादि । अत्र सप्तमी विभक्तिः, सर्वोत्तमत्वादिनोत्तरकाण्डार्थः, शृङ्गारो रसश्च । स इत्यादि । करुणो भक्तिश्च रसः ॥ ७ ॥

अथ प्रकृते स्वानधिकारमाशङ्क्य सदृष्टान्तं तत्पाटवं स्पष्टयति—

श्रीति ॥ ८ ॥

तत्रापि मानित्वं वारयति—

अवलम्बायेति ॥ ९ ॥

प्रकरणभेदमनुक्रामति—

संन्यास इति ॥ १० ॥

इह खलु सकलकारुणिकशिरोमणिर्भगवान्विद्यारण्याचार्यः प्रस्थानत्रयाद्यद्वैतशास्त्रे मन्दमध्याधिकारिणामसामर्थ्यं पश्यन्सूत्रभाष्यस्य तात्पर्यमधिकरणमालया संपूर्णोपनिषद्भाष्याणामनुभूतिप्रकाशेन वार्तिकविवरणयोश्च तत्साराभ्यां समुद्धार्य तत्राप्यशक्तानां मन्दतरमन्दतमाधिकारिणामनायासेन बोधसिद्ध्ये स्वगुरुं भगवन्तं भारतीतीर्थं संप्रार्थ्य तत्त्वविवेकादिविवेकपञ्चकं चित्रदीपं च स्वकृतं प्रदर्श्य ततस्तुष्टेन तेन तृप्तिदीपादिदीपचतुष्टयं योगानन्दाद्यानन्दपञ्चाध्यायीरूपो ब्रह्मानन्दश्च कृतः, सेयं पञ्चदशी सर्ववेदान्तगुरुलघुग्रन्थमथनसारात्मिका लोके प्रसिद्धा, तत्र तावद्ग्रन्थसरलत्वेनाधिकारिणामनधिकारिणां च सर्वेषां साधारण्येन पाटवात्प्रायशोऽनधिकारिणोऽपि तत्त्वविदंमन्याः सन्तस्तत्पौर्वापर्यतात्पर्यमविचार्यैव रागित्वाद्यासुरादिप्रकृतिवशादेव भरतादेरप्रवृत्तिः पुराणोक्तेति चेत्तदा—

'जक्षन्क्रीडन्रमन्निति विन्दन्नित्यश्रौषीर्न किं श्रुतिम्' ।

इत्यादिचित्रदीपादिवाक्याभासांस्तथा 'जनकादेः कथं राज्यमिति चेद्दृढबोधतः । तथा तवापि चेत्तर्कं पठ यद्वा कृषिं कुरु' इत्यादितृप्तिदीपादिवाक्याभासांस्तथा तन्मूलीभूतं 'जक्षत्क्रीडन्रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वेति न मातृवधेन न पितृवधेन न स्तेयेन न भ्रूणहत्यया नास्य पापम्' इति च श्रुतिवाक्यजातं तथा—

१ °त्तर्हि तर्कं पठ कृ° इति पाठान्तरम्।

'सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ।
सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते ॥
हत्वाऽपि स इमाँल्लोकान्न हन्ति न निबध्यते' ।

इत्यादिस्मृत्यादिवाक्यजातं च प्रमाणत्वेनोदाहृत्य यथेष्टचेष्टाः स्वयं कुर्वन्तः सन्तोऽन्यानपि मुमुक्षून्वञ्चयन्ति तदिदमसहमानः सञ्श्रीमद्भगवद्गीतानां सर्ववेदार्थत्वात्तद्भाष्याख्यप्रस्थानतात्पर्योद्धरणमिषेण यावदद्वैतनिष्ठापरायणश्रुतिस्मृतिपुराणेतिहासकाव्यादिवाक्यानां स्वारस्यं विवृण्वन्नुत्पन्नतत्त्वसाक्षात्काराणामकृतोपास्तित्वेनानुत्पन्नजीवन्मुक्तिफलत्वात्क्लिश्यमानानां नराणां जीवन्मुक्तिसाधनादि प्रदर्शयितुं ज्ञानितां मन्यानां तु तद्भ्रमभञ्जनपुरःसरं सन्मार्गप्रवृत्तिं द्योतयितुं च तथा मुमुक्षूणामपि पण्डितंमन्यवञ्चनान्मोचनपूर्वकं ज्ञाननिष्ठान्तप्रवृत्त्युत्साहार्थं च प्रसन्नमपि प्रौढकर्तृस्वाभाव्याद्गभीरतात्पर्यं जीवन्मुक्तिविवेकाख्यं प्रकरणं विस्तरेणाकरोत् । अतोऽस्य पञ्चदश्या शेषशेषिभावः संबन्धः । तद्गतवाक्यार्थविवरणहेतुत्वात्तेनैतन्मेलनपूर्वकं षोडशप्रकरणीत्यपि समाचक्षते केचिच्छिष्टाः । तत्र शिष्टाचारानुमितप्रयोजनकं 'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि प्रथन्ते शास्त्राणि वीरपुरुषकाण्यायुष्मत्पुरुषकाणि च भवन्ति' इत्यादिमहाभाष्याख्यस्मृतिमूलश्रुतिबोधितकर्तव्यताकं निर्विघ्नग्रन्थसमाप्तितत्प्रथितिफलकं—

'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः' ॥

इति श्रुतेः श्रीगुर्वभिन्नेश्वरप्रणामात्मकं मङ्गलं स्वयं विधाय शिष्यबोधायानेकार्थगर्भितेन स्वकीयमुद्राभूतेन प्रकृतप्रकरणविषयादिसूचकेन श्लोकेनाऽऽदौ निबध्नाति—

**यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।**

**यस्येति ।** 'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसः' इतिश्रुतेर्यस्य मायावच्छिन्नब्रह्मणः प्रजापतिरकामयत । प्रजायेयेतीत्युपक्रम्य 'स भूरिति व्याहरत्' 'स भूमिमसृजत' 'अग्निहोत्रं दर्शपूर्णमासौ यजूꣳषि' इत्यादितैत्तिरीयश्रुतेर्भूरादिव्याहृतिरूपवेदाक्षरोच्चारणपूर्वकं प्रजापतिशब्दवाच्यस्य शुद्धसत्त्वप्रधानाज्ञानप्रतिबिम्बरूपेश्वररजोगुणोपाधिकचतुर्मुखाख्यलीलाविग्रहस्य भूम्यादिसकलजगन्निर्मातृत्वश्रवणाद्वेदाक्षरोच्चारणानन्तरमित्यर्थः । यद्वा रजःप्रधानेश्वरस्य निःश्वसितमिव श्वासोच्छ्वासव्यापारजातमिवानायासेन समुत्पन्नत्वात्सर्वेऽप्यृगादिवेदा इत्युपलक्षणमितिहासादीनामपि तथा च यावच्छब्दब्रह्माऽपि यस्य निःश्वसितमेवेत्यर्थः । तथा यः परमात्मा वेदेभ्यः, वेद्यन्ते ते वेदाः साक्षिदृश्या मायासंकल्पास्तेभ्योऽनन्तरमखिलं संपूर्णं जगत् । जीव ईशो

---

१ ग. घ. °निश्वसितं । २ घ. °दा मायया योऽखि° ।

**निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥**

विशुद्धा चित्तथा जीवेशयोर्भिदा । अविद्या तच्चितोर्योगः षडस्माकमनादयः' इति वचनाद्विशुद्धचिदाख्यदृग्भास्यजीवाद्यनादिद्रश्यपञ्चकनिरुक्तवेदाभिन्नं द्वयमित्यर्थः । **निर्ममे ।** यथा ह्यैन्द्रजालिकः स्वसंकल्पादेव मन्त्रादिविशिष्टान्नगरादिकमुत्पादयत्येवं परमेश्वरोऽपि मायिकसंकल्पेभ्यो विश्वमुत्पादितवान्यस्तमहं वन्द इत्यन्वयः । माययेति पाठस्तु मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् । तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्' इतिश्रुतिमूलकत्वादादेय एव । अहं व्युत्थितास्थितप्रज्ञो ग्रन्थकृत् । वन्दे कायिकादित्रिविधप्रह्वीभावेन नमस्कारोमीति भावः । एतेन ब्रह्मणो जगज्जन्माद्यभिन्ननिमित्तोपादानकारणत्वं तटस्थलक्षणमुक्तम् । स्वरूपलक्षणार्थं विशिनष्टि—**विद्येति** । विद्या 'विद्ययाऽमृतमश्नुते' इतिश्रुतेर्ब्रह्मविद्यैव तीर्थमुपायो यस्मिन्विषये । यत्प्राप्तये ज्ञानं विनोपायान्तरं नैवास्तीत्याशयः । एतेन निर्गुणत्वं द्योतितम् । सगुणब्रह्मणस्तूपासनादिलभ्यत्वात् । स चासौ महेश्वरश्चेति कर्मधारयः । महत्त्वं त्रिविधपरिच्छेदशून्यत्वम् । ईश्वरत्वं चानन्तकोटिब्रह्माण्डात्मकानादिप्रपञ्चाधिष्ठानत्वेऽपि शुक्तिकादिवत्कालत्रयेऽपि तदस्पर्शित्वरूपं सामर्थ्यम् । उभयपदाभ्यामनन्तता कालत्रयाबाध्यत्वरूपिणी सत्यता च सूचिता । उपलक्षणमिदं ज्ञानत्वादेरपि । तं सच्चिदानन्दाद्वैतभूमात्मानमित्यर्थः । गुरुपक्षे तु—योगभ्रष्टत्वादीश्वरावतारत्वाद्वा स्वयंप्रभातवेदवेद्यस्य वेदाश्चत्वारोऽपि न त्वेक एव द्वौ त्रयो वा तेऽपि निःश्वसितमिव श्वासोच्छ्वासवदनायाससाध्या आसन् । उपलक्षणमिदं शास्त्रादेः । यस्य महामहिम्नः सद्गुरोर्वेदचतुष्टयमप्यनायासासिद्धं तस्य शास्त्रादिसिद्धेः कैव कथा । सकलशब्दब्रह्मपारंगतत्वोक्त्याऽनया श्रोत्रियत्वाख्यं श्रीगुरोः प्रथमं लक्षणं ध्वनितम् । तथा य आचार्यो वेदेभ्यः, तृतीयार्थे पञ्चमी पूर्वोत्तरकाण्डात्मकैर्वेदैरित्यर्थः । तथा च पूर्वकाण्डोक्तोपनयनमारभ्योत्तरकाण्डोक्तनिर्विकल्पकाखण्डाद्वैतब्रह्मात्मसाक्षात्कारान्तवेदोक्तमुक्तिसाधनैरितिभावः। जगत्, स्वप्नमनआदिसर्वद्वैतम् । अखिलम् । अकारो वासुदेवः स्यादिति कोशोक्तेर एव वासुदेवाख्यः परमात्मैव खिलं नामरूपादिबाधेनावशिष्टोंऽशो यस्य तत् । निर्ममे कृतवान् । एतेन वैदिकैकपूर्वोत्तरकाण्डोक्तसकलसाधनैः सर्वमपि द्वैतं वासुदेवमात्रात्मकं यः सद्गुरुः कृतवानिति वर्णनेन 'वासुदेवः सर्वमिति स महात्मा सुदुर्लभः' इति श्रीमद्भगवदुक्तेर्ब्रह्मनिष्ठत्वाख्यं द्वितीयं श्रीगुरुलक्षणं द्योतितम् । तथा च श्रुतिः—'तद्विज्ञानार्थं सद्गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्' इति । स्मृतिरपि—'उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः' इति । अत्र ज्ञानित्वं निरुक्तश्रोत्रियत्वम् । तत्त्वदर्शित्वं ब्रह्मनिष्ठत्वमिति । अहं तं विद्यातीर्थमहेश्वरं वन्दे । 'तीर्थं शास्त्राध्वरक्षेत्रोपायनारीरजःसु च । अवतारर्षिजुष्टाम्बुपात्रोपाध्यायमन्त्रिषु' इति मेदिनीकोशोक्तेर्विद्यायै तीर्थं शास्त्रं यस्य, विद्यैव तीर्थमध्वरो यस्य, विद्यैव तीर्थं क्षेत्रं काश्यादिरूपं यस्य विद्यायास्तीर्थमुपायो यस्मिन्, विद्यैव तीर्थं पुष्करादि यस्य, विद्यायास्तीर्थमुपाध्याय उप-

देष्टा, विद्यैव तीर्थं मन्त्र्यमात्यो यस्य यतिराजस्य स तथा । एतेनानुदरंभरित्वतत्त्वानुसंधानपरायणत्वतत्त्वविद्यान्यानपेक्षत्वमन्दाधिकारित्वविद्योपायप्रदत्वोपरागादिनैमित्तिकस्नानार्थमहातीर्थानपेक्षत्वोत्तमाधिकारितत्त्वविद्यादानदक्षत्वब्रह्मविद्येतरासहायत्ववर्णनैः पूर्वोक्तलक्षणप्रपञ्चेनान्वर्थनामत्वमुक्तम् । अत एव स एव महेश्वरः शिवः 'मायिनं तु महेश्वरम्' इतिश्रुतेरन्तर्यामी वा निरुक्तनिर्गुणपरमात्मा वा तम् । शेषं प्राग्वत् । अत्र 'आत्मनाम गुरोर्नाम नामातिकृपणस्य च । श्रेयस्कामो न गृह्णीयाज्ज्येष्ठापत्यकलत्रयोः' इतिवचनाद्भारतीतीर्थ इति स्वगुरोर्नाम तत्र भारतीस्थाने तत्पर्यायीभूतविद्याशब्दः । प्रयुक्तः । वस्तुतस्तु भारतीतीर्थः परमगुरुरेव विद्यातीर्थ एव स्वगुरुरेषाम् । तदुक्तमेतैः पूर्वाश्रमे पाराशरमाधवे—

सोऽहं प्राप्य विवेकतीर्थपदवीमाम्नायतीर्थे परं
मज्जन्सज्जनसङ्गतीर्थनिपुणः सद्वृत्ततीर्थं श्रयन् ॥
लब्धामाकलयन्प्रभावलहरीं श्रीभारतीतीर्थतो
विद्यातीर्थमुपाश्रयन्हृदि भजे श्रीकण्ठमव्याहतम् । इति ॥

एवं च यथाश्रुतमेव व्याख्यानम् इति ध्येयं धीरैः । अत्र हि प्रथमव्याख्याने यस्येत्यादिनिर्ममे इत्यन्तग्रन्थेन ब्रह्मणस्तटस्थलक्षणबोधितजन्मादिसूत्रशास्त्रयोनित्वसूत्रयोरर्थः संगृहीतः । तथा तमहं वन्द इत्यनेन गुर्वभिन्नपरमेश्वरचरणारविन्दयोरखण्डं कायिकादित्रिविधप्रह्वीभावेन मुमुक्षुर्वेदान्तविचारपरायणो भवेदिति जिज्ञासासूत्रार्थोऽपि सूचितः । 'तद्विद्धि प्रणिपातेन' इतिस्मृतेर्वेदान्तविचारस्य तत्पूर्वकत्वात् । शेषेण स्वरूपलक्षणबोधिसमन्वयसूत्रार्थश्च । ननु भाष्यादौ जन्मादिसूत्र एव ब्रह्मणः सत्यज्ञानानन्तानन्दादिस्वरूपलक्षणमपि विचारितं त्वया तु समन्वयसूत्रस्यैव तत्परत्वमुच्यत इत्यनुचितमेवेदमिति चेत् । सत्यम् । तैत्तिरीयकोपनिषदि ब्रह्मवल्ल्याख्यप्रथमप्रश्ने 'ब्रह्मविदाप्नोति परम्' इति सर्वमप्युत्तरकाण्डार्थं संक्षेपतः सूत्रितं कृत्वा किंलक्षणं तद्ब्रह्मेत्याकाङ्क्षायां 'सत्यं ज्ञानमनन्तं ब्रह्म' इति ब्रह्मणः स्वरूपलक्षणमुक्तम् । भृगुवल्ल्याख्यद्वितीयप्रश्ने तु भृग्वाख्यपुत्रस्य वरुणाख्यस्वपितरं प्रति ब्रह्मविषयकं प्रश्नमुपन्यस्य 'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्मेति' इति ब्रह्मणस्तटस्थलक्षणमेव जन्यजगज्जन्माद्यभिन्ननिमित्तोपादानत्वरूपमुक्तं तदेव च सूत्रकृता जन्माद्यस्य यत इति कण्ठतः सूत्रे संग्रथितम् । भाष्यादौ तु प्राक्तनमपि स्वरूपलक्षणं गृहीत्वोभयमपि विचारितं यद्यप्यथापि शुद्धस्वरूपलक्षणनिर्णयस्तु समन्वयसूत्रनिर्णीतब्रह्मात्मैक्यलक्षणाभेदमन्तरा नैव संभवतीति तथोक्तम् । एतेन शास्त्रैकदेशसंबद्धत्वमस्योक्तम् । शास्त्रात्कार्यान्तरस्थितत्वं तु वक्ष्ये विविदिषान्यासमित्यादिनाऽनुपदमेव वक्ष्यति । तदुक्तं पाराशरपुराणे—

शास्त्रैकदेशसंबद्धं शास्त्रात्कार्यान्तरे स्थितम् ॥
ग्रन्थं प्रकरणं प्राहुः प्रकरणज्ञा मनीषिणः' इति ॥

अत्र तमहं वन्द इति गुर्वादिभक्त्युपलक्षितसकल साधनवान्मुमुक्षुरधिकारी । विद्येत्यनेनाद्वैतात्मतत्त्वं विषयः । अहंपदेन जीवत्वादिद्वैतानर्थनिवृत्तिः प्रयोजनं च सूचितम् । संबन्धस्तु ग्रन्थविषययोः प्रतिपाद्यप्रतिपादकभावः सुप्रसिद्ध एवेति सर्वमवदातम् ॥ १ ॥

ननु कथमस्य प्रकरणस्य श्रीमद्गीताभाष्याख्यस्मृतिप्रस्थानतात्पर्यनिर्णायकत्वमित्याशङ्क्य तदाशयविवरणात्मकत्वादस्येति द्योतयंस्तत्त्वज्ञानतत्फलप्रयोजकसंन्यासयोर्विवेचनकथनं प्रतिजानीते वक्ष्य इत्यर्धेन—

**वक्ष्ये विविदिषान्यासं विद्वन्न्यासं च भेदतः ।**

वेत्तुमद्वैतात्मतत्त्वमपरोक्षीकर्तुमिच्छा विविदिषा तया न्यासः ससाधनकर्मादित्यागस्तम् । तथा **विद्वदिति** । अद्वैतात्मतत्त्वापरोक्षरूपब्रह्मविद्यावानेवात्र विद्वान् । ज्ञानस्य वृत्त्यात्मकत्वेन त्रिक्षणावस्थायित्वेऽपि तत्फलस्याज्ञानध्वंसस्य शुक्तिरजतादिध्वंसवदारोपितप्रतियोगिकत्वेनाधिष्ठानीभूताद्वैतात्मस्वप्रकाशैकरूपत्वान्नित्यापरोक्षतया तद्रूपेण सर्वदा वर्तमानतेति तद्वत्ता संगता । तेन क्रियमाणो न्यासः ससाधनकर्मादिकलापस्य विधिवत्त्यागस्तमित्यर्थः । **भेदतः** । श्रीमद्गीताभाष्याख्यस्मृतिप्रस्थानतात्पर्यीभूतसंकीर्णोभयसंन्यासविवेचनेन वक्ष्य इति योजना । तथा हि श्रीमद्गीताभाष्य उपक्रमे तावदुक्तम्—तस्यास्य शास्त्रस्य संक्षेपतः प्रयोजनं परं निःश्रेयसं सहेतुकस्य संसारस्यात्यन्तोपरमलक्षणं तच्च सर्वकर्मसंन्यासपूर्वकादात्मज्ञाननिष्ठारूपाद्धर्माद्भवतीति । उपसंहारेऽपि सर्वधर्मान्परित्यज्येतिश्लोकव्याख्याने—ततश्च सर्वकर्मसंन्यासाज्ज्ञाननिष्ठायामात्यन्तिकः संसारोपरम इति सिद्धमिति च । अत्र सर्वकर्मसंन्यासपूर्वकादिति सर्वकर्मसंन्यासादिति च पदाभ्यां विविदिषासंन्यासावश्यकतोक्ता । आत्मज्ञाननिष्ठारूपाद्धर्मादिति ज्ञाननिष्ठायामिति च पदाभ्यां तु विद्वत्संन्यासावश्यकताऽप्युक्ता । वस्तुतत्त्वापरोक्ष्यदार्ढ्यपूर्वकबहिःकरणान्तःकरणोपरमणलक्षणज्ञाननिष्ठाया विद्वत्संन्यासं विनाऽसंभवात् । तदुक्तं वार्तिकसारे—

‘अनन्यचित्तता ब्रह्मनिष्ठाऽसौ कर्मठे कथम् ।
कर्मत्यागी ततो ब्रह्मनिष्ठामर्हति नेतरः’ इति ।

तदस्मिन्भाष्यग्रन्थेऽपि संन्यासद्वयं संकीर्णवदेव भातीत्यतो युक्तैवेयं तद्भेदकथनप्रतिज्ञा । तथा मध्येऽपि वेदाविनाशिनं नित्यमितिश्लोके भाष्यम्—‘तस्माद्गीताशास्त्र आत्मज्ञानवतः संन्यास एवाधिकारो न कर्मणीति तत्र तत्रोपरिष्टादात्मज्ञानप्रकरणे दर्शयिष्यामः’ इति । व्याख्यातं चेदं भाष्यं संन्यासद्वयोपपादकमिति श्रीमदानन्दज्ञानैः—तस्मादिति । सर्वव्यापारोपरमात्मनः सर्वकर्मसंन्यासस्याविक्रियात्मज्ञानाविरोधित्वात्प्रयोजकज्ञानवतो वैधे संन्यासेधिकारः । सम्यग्ज्ञानवतस्त्ववैधे स्वाभाविके फलात्मनीति विभागमभ्युपेत्योक्तेऽर्थे वाक्यशेषाऽवैगुण्यं दर्शयति—तत्र तत्रेति । अस्यायमर्थः—प्रयुज्यते प्रेर्यते निवृत्तिमार्गेऽधिकारी येन नित्यानित्यवस्तुविवेकलक्षणेन ज्ञानेन तद्वतो मुमुक्षोरित्यर्थः । वैधे ‘एतमेव प्रव्राजिनो लोक-

मिच्छन्तः प्रव्रजन्ति' इति विधिप्राप्त इत्यर्थः । स्वाभाविके फलात्मन्यवैधे संन्यासे तु श्रुतिः 'एतमेव विदित्वा मुनिर्भवति' इत्यादिः सुप्रसिद्धैवेति ।

ननु किमर्थं संन्यासद्वयं श्रुत्योक्तं यद्भेदकथनं विविदिषादिसंज्ञया भवतेदं प्रतिज्ञातमित्याशङ्क्य तत्प्रयोजने क्रमादभिधत्ते—

**हेतू विदेहमुक्तेश्च जीवन्मुक्तेश्च तौ क्रमात् ॥ २ ॥**

**हेतू विदेहेति** । तौ पूर्वोक्तौ विविदिषासंन्यासविद्वत्संन्यासौ । क्रमादनुक्रमेण । विदेहमुक्तेः 'ज्ञानसमकालमुक्तः' इतिशेषार्यास्मृत्यादिमूलीभूताभिः 'ज्ञात्वा देवं मुच्यते सर्वपाशैः' इत्यादिश्रुतिभिः पञ्चदशीतत्त्वविवेकोक्तज्ञानसमकालभाविदेहाभावरूपस्याद्वैतात्मकैवल्यस्य तथा जीवन्मुक्तेः पञ्चम्यादिवक्ष्यमाणभूमिकास्थितिलक्षणसदेहकैवल्यस्य च हेतू कारणे भवत इत्यन्वयः । विविदिषासंन्यासः श्रवणाद्यभ्यासजन्यासंभावनादिप्रतिबन्धध्वंसे सति विचारिततत्त्वमस्यादिमहावाक्यकरणकतत्त्वज्ञानद्वारा विदेहमुक्तेर्हेतुः । विद्वत्संन्यासस्तु मनोनाशवासनाक्षयाद्यभ्यासजन्यपञ्चम्यादिभूमिकाद्वारा जीवन्मुक्तिहेतुरित्याशयः ॥ २ ॥

तदेवं ससाधनो जीवन्मुक्त्याख्योऽस्य प्रकरणस्य विशिष्टो विषयः सूत्रितः, संप्रति यावत्संन्याससाधारणकारणमाह—

**संन्यासहेतु[1]र्वैराग्यं यदहर्विरजेत्तदा ।**
**प्रव्रजेदिति वेदोक्ते[2]स्तद्भेदस्तु पुराणगः[3] ॥ ३ ॥**

**संन्यासेति** । विगतो रागो विषयप्रेमा यस्मात्तद्भावः संन्यासकारणं भवतीत्याशयः । तत्र प्रमाणत्वेन श्रुतिमर्थतः संग्रथयति—**यदहरिति** । तथा च श्रूयते लघुजाबालोपनिषदि—' यदहरेव विरजेत्तदहरेव प्रव्रजेत् ' इति । एवकाराभ्यां विना वैराग्यं संन्यासः, सति च तस्मिन्विलम्बश्च वार्यते । तदुक्तं विश्वेश्वरीसंगृहीतस्मृतौ—

' यदा मनसि संजातं वैतृष्ण्यं सर्ववस्तुषु ।
तदा संन्यासमिच्छन्ति पतितः स्याद्विपर्यये ' इति ॥
' बुद्ध्वाऽप्यत्यन्तवैरस्यं यः पदार्थेषु दुर्मतिः ।
बध्नाति वासनां भूयो नरो नासौ स गर्दभः ' ॥ इति वासिष्ठेऽपि ।

किं सर्वसंन्यासहेतुरेकविधमेव वैराग्यम् । तथात्वे कुटीचकादितद्भेदे को हेतुरित्यत आह—**तद्भेदस्त्विति** । तुशब्दः शङ्काशामकः । तद्भेदो वैराग्यादिभेदः । ज्ञेय इति शेषः ॥ ३ ॥

---

१ ग. °हेतु वै° । २ ग. °क्ते तद्भे° । ३ घ. छ. °णतः ॥ ३ ॥

तदेवाऽऽह—**विरक्तिरि**त्यादिना स्वकृतलघुपाराशरस्मृतिविवृत्युदाहृतपाराशरपुराणवाक्यद्वयेन—

**विरक्तिर्द्विविधा प्रोक्ता तीव्रा तीव्रतरेति च ।**
**सत्यामेव तु तीव्रायां न्यसेद्योगी कुटीचके ॥ ४ ॥**

एवं तीव्रादिभेदेन विरक्तेर्द्वैविध्यमुक्त्वा तीव्रविरक्तौ वक्ष्यमाणलक्षणायां सत्यामेव

' लोकेऽस्मिन्द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ ।
ज्ञानयोगेन सांख्यानां कर्मयोगेण योगिनाम् '

इतिश्रीमद्भगवद्गीतोक्तभगवदेकार्पणबुद्ध्या काम्यादिशून्यनित्यादिकर्मानुष्ठानपरो योगिशब्देष्टगृहस्थाद्यधिकारी वक्ष्यमाणलक्षणे कुटीचकाख्ये संन्यासे कर्तव्ये सति तद्विरुद्धं कर्म त्यजेदित्युक्तं, तत्रोक्तविरक्तौ सत्यां किमयमेकविध एव संन्यास उतान्योऽपि कश्चिदस्तीत्यत्राऽऽह **शक्त** इत्यादिद्वितीयवाक्येन—

**शक्तो बहूदके तीव्रतरायां हंससंज्ञिते ।**
**मुमुक्षुः परमे हंसे साक्षाद्विज्ञानसाधने ॥ ५ ॥**

शक्तस्तीर्थयात्राद्यनुष्ठानसमर्थदेहादिरित्यर्थः । **बह्विति** । वक्ष्यमाणलक्षण एव संन्यासभेद इति यावत् । शिष्टं तु प्राग्वदेव । वक्ष्यति चैवमेवात्र यात्रादीत्यादिना । ननु भवत्वेवं तीव्रविरक्तौ संन्यासद्वयं तीव्रतरायां तु प्रागुपन्यस्तायां तत्कथं तत्साहचर्यसिद्धमित्यत आह—**तीव्रेत्यादिना** । ' द्वयं तीव्रतरे ब्रह्मलोकमोक्षविभेदतः ' इति वक्ष्यमाणत्वात्तीव्रतरायां वक्ष्यमाणलक्षणायां विरक्तौ सत्यां ब्रह्मलोककामश्चेद्वक्ष्यमाणलक्षण एव हंससंज्ञिते संन्यासे कर्तव्ये सति योगी कर्माणि न्यसेदित्यादि प्राग्वदेवाध्याहृत्यान्वयः । ननु ब्रह्मलोककामनाभावे कः संन्यास इत्याशङ्क्य समाधत्ते—**मुमुक्षुरि**त्याद्युत्तरार्धेन । मुमुक्षुः स्वात्मानं द्वैतबन्धान्मोक्तुमिच्छुस्तीव्रतमायां क्षुधायां सत्यामन्नं विना यथा दीयमानेऽप्यैहिकपारत्रिकादिविषयजाते तत्तृणीकृत्यान्नप्राप्त्यै व्यवधानलेशमप्यसहिष्णुः संस्तदेकार्थी भवति तद्वदद्वैतब्रह्मात्मतारूपमोक्षमात्रार्थीत्यर्थः । उक्तं ह्येवमेव श्रीमद्वार्तिककारचरणारविन्दपरागैर्वार्तिकामृते—

नरकादिव निर्विण्णो यावन्नाऽऽब्रह्मणो नरः ।
न तावदधिकारोऽस्ति कैवल्यज्ञानवर्त्मनि ॥
सर्वासङ्गविनिर्मुक्तो मोक्षमात्रप्रयोजनः ।
अतोऽधिक्रियते प्रत्यग्ज्ञानोत्पत्तौ न रागवान् ॥ इति ॥

स तु—**साक्षादिति** । लोकान्तरगतिव्यवधानं विनेहैवेत्यर्थः । **विज्ञानेति** । दृष्टादिद्वाराऽऽत्मज्ञानहेतावित्यर्थः । परमे हंस एतन्नामके वक्ष्यमाणलक्षणे संन्यास इत्यादि पूर्ववदेव योज्यम् । तथा चोक्तं छान्दोग्ये ' सर्व एते

---

१ ग. शक्तौ ।

पुण्यलोका भवन्ति' इति ब्रह्मचार्यादित्र्याश्रमिणां फलमुक्त्वा 'ब्रह्मसंस्थोऽमृतत्वमेति' इति। अत्रेदं भाष्यं श्रीमद्भगवत्पादीयम्—'अवशिष्टस्त्वनुक्तः। परिव्राड्ब्रह्मसंस्थो ब्रह्मणि सम्यक्स्थितः सोऽमृतत्वं पुण्यलोकविलक्षणममरणभावमात्यन्तिकमेति नाऽऽपेक्षिकं देवाद्यमृतत्ववत्। पुण्यलोकात्पृथगमृतत्वस्य विभागकरणात्। यदि च पुण्यलोकातिशयमात्रममृतत्वमभविष्यत्ततः पुण्यलोकाद्विभक्तं नावक्ष्यत्। विभक्तोपदेशत्वादात्यन्तिकममृतत्वमिति गम्यते' इति। विवृतमिदमानन्दज्ञानैः—'आश्रमिषु प्रदर्श्यमानेषु किं परिव्राण्मुख्यो न प्रदर्श्यते तत्राऽऽह—अवशिष्टस्त्विति। कुतो हि पुण्यलोकवैलक्षण्यममृतत्वस्येत्याशङ्क्योक्तम्—आत्यन्तिकेति। तस्याऽऽपेक्षिकत्वाभावे हेतुमाह—पुण्यलोकादिति। अमृतत्वस्य पुण्यलोकात्पृथग्विभागकरणात्ततोऽन्यत्वादात्यन्तिकत्वसिद्धिरिति योजना। उक्तमेवार्थं व्यतिरेकमुखेण साधयति—यदि चेत्यादिनेति' इति ॥ ५ ॥

ननु का सा विरक्तेर्मन्दता यदपेक्षया तस्यास्तीव्रत्वादिकमुक्तमित्याशङ्क्य तल्लक्षणमभिनीय दर्शयति—

**पुत्रदारधनादीनां नाशे तात्कालिकी मतिः।**
**धिक्संसारमितीदृक्स्याद्विरक्तेर्मन्दता हि सा ॥ ६ ॥**

**पुत्रेति।** दाराः स्वरमणी। आदिना तादृक्प्रेमपात्रं मित्रादि। **तात्कालिकी।** पुत्रादिनाशाव्यवहितोत्तरक्षणमारभ्य यदाऽस्य तद्विषयकप्रमोदयस्तदव्यवहितद्वितीयक्षणमात्रावस्थायिनीत्यर्थः। अत्राग्रे सेति तच्छब्दाद्येति यच्छब्दो बोध्यः ॥ ६ ॥

एवं तीव्रादिवैराग्ययोरपि लक्षणे क्रमेण साभिनयमाहास्मिन्नित्यादिपादोनद्वाभ्याम्—

**अस्मिञ्जन्मनि मा भूवन्पुत्रदारादयो मम।**
**इति या सुस्थिरा बुद्धिः सा वैराग्यस्य तीव्रता ॥ ७ ॥**

आदिना धनादि। अत्रापि प्राग्वत्तद्विनाश एव प्रयोजको ज्ञेयः। अत्रास्मिञ्जन्मनीत्युक्त्या निरुक्तविरक्तेर्नित्यानित्यविवेकाजन्यत्वमेव। एवमपि तपसा जन्मान्तरे तादृक्पुत्रादिलाभाशासंभवात्, विवेकजन्यत्वे तु 'कर्मचितो लोकः क्षीयते। एवमेवामुत्र पुण्यचितो लोकः क्षीयते' इत्यादिव्याप्तिघटितश्रुत्या सर्वस्यापि वैषयिकसुखस्य विनश्वरत्वोक्त्या तदसंभवाच्च। तत्रापि क्षणिकत्वसंभवेन पूर्वत्रातिव्याप्तिव्यावृत्तयेऽत्रेतिपदेनाभिनीतबुद्धिं विशिनष्टि—**सुस्थिरेति**। तत्त्वमाधिदैविकादिविघ्नैरप्यचलत्वम्। एवं चैहिकपुत्राद्यनिच्छादार्ढ्यमेव तल्लक्षणम् ॥ ७ ॥

---

१ क. 'रगृहादी°। २ ङ. च. 'र इती°।

**पुनरावृत्तिसहितो लोको मे माऽस्तु कश्चन ।**
**इति तीव्रतरत्वं स्यान्मन्दे न्यासो न[1] कोऽपि हि ॥ ८ ॥**

**कश्चनेति ।** ब्रह्मलोकोऽपि । ' इमं मानवमावर्तं नाऽऽवर्तन्ते ' इति श्रुतेर्मन्वन्तरान्तरे पुनरावृत्तिप्रदोपासनादिसाध्यस्तु मे मैवास्त्वित्यर्थः । ननु मन्दवैराग्येऽप्यस्ति कश्चित्संन्यासभेद इत्यत्राऽऽह—**मन्द** इत्यन्तपादेन ॥ ८ ॥

अस्त्वेवं वैराग्यद्वये प्रत्येकं संन्यासद्वयात्तच्चातुर्विध्यमथापि किं प्रत्येकमेव तेषां लिङ्गभेद उत द्वयोर्द्वयोरेवेत्यत आह—**यात्रादी**त्यादिद्वाभ्याम्—

**यात्राद्यशक्तिशक्तिभ्यां तीव्रे न्यासद्वयं भवेत् ।**
**कुटीचको बहूदश्चेत्युभावेतौ त्रिदण्डिनौ ॥ ९ ॥**

आदिना स्वबन्ध्वितरभैक्षम् ॥ ९ ॥

**द्वयं तीव्रतरे ब्रह्मलोकमोक्षविभेदतः ।**

**तीव्रतर इति ।** अत्रापि वैराग्ये सतीति पूर्ववदेवाध्याहारः । **ब्रह्मलोकेति ।** इह तद्विषयकेच्छाभेदादिति शाकपार्थिवादिवत्समासः ।

हंसादिलक्षणं संक्षिपति **तदि**त्यर्धेन—

**तल्लोके तत्त्वविद्धंसो[2] लोकेऽस्मिन्परहंसकः ॥ १० ॥**

तस्मिन्ब्रह्मलोके । तत्त्वविदिति भाविनीं वृत्तिमाश्रित्यैवोक्तम् । अस्मिँल्लोके यस्तत्त्ववित्सन्संन्यासी भवेत्सोऽपि परहंसक एवेति विद्वत्संन्याससंग्रहः । कुटीचकाद्योरेव त्रिदण्डत्वोक्तेरनयोर्हंसविविदिषुगौणविद्वत्परमहंसयोरेकदण्डत्वमार्थिकमेव । अत्रास्मिँल्लोके तत्त्वविदित्यनुकृष्य भवितुमिच्छुः सन्नित्यध्याहृत्य परहंसको भवेदिति विविदिषासंन्याससंग्रहः ॥ १० ॥

नन्वेवमपि कस्तत्तदाचार इत्यत आह—

**एतेषां[3] तु समाचाराः प्रोक्ताः पाराशरस्मृतौ ।**
**व्याख्यानेऽस्माभिरत्रायं परहंसो विविच्यते ॥ ११ ॥**

**एतेषां त्विति । पाराशरेति ।** विषयसप्तमीयम् । षष्ठ्यन्तपाठे तु सरल एवार्थः । तर्हि किं प्रकृते निरूप्यत इत्यत्राऽऽह—**अस्माभि**रित्यादिना । अयं, वक्ष्ये विविदिषान्यासमिति प्राक्प्रतिज्ञातत्वेन प्रकृत इत्यर्थः । विविच्यते, लक्षणसाधनप्रयोजनप्रमाणेतिकर्तव्यतानिरूपणैर्विद्वदाद्यधिकारिभेदेन द्विविधोऽपि परमहंससंज्ञः संन्यासः पृथक्कथ्यत इत्येतत् । एतेनात्र जीवन्मुक्तेरेवोपपाद्यत्वात्परहंसो विविच्यत इति प्रतिज्ञाऽनुचितेति परास्तं तस्या एतत्प्रयोज्यत्वात् ॥ ११ ॥

---

१ घ. °न कश्चन° । २ ङ. °द्धंसलो° । ३ ङ. °षां सुस° ।

तद्विवेकमेव सूत्रयति—

**जिज्ञासुर्ज्ञानवांश्चेति परहंसो द्विधा मतः ।**
**प्राहुर्ज्ञानाय जिज्ञासोर्न्यासं वाजसनेयिनः ॥ १२ ॥**

**जिज्ञासुरिति** । मतः श्रुत्यादेः संमत इत्यर्थः । जिज्ञासोः संन्यासे 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' इति बृहदारण्यकश्रुतिं प्रमाणयति—**प्राहुरिति । वाजसनेयिनः ।** वाजमन्नमिति तैत्तिरीयकवार्तिकोक्तेर्वाजपदवाच्यमन्नं सनोति षणुधातोर्दानार्थत्वादतिथिवृन्दाय ददातीति वाजसनस्तस्यापत्यं वाजसनेयो याज्ञवल्क्यस्तेन प्रोक्तं शुक्लयजुरधीयते विदन्ति वेति ते तथा काण्वादिशाखिन इत्यर्थः ॥ १२ ॥

उक्तश्रुतेरर्थं संगृह्णाति **प्रव्राजिन** इत्यर्धेन—

**प्रव्राजिनो लोकमेतमिच्छन्तः प्रव्रजन्ति हि ।**

**प्रव्राजिनः ।** प्रोक्तविरक्त्या मनुष्यपितृदेवलोकतृणीकरणान्नित्यादिकायिकादिसर्वकर्मभ्यः प्रव्रजनलक्षणतदनादरशीलाः सन्त इत्यर्थः । **एतमेव** । प्रकृतमेवाद्वैतस्वप्रकाशमेवाऽऽत्मानं साक्षित्वोपलक्षितं स्वरूपमेव । **इच्छन्तः** । दशमादिवदज्ञानपिहितत्वादाप्तवाक्यजज्ञानेनाऽऽप्तुमिवाभिलषन्तः । **प्रव्रजन्ति** । प्रकर्षेण पारमहंस्यं संपाद्य ब्रह्मनिष्ठमाचार्यं प्रति श्रवणादिजन्यज्ञानार्थं गच्छन्तीति यावत् । यद्वा त्रिदण्डिनो वाऽत्र प्रव्राजिनः । तदुक्तं वार्तिके—

प्रव्राजिनोऽत्र गृह्यन्ते प्रसिद्धेर्यदि वा परे ।
त्रिदण्डिनः समाख्यायास्तेष्वेवातिप्रसिद्धितः ॥ इति ।

अवधारणेन मनुष्यादिलोकत्रयेच्छूनां नैव पारमहंस्येऽधिकार इति ध्वन्यते । एवमेवात्र श्रुत्यन्तरमपि—' अथ परिव्राड्विवर्णवासा मुण्डोऽपरिग्रहः शुचिरद्रोही ब्रह्मभूयाय भवति ' इति । सिद्धान्तलेशे त्वाश्रमान्तरे नैव श्रवणादौ मुख्योऽधिकार इत्युक्तम् । अपरे तु ' ब्रह्मसंस्थोऽमृतत्वमेति ' इतिश्रुत्युदिता यस्य ब्रह्मणि संस्था समाप्तिरनन्यव्यापारत्वरूपं तन्निष्ठत्वं तस्य श्रवणादिषु मुख्योऽधिकारः ।

गच्छतस्तिष्ठतो वाऽपि जाग्रतः स्वपतोऽपि वा ।
न विचारपरं चेतो यस्यासौ मृत उच्यते ॥
आ सुप्तेरा मृतेः कालं नयेद्वेदान्तचिन्तया ।

---

१ ङ. °तदिच्छ° । २ क. ख. घ. °स्यार्थं तु ग° । ३ घ. °वक्ष्ये मन्दत्वेबु° ।

इत्यादिस्मृतिषु सर्वदा विचारविधानात् । सा च ब्रह्मणि संस्था विना संन्यासमाश्रमान्तरस्थस्य न संभवति स्वस्वाश्रमानुष्ठानविहितकर्मानुष्ठानवैयग्र्यादिति ।

एवं वक्ष्ये विविदिषान्यासमित्यादिसार्धैकादशश्लोकैः सूत्रितमर्थं विवृण्वन्प्रतिजानीत **एतस्ये**त्यर्धेनैव—

**एतस्यार्थं[1] तु गद्येन वक्ष्ये मन्दविबुद्धये[2] ॥ १३ ॥**

गद्येन, अनियताक्षरेण दण्डकापरनामकगाथाख्यच्छन्दोविशेषेणेत्यर्थः । तत्प्रयोजनं **मन्देति** ॥ १३ ॥

वक्ष्य इत्यादिप्रतिज्ञायां विविदिषासंन्यासस्य प्राथमिकत्वात्तत्प्रतिपादिकाम् ‘ एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति ’ इति श्रुतिं विवृण्वंस्तद्गतलोकशब्दार्थं कथयति—

**लोको हि द्विविधः–आत्मलोकोऽनात्मलोकश्चेति ।**

**लोको हीति** । द्वैविध्यमेव विशदयति—**आत्मेति** । लोक्यतेऽवलोक्यते साक्षितया दृश्यमनेनेति लोकः स्वप्रकाशः परमात्मा । नन्वेवं व्युत्पत्तौ न शुद्धब्रह्मसिद्धिः । साक्षिसाक्ष्यादिसंबन्धः परमात्मनि कल्पितः ‘ साक्ष्याभावे न साक्षित्वं केवलानुभवात्मनि ’ इति वार्तिकस्य, ‘ चेत्योपरागरूपा मे साक्षिताऽपि न तात्त्विकी ’ इत्यद्वैतमकरन्दस्य, ‘ अविद्यातद्वृत्त्यन्यतरप्रतिबिम्बितं चैतन्यं साक्षि ’ इत्यद्वैतसिद्धेः, ‘ मोहातीतो विशुद्धो मुनिभिरभिहितो मोहसंक्रान्तमूर्तिः साक्षी ’ इति प्राचीनाचार्यवचनस्य च स्वारस्येन तस्य सोपाधिकत्वादिति यदि विभाव्यते तदा लोक्यते मुमुक्षुभिस्तत्त्वमस्यादिवाक्यजन्यदृढापरोक्षज्ञानेन साक्षात्क्रियत इति लोकः शुद्धाद्वैतः प्रत्यक् । अत एवाऽऽत्मेति कर्मधारयः । तदुक्तम्—

‘ यच्चाऽऽप्नोति यदादत्ते यच्चात्ति विषयानिह ।
यच्चास्य संततो भावस्तस्मादात्मेति भण्यते ’ ॥ इति ।

**अनात्मेति** । लोक्यते साक्षिचिता भास्यत इति तथा । अनात्मेत्यादावपि कर्मधारये सर्वोऽपि दृश्यपदार्थः ।

अत्राऽऽत्मलोकस्य दृक्त्वेनाव्यभिचारित्वादेकत्वेन श्रोतृबुध्यारोहसंभवेऽप्यनात्मलोकस्यातथात्वेन श्रोतृबुध्यारोहासंभवात्तदनुग्रहाय सप्रमाणं त्रैविध्यमभिधत्ते **तत्रे**त्यादिना—

**तत्राऽऽत्मलोकस्य त्रैविध्यं बृहदारण्यके तृतीयाध्याये श्रूयते—“ अथ त्रयो वाव लोका मनुष्यलोकः पितृलोको देवलोक इति । सोऽयं मनुष्यलोकः पुत्रेणैव जय्यो नान्येन कर्मणा[3] कर्मणा पितृलोको विद्यया देवलोकः ” इति ।**

जय्यः प्रसिद्ध्या जेतुं शक्यः । अत्रान्यशब्दः पुत्रसाहचर्याद्भ्रव्यादिपरः । कर्मणा,

१ क. ग. च. °स्यार्थस्तु ग° । २ क ख. ग. ङ. च. वक्ष्यते मन्दबु° । ३ ग. °णा पि° ।

नित्यादिना । पितृलोकः, स्वर्गाख्यश्चन्द्रलोक इति यावत् । विद्यया, दहराद्युपासनया । देवलोकः, सत्यलोक एव ब्रह्मलोकाख्यः । अनयोश्चन्द्रादिलोकयोः पितृलोकादित्वं वक्ष्यत्यत्रैव तपःसिद्धिरूपजीवन्मुक्तिप्रयोजननिरूपणे 'य एवं विद्वानुदगयने प्रमीयते' इत्यारभ्य 'सायुज्यᳪ सलोकतामाप्नोति' इत्यन्तश्रुतिव्याख्याने ।

आत्मलोके किं मानमित्यत्राऽऽहाऽऽत्म**लोकश्चे**त्यादिना—

**आत्मलोकश्च तत्रैव श्रूयते—"यो ह वा अस्माल्लोकात्स्वं लोकमदृष्ट्वा प्रैति स एनमविदितो न भुनक्ति" इति । "आत्मानमेव लोकमुपासीत स य आत्मानमेव लोकमुपास्ते न [१]हास्य कर्म *क्षीयते" इति च । यो मांसादिकपिण्डलक्षणात्स्वलोकं परमात्माख्यमहं ब्रह्मास्मीत्यविदित्वा म्रियते स स्वलोकः परमात्माऽविदितोऽविद्यया व्यवहितः सन्[२]नैनमवेत्तारं प्रेतं मृतं न भुनक्ति शोकमोहादिदोषापनयनेन न पालयति । उपासकस्य ह निश्चितं कर्म न क्षीयत एकफलदानेनोपक्षीणं न भवति । कामितसर्वफलं मोक्षं च ददातीत्यर्थः । षष्ठाध्यायेऽपि—"+किमर्थं वयमध्येष्यामहे किमर्थं वयं यक्ष्यामहे किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक इति । ये×प्रजामीशिरे ते श्मशानानि भेजिरे । ये प्रजा नेशिरे तेऽमृतत्वं हि भेजिरे" ।**

तत्रैव, तृतीयाध्याय एव । हकारः प्रसिद्धौ । वा इत्यवधारणे । अस्माल्लोकान्मनुष्यलोकात् । प्रैति लोकान्तरं गच्छति । स यतोऽविदितोऽज्ञानी, अत एनमद्वैतस्वप्रभानन्दमात्मानं नैव भुनक्ति तदभिन्नात्माऽमृतत्वेन नैव तिष्ठतीति प्रसिद्धमेवेत्यन्वयः । उपासीत, ध्यायीत । अस्याऽऽत्मोपासकस्य कर्म, पुण्यकर्मफलं सुखं नैव क्षीयत इति योजना । तदुपासनस्य चित्तनिरोधद्वारा सकलप्रतिबन्धनिरासपूर्वकं महावाक्यार्थस्फूर्त्याऽज्ञानध्वंसान्मुक्तिरूपत्वेनैवोक्तसुखस्याक्षयत्वमित्याशयः । अत्राऽऽदरार्थं वाक्यान्तरं संवादयति—**षष्ठेति** । प्रजा पुत्रादिः ।

नन्वस्त्वेवमात्मलोकादिभेदेन लोकद्वैविध्यं तथाऽपि प्रकृते किमायातमित्याशङ्क्य प्रकृतश्रुतीष्टार्थ एवेति कथयत्ये**वं चे**त्यादिना—

---

* ग. घ. छ. पुस्तकेषुः क्षीयत इति चेत आरभ्य, षष्ठाध्यायेऽपीत्येतदन्तःपाती ग्रन्थो न विद्यते। + क. ख. ग. घ. छ. पुस्तकेषु किमर्थमित्यारभ्य किं प्रजयेत्येतदन्तर्वर्ती विषयो नहि। × क. ख. ग. घ. छ. पुस्तकेषु ये प्रजामित्यतो भेजिरे इत्यन्तधिको ग्रन्थो न विद्यते ।

---

१ घ. °हास्याऽऽयुः क्षी° । २ क. °न्नेवम° ।

**एवं च, एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्तीत्यत्राऽऽत्मलोको विवक्षित इति गम्यते ।**

**विवक्षितः ।** श्रुतेरिति शेषः ।

तत्र हेतुमाह **स वा एष** इत्यादिना—

**स वा एष महानज आत्मेति प्रक्रान्तस्याऽऽत्मन एतच्छब्देन परामृष्टत्वात् ।**

एवं श्रौतप्रसिद्ध्या लोकशब्दस्याऽऽत्मवाचित्वं प्रकृतश्रुतावुपपाद्य योगवृत्त्याऽप्युपपादयितुं स्वाभिमतां लोकशब्दव्युत्पत्तिमाह—

**लोक्यतेऽनुभूयत इति लोकः । तथा चाऽऽत्मानुभवमिच्छन्तः प्रव्रजन्तीति श्रुतेस्तात्पर्यार्थः संपद्यते ।**

**लोक्यत इति ।** अधिकारिभिरिति शेषः । फलितमाह—**तथा चेति ।**

उक्तेऽर्थे स्मृतिं संवादयति—

**स्मृतिश्च—" ब्रह्मविज्ञान[1]लाभाय परहंससमाह्वयः ।**
**शान्तिदान्त्यादिभिः सर्वैः साधनैः सहितो भवेत् ॥" इति ।**

**स्मृतिश्चेति** । ब्रह्मणः, बृह बृहि वृद्धाविति स्मरणात्संकोचे कारणाभावान्निरतिशयमहत्त्वशालित्वेन त्रिविधपरिच्छेदशून्यस्य सच्चिदानन्दात्मनो यद्विशिष्टं दृढापरोक्षसाक्षात्काररूपं ज्ञानं तदेव लाभ इष्टवस्तुयोगस्तस्मा इत्यर्थः । ' आत्मलाभान्न परं विद्यते ' इति सत्याषाढापराभिधहिरण्यकेशिधर्मसूत्रोक्तेरात्मप्रदं तज्ज्ञानमपि लाभत्वेनोक्तमित्याशयः । शान्तिरन्तःकरणस्य स्वाधिकारानुपयुक्तानां लौकिकादिवृत्तीनां वैयर्थ्यनिश्चयेन त्यागः । एवं स एव बहिष्करणानां दान्तिः । आदिना तितिक्षादिः । सर्वैरित्युक्तेः शमादिषु श्रौतेष्वमानित्वादिषु स्मार्तेष्वेकमपि साधनं नावशेषणीयमिति भावः ।

एवं विविदिषासंन्यासे प्रमाणमुपपाद्य विविदिषासंन्यासशब्दार्थमाहेहेत्यादिना—

**इह जन्मनि जन्मान्तरे वा सम्यगनुष्ठितैर्वेदानुवचनादिभिरुत्पन्नया विविदिषया संपादितत्वादयं विविदिषासंन्यास इत्यभिधीयते ।**

' अनेकजन्मसंसिद्धस्ततो याति परां गतिम् '

इति श्रीमद्भगवद्गीतोक्तेर्जन्मान्तर इति युक्तमेव । सम्यक्त्वं तु कर्तृत्वाभिमानफलेच्छाभावपूर्वकान्तर्यामीश्वरचरणैकसमर्पितत्वम् । एतदप्युक्तं तत्रैव—

'मदर्थमपि कर्माणि कुर्वन्सिद्धिमवाप्स्यसि' इति ।

'एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च ।
कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम्' ॥ इति च ॥

---

१ ग. °विज्ञा ।

**वेदानुवचनेत्यादि ।** अत्राऽऽदिना यज्ञदानतपांसि । तथा च श्रूयते बृहदारण्यकषष्ठे—'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इति । अयमर्थः—वेदानुवचनादिषु त्रैवर्णिकानामप्याधिकारादत्र ब्राह्मणशब्दो द्विजपरस्तेन ब्राह्मणा ब्राह्मणक्षत्रियवैश्यास्तं पूर्वोक्तमेतं स्वप्रकाशत्वेन नित्यापरोक्षं साक्षित्वोपलक्षितमद्वैतचिदात्मानमित्यर्थः । वेदानुवचनेन यथाविध्यधीतसाङ्गस्वशाखाजपेन । तथा यज्ञेन । 'अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते । यष्टव्यमेवेति मनः समाधाय स सात्त्विकः' इति स्मृतेः पञ्चमहायज्ञान्तर्गतब्रह्मयज्ञेतरदेवयज्ञादिरूपेणेत्यर्थः । तथा दानेन । 'दातव्यमिति यद्दानं दीयतेऽनुपकारिणे । देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम्' इति श्रीमद्भगवद्गीताविवृतेन सात्त्विकचित्तवितरणेनैव । तथा तपसा कृच्छ्रादिलक्षणेन । यद्वा—

देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥
अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥
मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ।
भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥

इति श्रीमद्भगवद्गीतोक्तं कायिकादीति यावत् । तथाऽनाशकेन, अनशनव्रतेन । 'तप इति तपो नानशनात्परं तद्दुर्धर्षं तद्दुराधर्षं तस्मात्तपसि रमन्ते' इति तैत्तिरीयकश्रुतिप्रसिद्धेनेत्यर्थः । विविदिषन्ति वेदितुमिच्छन्ति । अत्र वेदानुवचनं ब्रह्मचर्ये यज्ञो दानं च गार्हस्थ्ये तपोऽनाशकं च वानप्रस्थ्य इत्याश्रमविभागोऽपि ज्ञेय इत्याशयः । ननु यदि वेदानुवचनादिकर्मभिरेव ब्रह्मज्ञानं चेत्किं संन्यासेन शमादिना चेति चेन्न । कर्मणां तत्त्वज्ञानं प्रति बहिरङ्गसाधनत्वात्संन्यासादेस्त्वन्तरङ्गसाधनत्वाच्च । तदुक्तं वार्तिकसारे श्रीमद्विद्यारण्यगुरुभिरेव—

'बहिरङ्गं कर्मजातं सन्यासस्यान्तरङ्गता ।
प्रत्यासन्नतराः शान्तिदान्त्याद्या इत्यसौ क्रमः' ॥ इति ।

तथा वेदानुवचनादिपदार्थोऽपि तत्रैवोक्तः—

अधीतवेदस्य जपो यज्ञो दर्शादिकस्तथा ।
दानं धान्यधनादीनां तपः कृच्छ्रादिरूपकम् ॥
अनाशकं निजाहारसंत्यागो मरणावधि ।
एतैर्वेदितुमिच्छन्ति ब्राह्मणाः शास्त्रकोविदाः ॥ इति ।

अत्रेच्छाशब्देन ब्रह्मज्ञानरुचिः । तदप्युक्तमस्मिन्नेव ग्रन्थे—'इच्छेति रुचिरत्र स्यात्सा चोक्तैः कर्मभिर्भवेत्' इति । रुचीच्छयोर्भेदस्तु पित्तदूषितरसनस्य गुड इच्छाऽस्त्येव

परं तु रुचिस्तिक्तत्वावभासेन प्रतिबद्धेति प्रसिद्ध एव । वाचस्पतिमिश्रास्तु प्रकृतश्रुतावनाशकतपःशब्देन सोपपत्तिकमर्थान्तरमेवाऽऽहुः । तद्यथा जिज्ञासासूत्रे भामत्याम्—कामानशनमेव तपः । हितमितमेध्याशिनो हि ब्रह्मणि विविदिषा भवति न तु सर्वथाऽनश्नतो मरणान्नापि चान्द्रायणादितपःशीलस्य धातुवैषम्यापत्तेरिति । नन्वेवं तर्हि किमशनाभाव एव श्रुतीष्टः किं वा यथेष्टाशनाभाव एवेति चेदुभयमपि व्यवस्थयाऽधिकार्यवस्थाविशेषेण ग्राह्यम् । तथा हि—

कायेन मनसा बुध्या केवलैरिन्द्रियैरपि ।
योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये ।

इतिस्मृतेश्चित्तशुध्यन्तमेव कर्मफलम् । ज्ञानेच्छादिकं तु यत्नान्तरसाध्यमिति केचित् । तथाऽश्वेन जिगमिषतीतिवद्वेदानुवचनादिकरणस्य विदधात्वर्थेन ज्ञानेन सहान्वयाद्ब्रह्मज्ञानान्तं सर्वं कर्मफलमेवेत्यपरे । वस्तुतस्तु वेदनरूपप्रकृत्यर्थापेक्षयाऽपीच्छार्थकसन्प्रत्ययस्य प्राधान्यात् ‘ आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ’ इति विशिष्टस्मृतेश्च ‘ प्रत्यग्विविदिषां बुद्धेः कर्माण्युत्पाद्य शुद्धितः । कृतार्थान्यस्तमायान्ति प्रावृडन्ते घना इव ’ इतिनैष्कर्म्यसिध्युक्तेश्च चित्तशुद्धिपूर्वकब्रह्मज्ञानेच्छैव कर्मसाध्याऽस्त्यन्यत्तु सप्तमभूमिकान्तमुक्तं वक्ष्यमाणमपि च साधनजातं स्वप्रयत्नसाध्यमेवेति दिक् ।

नन्वेवं तत्त्वजिज्ञासुना संन्यास एव कर्तव्य इति चेन्मैत्रेय्यादीनां तददर्शनात्तत्फलस्य तत्त्वज्ञानस्य ‘ इत्युक्तानुशासनाऽसि मैत्रेय्येतावदरे खल्वमृतत्वम् ’ इति ‘ अभयं वै जनक प्राप्तोऽसि ’ इत्यादिश्रुतिषु दर्शनान्नायं विविदिषोः संन्यास एवापेक्षित इति नियम इत्याशङ्क्य ब्रह्मविद्याहेतुभूतसंन्यासशब्दार्थं द्वैविध्येन प्रतिजानीते—

**अयं च वेदनहेतुः संन्यासो द्विविधः, जन्मापादककाम्यकर्मादित्यागमात्रात्मकः प्रैषोच्चारणपूर्वकदण्डधारणाद्याश्रमरूपश्चेति ।**

**“ *पुंजन्म लभते माता पत्नी च प्रेषमात्रतः ।**
**ब्रह्मनिष्ठः सुशीलश्च ज्ञानं चैतत्प्रभावतः ॥ ”**

**अयं चेति** । तदेव सलक्षणं प्रतिपादयति **जन्मे**त्यादिना । आदिना कर्मसाधनधनादि । मात्रचा शिखासूत्रादित्यागपूर्वकदण्डादिग्रहणव्यावृत्तिः । एतेन तीव्रतमविविदिषया भगवदाज्ञापरिपालनमात्रबुद्ध्या स्वीयनित्यादिश्रौतस्मार्तानुष्ठानपूर्वकमवशिष्टाखिलकर्मतत्साधनधनाद्यनादरदार्ढ्यं त्यागाख्यसंन्यासलक्षणं फलितम् । **दण्डधारणादीति** । अत्राऽऽदिना ‘अथ विवर्णवासाः’ इति श्रुत्युक्तकाषायवस्त्रग्रहः । एवं च तीव्रतम-

---

* क. ख. ग. घ छ. पुस्तकेष्वयं श्लोको न विद्यते ।

विविदिषया धर्मपत्न्यादिप्रतिबन्धाभावे सति यथाविधिप्रैषोच्चारपूर्वकदण्डकमण्डलुकाषायाङ्कितकन्थाकौपीनद्वयाचारवस्त्रैकशाट्याख्यबहिर्वासात्मकवसनपञ्चकेतरपरिग्रहराहित्यमेव चतुर्थाश्रमाख्यविविदिषासंन्यासत्वमिति तल्लक्षणमपि ज्ञेयम् ।

तत्र प्रथमे प्रमाणमुपन्यसति—

**त्यागश्च तैत्तिरीयादौ श्रूयते—" न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः " इति । अस्मिंश्च त्यागे स्त्रियोऽप्यधिक्रियन्ते । + भिक्षुकीत्यनेन स्त्रीणामपि प्राग्विवाहाद्वा वैधव्यादूर्ध्वं संन्यासेऽधिकारोऽस्तीति दर्शितम् । तेन भिक्षाचर्यं, मोक्षशास्त्रश्रवणम्, एकान्त आत्मध्यानं च ताभिः कर्तव्यं, त्रिदण्डादिकं च धार्यम् । इति मोक्षधर्मे चतुर्धरीटीकायां सुलभाजनकसंवादः । शारीरकभाष्ये वाचक्नवीत्यादि श्रूयते । देवताधिकरणन्यायेन विधुरस्याधिकारप्रसक्तत्वेन तृतीयाध्याये चतुर्थपादे । अत एव मैत्रेयीवाक्यमाम्नायते—" येनाहं नामृता स्यां किमहं तेन कुर्यां यदेव भगवन्वेत्थ तदेव मे ब्रूहि " इति ।**

**त्यागश्चेति ।** आदिशब्दः शाखान्तरसमुच्चयार्थः । तथा चाऽऽम्नायते कैवल्योपनिषद्यपीदमेव वाक्यम् । तथा वार्तिकामृतादावप्युदाहरन्ति स्मृतिं श्रीमत्सुरेश्वराचार्यचरणसरोजपरागाः—

त्याग एव हि सर्वेषां मोक्षसाधनमुत्तमम् ।
त्यजतैव हि तज्ज्ञेयं त्यक्तुः प्रत्यक्परं पदम् ॥ इति ।

अस्यायमर्थः—सर्वेषां साधनानां मध्ये त्याग एवेति संबन्धः । ननु सर्वापेक्षाधिकरणन्यायेन काम्यकर्मणामपि परम्परयाऽधिकाराधायकत्वमस्त्वित्यतो विशिनष्टि—उत्तममिति । तदुक्तं श्रीभगवता—

एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च ।
कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥ इति ।

एतान्यपि तु, काम्यान्यपि त्वित्यर्थः । एतेन ' सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ' इत्यधिकरणं त्वसंकोच्यैव व्याख्यातम् । तस्मात्—

कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन ।
सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः ॥

---

+ क ख. ग. घ. छ. पुस्तकेषु भिक्षुकीत्यारभ्यात एव चतुर्थपाद इत्यन्तो ग्रन्थो नहि । **अयं चाधिकोऽसंगतश्च ।**

इति स्मृतेः कर्मसु कर्तृत्वाभिमानफलानुरागराहित्यलक्षणस्तत्साधनधनादिषु तु प्रीत्यभावरूपश्च निश्चय एवोत्तममन्तरङ्गं मोक्षसाधनं भवतीत्याशयः। अत एव त्यजतैव हीत्यादि। **न कर्मणेति**। निरुक्तत्यागहीनवैदिकव्यापारेण। प्रजया पुत्रादिरूपया। धनेन तत्साध्यदानादिना। तर्हि किममृतत्वसाधनं तत्राऽऽह—**त्यागेनेत्यादि**। आनशुः प्रापुरित्यर्थः। ततः किं तत्राऽऽह—**अस्मिंश्चेत्यादि**। अपिना जनकादिः कैमुत्यसिद्धः। तत्र मानमाह—**अत एवेत्यादि**। अमृतत्वस्येत्यादिसुन्युक्ते सति।

ननु योऽयं जन्मापादककर्मादित्यागमात्रात्मकश्चतुर्थाश्रमरूपात्संन्यासाद्भिन्नस्त्यागसंज्ञकः स्त्र्योदरपि सुकरः परमात्मज्ञानरुचिसाधारणः संन्यासभेदः सप्रमाणं सोदाहरणं च निर्णीतो नासावुपपद्यते। तथा हि—अत्र कर्मादित्यागशब्देन किमननुष्ठानमेवोच्यते यद्वाऽहंकारफलेच्छाराहित्येनेश्वरार्पणबुध्याऽनुष्ठानम्—

न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः।
यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते'॥

इत्यादिस्मृतिसिद्धम्। नाऽऽद्यः।

'विहितस्याननुष्ठानान्निन्दितस्य च सेवनात्।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति'॥

इतिस्मृतेः प्रत्यवायापत्तेः। न च जन्मापादकेतिविशेषणात्काम्यकर्मणामेव देवादिजन्मदातृत्वात्तत्त्याग एवात्र विवक्षितो न तु नित्यादिकर्मण इति वाच्यम्। 'कर्मणा पितृलोकः' इत्युदाहृतश्रुतेः कर्मत्वसाधारणेन नित्येनापि कर्मणा पितृलोको जायत एवातो नित्यादिकर्मस्वपि विशेषणसत्त्वात्। न द्वितीयः। तस्य विविदिषोत्पत्तेः प्रागेव जातत्वात्, तं विना चित्तशुद्ध्यसंभवेन विविदिषोत्पत्तेरेवासंभवाच्च। न च स्त्रीशूद्रार्थमेवायं संन्यासः कल्पित इति तयोर्नित्यं कर्म नास्त्येवातो जन्मापादकस्य काम्यादिकर्मणस्त्यागात्मकोऽसावुपपद्यत एवेति वाच्यम्। स्त्रीणां पतिपरिचर्यादिरूपनित्यकर्मणः सर्वत्र प्रसिद्धेस्तथा शूद्राणामपि स्मृत्यादावमन्त्रकविवाहेन गार्हस्थ्यमात्राश्रमस्य कथनात्तत्प्रयुक्तामन्त्रकाणामेव पञ्चमहायज्ञादिनित्यकर्मणां सद्भावाच्च। तदुक्तं पारशरमाधवीये—"गार्हस्थ्यमुचितं त्वेकं शूद्रस्य क्षणदाचरेतिवामनपुराणवाक्यमाश्रमाणां ब्राह्मणादिचातुर्वर्ण्येन व्यवस्थाबोधप्रसङ्गेनोदाहृत्य ननु शूद्रस्याऽऽश्रम एव नास्ति 'चत्वार आश्रमास्तात तेषु शूद्रस्तु नार्हति' इतिनिषेधात्ततः कथं तस्य गार्हस्थ्याङ्गीकारः। उच्यते। समन्त्रक एव विवाहो निषिध्यते न त्वमन्त्रकः। अन्यथा विवाहप्रकरणोद्धृतानि शूद्रविषयाणि वचनानि पञ्चमहायज्ञादिगृहस्थधर्मेषु शूद्राधिकारवचनानि च विरुध्येरन्। तस्मादस्ति शूद्रस्य गार्हस्थ्यम्" इति। तस्मादयुक्तेयं विविदिषासंन्यासद्वैविध्यव्यवस्था किं त्वेकविध एवासौ पारमहंस्यरूपोऽङ्गीकार्यः। न च तथात्वे ब्राह्मणेष्वपि नारदा-

दीनां ब्रह्मचारिणां वसिष्ठादीनां गृहस्थानां तथा पुराणादिप्रसिद्धानां केषांचिद्वानप्रस्थानां च तद्वत्क्षत्रियेष्वपि जनकादीनां वैश्येषु तुलाधारादीनां शूद्रेषु च विदुरादीनां स्त्रीषु मैत्रेय्यादीनां च विनैव पारमहंस्यं छान्दोग्यादौ तत्त्वज्ञानस्य दर्शनं बाधितं स्यादिति वक्तव्यम्। तादृशस्थले पूर्वाचार्यैर्जन्मान्तरीयसंन्यासकल्पनात् । तदुक्तं श्रीमत्सर्वज्ञात्ममुनीश्वरचरणैः संक्षेपशारीरके तृतीयाध्याये——

जन्मान्तरेषु यदि साधनजातमासी-
त्संन्यासपूर्वकमिदं श्रवणादिरूपम्।
विद्यामवाप्स्यति ततः सकलोऽपि यत्र
तत्राऽऽश्रमादिषु वसन्न निवारयामः॥ इति।

एतेन वामदेवादेर्गर्भादावपि नचिकेतःप्रभृतेः कौमारादावपि तत्त्वज्ञानाविरोधो व्याख्यातः। इति चेत्सत्यम्। तृतीय एव त्यागशब्दार्थोऽत्रेष्ट इत्याशयी जन्मापादककर्मादित्याग इति त्यागलक्षणसंन्यासप्रतिपादकस्ववाक्यतात्पर्यं द्योतयन्नविरोधमाह **ब्रह्मचारी**त्यादिना——

**ब्रह्मचारिगृहस्थवानप्रस्थानां केनचिन्निमित्तेन संन्यासाश्रमस्वीकारे प्रतिबद्धे सति स्वाश्रमधर्मेष्वनुष्ठीयमानेष्वपि वेदनार्थो मानसः कर्मादित्यागो न विरुध्यते।**

उपलक्षणमिदं स्त्र्यादेरपि। तत्रापि वर्णाश्रमादिप्रयुक्तपतिसेवादिरूपनित्यादिकर्मसत्त्वात्। केनचित्, दृष्टेनादृष्टेन वेत्यर्थः। सामग्रीसत्त्वेऽपि प्रतिबन्धकविशेषेण कार्यस्यानुत्पद्यमानत्वमत्र प्रतिबद्धत्वम्। तथा च जातायामपि ब्रह्मज्ञानाभिरुचौ संन्यासाश्रमस्वीकारे दृष्टादृष्टान्यतरप्रतिबन्धेन प्रतिबद्धे कर्तुमशक्ये सतीत्याशयः। **मानसेति**। मनसा कृतो यः कर्मादीनां स्ववर्णाश्रमधर्मतत्साधनधनादीनां त्यागः। चित्तशुद्धिद्वारा विविदिषापरपर्यायब्रह्मविद्याविलम्बासहिष्णुतारूपस्याहंकारफलेच्छाराहित्येनेश्वरार्पणबुद्ध्या च बहुकालानुष्ठितस्वाधिकारविहितश्रौतकर्मफलस्य निष्पन्नत्वान्निरुक्तकर्मस्वीश्वराज्ञामात्रपरिपालनान्यप्रयोजनाभावनिश्चय इत्यर्थः। अत्रेयं व्यवस्था——'त्याग एव हि सर्वेषां मोक्षसाधनमुत्तमम्' इत्याद्युक्तसावधारणस्मृतिप्रभृतिस्मृतिशतेभ्यः। तथा——

नात्यक्त्वा सुखमाप्नोति नात्यक्त्वा विन्दते परम्।
नात्यक्त्वा निर्भयः शेते सर्वं त्यक्त्वा सुखी भवेत्॥

इत्यादित्यागव्यतिरेकान्वयप्रतिपादकस्मृतिशतेभ्यश्च संन्यासपर्यायान्तरीभूतत्यागशब्दितपारमहंस्यं विना ब्रह्मसाक्षात्कारो जीवन्मुक्तिश्च नैव जायत इति नियतम्। तेन विविदिषोत्पत्तौ सत्यामपि दृष्टादिद्वारा प्रैषोच्चारणपूर्वकप्रतिबद्धाश्रमसंन्यासानामुक्तरूपत्याग एवाधिकारः। अन्येषां चाऽऽश्रमरूप एव दृष्टद्वाराऽदृष्टद्वारा च ज्ञानाङ्गं संन्यास इति निश्चीयते। तत्र दृष्टं द्वारं तु निर्विक्षेपेण गुरुशुश्रूषादिपूर्वकश्रवणाद्यवकाशप्रदत्वरूपं प्रत्यक्षसिद्धमेव। अदृष्टं तु

द्वारं द्विविधं ज्ञानप्रतिबन्धकपापरूपदोषापनयनं ज्ञानजनकविचित्रपुण्यलक्षणगुणाधानं च। तत्राऽऽद्ये पाराशरमाधवीये—मनुः—

मृत्तोयैः शुध्यते शोध्यं नदी वेगेन शुध्यति।
रजसा स्त्री मनोदुष्टा संन्यासेन द्विजोत्तमः॥ इति।

द्वितीये तु विश्वेश्वर्यां स्मृत्यन्तरम्—

संन्यस्तमिति यो ब्रूयात्प्राणैः कण्ठगतैरपि।
न तत्क्रतुसहस्रेण फलं प्राप्नोति मानवः॥ इति।

श्रुतिस्तु तैत्तिरीयके नारायणीये सत्यादिप्रशंसां कृत्वा—'तानि वा एतान्यवराणि पराꣳसि न्यास एवात्यरेचयत्' इति 'तस्मान्न्यासमेषां तपसामतिरिक्तमाहुः' इति च सत्यतपोदमशमदानधर्मप्रजननाग्निहोत्रयज्ञमानसकर्मभ्योऽपि संन्यासस्य महाफलत्वं स्फुटमेव दर्शयति। अतः श्रुत्यादिप्रसिद्धानां यावतां पारमहंस्यहीनतत्त्वज्ञानिनां निरुक्तविविदिषोत्पत्त्यनन्तरं योऽयं निरुक्तत्यागलक्षणः संन्यासोऽङ्गीकृतः स तु दृष्टद्वारैव तत्त्वविद्योपकारी कर्मतत्साधनेष्वरुच्याऽवश्यानुष्ठेयभिन्नकाले श्रवणाद्यवकाशदातृत्वात्। न हि कर्मादिष्वरुचिं विना संभवत्यप्यवकाशे कश्चिच्छ्रवणादौ गुरुशुश्रूषादौ च प्रवर्तते। न हि साऽपि कस्यचित्सति प्रयोजने कर्मणि जायते। प्रत्युत संभवत्यप्यवकाशे कर्मसाधनपौष्कल्यार्थमेव यतते। यद्यपि निष्कामकर्मानुष्ठानदशायामपि कर्मसु फलेच्छाभावादरुचिरेव स्थिता तथाऽप्यद्वैते ब्रह्मणि रुचिर्न स्थितेति कृत्वा परमेश्वरार्पणबुद्ध्या सर्वदा स्वप्रयोजनशून्यत्वेऽपि वैधानि कर्माण्यनुष्ठेयान्येवेतिनिश्चयवशात्कर्मैकपरायणत्वं स्थितम्। यद्वा तदानीमपि फलेच्छानिषिद्धाचरणकर्तृत्वाहंकाररााहित्यपूर्वकमीश्वरप्रीतिद्वारा स्वचित्तशुद्ध्यर्थं नित्यादिकर्मणामनुष्ठीयमानत्वात्स्वचित्तशुद्धिरूपप्रयोजनवशाद्रुचिः स्थितैव। तदुक्तं शतपथब्राह्मणे—'स ह वा आत्मयाजी यो वेदेदं मेऽनेनाङ्गं संस्क्रियत इदं मेऽनेनाङ्गमुपधीयते' इति। अस्यार्थस्तूक्तः कल्पतरौ—अनेन कर्मणेदं ममाङ्गमन्तःकरणं संस्क्रियते क्षीणपापं क्रियते पुण्येन चोपधीयत उपचीयत इति यो विदित्वा चरति कर्म स आत्मशुध्यर्थं यजन्नात्मयाजी स च देवयाजिनः काम्यकर्तुः श्रेयानिति शातपथश्रुत्यर्थ इति। श्रीमद्भगवताऽप्युक्तम्—'योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये' इति। यस्तु श्रीमत्संक्षेपशारीरकाचार्यैरसंन्यासिनां तत्त्वज्ञानिनां ज्ञानानुपपत्त्या जन्मान्तरीयः पारमहंस्यरूपः संन्यासोऽङ्गीकृतः स तूक्तदोषापनयनगुणाधानलक्षणादृष्टद्वारोपकारकस्तत्त्वज्ञानं प्रतीति तद्वाक्येन सहाप्यविरोधः। ननु यदि गृहस्थादीनां ज्ञानिनां पूर्वजन्मनि संन्यासः कल्प्यते चेदस्मिंश्चरमजन्मनि येषां ब्राह्मण्यं न तत्र विवादः। येषां तु जनकादीनां क्षत्रियत्वं तुलाधारादीनां वैश्यत्वं विदुरादीनां शूद्रत्वं मैत्रेय्यादीनां स्त्रीत्वं च निकृष्टं जन्म तत्कथं जातमिति चेत्कर्मवैचित्र्यादित्येव निश्चिनु।

अथ वा यमस्य माण्डव्यशापवशाद्विदुरत्वमिति पुराणप्रसिद्धेः शापादिकं निमित्तं कल्प्यताम् । वस्तुतस्तु शापादावपि कारणं कर्मैवेति न किंचिदवद्यम् । न च देवानामिन्द्रादीनां संन्यासाभावेऽपि कथं तत्त्वज्ञानमिति वाच्यम् । देवताधिकरणन्यायेन प्रत्याख्यातत्वात् । इदं हि तदधिकरणे निर्णीतम्—त्यागस्य प्राप्तिपूर्वकत्वाद्देवानां कर्मप्राप्तेस्तत्संन्यासस्याभावेऽपि ध्यानाधिकारवत्सत्त्वगुणाधिक्यात्साधनसंपत्तौ सत्यां ज्ञानाधिकारस्यापि संभवोऽस्तीति । एवं च योगभ्रष्टस्मृतिवशाज्जन्मान्तरीयसंन्यासादिसंस्कारेणेह जन्मनि केनचिन्निमित्तेन संन्यासाभावेऽपि स्ववर्णाश्रमप्रयुक्तनित्यादिकर्मसु भगवदाज्ञारूपवैदिकविधिपरिपालनेतरप्रयोजनराहित्यनिश्चयरूपस्तत्साधनेषु धनादिष्वपि प्रेमाभावलक्षणश्च जन्मापादककर्मादित्यागमात्रात्मकः संन्यासो वेदनार्थो नारदादीनां ब्रह्मचारिणां वसिष्ठादीनां गृहस्थानां तथा पुराणादिप्रसिद्धानां केषांचिद्वानप्रस्थानां च जनकादीनां क्षत्रियाणां तुलाधारादीनां वैश्यानां विदुरादीनां शूद्राणां च मैत्रेय्यादीनां स्त्रीणामपि युक्ततर एव । न च भगवदाज्ञापरिपालनेऽपि रुचिश्चेद्द्वैतमात्रेऽप्यसज्जडदुःखाशुचिपरिच्छिन्नत्वबुद्धिपूर्वकमद्वैतब्रह्मणि नित्यशुद्धबुद्धमुक्तसत्यज्ञानानन्तानन्दकूटस्थात्मबुद्धिं विना तद्विविदिषैव न संभवेदिति वाच्यम् । तादृशरुचेर्भगवद्भक्तित्वेन ज्ञानाङ्गत्वाद्विविदिषोत्पत्त्यनन्तरमेव तत्संभवाच्च । भक्तेर्ज्ञानाङ्गत्वं तु—

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः । इति ॥
भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः ।

इति च श्रुतिस्मृतिभ्यां सिद्धमेव । भगवदाज्ञापरिपालनमात्रबुद्ध्या स्वविहितनित्यादिकर्मानुष्ठानस्य सात्त्विकभक्तितृतीयभेदरूपत्वमुक्तं मुक्ताफले विष्णुभक्तिप्रकरणे बोपदेवैरपि श्रीमद्भागवतवाक्यमुदाहृत्य— सात्त्विकी त्रेधा—कर्मक्षयार्था विष्णुप्रीत्यर्था विधिसिद्ध्यर्था च ।

कर्मनिर्हारमुद्दिश्य परस्मिन्वा तदर्पणम् ।
यजेद्यष्टव्यमिति वा पृथग्भावः स सात्त्विकः ॥ इति ।

अत्र क्रमाच्चरणत्रयेण कर्मक्षयार्थत्वादिभेदैः कर्ममिश्रसात्त्विकाख्यविष्णुभक्तेत्रैविध्यं द्योतितमिति तात्पर्यम् । एवमिहानुक्रमेण विविदिषोत्पत्त्यर्थत्वात्संपादितसाधनचतुष्टयसंपत्तिदार्ढ्यलक्षणभगवत्प्रसादार्थत्वान्निरुक्तत्यागाख्यसंन्याससिद्ध्यर्थत्वाच्चोत्तरोत्तरमुत्तमत्वं द्रष्टव्यम् । श्रीमद्भगवद्गीतास्वप्येवं यज्ञादिकर्मण एव सात्त्विकत्वेन भक्तित्वं द्योतितम्—

अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते ।
यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ॥ इति ।

ननु माऽस्तु ब्रह्मचारिगृहस्थवानप्रस्थस्त्रीविधुरक्षत्रियवैश्यशूद्रादीनां तत्त्वज्ञानमेव यदनुपपत्त्याऽयमुक्तलक्षणस्त्यागात्मकोऽपि विविदिषासंन्यास इयता प्रयासेन कल्प्यत इत्याशङ्क्य तत्र मानमाह **श्रुती**त्यादिना—

**श्रुतिस्मृतीतिहासपुराणेषु लोके च तादृशां तत्त्वविदां बहूनामुपलम्भात् ।**

श्रुतिषु तावदुद्दालकश्वेतकेतुसनत्कुमारनारदादयश्छान्दोग्ये, अजातशत्रुदध्यङ्ङाथर्वणयाज्ञवल्क्यमैत्रेयीकहोलोषस्तगार्गीजनकादयो बृहदारण्यके, एवमन्येऽपि प्रतर्दनप्रभृतयः कौषीतक्याद्युपनिषत्प्रसिद्धाः समुदाहार्याः । स्मृतिषु च श्रीमद्भगवद्गीतादिष्वर्जुनादयः । पुराणेषु च श्रीभागवतादिषु सूतशौनकव्यासकर्दमकपिलदेवहूतिप्रियव्रतर्षभसौभरिजडभरतरहूगणयदुविदुरवसुदेवोद्धवपरीक्षिदादयः । इतिहासेषु च श्रीमहाभारतादिषु कश्यपादयः सहस्रशः सन्ति । उपलक्षणमिदं महारामायणादेरार्षकाव्यस्यापि । तत्रापि वाल्मीक्यादयः शतशः सुप्रसिद्धा एव योगवासिष्ठादौ । **लोके चेति** । मूले चकारोऽप्यर्थे । तथा चेह श्रीहर्षवाचस्पतिमिश्रादयोऽपरमहंसा अपि ब्रह्मविद उपलभ्यन्त एवातो युक्तैवेयं संन्यासद्वैविध्यव्यवस्थेति सर्वमतिरम्यतरमेवेति निर्वार्यमेव सूरिभिरिति दिक् ।

एवम्—

ब्राह्मणग्रहणं श्रुत्वा विप्राणामेव भाष्यकृत् ।
संन्यासेऽधिकृतिं प्राह चतुर्थाश्रमरूप्यसौ ॥
विद्याङ्गं तत्फलात्मानं गार्गीविदुरयोरपि ।
स्त्रीशूद्रयोर्भाष्यकारः संन्यासमनुमन्यते ॥

इति स्वोक्तवार्तिकसारव्यवस्थारीत्या पारमहंस्येतरं ब्रह्मचर्यादिवानप्रस्थान्ताश्रमत्रयसुकरचतुःसननाचिकेतःप्रभृत्यनुपनीतस्त्रीशूद्रादिसर्वजिज्ञासुसाधारणं विविदिषोत्पत्त्या स्वविहितकर्मस्वीश्वराज्ञापालनान्यप्रयोजनशून्यत्वबुद्धिपूर्वकतत्साधनधनाद्यौदासीन्यरूपं त्यागाख्यं गुणवृत्त्या संन्यासशब्दार्थमुपपाद्य मुख्यपारमहंस्यरूपविविदिषासंन्यासशब्दार्थस्य प्रतिपादनावसरे सति तस्य श्रीमद्भगवत्पूज्यपादपादपद्मोपजीविभिः श्रीवार्तिककारप्रभृतिभिः पूर्वाचार्यैर्भूर्युपपादितत्वान्नास्माभिस्तदर्थं यत्यत इत्याह **यस्त्वि**त्यादिना—

**यस्तु दण्डधारणादिरूपो वेदनहेतुः परमहंसाश्रमः स पूर्वैराचार्यैर्बहुधा प्रपञ्चित इत्यस्माभिरुपरम्यते । इति जीवन्मुक्तिविवेके विविदिषासंन्यासः ॥**

**दण्डधारणादीति** । अत्राऽऽदिशब्देन ‘ अथ विवर्णवासा मुण्डः ’ इत्यादिश्रुतिप्रसिद्धकाषायवस्त्रादि ग्राह्यम् । तथा चाऽऽहुः श्रीमद्भाष्यकारचरणारुणनलिनपरागाः श्रीमच्छारीरकभाष्ये तृतीयाध्याये ‘विधिर्वा धारणवत्’ इतिसूत्रे ‘ब्रह्मसंस्थोऽमृतत्वमेति’ इतिश्रुतिविचारे—तस्मात्त्रय आश्रमिणः पुण्यलोकभाजः परिशिष्यमाणः परिव्राडमृतत्वभागित्युक्त्वा ब्रह्मज्ञानपरिपाकाङ्गत्वाच्च पारिव्राज्यस्य नानधिकृतविषयत्वमिति । तथा श्रीसुरेश्वराचार्यचरणा अपि श्रीमद्बृहदारण्यकभाष्यवार्तिके—

त्यक्तसर्वक्रियस्यैव संसारं प्रजिहासतः ।
मुमुक्षोरेव चैकात्म्ये त्र्यन्तेष्वधिकारिता ॥ इति ।

एवं सर्वज्ञात्ममुनीश्वरा अपि संक्षेपशारीरकप्रथमाध्याये—

उत्सर्गतः सकलकर्मनिवृत्तिनिष्ठा
संन्यासशास्त्रशतकोटिभिरर्पिताऽस्य ।
अस्ति प्रतिप्रसवशास्त्रमुखात्प्रतीता
चेष्टाऽऽत्मबुद्धिपरिपाकफलाऽपि काचित् ॥ इति ।

तथा विवरणे तृतीयवर्णके प्रकाशात्ममुनीश्वरा अपि—'तस्माद्युक्तमेवाऽऽत्मज्ञानाङ्गभूतः संन्यासः' इति । एवं वाचस्पतिमिश्रा अपि भामत्यां तृतीयवर्णक एव—"एवं चाननुष्ठितकर्माऽपि प्राग्भवीयकर्मवशाद्यो विशुद्धसत्त्वः संसारासारतादर्शननिष्पन्नवैराग्यः, कृतं तस्य कर्मानुष्ठानेन वैराग्योत्पादोपयोगिना, प्राग्भवीयकर्मानुष्ठानादेव तत्सिद्धेः । इममेव च पुरुषधौरेयभेदमधिकृत्य प्रववृते श्रुतिः—'यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत्' इति" इति । एतेन श्रीभगवत्पूज्यपादादीनां परमहंसपरिव्राजकाचार्यत्वात्तैः स्वस्वग्रन्थेषु परमहंससंन्यास एव भूरितरं समुपपादितस्तत्त्वज्ञानान्तरङ्गत्वेन न त्वसौ श्रुत्यादेः संमतोऽस्त्यतथाविधानामपि श्रुत्यादौ ब्रह्मवित्त्वादिदृष्टेरिति, ये रागित्वादिना कान्तादित्यागाशक्ता अपि वयं जनकादिवज्जीवन्मुक्ता इति लोकान्वञ्चयन्तो द्विपादगर्दभाः प्रलपन्ते तेऽपि परास्ताः । भामतीकृतां गृहस्थत्वात् । अस्य संन्यासस्य तत्त्वज्ञानं प्रति साक्षात्कारणत्वं तावन्नास्त्येव तस्य तत्त्वमस्यादिप्रमाणजन्यत्वात् । तथा च किंचिद्द्वारं वाच्यम् । तच्चोक्तं मतभेदेन सिद्धान्तलेशसूक्तिमञ्जरीकारैः—

संन्यासस्यात्र किं द्वारेणोपयोगोऽत्र केचन ।
कर्माविनाश्यदुरितनाशद्वारेति चक्षते ॥
अन्ये त्वदृष्टद्वारेण श्रवणेऽस्याङ्गतां जगुः ।
दृष्टेन निर्विक्षेपेण नियमं त्वितरे बुधाः ॥
क्षत्रियादेरसंन्यासाच्छ्रवणादि कथं भवेत् ।
तत्र केचन संन्यासमाहुः क्षत्रियवैश्ययोः ॥
अन्ये तु ब्राह्मणस्यैव संन्यासो बहुधा श्रुतेः ।
देवादिवदसंन्यासं श्रवणं क्षत्रवैश्ययोः ॥
ब्रह्मसंस्थश्रुतेन्यासी मुख्यः श्रवणविद्ययोः ।
क्षत्रियादेरनुमतिं जन्मान्तरफलां परे ॥ इति ।

तस्मात्सिद्धोऽयं विविदिषासंन्यास इति दिक् ।

पूर्णानन्देन्दुकौमुद्यां प्रकाशे षोडशे गुरोः ॥
अभूद्विविदिषान्यासोल्लासः पादप्रसादतः ॥ १ ॥

तदेवं प्रतिज्ञानुसारेण विविदिषासंन्यासमुपपाद्येदानीं तत्क्रमेणैव प्राप्तं विद्वत्संन्यासमुपपादयितुं प्रतिजानीते—

**अथ विद्वत्संन्यासं निरूपयामः । सम्यगनुष्ठितैः श्रवणमनननिदिध्यासनैः परं तत्त्वं विदितवद्भिः संपाद्यमानो विद्वत्संन्यासः । तं च याज्ञवल्क्यः संपादयामास । तथा हि विद्वच्छिरोमणिर्भगवान्याज्ञवल्क्यो विजिगीषुकथायां बहुविधेन तत्त्वनिरूपणेनाश्वलप्रभृतीन्मुनीन्विजित्य वीतरागकथायां संक्षेपविस्तराभ्यामनेकधा जनकं बोधयित्वा मैत्रेयीं बुबोधयिषुस्तस्यास्त्वरया तत्त्वाभिमुख्याय स्वकर्तव्यं संन्यासं प्रतिजज्ञे । ततस्तां बोधयित्वा संन्यासं चकार ।**

**अथेति ।** विविदिषासंन्यासनिरूपणानन्तरम् । तल्लक्षणमाह—**सम्यगि**त्यादिना । साधनचतुष्टयपुष्टिपूर्वकत्वं सम्यक्त्वम् । श्रवणादिलक्षणं तूक्तं मूलकारैरेव वार्तिकसारेऽनुभूतिप्रकाशे च—

श्रुत्यर्थाविष्कृतेर्हेतुः शब्दशक्तिविवेककृत् ।
श्रुतिलिङ्गादिको न्यायः प्रोक्तः श्रोतव्य इत्यतः ॥
अर्थासंभावनोच्छेदी तर्को मननमीरितम् ।
वेदशास्त्राविरोध्यत्र तर्को ग्राह्यो न चेतरः ॥
अपरायत्तबोधोऽत्र निदिध्यासनमुच्यते ।
ध्यानाशङ्कानिवृत्त्यर्थं विज्ञानेनेत्युदीरणात् । इति ॥

न चैवं तर्हि सगुणादिध्यानं न ज्ञानसाधनं स्यादिति वाच्यम् । तस्य साधनचतुष्टयनिविष्टशमादिसंपत्तौ समाहितो भूत्वेति श्रुतिविहितत्वेन प्रागेव सिद्धत्वात् । श्रोतव्य इत्यादिविधिवाक्यात्प्रागुपक्रमेऽपि व्याचक्षाणस्य तु मे निदिध्यासस्वेति मैत्रेयीं प्रति याज्ञवल्क्यवाक्यस्य व्याख्यानेऽपि च ।

निरन्तरविचारो यः श्रुतार्थस्य गुरोर्मुखात् ।
तन्निदिध्यासनं प्रोक्तं तच्चैकाग्र्येण लभ्यते ॥

इत्यत्रापि साधनदशायामेवैकाग्र्यपदवाच्यध्यानस्याङ्गीकाराच्च । अत्रापरायत्तबोधशब्देन प्रतिबन्धाक्षुण्णत्वेन मोक्षपदेष्टमूलाविद्याध्वंसप्रदानायान्यानपेक्षः शुद्धाद्वैतब्रह्मात्मैक्यविषयकः साक्षात्कारो न ग्राह्यः किंतु तद्भिन्नत्वे सति तत्सदृशमेव श्रवणमननपरिपाकफलीभूतं ज्ञानान्तरमेव

ग्राह्यम् । यतोऽपरायत्तेत्यादि तु वार्तिकमेव वार्तिकसारादौ संग्रथितम् । तस्याऽऽशयस्तु संक्षेपशारीरक एवमेव विवृत इति । तथा ह्युक्तं तत्र तृतीयाध्याये—

श्रवणमननबुद्ध्योर्जातयोर्यत्फलं त-
न्निपुणमतिभिरुच्चैरुच्यते दर्शनाय ॥
अनुभवनविहीना यैवमेवेति बुद्धिः
श्रुतमननसमाप्तौ तन्निदिध्यासनं हि । इति ॥

एवं च प्रमाणासंभावनोच्छेदिवेदान्तार्थाध्यवसायः श्रवणम् । स एव प्रमेयासंभावनोच्छेदिलौकिकशास्त्रीययुक्तिपूर्वको मननम् । पुनः स एव साधनफलोभयविपरीतभावनोच्छेदिनिरुक्तयुक्तिपूर्वको निदिध्यासनमिति तल्लक्षणं फलितम् । सांख्याद्यभिमततत्त्वव्युदासाय परमिति तत्त्वविशेषणम् । 'पुरुषान्न परं किंचित्' इतिश्रुतेः 'यो बुद्धेः परतस्तु सः' इति स्मृतेश्चाद्वैतब्रह्मात्मतत्त्वमित्यर्थः । **विदितवान्द्विः** । तत्त्वमस्यादिमहावाक्यजन्याखण्डाद्वैतात्माकारवृत्तिरूपज्ञानेनापरोक्षीकृतवाद्विरित्यर्थः । एवं चापरोक्षतत्त्वविद्विहितत्वे सति ससाधनवैधाखिलकर्मत्यागत्वं विद्वत्संन्यासत्वमिति तल्लक्षणं पर्यवस्यति ।

तमुदाहरति—**तं चेति** । तत्र बृहदारण्यकपञ्चमषष्ठाध्यायकथां प्रमाणयति—**तथा ही**त्यादिना । **वीतरागेति** । वीतोऽपगतो रागो यावद्दृश्यसुखलालस्यं ययोस्ताभ्यां जनकमैत्रेयीभ्यां सह या कथा तस्यामित्यर्थः । नानावक्तृकः पूर्वोत्तरवाक्यसंदर्भः कथेति कथालक्षणं प्रसिद्धमेव ।

अथोक्तयाज्ञवल्कीयसंन्यासकरणप्रतिज्ञातदनुष्ठानयोर्मूलश्रुतिमवतारयति—

**तदुभयं मैत्रेयीब्राह्मणस्याऽऽद्यन्तयोराम्नायते—"अथ ह याज्ञवल्क्योऽन्यद्वृत्तमुपाकरिष्यन्मैत्रेयीति होवाच याज्ञवल्क्यः प्रव्रजिष्यन्वा अरेऽहमस्मात्स्थानादस्मि" इति, "एतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यो विजहार" इति च ।**

**तदुभयमिति** । मैत्रेयीं प्रति ब्रह्मविद्योपदेशप्रतिपादकं ब्राह्मणं मैत्रेयीब्राह्मणम् । ब्राह्मणमिति काण्वादीनां वेदवाक्यसमूहविशेषे रूढिः । प्रतिज्ञाश्रुतिमाह—**अथ** हेत्यादिना । अथशब्दोऽत्र याज्ञवल्क्यस्य ज्ञानोत्तरमपि जीवन्मुक्त्यर्थं संन्यासस्वीकारप्रयोजकचिन्ताविशेषानन्तर्यार्थः । सा च चिन्तोक्ताऽस्त्यात्मपुराणे सप्तमाध्याये मैत्रेयीब्राह्मणव्याख्यानावसरे याज्ञवल्क्यवाक्यैः—

अहो निष्पन्नयोगोऽपि सङ्गात्पतति निश्चितम् ।
अहमेतादृशो विद्वान्नरकेऽत्र यतः स्थितः ॥

नरके स्त्रीरूपे, नरकवदशुचित्वादिना दुःखदे विषय इत्यर्थः । इदमपि तत्रैवोक्तम्— ‘ मूर्तिमानेष नरको द्विपाद्योषिदितीरितः ’ इति । मोक्षधर्मेऽपि—

अन्तकः पवनो मृत्युः पातालं वडवामुखम् ।
क्षुरधारा विषं सर्पो वह्निरित्येकतः स्त्रियः । इति ॥

अयमर्थः—अन्तकादयो नवापि यद्दुःखं जनयन्ति तत्तुल्यमेकाऽपि स्त्री यावद्गुणवती चेन्नश्वरत्वावश्यंभावित्वाद्विरहेणातथा चेत्सहवासेनापि दुःखं जनयिष्यत्येवेति । अपि चाऽऽत्म-पुराण एव—

कामक्रोधादिसंसर्गादशुद्धं जायते मनः ।
अशुद्धे मनसि ब्रह्मज्ञानं तच्च विनश्यति ॥
महावाते स्थितो दीपो यथा कार्यकरो न हि ।
सङ्गे सति तथा ब्रह्मज्ञानं कार्यं करोति न ॥ इति च ।

कार्यमत्र पुनर्ग्रन्थ्याख्याहंताध्यासानुदय एव पञ्चमी भूमिकारूपा जीवन्मुक्तिः, सकार्यका-ज्ञाननिःशेषबाधसततानुसंधानद्वारेति यावत् । तथा च प्रतिबन्धविशेषेण प्रतिबद्धस्य ब्रह्म-ज्ञानस्य निरुक्तबाधानुत्पादकत्वमेव मणिमन्त्रादिना प्रतिबद्धस्य वह्नेस्तृणादिदाहानुत्पादकत्वव-दित्याशयः । एवमेवोक्तं संक्षेपशारीरकेऽन्वयव्यतिरेकाभ्याम्—

पुरुषापराधमलिना धिषणा निरवद्यचक्षुरुदयाऽपि यथा ।
न फलाय भर्जुविषया भवति श्रुतिसंभवाऽपि तु तथाऽऽत्मनि धीः ॥
पुरुषापराधविगमे तु पुनःप्रतिबन्धकव्युदसनात्सफला ।
मणिमन्त्रयोरपगमे तु यथा सति पावकाद्भवति धूमलता ॥ इति ।

अयमाशयः—प्रतिबन्धकाभावस्योत्तेजकाभावविशिष्टतदभावस्यापि वा यावत्कार्यत्वाव-च्छिन्नं प्रति कारणत्वं सर्वसंमतमेवेति प्रकृते ज्ञानस्योत्पत्तिं प्रमाणासंभावनादेः साधनविप-रीतभावनादेः प्रतिबन्धकत्ववत्तदुत्पत्त्यनन्तरं तत्फलीभूतपञ्चम्यादिभूमिकारूपतत्फलात्मकजी-वन्मुक्तिसुखं प्रति निरुक्तासंभावनादिसंस्काराणामपि प्रतिबन्धकत्वम् । भर्जुप्रत्यक्षप्रमोत्तर-मपि ‘ भर्जुर्मृतः पिशाचो जातः ’ इत्यमात्यवाक्यजन्यसंस्काराणामसंभावनादिरूपाणां प्राग्वत्तन्मैत्र्यादिसुखप्रतिबन्धकत्वमुचितमेव मण्यादिप्रतिबद्धाग्निवदन्वयादिना । अत्राप्यग्रे ज्ञानरक्षाप्रकरणे भूरितरमुपपादयिष्यन्त्येवाऽऽचार्याः । हकारस्त्ववधारणे । उक्तचिन्तानन्त-रमेव याज्ञवल्क्यो मुनिः । अन्यद्वृत्तं, गार्हस्थ्यभिन्नं पारमहंस्यरूपं वृत्तम् । उपाकरिष्यन्, शीघ्रमेव चिकीर्षुः सन् । मैत्रेयीति ज्येष्ठपत्नीमामन्त्र्य । अरे इति भार्यात्वान्नीचसंबोधनम् । अरे मैत्रेयि, अहमस्माद्वर्तमानाद्गार्हस्थ्यलक्षणात्स्थानादाश्रमात्प्रव्रजिष्यन्पारिव्राज्यं करिष्यन्नस्मि वै इति निश्चये । पारमहंस्यमनुष्ठातुमहमुद्युक्तोऽस्म्येवेत्यतोऽनुमोदनमेव मह्यं देहीत्यभि-प्रायः । तदुक्तं वार्तिके—

भार्याद्यनुज्ञापूर्वो हि संन्यासो विहितः श्रुतौ ।
अतोऽनुज्ञार्थमेवाऽऽह मैत्रेयीमृषिरात्मनः । इति ॥

सा च श्रुतिरेतट्टीकायां शास्त्रप्रकाशिकाख्यायामानन्दज्ञानैरुदाहृता 'मातरं पितरं भार्यामनुमोदयित्वा ये चास्यर्त्विजस्तान्सर्वान्पूर्ववद्वृणीत्वा वैश्वानरीमिष्टिं कृत्वा सर्वस्वं दद्यात्' इति । कौषीतकीश्रुतिमाह—श्रुताविततीति । अरे मैत्रेय्यमृतत्वममृतत्वाख्यकैवल्यसाधनं ब्रह्मज्ञानमेतावदेव नातोऽधिकमिति होक्त्वाऽनयाऽऽनुपूर्व्यैवोपदिश्य याज्ञवल्क्यो विजहार पारिव्राज्यं चकारेत्यर्थः । अत्र लाक्षणिकत्वास्वारस्ये तु याज्ञवल्क्यस्यास्य कृतोपास्तित्वात्संन्यासेन वैधेन सङ्कल्पत्यागमात्रे सति परमहंसोपनिषदुक्तविधया जीवन्मुक्त्यैव सह विहारं कृतवानिति व्याख्येयम् ।

कामं त्रैवर्णिकस्त्रीणां तथा क्षत्रियवैश्ययोः ।
विज्ञानं वेदवाक्येन कारयेद्ब्राह्मणः स्वयम् ॥

इत्यस्मिन्नेव प्रकरणे तावदात्मपुराणवचनादनयाऽऽनुपूर्व्यैवेति यद्व्याख्यातं तद्युक्तमेवेति भावः । ननु स्त्रीणां वेदतदर्थश्रवणे शूद्रसमानतैव तेषां तु वेदतदर्थश्रवणानधिकारित्वस्य श्रुत्यादिषु सर्वत्र प्रसिद्धत्वादसंगतमिदमात्मपुराणवाक्यम् । तथा च सूतसंहितायां शिवमाहात्म्यखण्डे सप्तमाध्याये श्रवणाधिकारविचारे—

द्विजस्त्रीणामपि श्रौतज्ञानाभ्यासेऽधिकारिता ।
अस्ति शूद्रस्य शुश्रूषोः पुराणेनैव वेदनम् ॥

इत्युक्त्वाऽग्रे निर्णीतम्—' वदन्ति केचिद्विद्वांसः स्त्रीणां शूद्रसमानताम् ' इति । अत्र टीका माधवी—द्विजस्त्रीणामिति । अथ हैनं गार्गी वाचक्नवी पप्रच्छेत्यादौ गार्ग्यादेर्विद्याव्यवहारदर्शनादस्तिपदस्य पूर्वार्धेन संबन्धः । शूद्रस्य शुश्रूषोरिति । स्वधर्मनिष्ठस्य । द्विजशुश्रूषा हि शूद्रस्य मुख्या वृत्तिः । ' शूद्रस्य द्विजशुश्रूषा तयाऽजीवन्वणिग्भवेत् ' इति स्मृतेः । पुराणेनैवेति । वेदवाक्यश्रवणस्य निषिद्धत्वात् ' अथ हास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणम् ' इति । इदमेवोक्तं व्यासेन—श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्चेति । स्त्रीणां शूद्रसमानतामिति । यथाऽऽहुः—

स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा ।
इति भारतमाख्यानं कृपया मुनिना कृतम् ॥ इति ।

गार्गीमैत्रेय्यादीनामपि श्रुतिवाक्यान्न तत्त्वबोधः किंतु पौरुषेयैरेव वाक्यैर्जातस्तत्त्वावबोध आख्यायिकारूपया श्रुत्या व्यवहृत इत्येतावदिति हि ते मन्यन्त इत्यर्थ इति । न चात्रापि केचिदितिमूलवचनादिति हि ते मन्यन्त इतिटीकावचनाच्च ' अतिरात्रे षोडशिनं गृह्णाति नातिरात्रे षोडशिनं गृह्णाति ' इतिश्रुतेरतिरात्राख्यक्रतौ षोडशिनामकपात्रविशेषस्य ग्रहण-

विकल्पवदत्रापि पूर्ववाक्येण साकं विकल्प एवास्त्विति वाच्यम् । उत्तरवाक्ये केचिद्विद्वांस इति निर्णायकत्वावद्योतकविद्वच्छब्देन विशेषितत्वात् । तस्मादुक्तात्मपुराणवचनं चिन्त्यमेवेति चेन्न । तद्वचनस्य युगान्तरस्त्रीपरत्वात् । युगान्तरे तु स्त्रीणामप्युपनयनादिकं निर्णयसिन्धु-तृतीयपरिच्छेदे सप्रमाणं निर्णीतं तद्यथा—यत्तु हारीतः–द्विविधाः स्त्रियः । ब्रह्मवादिन्यः सद्योवध्वश्च । तत्र ब्रह्मवादिनीनामुपनयनमग्नीन्धनं वेदाध्ययनं स्वगृहे च भैक्षचर्येति । सद्योवधूनामुपनयनं कृत्वा विवाहः कार्य इति । तद्युगान्तरविषयम् ।

पुराकल्पेषु नारीणां मौजीबन्धनमिष्यते ।
अध्यापनं च वेदस्य सावित्रीवाचनं तथा ॥

इतियमोक्तेरिति । ब्रह्मवादिन्यः पूर्वपुण्यात्कौमार एव वैराग्यादिना ब्रह्मविचारपराः । एतेन सुलभायास्त्रिदण्डादिलिङ्गकः संन्यासः सूचितो मोक्षधर्मेषूपपन्न एव । तद्यथा—

अथ धर्मयुगे तस्मिन्योगधर्ममनुष्ठिता ।
महीमनुचचारैका सुलभा नाम भिक्षुकी ॥

इति समुपक्रम्य–

तदेकस्मिन्नधिष्ठाने संवादः श्रूयतामयम् ।
छत्रादिषु विमुक्तस्य मुक्तायाश्च त्रिदण्डके ॥ इति ।

जनकस्य राज्ञस्तनुं योगेन प्रविष्टायास्तस्यास्तत्र तेन सह संवादोऽयं वक्ष्यमाणस्त्वया श्रूयतामिति धर्मं प्रति भीष्मेण त्रिदण्डच्छत्रादिस्थूलदेहोपकरणराहित्यं तयोरुक्तम् । तथाऽग्रे तया स्ववर्णकथनमपि तं प्रति कृतम्—

तव राजन्सवर्णाऽस्मि शुद्धयोनिरविप्लुता ।
प्रधानो नाम राजर्षिर्व्यक्तं ते श्रोत्रमागतः ॥
कुले तस्य समुत्पन्नां सुलभां नाम विद्धि माम् ।
साऽहं तस्मिन्कुले जाता भर्तर्यसति मद्विधे ॥
विनीता मोक्षधर्मेषु चराम्येका मुनिव्रतम् ॥ इति ।

अत्र सवर्णेत्युक्तावनुपदोक्तयमोक्तौ नारीपदं त्रैवर्णिकनारीपरं ज्ञेयम् । सद्योवध्वः , शीघ्रं स्वाभीष्टवरकामुक्यः । एवं च मैत्रेय्याः कृतादियुगोत्पन्नत्वेनोपनयनादिसत्त्वेऽपि विवाहोत्तर-मेव ब्रह्मैकपरायणत्वेन बृहदारण्यकषष्ठे ब्रह्मवादिनीत्वमुक्तमतस्तत्प्रकरणगात्मपुराणवचनेन तादृशामेव वेदाद्यधिकाराद्युक्तमेव वेदवाक्येन ज्ञानकारयितृत्वप्रतिपादनमिति दिक् । एवं चोदाहृतसूतसंहितावचनं प्रथमं कृतादियुगस्त्रीविषयं द्वितीयं तु द्वापरादिस्त्रीविषयमिति ज्ञेयम् । न चान्त्यवचनगतेन गार्गीमैत्रेय्यादीनामपीति माधवाचार्यटीकया सह विरोध इति वाच्यम् । तदाशयस्य प्रकृतानुकूलत्वात् । तत्र गार्गीमैत्रेय्यादीनामपीत्यपिशब्दं प्रयुञ्जतामा-

चार्याणां यद्यपि गार्ग्यादीनां कृतादिगतत्वेनोक्तस्मृतिवशादुपनयनादिपूर्वकं वेदाध्ययनाद्यधिकारोऽस्त्येव तथाऽपि श्रुत्यादिप्रसिद्धत्वेन महाभागानामपि स्त्रीत्वसाधारण्येन वेदानधिकारमेव केचिद्विद्वांसो यदा वदन्ति तदा किमु वक्तव्यं द्वापरादिस्त्रीणामिति कैमुतिकन्यायस्यैवेष्टत्वाच्च । यथा—

ज्ञानिनामपि चेतांसि देवी भगवती हि सा ।
बलादाकृष्य मोहाय महामाया प्रयच्छति ॥

इत्यादौ ज्ञानिशब्दो योगरूढिभ्यां ब्रह्मनिष्ठपरः । 'तेषां ज्ञानी नित्ययुक्तः' 'ज्ञानी त्वात्मैव मे मतम्' इति च स्मृतेः, तस्य तु निर्मूलितमायातत्कार्यत्वेन तत्कर्तृकचेतआकर्षणमनुपपन्नमपि सत्तद्भिन्नानामेव मायापारवश्यदार्ढ्यमपिना द्योत्यते तद्वत् । विस्तरस्त्वत्र मदीयसाहित्यसार एवापिशब्दविचारे बोध्यः । इदानींतनस्त्रीणां तु सत्यप्यधिकारे श्रवणादौ शूद्रसाम्यं कैमुत्यसिद्धमेव । तत्रापि 'श्रावयेच्चतुरो वर्णान्कृत्वा ब्राह्मणमग्रतः' इतिपुराणश्रावणविधेर्ब्राह्मणपुरस्कारेणैव श्रवणाधिकारो न तु केवलम् । तथा सहस्रनामभाष्येऽपि 'शूद्रः सुखमवाप्नुयात्' इत्यत्र शूद्रस्य पठननिषेधात्तन्न्यायेन स्मृत्यादेः स्त्रीणां श्रवणमेवेति ध्येयम् । ध्यानादौ तु पत्याद्यनुज्ञया न कोऽपि बाधः । गार्गी तु ब्रह्मवादिन्यपि केनचिन्निमित्तेन प्रतिबद्धत्रिदण्डसंन्यासा युगान्तरगतत्वेन नैष्ठिकब्रह्मचारिणी यदि जिज्ञासुस्तर्हि जनकसदसि ब्रह्मविन्निर्णयोऽद्य भविष्यतीति तत्र गत्वा तादृशमाचार्यं पृष्ट्वा मत्संशयोच्छेदं करिष्यामीति धिया तथा व्यवहृतवती । यदि वा विदुषी तथाऽप्यप्राप्तजीवन्मुक्तिकेति ब्रह्मवित्त्वेऽपि निजसंशयसंस्कारसत्त्वेनानवाप्तजीवन्मुक्तिकस्य शुकस्य व्यासादेशान्निश्चितब्रह्मनिष्ठाकं जनकं प्रति प्रष्टुं गमनमिवास्या अपि जनकसदःप्रवेशपूर्वकं प्रश्नादिव्यवहारः संगत एवेति नियम्यते । नो चेत् ' विद्याङ्गं तत्फलात्मानं गार्गीविदुरयोरपि ' इत्याद्युदाहृतवार्तिकसारविरोधः । तत्र हि तस्याः पूर्वोक्तत्यागलक्षण एव संन्यासोऽङ्गीकृतः । तेन सुलभेव त्रिदण्डादिलक्षणः स नेति सिद्धमेव । यदि सा कुमारी यदि वोढाहिता तदा जिज्ञासुत्वादिसत्त्वेऽपि स्वातन्त्र्येण सदःप्रवेशाद्यनुपपन्नमेव । यत्तु विधवेति केचित्तत्रापि निरुक्तवाक्येन तस्यास्त्रिदण्डादिलिङ्गकसंन्यासाभावाद्ब्रह्मजिज्ञासायाः सत्त्वेऽपि सदःप्रवेशाद्ययुक्तमेव । सुलभायास्तु तादृक्संन्याससत्त्वाद्दैक्षादिवशात्तथा व्यवहारः संगत एव । तस्माद्गार्गी नैष्ठिकब्रह्मचारिणीति स्वीकारे सुलभेव प्रश्नादिकं वेदवाक्येन तत्त्वविबोधनं त्यागात्मकः संन्यासश्चोपपन्न एव । अधिकं तु पुराणादौ तत्कथामालोच्य यथायथमविरोधेन व्यवस्थापनीयं सूरिभिरित्यलं प्रसक्तानुप्रसक्त्येति सर्वं सुमङ्गलमेव ।

एवमुदाहृते विद्वत्संन्यासे तद्विध्यपेक्षायामुक्तवाक्यस्य भूतार्थवादत्वेऽपि ' प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते ' इतिन्यायेन महत्प्रवृत्तिविषयीभूतसंन्याससाफल्यद्योतकत्वेनोक्तवा-

क्यस्यैव 'भृगुर्वै वारुणिः । वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति' इत्यादिवाक्यानां भूतार्थवादत्वेऽपि प्रेक्षावत्प्रवृत्तित्वात्सप्रयोजनप्रवृत्तिबोधित्वेनाद्वैतात्मतत्त्वाप्तिफलकतज्ज्ञानजनकगुरूपसत्तिपूर्वकवेदान्तश्रवणादिविधिकल्पकत्ववद्विद्वत्संन्यासविधिकल्पकत्वान्न विधिवाक्यान्तरापेक्षेति मनसि निधायोक्तविद्वत्संन्यासावश्यकत्वदार्ढ्यार्थं बृहदारण्यकपञ्चमप्रपाठकवाक्यं संवादयितुमुपक्रमते—

**कहोलब्राह्मणेऽपि विद्वत्संन्यास आम्नायते—"एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति" इति । न चैतद्वाक्यं विविदिषासंन्यासपरमिति शङ्कनीयम् । पूर्वकालवाचिनो विदित्वेति क्त्वाप्रत्यस्य ब्रह्मविद्वाचिनो ब्राह्मणशब्दस्य च बाधप्रसङ्गात् ।**

**कहोलेति ।** कहोलनामा मुनिः । **आम्नायते** पूर्ववदेव तत्रापि विधेयत्वपर्यवसायिवाक्यवृन्दसंग्रथितत्वेनाध्येतृभिः पठ्यत इत्यर्थः । अथोपक्रान्तश्रुतिमेव पठति—**एतमि**त्यादिना । श्रुत्यर्थस्तूक्तो मूलकारकृताऽनुभूतिप्रकाशे—

ब्रह्मात्मनोर्यदेकत्वं ब्राह्मणद्वयनिश्चितम् ।
एतं तमितिशब्दाभ्यां तदैकात्म्यमनूद्यते ॥
अत्येति योऽशनायादीन्येतं सर्वान्तरं पुरा ।
उदितं तं विदित्वाऽथ व्युत्तिष्ठत्येषणात्रयात् ॥
ब्रह्मप्रश्नेन पृष्टे ते तद्बोधफलसाधने ।
इति मत्वोत्तरत्वेन व्युत्थानद्वयमुच्यते ॥
पूर्वं विदित्वा पश्चात्तु व्युत्थायेत्यन्वयाच्छ्रुतात् ।
विद्वत्संन्यास आभाति ब्रह्मविद्याफलात्मकः ॥
व्युत्थायाथ विदित्वेति व्यत्ययेनाऽऽर्थिकान्वयात् ।
सिद्धो विविदिषात्यागः स्पष्टः श्रुत्यन्तरेष्वसौ ॥
स्वात्मलोकं समिच्छन्तः प्रव्रजन्तीति वक्ष्यति ।
त्यागेनैकेऽमृतत्वं तु प्राप्ता इत्यपरा श्रुतिः ॥ इति ।
पुत्रेषणेति पुत्रार्थं दारस्वीकारवाञ्छनम् ।
कर्मणां साधने वित्ते तृष्णा वित्तैषणा मता ॥
लोकैषणेति देवादिलोकार्थोपासनाऽर्थिता ।
न कश्चिदन्यः संसार उक्तादस्त्येषणात्रयात् ॥
मनुष्यलोकः पुत्रेण पितृलोकस्तु कर्मणा ।
विद्यया देवलोकश्चेत्यब्रवीत्संग्रहाच्छ्रुतिः ॥

न्याय्यां वृत्तिं समुल्लङ्घ्य तद्विरुद्धतया स्थितिः ।
व्युत्थानमुदितं राज्ञः सामन्तो व्युत्थितो यथा ॥
भिक्षया लक्ष्यते चर्या परिग्रहविवर्जिता ।
किं भोग्यं परिगृह्णीयात्सर्वभोग्येषु दोषदृक् ॥
लोकत्रयार्थैषणाभ्यो व्युत्थानं चापरिग्रहः ।
द्वयं बोधमहिम्नैव विदुषां न तु यत्नतः ॥
आनन्दैकस्वभावं स्वमात्मानं पश्यतः कुतः ।
कामः परिग्रहो वा स्याद्योऽकाम इति वक्ष्यति ॥ इति च तत्रैव ।

उदाहृतश्रुतेरर्थान्तरत्वमाशङ्क्य निरस्यति—**न चेति** । तत्र हेतू आह—**पूर्वकालेति** । ननु तर्हि व्युत्थायाथ विदित्वेत्याद्युदाहृतानुभूतिवाक्येन सह विरोधः, तत्रैतद्वाक्यस्य विविदिषासंन्यासपरत्वस्याप्यङ्गीकृतत्वादिति चेत् । सत्यम् । तथाऽपि तत्र मुख्यत्वेन विद्वत्संन्यासपरत्वमेव । पूर्वं विदित्वा पश्चात्त्विल्यादिनोक्त्वा ततो व्युत्थाय विदित्वेत्यनेनाऽऽर्थिकान्वयमुररीकृत्य विविदिषासंन्यासपरत्वममुख्यत्वेनैवोक्तम् । नो चेत्स्पष्टः श्रुत्यन्तरेऽप्यसाविति किमिति श्रुत्यन्तरोदाहरणम् । तस्मादत्राऽऽर्थिकान्वयादुक्तो विविदिषासंन्यास इति क्लिष्टः श्रुत्यन्तरे त्वसौ स्पष्ट इति नेदं तत्परमिति ।

द्वितीयहेतौ ब्राह्मणशब्दस्य ब्रह्मविद्वाचित्वमुक्तं तत्रार्थान्तरपरत्वमाशङ्क्य समाधत्ते **न चात्रे**त्यादिना—

**न चात्र ब्राह्मणशब्दो जातिवाचकः । वाक्यशेषे पाण्डित्यबाल्यमौनशब्दाभिधेयैः[1] श्रवणमनननिदिध्यासनैः साध्यं ब्रह्मसाक्षात्कारमभिप्रेत्याथ ब्राह्मण इत्यभिहितत्वात् । ननु तत्र विविदिषासंन्यासोपेतः पाण्डित्यादौ प्रवर्तमानोऽपि ब्राह्मणशब्देन परामृष्टः । तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य[2] बाल्येन तिष्ठासेदिति चेत् । मैवम् । भाविनीं वृत्तिमाश्रित्य तत्र ब्राह्मणशब्दस्य प्रयुक्तत्वात् । अन्यथा कथमथ ब्राह्मण इति साधनानुष्ठानोत्तरकालवाचिनमथशब्दं प्रयुञ्जीत ।**

तत्रैतं वै तमित्याद्युदाहृतवाक्यशेषं विवृण्वन्हेतुमाह—**वाक्येति** । वाक्यशेषेऽपि विविदिषुः संन्यास्येव ब्राह्मणशब्देनोक्त इति शङ्कते—**नन्विति** । तमेव वाक्यशेषं प्रदर्शयति—**तस्मादिति** । समाधत्ते—**मैवमिति** । तर्ह्युक्तब्राह्मणशब्दस्य का गतिरिति चेत्तामाह—**भाविनीमिति** । तत्र हेतुमाह—**अन्यथेति** । यदि ब्राह्मणशब्दोऽत्र ब्रह्मविद्वाची श्रुत्यभिमतो न स्यात्तर्हि 'अमौनं च मौनं च निर्विद्याथ ब्राह्मणः' इति तत्त्वज्ञानसाधनान्याभिधाय

१ ङ. °णशब्द इ° । २ घ. निर्वेद्य ।

तत्त्वज्ञानोत्तरकालवाच्यथशब्दप्रयोगः श्रुत्या कथं कृतः स्यात् । तस्मात्तदन्यथानुपपत्त्यैव सिद्धमेतं वै तमित्यादिपूर्वोक्तवाक्यस्य विद्वत्संन्यासपरत्वमिति भावः । तदुक्तं श्रीमद्वार्तिककारपादारविन्दपरागैः—

अन्यथानुपपत्तिश्चेदस्ति वस्तुप्रसाधिका ।
पिनष्ट्यदृष्टवैमत्यं सैव सर्वबलाधिका ॥ इति ।

ननु प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति गौतमोक्तेः प्रत्यक्षादीनि चत्वार्येव प्रमाणानि तथा च यद्यन्यथानुपपत्तिः प्रमाणत्वेन परिगणिता स्याच्चेद्भवेदपि तया प्रकृतवर्णितवाक्यार्थसिद्धिः । सैव त्वादौ न तथाऽस्तीति चेन्न । त्वदुक्ताक्षेपादेरेव तद्घटितत्वेन तात्सिद्धौ तदभाववादस्य मन्माता वन्ध्येत्यादिवदेव व्याहतत्वात् । तथाहि आपादकोपलब्ध्यैवाऽऽपाद्यकल्पनमन्यथानुपपत्तिः । सैवार्थापत्तिरित्युच्यते । यथा पीनो देवदत्तो दिवा न भुङ्क्ते इति दिवाभोजनाभावविशिष्टपीनत्वस्याऽऽपादकस्योपलब्ध्यैवार्थादापाद्यं रात्रिभोजनं कल्प्यत इति । एवं च प्रकृते त्वया यदाक्षिप्तं यद्यन्यथानुपपत्तिः पृथक्प्रमाणं स्याच्चेत्तदोक्तवाक्यार्थोऽपि संभवेत्परं तु सैव तु तथा नास्तीति निरुक्तवाक्यार्थोऽपि नैव सिध्यतीति तदेवान्यथानुपपत्तिघटितमतः स्फुट एव व्याघातः । तस्मात्सर्वप्रामाणिकमूर्धन्योक्तवार्तिकसिद्धान्यथानुपपत्तिप्रामाण्यापादितश्रुतार्थापत्त्या वर्णितवाक्यार्थसिद्धिर्निर्बाधैवेति ध्येयम् ।

उक्तेऽर्थे बृहदारण्यकषष्ठप्रपाठकसंमतिमाह—

**शारीरब्राह्मणेऽपि विद्वत्संन्यासविविदिषासंन्यासौ स्पष्टं निर्दिष्टौ— "एतमेव विदित्वा मुनिर्भवत्येतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति" इति । मुनित्वं मननशीलत्वं तच्चासति कर्तव्यान्तरे संभवतीत्यर्थात्संन्यास एवाभिधीयते । एतच्च वाक्यशेषे स्पष्टीकृतम्—"एतद्ध स्म वै तत्पूर्वे विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक इति ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति" इति । अयं लोक इत्यपरोक्षेणानु¹भूयत इत्यर्थः । नन्वत्र मुनित्वेन फलेन² प्रलोभ्य विविदिषासंन्यासं विधाय वाक्यशेषे स एव प्रपञ्चितः । अतो न संन्यासान्तरं कल्पनीयम् ।**

**शारीरेति** । शरीरे देह आध्यासिकसंबन्धेनाहं ब्राह्मण इत्याद्यभिमन्तृतया भवो जीवः शारीरस्तत्स्वरूपप्रतिपादकत्वाद्ब्राह्मणमपि शारीरं तस्मिन् । तद्वाक्यमुदाहरति—**एतमेवेति** । आद्यं विद्वत्संन्यासपरं द्वितीयं तु विविदिषासंन्यासपरमिति विभागः । विविदिषासंन्यासप्रति-

---

१ घ. °नुभवत । इ° । २ घ. फलत्वेन ।

पादकवाक्यस्य प्रागेव तत्प्रकरणे मूल एवोदाहृत्य व्याख्यातत्वादत्र तत्प्रकरणाभावेऽपि नन्वत्र मुनित्वेनेत्यादिशङ्कानिरासाय संन्यासद्वयं प्रतिज्ञाय वाक्यद्वयोदाहरणमिति भावः । ननु मुनिशब्देन प्रथमवाक्ये संन्यास्येव ग्राह्य इत्यत्र किं नियामकमित्याशङ्क्य रूढ्यभावेऽपि योगवृत्त्या तत्साधयति—**मुनित्वमिति** । उक्तेऽर्थे वाक्यशेषानुगुण्यमाह—**एतच्चेति** । तमुदाहरति—**एतद्ध स्म वैत**दित्यादिना । अयमर्थः—एतमेव विदित्वा मुनिर्भवतीति पूर्ववाक्येऽद्वैतात्मतत्त्वमपरोक्षीकृत्य संन्यास्येव भवतीति निर्णीतम् । तत्र किं कारणमित्याशङ्कायां तदेतत्कारणम् । ह स्म वै निश्चयेनेत्यर्थः । **एतदिति** । किम् । पूर्वे विद्वांसः, अतिक्रान्तकालीना ज्ञानिनः । प्रजां पुत्रादिरूपिणीम् । उपलक्षणमेतल्लोकत्रयसाध्यसाधनादेः । तत्र हेतुः—**किं प्रजयेति** । 'सोऽयं मनुष्यलोकः पुत्रेणैव जय्यो नान्येन कर्मणा' इति श्रुतेः पुत्रादिसत्त्वे देवदत्तस्य मरणेऽपि तस्य पुत्रादिर्वर्तत इति जनश्लाघनमेव मनुष्यलोकजयस्तादृक्कीर्त्या, परलोके किंचित्सुखं यत्तत्तु येषां नोऽस्माकमयमखण्डापरोक्ष आत्माद्वयप्रत्यगेव लोकः स्वप्रकाशसुखैकरूपः संपादयतीति । शेषं तु 'पुत्रैषणेति पुत्रार्थं दारस्वीकारवाञ्छनम्' इत्याद्युदाहृतानुभूतिप्रकाशवाक्यैरेव व्याख्यातम् । लोकशब्दस्य प्रकृतोपयोगिनमर्थमाह—**अयमिति** । लोक्यत इति लोकः । लोक्यते घटादिरप्यवलोक्यत एवेति न वाच्यम् । तथात्वेऽयमात्माऽयं लोक इत्यात्मशब्दसामानाधिकरण्यानुपपत्तेः । अयमेवार्थ उक्तो वार्तिकसारे—

> अपत्यैः किं करिष्यामः सर्वदा दुःखहेतुभिः ।
> परमानन्द आत्माऽयमस्माभिर्वीक्ष्यतेऽनिशम् । इति ॥

यन्निरासाय संन्यासद्वयवाक्ययोरप्युपन्यासस्तामाशङ्कां प्रकटयति—**नन्विति** । खण्डयति—

**मैवम् । वेदनस्यैव विविदिषासंन्यासफलत्वात् । न च वेदनमुनित्वयोरेकत्वं शङ्कनीयम् । विदित्वा मुनिर्भवतीति पूर्वोत्तरकालीनयोस्तयोः साध्यसाधनभावप्रतीतेः । ननु वेदनस्यैव परिपाकातिशयरूपमवस्थान्तरं मुनित्वम् । अतो वेदनद्वारा पूर्वसंन्यासस्यैवैतत्फलमिति चेत् । बाढम् । अत एव साधनरूपात्संन्यासादन्यं[1] फलरूपमेतं संन्यासं ब्रूमः । यथा विविदिषासंन्यासिना तत्त्वज्ञानाय श्रवणादीनि संपादनीयानि, तथा विद्वत्संन्यासिनाऽपि जीवन्मुक्तये मनोनाशवासनाक्षयौ संपादनीयौ । एतच्चोपरिष्टात्प्रपञ्चयिष्यामः ।**

**मैवमिति** । तत्र हेतुमाह—**वेदनस्यैवेति** । यदि मुनित्वं विविदिषासंन्यासफलं स्यात्तर्हि

१ ग. घ. छ. °मेनं सं° ।

त्वदुक्तरीत्या विद्वत्संन्यासाभावोऽपि स्यात्तत्तु नास्त्येवेत्येवकारार्थः । वेदनमुनित्वयोरभेदे-नेष्टापत्तिमाशङ्क्य प्रत्याह—**न च वेदनेति** । तत्र हेतुः—**विदित्वेति** । पक्त्वा भुङ्क्ते पायसं देवदत्त इत्यादिस्थले पचनभोजनयोर्यथा साध्यसाधनभावेन भेदस्तद्वदत्रापीत्यर्थः । ननु यद्युक्तरीत्या वेदनमुनित्वयोः साध्यसाधनभावो भवदभिमतश्चेत्तर्हि सिद्धं नः समीहितम् । तथा हि—यथाऽपूर्वद्वाराऽग्निहोत्रस्यैव स्वर्गः फलमेवं विविदिषासंन्यासस्य तत्त्वज्ञानं फलं तद्द्वारीकृत्य मुनित्वमपि तस्यैव फलमतो न विद्वत्संन्यासकल्पनेति शङ्कते—**नन्वि**त्यादिना । किमत्र मुनित्वं विद्वत्संन्याससहितमभिप्रेतं केवलं वा नान्त्यः । तदसंभवस्य तच्चासति कर्तव्यान्तर इत्यनेन प्रागेवोक्तत्वात् । आद्यस्त्वस्मदिष्ट एवेत्यङ्गी करोति—**बाढमिति** । इष्टत्वमेव स्पष्टयति—**अत एवेति** । उभयसंन्यासयोरुक्तरीत्या साध्यसाधनभावादेवेत्यर्थः । ननु विद्वत्संन्यासस्यैव फलत्वे तदुत्तरं साध्याभावात्कृतकृत्यतैव । तथाचेदिष्टं तर्हि ‘ ज्ञात्वा देवं मुच्यते सर्वपाशैः’ इत्यादिमोक्षफलवादिश्रुत्यादिबाधः । प्रागुक्तं यन्मुनित्वलक्षणं मननशीलत्वाख्यं तदपि च स्वस्य निर्विक्षेपेण सिद्ध्यर्थं विद्वत्संन्यासमपेक्षमाणं सत् ‘ एतमेव विदित्वा मुनिर्भवति ’ इतिश्रुत्याऽऽक्षिप्तस्य विद्वत्संन्यासस्यैव फलत्वे दत्तजलाञ्जलिकं स्यादित्याशङ्क्य ज्ञानस्य तु फलं मुक्तिरेव ज्ञानद्वारा प्रथमसंन्यासस्यैवायं फलमित्यङ्गीकृतेर्विद्वत्संन्यासिनोऽपि मुनित्वाख्यजीवन्मुक्तेः संपाद्यत्वात्साध्यविशेषसाधनत्वस्य संन्यासद्वयेऽपि तुल्यत्वाच्च न कोऽपि दोषलेश इति द्योतयति—**यथेत्या**दिना ननु । किं लक्षणं मनोनाशादेस्तत्साध्या जीवन्मुक्तिरपि किंरूपा किंप्रयोजना चेत्याक्षिप्याग्रिमप्रकरणे तन्निरूपणप्रतिज्ञया समाधत्ते—**एतदिति** ।

एवं बृहदारण्यकवाक्यैर्विद्वत्संन्यासे सिद्धे तत्र संन्यासिनस्तु कुटीचकादयश्चतुर्विधा एव । तदुक्तं पाराशरमाधवीये चातुर्विध्यं च भिक्षूणां हारीत आह—

चतुर्विधा भिक्षवस्तु प्रोक्ताः सामान्यलिङ्गिनः ।
तेषां पृथक्पृथग्ज्ञानं वृत्तिभेदात्कृतं श्रुतम् ॥
कुटीचको बहूदको हंसश्चैव तृतीयकः ।
चतुर्थः परमो हंसो यो यः पश्चात्स उत्तमः । इति ॥

अयं तु पञ्चमो जात इत्यतस्तदविरोधमाह **सत्यपी**त्यादिना—

**सत्यप्यनयोः संन्यासयोरवान्तरभेदे परमहंसत्वाकारेणैकीकृत्य “ चतुर्विधा भिक्षवः ” इति स्मृतिषु चतुःसंख्योक्ता । पूर्वोक्तयोस्तयोः संन्यासयोः परमहंसत्वं जाबालश्रुतावगम्यते । तत्र हि जनकेन संन्यासे पृष्टे सति याज्ञवल्क्योऽधिकारविशेषविधानेनोक्तकालानुष्ठेयेन च सहितं विविदिषासंन्यासमभिधाय पश्चादत्रिणा यज्ञोपवीतरहितस्याऽऽक्षिप्ते ब्राह्मण्ये**

१ क. ख. ङ. च. °र्वोत्तरयोरुभयोः । २ क. ख. ग. ङ. च. नोत्तरका° ।

**सति पश्चादात्मज्ञानमेव यज्ञोपवीतमिति समादधौ। अतो बाह्ययज्ञोपवीताभावात्परमहंसत्वं निश्चीयते। तथाऽन्यस्यां कण्डिकायां तत्र परमहंसा नामेत्युपक्रम्य संवर्तकादीन्बहुविधान्ब्रह्मविदो जीवन्मुक्तानुदाहृत्य "अव्यक्तलिङ्गा अव्यक्ताचारा अनुन्मत्ता उन्मत्तवदाचरन्तः" इति विद्वत्संन्यासिनो दर्शिताः।**

उभयोः परमहंसत्वे किं प्रमाणमित्याशङ्क्य लघुजाबालोपनिषच्छ्रुतिरेव तत्र प्रमाणमिति प्रतिज्ञाय ग्रन्थगौरवभिया तद्गतं कण्डिकाद्वयमलिखित्वैव तदर्थं संक्षिपन्समाधत्ते—**पूर्वोक्तयोस्तयो**रित्यादिना। अत्राऽऽर्थिकमेव संन्यासद्वयस्य पारमहंस्यं न तु शाब्दमित्यरुच्या तत्रत्यामेव पञ्चमीं कण्डिकां प्रमाणयति—**अथेति**। तदुपक्रमं दर्शयति—**तत्रेति**। तत्र परमहंसा नाम संवर्तकारुणिश्वेतकेतुदुर्वासऋभुनिदाघजडभरतदत्तात्रेयरैवतकप्रभृतय इति वाक्यशेषेणेत्यर्थः। संवर्तको बृहस्पतेर्बन्धुर्महाभारते प्रसिद्धः। आरुणिरुद्दालकः। उद्दालको हाऽऽरुणिरिति च्छान्दोग्यश्रुतेः। श्वेतकेतुस्तत्पुत्रः। श्वेतकेतुं पुत्रमुवाचेति च तच्छेषात्। दुर्वासास्तु प्रख्यात एव। ऋभुनिदाघौ तु ज्ञानरक्षाविचारे मूल एवाग्रे विपर्ययस्य निदाघ उदाहरणमित्यादिनोदाहृतौ। जडभरतस्तु श्रीमद्भागवते पञ्चमस्कन्धे नवमाध्यायमारभ्य त्रयोदशाध्यायपर्यन्तं समुपाख्यात एव। परं तु तत्र जडभरतमुपक्रम्य कुपटावृतकटिरुपवीतेनोरुमषिणा द्विजातिरिति ब्रह्मबन्धुरिति संज्ञया तदज्ञजनावमतो विचचारेति रहूगण उवाच 'कस्त्वं निगूढश्चरसि द्विजानां बिभर्षि सूत्रं कतमोऽवधूतः' इति चेत्यादिवाक्यवशात्तस्योपवीतवत्त्वलिङ्गाद्यद्यपि पारमहंस्यं न भाति तथाऽपि प्रकृतश्रुत्यविरोधार्थं तदनन्तरं तत्तस्मिन्कल्पनीयमेव। दत्तात्रेयः प्रसिद्ध एव। रैवतकोऽपि पुराणादितो ज्ञेयः। एवमेतेषां सर्वेषां संवर्तकादीनां मध्ये येषां पारमहंस्यं पुराणादावुपलभ्यते न तत्र विवादः, येषां तु नोपलभ्यते तेषामपि जडभरतन्यायेनोदाहृतश्रुत्याविरोधार्थं कल्प्यमेव विबुधैः। **बहुविधानिति**। अनेकरूपस्थितीनित्यर्थः। उक्तं हि स्वाराज्यसिद्धौ—

केऽपि वर्णाश्रमाचारनिष्ठापरा मुग्धबालप्रमत्तोपमाश्चापरे।
रागिणो भोगिनो योगिनश्चेतरे ज्ञानिनां लक्ष्यते नैकरूपा स्थितिः॥ इति।

अत्र वर्णाश्रमाचारनिष्ठापरत्वं प्रकृतश्रुत्युक्तपारमहंस्यानुगुणम्। लोकसंग्रहमेवापीति स्मृतेर्लोकसंग्रहार्थं प्रथमवर्णचतुर्थाश्रमधर्मपरत्वमेव। अत एवोक्तं श्रीभारतीतीर्थैस्तृप्तिदीपे विद्वदनुभवाभिनयपूर्वकम्—

देवार्चनस्नानशौचभिक्षादौ वर्ततां वपुः।
तारं जपतु वाक्तद्वत्पठत्वाम्नायमस्तकम्॥

---

१ क. ख. ङ. च. बाह्योप°। २ क. ख. ङ. च. °न्बहून्ब्र°।

विष्णुं ध्यायतु धीर्यद्वा ब्रह्मानन्दे निमज्जताम् ।
साक्ष्यहं किंचिदप्यत्र न कुर्वे नापि कारये । इति ॥

अन्यत्त्वग्रे स्पष्टी भविष्यतीति । **ब्रह्मविदो जीवन्मुक्तानिति** । यद्यपि ब्रह्मवित्त्वेऽपि जीवन्मुक्तत्वं मनोनाशाद्यभावे सति न संभवेत्तदर्थं जीवन्मुक्तानितिपदसार्थक्येऽपि जीवन्मुक्तानित्येवोक्तौ ब्रह्मवित्त्वं विना तदसंभवस्य प्रसिद्धत्वान्न ब्रह्मविद इतिपदोपयोगस्तथाऽपि कृतोपास्तित्वेन ब्रह्मविद्योत्तरक्षण एव पञ्चम्यादिभूमिकास्वन्यतमभूम्यवस्थितिलक्षणजीवन्मुक्तेरुत्पन्नत्वं द्योतयितुं ब्रह्मविद इति पदप्रयोगः । यथा नैष्कर्म्यसिद्धौ द्वितीयाध्याये—

यथा जात्यमणेः शुभ्रा ज्वलन्ती निश्चला शिखा ।
संनिध्यसंनिधानेषु घटादीनामविक्रिया ॥

इत्यत्र जात्येतियन्मणेर्विशेषणं तदनुपयुक्तम् । यदि सामान्यमणिव्यावृत्त्यर्थं जातावत्युत्तमजातौ भवो जात्य इति तन्न । शुभ्रा ज्वलन्ती निश्चला शिखेति तत्कान्तिच्छटाया विशेषणत्रयेणैव साधारणमणिव्यावृत्तिसिद्धेरिति शङ्कां स्वीकृत्यापि प्रायशो मणयः शाणादिनिघर्षणाद्यैरेव कान्तिमन्तो भवन्त्ययं तु यदा जातस्तदारभ्यैवाचलितदीप्तश्वेतदीधितिमानितिद्योतयितुं जात्येति मणिविशेषणम् । न चेति कल्पने मानाभावः शङ्क्यः ।

सर्वधीव्यञ्जकस्तद्वत्परमात्मप्रदीपकः ।
संनिध्यसंनिधानेषु धीवृत्तीनामविक्रियः ॥

इत्यत्र दार्ष्टान्तिकपरमात्मप्रकाशस्याजन्यत्वाविकारित्वादिसिध्यर्थं पूर्वोक्तमणिदृष्टान्तेऽपि तत्प्रकाशस्य स्वाभाविकत्वेऽपि संस्काराद्यव्यङ्ग्यत्वस्यावश्यकल्प्यत्वात् । तस्मात्तत्र यथा मणेः शुभ्रा ज्वलन्ती निश्चला शिखेत्येतावन्मात्रोक्तावुत्तमजातिजन्यत्वं जात्यत्वं यद्यप्यन्तर्भवति तथाऽपि स्वोत्पत्तिमात्रादेवोक्तकान्त्यादिमत्त्वसिध्यै जात्यपदं तद्वत्प्रकृतेऽपि ब्रह्मविद इति पदम् । यथा वा लोके प्रसूतां पयस्विनीं धेनुं देहीति प्रयोगे प्रसूतत्वेऽपि पयस्विनीशब्दवाच्यविपुलपयोवत्त्वाभावस्य क्वचिद्दृष्टत्वात्तद्व्युदासाय पयस्विनीपदसार्थक्येऽपि प्रसूतत्वं विना पयस्विनीत्वाभावध्रौव्यात्पयस्विनीं देहीत्येतावतैव यद्यपीष्टसिद्धिस्तथाऽपि यदा प्रसवस्तदारभ्यैवोपचारैर्विनैव विपुलदुग्धवत्त्वविवक्षया प्रसूतामितिपदसार्थक्यं तद्वत् । **अव्यक्तलिङ्गा इति** । अस्पष्टवर्णाश्रमचिह्ना इत्यर्थः । तथात्वं तु जडभरते कुपटावृतकटिरित्यादिनाऽनुपदमेवोदाहृतम् । उपलक्षणमेतदितरेषामपि । भर्तृहरिरप्याह—

चण्डालः किमयं द्विजातिरथ वा शूद्रोऽथ किं तापसः
किंवा तत्त्वनिवेशपेशलमतिर्योगीश्वरः कोऽपि किम् ॥
इत्युत्पन्नविकल्पजल्पमुखरैः संभाष्यमाणा जनै-
र्न क्रुद्धाः पथि नैव तुष्टमनसो यान्ति स्वयं योगिनः ॥ इति ।

ननु माऽस्तु वर्णादिचिह्नस्फुटता तथाऽपि शौचाचमनाद्याचारैर्वर्णाद्यनुमानं भवेदेवेति चेन्न । तदाचारस्याप्यस्फुटत्वादित्याह—**अव्यक्ताचारा इति ।**

गूढधर्माश्रितो विद्वानज्ञातचरितं चरेत् ।
संदिग्धः सर्वभूतानां वर्णाश्रमविवर्जितः ॥
अन्धवज्जडवच्चापि मूकवच्च महीं चरेत् ।

इति विश्वेश्वरीनिबन्धलिखितपितामहस्मृतेः । 'अद्वैतं समनुप्राप्य जडवल्लोकमाचरेत्' इति श्रीमद्गौडपादाचार्यपादपद्मपरागवचनात् ।

बुद्धतत्त्वस्य लोकोऽयं जडोन्मत्तपिशाचवत् ।
बुद्धतत्त्वोऽपि लोकस्य जडोन्मत्तपिशाचवत् ॥

इति बृहद्वार्तिकोक्तेश्च तेषामाचारोऽप्यव्यक्त एवेति भावः । एवं चेत्किं यथेष्टाचारा नेत्याह-**अनुन्मत्ता उन्मत्तवदाचरन्त इति ।** अप्रमादिनोऽपीत्यर्थः । अत एवोक्तगौडपादीयवाक्यादौ सादृश्यबोधको वतिर्जडवज्जडोन्मत्तपिशाचवदिति च संगतः । तादृगाचरणं दत्तात्रेयस्य दुर्वाससश्चोक्तं मार्कण्डेये दत्तात्रेयावतारमत्रेर्गृहे प्रकृत्य षोडशाध्याये—

दत्तात्रेयोऽपि विषयान्योगस्थो बुभुजे हरिः ।
दुर्वासाः पितरं त्यक्त्वा मातरं चोत्तमं व्रतम् ॥
उन्मत्ताख्यं समाश्रित्य परिबभ्राम मेदिनीम् ।

इति । दत्तात्रेयस्य दुर्वाससश्चोन्मत्तवदाचरणं प्रतिज्ञाय पुनरनुपदमेव दत्तात्रेयस्य कथं योगस्थत्वेऽपि विषयभोगो येन तत्रोन्मत्तसाम्येऽपि नोन्मत्ततेत्याशङ्क्य तद्विस्पष्टयति—

मुनिपुत्रवृतो योगी दत्तात्रेयोऽप्यसङ्गिताम् ।
अभीप्समानः सरसि ममज्ज सुचिरं विभुः ॥
तथाऽपि तं महात्मानमतीवाप्रियदर्शनम् ।
तत्यजुर्न कुमारास्ते सरसस्तीरसंश्रयाः ॥
दिव्यवर्षशते पूर्णे यदा ते न त्यजन्ति तम् ।
तत्प्रीत्या सरसस्तीरं सर्वे मुनिकुमारकाः ॥
ततो दिव्याम्बरधरां सुरूपां सुनितम्बिनीम् ।
नारीमादाय कल्याणीमुत्ततार जलान्मुनिः ॥
स्त्रीसंनिकर्षिणं ह्येते परित्यक्ष्यन्ति मामिति ।
मुनिपुत्रास्ततो योगी स्थास्यामीति विचिन्तयन् ॥
तथाऽपि तं मुनिसुता न त्यजन्ति यथा मुनिम् ।
ततः सह तया नार्या मद्यपानमथापिबत् ॥

सुरापानरतं तं ते सभार्यं तत्यजुस्ततः ॥

इत्येवमनुन्मत्तत्वेऽप्युन्मत्तवदाचरणं स्फुटमेव, सङ्गत्यागार्थं तथा कृतत्वात् । नोचेद्विष्णवतारत्वं योगित्वं च तत्र तत्रोक्तं बाध्येत। तस्मादीश्वरत्वेऽपि लोकसंग्रहार्थं सङ्गं त्यक्तुं स्वकीययोगमाययेत्थं मुनिपुत्रवञ्चनार्थं प्रथयांचकारेति न कोऽपि दोषः। ननु यद्यस्य मद्यादि नैवेष्टं तर्हि कार्तवीर्यं प्रति कथमनेन मद्यादेः स्वेष्टत्वबोधनं कृतम् । तथा ह्यत्रैवाग्रे सप्तदशाध्यायपर्यन्तमेवमुपाख्यायते—मुनिपुत्रैर्दत्तात्रेयस्य विपरीताचरणं वीक्ष्य तैस्तत्त्यागे कृते तयैव चर्ययाऽसौ पृथ्व्यां तपस्तेपे । ततः कृतवीर्यनाम्नि नृपे दिवं गते मन्त्रिभिस्तत्पुत्रमभिषेक्तुं प्रवृत्तम् । तदाऽसमर्थेन राज्यं न कर्तव्यमतोऽहं तपसा सामर्थ्यं संपाद्य राज्यं करिष्यामि नेदानीमिति कार्तवीर्योऽब्रवीत् । तदाऽसौ गर्गमुनिना त्वं विष्णववतारं शक्रप्रार्थनया हतानेकासुरं दत्तात्रेयनामानं मुनिमेव सह्याचलद्रोण्यां तदाश्रमे गत्वा समाराधय येन शीघ्रमेव तद्वरप्रसादेन सिद्धाखिलमनोरथः स्या इति । ततः कथं शक्रेणासौ प्रार्थितः किमर्थं वेति कार्तवीर्यपृष्टेन गर्गेणोक्तम् । असुरप्राबल्यादिन्द्राद्यैर्दत्तात्रेयं प्रत्यागत्य गन्धर्वादिगीयमानं लक्ष्म्या सह विलसमानं सुरापाननिरतं तं नमस्कारादिभिरभिपूज्य मद्याद्युपचारान्समर्प्य तत्पृष्टाभीष्टैस्तैः स्वासुरभयं तस्मै निवेदितं श्रुत्वा तेनोक्तम्—'मद्यासक्तोऽहमुच्छिष्टो न चैवाहं जितेन्द्रियः । ' उच्छिष्टोऽपवित्रः । 'कथमिच्छथ मत्तोऽपि देवाः शत्रुपराभवम्' । ततो देवा ऊचुः—

अनघस्त्वं जगन्नाथ न लेपस्तव विद्यते ।
विद्याक्षालनसिद्धान्तनिविष्टज्ञानदीधिते ॥

विद्यया ब्रह्मात्मैक्यविषयकनैसर्गिकमायावृत्तिविशेषात्मकया नित्यज्ञानवत्त्वेन स्वाभाविक्या प्रभया यत्क्षालनमनन्यशरणानां भक्तानां करुणोद्रेकादन्तःकरणमलनिराकरणं तेन सिद्धान्ते द्वैतमिथ्यात्वपूर्वकाद्वैतब्रह्मात्मैक्ये विषये निविष्टा प्रविष्टा ज्ञानदीधितिर्निरुक्तभक्तानां शक्तिपातजातायामहं ब्रह्मास्मीति चरमवृत्तौ स्वरूपभूतकूटस्थज्ञानसूर्यप्रतिच्छाया येन स तथा तत्संबुद्धावित्यर्थः । दत्तात्रेय उवाच—

सत्यमस्ति सुरा विद्या ममास्ति शुभदर्शिनः ।
अस्यास्तु योषितः सङ्गादहमुच्छिष्टतां गतः ॥
स्त्रीसंभोगोऽतिदुःखाय स सत्येनोपसेवितः ।

सत्येन प्रत्यक्षेणेत्यर्थः । मयेति शेषः ॥

देवा ऊचुः—

अनघेयं मुनिश्रेष्ठ जगन्माता न दुष्यति ।
या सा विद्या तव विभोः सर्वज्ञस्य हृदि स्थिता ॥
यथांऽशुमाला सूर्यस्य द्विजचाण्डालसङ्गिनी ।

एवं वदतो देवांस्तुष्टोऽसौ तानसुरानाहवायाऽऽहूयात्राऽऽनयध्वमित्यादिशत् । ततस्तथा कृतवद्भिस्तैरानीतैरसुरैर्लक्ष्मीरेव दत्तात्रेयवामपार्श्वस्था लुब्धैः शिबिकायामधिरोप्य शिरसि धृत्वा किंचिन्नीता । ततो निकटागतान्देवान्दत्तात्रेयः किंचिद्विहस्य यच्छिरोगता लक्ष्मीस्तान्संजयतीत्यतोऽस्त्राद्यैर्हन्तव्या एवैतेऽसुरा यतस्ते मया निर्वीर्याः संपादिता इति समुपादिशत् । ततो देवाः सद्यो दैत्यान्हत्वा स्वर्गमगमन् । अतस्त्वमपि तथा कुर्विति गर्गवाक्यात्कार्तवीर्योऽपि तत्र गत्वा—

पादसंवाहनाद्येन मद्याद्याहरणेन च ।
स्रक्चन्दनादिगन्धाम्बुफलाद्यानयनेन च ॥
तथाऽन्नसाधनैस्तस्य उच्छिष्टापोहनेन च ।
परितुष्टो मुनिर्भूपं तमुवाच तथैव सः ॥
यथैवोक्ताः पुरा देवा मद्यभोगादिकुत्सनम् ।

ततः कार्तवीर्यः प्रणिपत्य—

देवस्त्वं हि पुराणोऽयं स्वां मायां समुपाश्रितः ।
अनघस्त्वं तथैवेयं देवी सर्वभवाऽरणिः ॥

अरणिर्यथा वह्न्युत्पत्तिस्थानं तथेयं देवी सर्वभावा चित्त्वान्मायात्वाद्वा यथाक्रमं विवर्तपरिणामाभ्यामन्यतरेण वादेन सर्वस्यानादिषट्काभिन्ननिखिलपदार्थस्य भव उत्पत्तिर्यस्याः सकाशात्सा तथेत्यर्थः । यद्वा सर्वभवारणिरित्येकं पदम् । सर्वस्य भवस्य संसारस्यारणिवदुत्पत्तिस्थानमित्यर्थः । तेन संसारस्याग्निवद्दाहकत्वेन दुःखैकहेतुत्वं ध्वनितम । ततस्तुष्टोऽसौ—

वरं वृणीष्व गुह्यं मे त्वया नाम उदीरितम् ।

नाम प्रसिद्धम् ।

तेन तुष्टिः परा जाता त्वय्यद्य मम पार्थिव ।
ये च मां पूजयिष्यन्ति गन्धमाल्यादिभिर्नराः ॥
मांसमद्योपहारैश्च मिष्टान्नैराज्यसमतैः ।
लक्ष्म्या समेतं गीतैश्च ब्राह्मणानां तथाऽर्चनैः ॥
वाद्यैर्मनोहरैर्वीणावेणुशङ्खादिभिस्तथा ।
तेषामहं परां पुष्टिं पुत्रदारधनादिकम् ॥
प्रदास्याम्यवधूतश्च करिष्याम्येव मान्यताम् ।

एवं तद्वाक्यं श्रुत्वा ततोऽभीप्सितवरानवाप्य कार्तवीर्यः सार्वभौमोऽभूदिति । तस्मादुक्तवाक्यवशात्कण्ठत एव मद्यादेः स्वेष्टत्वबोधनादुन्मत्ता एव दत्तात्रेयादयो न तून्मत्तवदाचरन्तोऽपि वस्तुतोऽनुन्मत्ता इति चेन्न । एतस्यापि सुरादिवत्कामुकजनवञ्चनार्थत्वात् । तथात्वं तु मद्या-

सक्तोऽहमित्यादिना स्पष्टमेव । नोचेदग्रेऽलर्केण ब्रह्मजिज्ञासुना यदा तद्दर्शनं गृहीतं तदा न तेन तं प्रति मद्यादि प्रदर्शितमित्युक्तमत्रैवैकत्रिंशाध्याये—

ततः स साधुसंपर्कं चिन्तयन्पृथिवीपतिः ।
दत्तात्रेयं महाभागमपृच्छत्परमार्तिमान् ॥
तं समेत्य महाभागमकल्मषमसङ्गिनम् ।
प्रणिपत्याभिसंपूज्य यथान्यायमभाषत ॥

इत्यादिना, तद्बाध्येत । प्रत्युतासङ्गिनमित्यनेनान्तर्बहिःसङ्गशून्यत्वमेवोक्तम् । न चान्तः-सङ्गराहित्यमेवोक्तमिति सांप्रतम् । तथात्वेऽकल्मषमित्यज्ञदृष्ट्याऽपि पापवत्त्वाभावाभिधायक-पदानर्थक्यप्रसङ्गात् । किंच वरं वृणीष्वेतिवचने यतस्त्वया मे मम गुह्यं रहस्यं नामेति प्रसिद्धं यथा भवति तथोदीरितम् । 'देवस्त्वं हि पुराणोऽयं स्वां मायां समुपाश्रितः' इत्यादिनाऽव्यक्तलिङ्गत्वादिना स्थितस्यापि मम वास्तविकं स्वरूपं प्रकटितं तेन हे पार्थिव सहस्रार्जुनाद्य त्वयि मम परा तुष्टिर्जातेति निरतिशयसंतोषकारणं सुरापानादिवैपरीत्याना-दरेण नैजवास्तवरूपज्ञानप्रकटयितृत्वं प्रत्यक्षमेव वदता ये च मां पूजयिष्यन्तीत्यादिवाक्यानां प्रसिद्धो योऽयं मया व्यवहारोऽङ्गीकृतः स्वासङ्गित्वार्थं तत्परिपालनोपयोगिगन्धाद्युपचारदातृ-ष्वपरा मम तुष्टिः स्यात् । अत एवोत्कृष्टशरीरबलरूपपुष्टिपुत्रधनकामिन्यादिदानेन मान्यता-मेव तेषां करिष्यामीत्यैहिकमेव फलं तदपि प्ररोचनार्थमेव यतस्तादृगुपचारैर्मम स्वरूपगो-पनमेव मुख्यमिष्टं न तु तैरुक्तफलावाप्तिरपीति रहस्यं स्पष्टमेव प्रकटितं तदपि बाधितं स्यात् । तस्मात्पूर्वोत्तरग्रन्थस्वारस्यादनुन्मत्ता उन्मत्तवदाचरन्त इतिश्रुत्या द्योतितं जीवन्मु-क्तानां सङ्गत्यागार्थमेवोन्मत्तवदाचरणं न तु विषयलम्पटत्वेनेति तत्सुस्थमेव । एवं च तत्त्व-विदां यथेष्टचेष्टाऽप्यस्तु का क्षतिर्मिथ्यात्वादिति प्रलापस्तु केषांचिददृष्टशास्त्ररहस्यानाम-नुपासितसद्गुरुचरणानां किंचिच्छास्त्राभ्यासाभासवशेन जीवन्मुक्तमानिनां पाषाणवत्संसारसा-गरे स्वपरनिमज्जनजनकानां भूरितरं वर्तते । तत्रेदं विचार्यते । किं तत्त्वविदां यथेष्टचेष्टा-ङ्गीकारः श्रुतेर्युक्तेरनुभूतेर्वा । आद्येऽपि किं विधिवशादर्थवादवशाद्वा । नाऽऽद्यः । यथे-ष्टचेष्टाविध्यनुपलम्भात् । न मातृवधेनेत्याद्यर्थवादवशाद्रात्रिसत्रन्यायेन तत्कल्पनेऽपि त्वद-भिमतयथेष्टचेष्टाविधानासिद्धेः । तत्त्वविदो हि पुण्यपापलेपाभावाद्विधिकैंकर्याभावाच्च यथे-ष्टचेष्टामङ्गी करोषि यदि पुनर्विधिपारवश्यं तस्य तदानीं तद्गतपुण्याद्युत्पत्तेः पुनर्जन्माप-त्तेश्च । नान्त्यः । तस्य स्तुतिमात्रपरत्वेनोपक्षीणत्वात् । न द्वितीयः । तादृग्युक्त्यभावात् । प्रत्युत ब्रह्मनिष्ठो यथेष्टचेष्टाशून्यत्वे सति सच्चेष्टाशाली संस्कारैकपराधीनशरीरत्वाद्दक्षिणाव-र्तत्रामितकुलालचक्रवदित्यादिबाधकयुक्तिसहस्रसत्त्वाच्च । न च ब्रह्मविद्यथेष्टचेष्टाविशिष्टः पुण्याद्यलेपाद्विधिकैंकर्याभावाच्चेश्वरवदिति युक्तिः साधिकाऽप्यस्तीति वाच्यम् । तत्र हेत्वोः सोपाधिकत्वात् । उपाधिस्तु मायित्वरूपः । तस्य यथेष्टचेष्टावैशिष्ट्यरूपं यत्प्रकृतयुक्तौ

साध्यं तद्व्यापकत्वेन साधनं यत्पुण्यादीति हेतुद्वयं तस्य बाले विद्यमानत्वेन मायित्वस्य तत्राविद्यमानत्वात्साधनाव्यापकत्वादुपाधित्वम्। तस्मान्नात्र युक्तिलेशोऽपि। तृतीये तु किं प्राचामनुभूतिरत्र मानमाधुनिकानां वा। आद्येऽपि किं जीवकोटिनिविष्टानां यद्वेश्वरकोटिनिविष्टानाम्। चरमे तु—

धर्मव्यतिक्रमो दृष्ट ईश्वराणां च साहसम्।
तेजीयसां न दोषाय वह्नेः सर्वभुजो यथा॥

इति दशमस्कन्धे श्रीकृष्णस्य गोपिकाविलाससंपर्के परीक्षिता समाक्षिप्ते श्रीशुकवचनाच्छ्रीकृष्णादीनां तेषामर्थवादवद्ब्रह्मबोधमाहात्म्यप्रख्यापनार्थमेव स्ववशवर्तिमाययैन्द्रजालिकवत्तथाप्रदर्शनमात्रपरत्वेन नित्यसिद्धज्ञानत्वेन वा मायापारवश्यराहित्येन कर्मादिजन्यसंस्काराधीनशरीरप्रवृत्तिराहित्येन वा यथेष्टाचारशब्दितविधिनिषेधविरोधिचरितस्य तत्रासत्त्वादनुदाहरणत्वमेव। न च धर्मव्यतिक्रम इति त्वदुदाहृत एव प्रकृतवाक्ये विध्यादिविरोधित्वं तदाचारस्य स्पष्टमेवेति वाच्यम्। लोके तथा प्रतीतावपीश्वराणां विध्यादिप्राप्तेरेवाभावेन तद्विरोधित्वस्य दूरोत्सारितत्वात्। नन्विति चेदिष्टापत्तिरस्मदादीनामपि ज्ञानिनां क्व विध्यादिप्राप्तिः। सत्यं, नैवास्ति विध्यादिकं तादृग्ज्ञानोत्तरं तथाऽपि पूर्वं तु जीवदशायां तत्स्थितमेव तत्संस्कारैरेव यावद्देहपतनं चेष्टासंभवात्, नैवेश्वरसाम्येन यथेष्टचेष्टावैशिष्ट्यम्। नन्वस्तु संस्कारमात्रपराधीनत्वं ज्ञानिशरीराणां तथाऽपि संसारस्यानादित्वादतीतजन्मगततादृक्संसारसंभवसत्त्वात्पुनरपि तादवस्थ्यमेवेति चेन्न। वल्लीन्यायेन निकटगतसंस्कारस्यैव बलवत्तरत्वेन कार्यकारित्वात्तस्य त्वत्यन्तशुभत्वस्य ‘ कर्माशुक्लाकृष्णं योगिनस्त्रिविधमितरेषाम् ’ इतिपातञ्जलस्मृतेः।

तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम्।
यतते च ततो भूयः संसिद्धौ कुरुनन्दन॥
पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः।
जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते॥
प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः।
अनेकजन्मसंसिद्धस्ततो याति परां गतिम्॥

इति श्रीमद्भगवद्गीतोक्तेश्च सिद्धत्वात्। वल्लीन्यायस्यायमाशयः। तथा हि—वल्ली यद्यपि प्रथममङ्कुरदशायां भूमेः सकाशात्सरलमेवोर्ध्वं गच्छति तथाऽपि यदा प्रवृद्धा सती वृक्षादौ संवेष्टिता भवति तदा केनचित्सा ततः समाकृष्टाऽपि निकटगबलवत्तरवेष्टनसंस्कारवशाद्यथा क्षणान्निर्मुक्ता सती वेष्टत एव वृक्षादौ तद्वद्बहुषु जन्मसु निष्कामकर्माद्यनुष्ठानसाधनपरम्परया ज्ञानोदयप्राक्क्षणपर्यन्तं परमशुद्धतमसंस्काराणामेव समीपवर्तित्वाद्बलवत्तमत्वाच्च क्व नाम तत्त्वविदि दुःसंस्कारोदयलेशोऽपि। एतेन जीवकोटिनिविष्टानामिति प्रथमप्रथमस्तथाऽऽधुनिकानामिति प्रथमद्वितीयोऽपि पक्षः प्रत्याख्यातः। यत्तु जीवकोटिनिविष्टानामपि प्राचां यथेष्ट-

चेष्टोपपादकं 'त्रिशीर्षाणं त्वाष्ट्रमहनमरुन्मुखान्यतीन्सालावृकेभ्यः प्रायच्छं बह्वीः संधा अतिक्रम्य दिवि प्राह्लादीयानतृणमहमन्तरिक्षे पौलोमान्पृथिव्यां कालखाञ्जांस्तस्य मे तत्र नलोम च मा मीयते' इति कौषीतक्यां प्रतर्दनं प्रतीन्द्रवाक्यम् । तथाऽऽधुनिकानामपि तद्बोधकमानन्दलहर्यां श्रीमच्छंकरभगवत्पादपादपद्मपरागाणाम्—

कदाचिच्छक्तीनां विकचमुखपद्मेषु कवला-
न्क्षिपंस्तासां वक्त्रात्स्वयमपि च गृह्णन्स्वमुखतः ।
तदद्वैतं रूपं निजपरविहीनं प्रकटय-
न्मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥

इति वाक्यम् । तत्तु भिन्नतात्पर्यं न यथेष्टचेष्टोद्बोधकं ब्रह्मविदः । तथा हि—कौषीतकिवाक्यस्यार्थस्तावदुक्तोऽनुभूतिप्रकाशे श्रीविद्यारण्यगुरुभिः—

त्वष्टुः पुत्रो विश्वरूप आसीद्देवपुरोहितः ।
स्वामिद्रोहं चकारासौ तं त्वाष्ट्रं हतवानहम् ॥
कर्तर्यभूद्ब्रह्महत्या न त्वसङ्गे चिदात्मनि ।
वेदान्तज्ञानहीनानां यतीनां हनने तथा ॥
लोकत्रये बहुविधानसुरान्हतवानहम् ।
चिदात्मनोऽस्य मे तत्र नैव लोमापि हिंस्यते ॥
माहात्म्यं मम नैतत्स्यात्किंतु ज्ञानस्य तद्भवेत् । इति ।

अत्र स्वामिद्रोहं चकारेति सापराधत्वेऽपि तद्धननाद्ब्रह्महत्या तु जातैवेति प्रसिद्धमेव तथाऽपि सा कर्तरि चिदाभास एव न त्वसङ्गे चिदात्मनीति चिदात्मन्येवासाङ्गित्वम् । तथा वेदान्तज्ञानहीनानामिति संन्यासित्वेऽप्यध्यात्मशास्त्रेणाद्वैतात्मानुभवमसंपादयतां यतीनां हननेन त्रैलोक्योपद्रवकारिबहुविधासुरविध्वंसनेन तद्धिंसाजन्यदोषेण चिदात्मनो मे न लोमापि हिंस्यते नैवेषदप्यवयवो भज्यत इति । अत्रापि पूर्ववद्यत्यादीनां सापराधत्वेऽपि तद्धिंसाजन्यदोषसंभवेऽपि चिदात्मन्येव कर्मलेपाभावः । तथा माहात्म्यं मम नैतत्स्यादिति तत्वज्ञस्य माहात्म्यपरत्वमेवास्य भूतार्थवादस्येति तद्वाक्यतात्पर्यविवरणात् । किंच कर्तर्यभूद्ब्रह्महत्येतिवचनाद्विश्वरूपवधोत्तरमिन्द्रस्य ब्रह्महत्या तच्चातुर्विध्यविधानं ततो निजपुत्रवधकोपितेन त्वष्ट्रा वृत्रासुरसमुत्पादनं ततो विष्णूपस्थानं ततस्तदुक्तरीत्या वृत्रवधस्ततो ब्रह्महत्यापीडावशान्मानससरोवरे सहस्रवर्षपर्यन्तं बिसनिवास इत्यादि सर्वं श्रीमद्भागवते षष्ठस्कन्धे समुपाख्याय

स वाजिमेधेन यथोदितेन वितायमानेन मरीचिमिश्रैः ।
इष्ट्वाऽभियज्ञं पुरुषं पुराणमिन्द्रो महानास विधूतपापः ॥

इति वचनेन 'तरति तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उ चैनमेवं वेद' इतिश्रुतेर्ब्रह्महत्याप्रायश्चित्तेनेन्द्रशुद्ध्युक्तेर्विश्वरूपादिवधोत्तरमेव प्रजापतिप्रसादादिन्द्रेणाऽऽत्मविद्या

लब्धा तदुत्तरमेवायं प्रतर्दनं प्रति तदुपदेश इति नियम्यते। नोचेद्ब्रह्महत्यारूपपापस्य प्रत्यक्षमाविर्भावस्ततो भीत्या सहस्रवर्षं बिसतन्तुप्रवेश इत्याद्युपाख्यानस्यासांगत्यापत्तेः। तस्मादत्रायमाशयः—या त्वाष्ट्रवधजा ज्ञानात्पुरा ब्रह्महत्याऽभूत्साऽपि कर्तरि चिदाभास एव न तु मय्यसङ्गचिदात्मनीति ज्ञानेन संचितासक्तित्वबुध्यैव तद्ध्वंसः। तथा वेदान्तेत्युक्तेर्ब्रह्मलोकफलकोपासनब्रह्मज्ञानाभ्यासब्रह्मात्मैक्यसाक्षात्कारशून्यसंन्यासिनाम्

> मृत्तोयैः शुध्यते शोध्यं नदी वेगेन शुध्यति।
> रजसा स्त्री मनोदुष्टा संन्यासेन द्विजोत्तमः॥

इति पाराशरमाधवीये मनुस्मृतेः संन्यासमात्रेण तत्प्राक्तनपापानां शुद्धावपि तदुत्तरजातज्ञाताज्ञातदुरितानां नाशनार्थं सालावृकादिभ्यस्तेषां संन्यासिनां भक्षणार्थं दानेन हनने कृतेऽपि तथा लोकत्रयवर्तिनानाविधासुराणां च हनने कृतेऽपि। यद्यपीदं हिंसाद्वयमधिकारप्राप्तत्वेन धर्म एव तथाऽपि ‘ न हिंस्यात्सर्वा भूतानि ’ इतिश्रुतेः ‘ तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ’ इतिश्रुत्यनुगृहीतत्वेन ज्ञानवन्तं प्रति हिंसात्मकस्वधर्मापेक्षया जीवन्मुक्तिसुखात्मकसमाध्याख्यनिवृत्त्यनुकूलाहिंसाविधेरेव बलवत्तरत्वेन तदुल्लङ्घनात्संजातक्रियमाणाख्यदुरिताश्लेषश्च द्योतित इति। ननु ‘ मनुष्याधिकारत्वाच्छास्त्रस्य ’ इतिन्यायादिन्द्रस्य देवराजत्वेनैव पापोत्पत्त्यभावाद्विनाऽपि ज्ञानं तस्य यथेष्टचेष्टाऽभीष्टैव किमुत ज्ञानोत्तरमपि। न च तर्हि प्रकृतोदाहृतश्रीमद्भागवतवचनादिन्द्रकृताश्वमेधात्मकस्य ब्रह्महत्याप्रायश्चित्तस्य वैयर्थ्यमिति शङ्कनीयम्। तस्य लोकसंग्रहार्थत्वात्। अत एव पाराशरमाधवीये देवानां कर्मानुष्ठानविचारं प्रकृत्य तत्र स्वस्वाधिकारनिर्वाहार्थं ते कर्माण्यनुतिष्ठन्तीति पक्षमुक्त्वा प्राग्जन्मसु कृतपुण्यैरेव तदधिकारावाप्तितद्भोगनिर्वाहादिसंभवाद्देवत्वदशायां कर्मफलरूपायां कर्मानधिकारित्वेन तदनुष्ठानस्याप्रयोजकत्वादित्यस्वारस्यं तस्मिन्पक्षे मनसि निधायेदं पक्षान्तरमुक्तम्। अथ वा स्वोपयोगाभावेऽपि मनुष्यान्प्रवर्तयितुं देवाः कर्माण्यनुतिष्ठन्तु ‘ यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ’ इति न्यायात्। अत एव सत्यसंकल्पोऽपि परमेश्वरो रामकृष्णाद्यवतारेषु लौकिकवैदिककर्मनटनेनैव जगन्निरवहादिति। तस्माद्यथेष्टचेष्टाप्रतिपादकमेवोक्तकौषीतकीवाक्यमिति चेत्। सत्यम्। यद्यपि नैवास्ति देवानामेतद्वचनाद्विधिशास्त्राधिकारस्तथाऽपि निषेधशास्त्राधिकारस्तु तेषामप्यस्त्येव। नो चेत्सर्वज्ञशिरोमणिभिर्गौतमादिभिरिन्द्रादिभ्योऽहल्यागमनादिदुरितफलरूपशापप्रदानं कथं कृतं स्यात्। तस्मात्तादृगितिहासप्रतिपादकश्रुतिस्मृतिपुराणाद्यन्यथानुपपत्त्या देवानामपि निषेधशास्त्रोल्लङ्घने पापावश्यंभाव एव वक्तव्यः। ततः कौषीतकिवाक्यस्य यज्ज्ञानोत्तरं ज्ञानमाहात्म्यात्क्रियमाणाश्लेषतत्प्राक्तनसंचितध्वंसप्रतिपादनपरत्वं वर्णितं तत्सुस्थमेव। यत्तु श्रीमद्भाष्यकारीयं कदाचिच्छक्तीनामित्यादिवाक्यमाधुनिकानां ब्रह्मविदां यथेष्टचेष्टाबोधकतया त्वयोदाहारि तस्यायमाशयः—तत्र हि शक्तीनामिति शक्तिपदप्रयोगः कृतोऽस्ति। तदर्थस्तु मूर्तिमत्योऽणिमाद्यष्टमहासिद्धय

एवेति निर्णीयते कुतः प्रकरणात् । अत्र स्तोत्र आरम्भतो मुनिशब्दितयोगीन्द्रब्रह्मविदेव प्रकृतो न केवलज्ञानी तथा शक्तिपदान्यथानुपपत्तेश्च । तथा हि शक्तिपदं तावदचिन्त्ये भण्यादिसामर्थ्ये शक्तं लोकेऽयस्कान्तमणौ लोहाकर्षणशक्तिरस्तीति । ततः प्रकृतेऽपि तादृशोऽचिन्त्यसामर्थ्याख्य एव योऽत्र योग्यः पदार्थः स एव ग्राह्यः स तु निरुक्तसिद्ध्याख्य एव सिध्यति । मुनिर्न व्यामोहं भजतीत्यत्र मननशीलत्वाच्चिमुनिपदप्रयोगान्मननस्य तु चित्तैकाग्र्यसाध्यत्वेन यथा फलार्थमाम्रे समारोपितेऽपि च्छायागन्धादिकं तदीयमानुषङ्गिकं फलं भवति तद्वन्मननार्थमेव संपादितचित्तैकाग्र्यस्याऽऽनुषङ्गिकफलत्वेन महासिद्ध्यष्टकावाप्तिसंभवात् । यद्वा 'पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्' 'पाण्डित्यं च बाल्यं च निर्विद्याथ मुनिः' इतिश्रुत्युक्तमुनिशब्दितध्यानसमाधिमानेव मुनिर्भवतीति मूलकारैरेवानुभूतिप्रकाशे प्रकृतश्रुतिविवृतौ 'मुनिर्ध्यानसमाधिभ्यां भवेद्धीवृत्तिशान्तये' इति प्रतिपादितत्वात्तद्ग्रहेण तु ध्यानादेश्चित्तनिरोधसाधनत्वात्तत्राप्युक्तसिद्ध्यष्टकस्य सुतरामानुषङ्गिकफलत्वेन संभवात् । तस्माच्छक्तयोऽत्राणिमाद्यष्टमहासिद्धिमूर्तिरूपा एव मुनिपदाभिप्रायेणोपलभ्यन्ते । अन्यथा कदाचित्कान्तानां कदाचिन्नारीणां कदाचिन्मुग्धानां कदाचिद्देवीनां कदाचिद्वामानां कदाचिद्रामाणामित्यादिप्रयोगः परस्त्रीणां मणिमन्त्रौषध्यादिमाहात्म्येनाऽऽकर्षणं संपाद्य जीवन्मुक्तो यथेष्टं विहरतीत्यर्थे विवक्षिते कृतः स्यात् । तत्रापि क्रमेण यावत्स्त्रीगुणवैशिष्ट्यं मानुषीमात्रत्वं तरुणीत्वं देवराजान्यतरस्त्रीत्वं रूपवतीत्वं गुणवतीत्वं च यद्यदपेक्षितं तत्तत्संभवत्येव । किं बहुना धर्मपत्न्योऽप्यत्र नैव वि[व]क्षिताः क्व पुनः परपत्नीशङ्काऽपि तथात्वे कदाचित्पत्नीनां कदाचिद्भार्याणां कदाचिज्जायानां कदाचिद्दाराणां कदाचित्साध्वीनामिति वा प्रयुज्येत । तत्रापि दारान्तपदेषु स्वस्त्रीसाधारण्यं साध्वीतिपदे सुचरित्रात्वं च संभवत्येव । तथा तु प्रयोगजातं किमप्यकृत्वा शक्तिपदमेव प्रयुक्तम् । तस्मात्तदाशयवशादुक्तसिद्धिग्रह एव श्रेयान् । तस्मादत्रैवं योजना—मुनिः कदाचिच्छक्तीनां विकचमुखपद्मेषु कवलान्स्वमुखतः क्षिपन्संस्तथा कदाचित्तासां वक्त्रात्स्वयमपि स्वमुखतः कवलान्गृह्णन्नपि यतो निजपरविहीनं तदद्वैतं रूपं प्रकटयन्यतश्च गुरुदीक्षाक्षततमा अतो व्यामोहं न भजतीति । मुनिः पूर्वोक्तवचनाद्ध्यानसमाधिमान् । कदाचित् । पूर्वसंस्कारवशाद्रजोवृत्तिविशेषेण मूर्तिमतीभिरेताभिरणिमादिसिद्धिभिरहं परागोचरतया स्वैरं विहरिष्यामीति व्युत्थानसमये तासां लावण्यादिदर्शनेन विपिने कुसुमिताम्रादिसुगन्धवति मलयमारुते चैत्रचित्राञ्चितचन्द्रचन्द्रिकारुचिरे सुरसरित्तीरे परभृतभ्रमरादिमधुररुतश्रवणे सति कामोदयसंपत्तौ सत्यां न तु सर्वदा । तत्रापि शक्तीनां पूर्वोक्ताणिमाद्यष्टमहासिद्धिमूर्तीनां वधूनां न त्वन्यासाम् । विकचमुखपद्मेषु । विकचानि, निजब्रह्मनिष्ठयोगिश्रेष्ठत्ववशात्परमादरेण सेवनोत्कटाभिलाषद्योतकार्धस्मिताविर्भूताधरपल्लवदशनचन्द्रिकतयोत्फुल्लानि । एतादृशानि यानि मुखान्येव पद्मानि तेषु तन्मध्य इत्यर्थः । कवलान्, तदानींतनदिव्यताम्बूलग्रासान् । स्वमुखतः, स्वीयवदनेन सार्वविभक्तिकस्तसिः । एतेन निजवदनं तद्वदनं प्रति चुम्बनार्थं

संयोज्य ततः स्वमुखेन दिव्यस्वचर्विततताम्बूलग्रासान्क्षिपति न तु स्वमुखात्तत्र क्षिपति । तथात्वे स्वमुखान्निष्काश्य क्षिपतीति स्यात्, तत्तु बीभत्सरसद्योतकत्वेन प्रकृतशृङ्गाररसविरोधीत्यर्थः । क्षिपन्नर्पयन्सन् । तथा कदाचिन्नितरां तासु प्रीत्यतिशयद्योतनेच्छायां सत्याम् । तासां पूर्वोक्ताणिमाद्यष्टमहासिद्धिरूपमुग्धानां वक्त्रात्प्रत्येकं तत्तद्वधूवदनात्स्वयमपि जीवन्मुक्तोऽपि स्वमुखत एव निजवदनेनैव । न तु ताभिः स्वस्ववदनेनैतन्मुखे ताम्बूलकवलोऽर्पयितुं शक्यते जीवन्मुक्तचक्रवर्तिनोऽस्यामर्यादाभीतिपारवश्यात् । एतेन तास्वस्य परमप्रीत्यतिशयो द्योतते । कवलान्, तच्चर्वितदिव्यताम्बूलग्रासान्गृह्णन्नपि स्वीकुर्वन्नपि । यद्वा देवतास्वप्युक्तव्यवहारो रागैकायत्तः कथं फलीभूतविरागशालिनोऽस्य समुचित इत्यस्वरसात्कवलपदस्य स्वमुखतन्मुखयोः किरणेष्वेव 'तत्तच्चक्षुश्चकोरभक्ष्येषु' 'सुधाबद्धग्रासैरुपवनचकोरैरनुसृतः' इत्यादिकविसमयरीत्या लक्षणा । तथा च न कोऽपि दोषः । यदि च तासामपि योगजधर्मैकलब्धत्वेन स्वकीयात्वमेव तथा च सौभर्यादिवत् 'धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ' इत्यादिस्मृतेः 'प्रजातिरमृतमानन्द इत्युपस्थे' इत्यादिश्रुतेश्च युक्त एव पूर्वोक्तव्यवहार इति विभाव्यते तदाऽधिकारिभेदेन व्याख्यानद्वयमपि व्यवस्थापनीयम् । तत्र प्रथमव्याख्यानं योगित्वेऽपि रागिविषयं चरमं तु तत्त्वे सति वीतरागविषयमिति हृदयम् । यतो यस्मात्कारणात् । निजपरविहीनम् । निज आत्मा परोऽनात्मा ताभ्यां विशेषेण हीनं रहितम् । ब्रह्मण आत्मत्वस्याप्यनात्मवस्तुभिन्नत्वरूपोपाधिप्रयुक्तत्वाद्वस्तुतस्तु तस्याप्यभावात् । अत एव तत् 'यतो वाचो निवर्तन्ते' इत्यादिश्रुतिशिरःसु वाङ्मनसागोचरत्वेन प्रतिपादितम् । अद्वैतं रूपं, द्वैतहीनं स्वस्वरूपम् । प्रकटयन् । अद्वैतात्मवस्तु मया करकलितामलकवदखण्डापरोक्षतया ज्ञातमस्तीति कृतकृत्यतया देहेन्द्रियादिभिर्विषयभोगसंपादने कृतेऽपि ममासङ्गाद्वैतकूटस्थानन्दैकरसस्य न काचिदपि क्षतिरस्तीति मयाऽयं विलासो भवतीभिः साकं क्रियते न तु भवत्सौन्दर्यादिसौष्ठवाचिन्त्यैश्वर्यपारवश्येनेति ताः प्रति स्फुटीकुर्वन्नित्यर्थः । नो चेदुक्ताद्वैतरूपस्य स्वप्रकाशत्वेन सर्वदा स्पष्टत्वादगोचरत्वेनेन्द्रियग्राह्यतारूपस्पष्टीकरणस्य तु सुतरामभावाच्च । एवं संस्कारवशाच्छृङ्गाररसद्वारा ब्रह्मवित्त्वस्फुटीकरणेच्छासत्त्वेन तादृगाचरणशीलत्वेऽपि नास्य जीवन्मुक्तस्य योगीन्द्रप्रसादाद्ब्रह्मवित्त्वेन पुनर्ग्रन्थ्युदयरूपाध्यासप्रसक्तिरित्याह—गुर्विति । यतो यस्माद्धेतोर्गुरुदीक्षाक्षततमाः । गुरुणा कृता दीक्षा गुरुदीक्षेति शाकपार्थिवादिवत्समासः । तया क्षतं तमो यस्य सः । गुरुपदमत्र च्छन्दोनुरोधेन निहितमपि

आचिनोति च शास्त्रार्थमाचारे स्थापयत्यपि ।
स्वयमप्याचरेद्यस्तु स आचार्य इति स्मृतः ॥

इत्याद्युक्तलक्षणाचार्यपरमेव । नो चेत् 'सगुरुर्यः क्रियाः कृत्वा वेदमस्मै प्रयच्छति' इति भगवता याज्ञवल्क्येन 'स्यान्निषेकादिकृद्गुरुः' इत्यमरसिंहेन चोक्तलक्षणस्य निषेकादिमारभ्योप-

नयनान्तं क्रियाः कृत्वा साङ्गसार्थवेदोपदेशादिकर्तुर्गुरोः पित्रादिरूपत्वेन प्रकृतानुपयोगित्वापत्तेः। 'उपनीय ददद्वेदमाचार्यः स उदाहृतः' इति भगवद्याज्ञवल्क्येन 'मन्त्रव्याख्याकृदाचार्यः' इत्यमरसिंहेन चोक्तं यद्विधिवत्सार्थवेददातृत्वं तथा मन्त्रव्याख्याकृत्त्वादि तत्पूर्वोक्ताचार्यलक्षणेऽस्त्येवेति प्रकृतोपयोगात्तस्यैव ग्रहः। तेन जीवन्मुक्तयोगीन्द्राचार्यविरचितचाक्षुष्यादिदीक्षानिर्मूलितमूलाज्ञान इत्यर्थः। अतः, एतादृशाचार्यदीक्षाक्षपिततमस्त्वादेव। व्यामोहम्।

क्षुत्पिपासादयो दृष्टा यथापूर्वं मयीति चेत्।
मच्छब्दवाच्येऽहंकारे दृश्यतां नेति को वदेत्॥
चिद्रूपेऽपि प्रसज्येरंस्तादात्म्याध्यासतो यदि।
माऽध्यासं कुरु किंतु त्वं विवेकं कुरु सर्वदा॥
झटित्यध्यास आयाति दृढवासनयेति चेत्।
आवर्तयेद्विवेकं च दृढं वासयितुं सदा॥

इति चित्रदीपोक्तपुनर्ग्रन्थ्युदयापरपर्यायम्। धन्योऽस्म्येतादृशकामाख्यपुरुषार्थपराकाष्ठोपभोगेनेति वा हा हतोऽस्मि ब्रह्मविदपि स्खलितब्रह्मचर्यत्वात्।

आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते पुनः।
प्रायश्चित्तं न पश्यामि येन शुध्येत्स आत्महा॥

इत्यादिस्मृतेरारूढपतितत्वात्का मे गतिः स्यात् 'किमहꣳ साधु नाकरवं किमहं पापमकरवम्' इति तैत्तिरीयश्रुत्युक्ततापापरपर्यायं वा। विशेषेण मूलाज्ञाननाशेऽपि विपरीतभावनासंस्काररूपेण आ ईषदपि मोहं मुह वैचित्य इति धातोर्विपरीतचित्ततारूपमद्वैतात्मनि द्वैतात्मबुद्धिलक्षणमध्यासं न भजति नैव सेवत इत्यर्थः। चाक्षुषी दीक्षा तूक्ता सूतसंहिताटीकायां माधवाचार्यैः प्रथमाध्याय एवाऽऽगमवाक्येन, उक्ता ह्यागमेषु चाक्षुषी दीक्षा—

चक्षुरुन्मील्य यत्तत्त्वं ध्यात्वा शिष्यं समीक्षते।
पशुबन्धविमोक्षाय दीक्षेयं चाक्षुषी मता॥ इति।

तथा बृहद्योगवासिष्ठेऽपि निर्वाणप्रकरणस्य पूर्वार्धे श्रीरामे स्वरूपैकनिष्ठतयाऽसंप्रज्ञातसमाधिस्थे सति विश्वामित्रो वसिष्ठं प्रति तद्व्युत्थापनं स्वकार्यार्थं देवकार्यार्थं च प्रार्थयञ्श्रीविश्वामित्र उवाच—

हे वसिष्ठ महाभाग ब्रह्मपुत्र महानसि।
गुरुत्वं शक्तिपातेन तत्क्षणादेव दर्शितम्॥

इति शक्तिपातमुपक्रम्याग्रिमश्लोके चाक्षुषी दीक्षोक्ता—

दर्शनात्स्पर्शनाच्छब्दात्कृपया शिष्यदेहके।
जनयेद्यः समावेशं शांभवः स हि देशिकः॥ इति।

अत्र टीका—ननु मया स्वशरीरं त्यक्त्वा रामदेहं प्रविश्य कुण्डलिनीसंचारादिकं न कृतमेव तत्कथं त्वया शक्तिपातो ज्ञातस्तत्राऽऽह—दर्शनादिति । सत्यसंकल्पानां त्वादृशां कृपादृष्ट्याऽपि सच्छिष्यस्य कुण्डलिन्याः षट्चक्रभेदनेन ब्रह्मरन्ध्रस्थितपरशिवसमावेशलक्षणो जीवस्योपाधिपरित्यागेन शुद्धब्रह्मसमावेशलक्षणश्च शक्तिपातः सिध्यतीति भावः । देशिको गुरुरिति । अत्र दर्शनादित्युक्तेः स्फुटैव चाक्षुषी दीक्षा । तथा श्रीमद्भाष्यकारचरणारविन्द-परागैरपि श्रीशिवानन्दलहर्यां चाक्षुषी दीक्षा परमेश्वरं प्रति प्रार्थिता । यथा—

त्वत्पादाम्बुजमर्चयामि परमं त्वां चिन्तयाम्यन्वहं
त्वामीशं शरणं व्रजामि वचसा त्वामेव याचे विभो ।
दीक्षां मे दिश चाक्षुषीं स करुणां दिव्यैश्चिरं प्रार्थितां
शंभो लोकगुरो मदीयमनसः सौख्योपदेशं कुरु ॥ इति ।

सोऽयं चाक्षुष्यादिदीक्षया शक्तिपातः कर्मसाम्य एव शिष्यस्य भवति नान्यथा । तदुक्तं सूतसंहितायां यज्ञवैभवखण्डे—

तस्य शिष्यस्य विप्रेन्द्राः कर्मसाम्ये सति द्विजाः ।
शांभवी शक्तिरत्यर्थं तस्मिन्पतति चिद्घने ॥ इति ।

एतट्टीकायामपि माधव्यामुक्तं सप्रमाणम्—

जन्तोरपश्चिमतनोः सति कर्मसाम्ये निःशेषपाशपटलच्छिदुरा निमेषात् ।
कल्याणदेशिककटाक्षसमाश्रयेण कारुण्यतो भवति शांभववेधदीक्षा ॥ इति ।

आगमिका अप्याहुः—

अधर्मधर्मयोः साम्ये जाते शक्तिः पतत्यसौ ।
ज्ञानात्मिका परा शक्तिः शंभोर्यस्मिन्निपातिता ॥ इति ।

अत्रैवं योजना—आचार्येण शिष्यस्याधर्मधर्मयोः साम्ये जाते सति शंभोर्ज्ञा-नात्मिकाऽत एव परा शक्तिर्यस्मिन्नधिकारिणि शिष्ये निपात्यते चाक्षुष्यादिदीक्षाकरणद्वारा प्रेर्यतेऽसौ शक्तिस्तस्मिन्पततीति । ननु यद्यत्र शक्तिशब्देन केवलाद्वैताचितिर्विवक्षिता तर्हि तस्याः स्वस्वरूपत्वादनन्तत्वादमूर्तत्वाच्च पतनासंभवः, यदि च पदार्थान्तरं तर्हि ज्ञानात्मिका-परेति तद्विशेषणद्वयं व्यर्थं स्यादिति चेत्सत्यम् । चिच्छक्तिरेवात्र विवक्षिता परं त्वद्वैतात्मरूपा-यास्तस्याः पतनादिकं त्वौपचारिकमेव । तदुक्तम्—

शक्तिपातप्रकारस्य रहस्यांशश्च कश्चन ।
मया नोक्तो रहस्यत्वादाज्ञाभङ्गभयादपि ॥

इति पूर्वोक्तशक्तिपातप्रघट्टकगतसूतसंहिताश्लोकटीकायामेव माधवाचार्यैः । अयमत्र रह-स्यांशः—परमेश्वरस्वरूपभूतत्वेन सर्वगतायाः परशक्तेः पतनासंभवाच्छिष्यस्याऽऽत्मनि प्राग-

न्नवस्थिता सा पाशजालावृतत्वेन तिरोहिता सती दीक्षासंस्कारेणाऽऽवरणापगमे सत्याभिव्यक्तिमासादयन्ती पतितेत्युपचर्यते । ऊर्ध्वदेशादधोदेशप्राप्तिर्हि पतनं न खलु तादृशमस्याः संभवतीति । आगमेऽप्युक्तम्—

व्यापिनी परमा शक्तिः पतितेत्युच्यते कथम् ।
उर्ध्वादधोगतिः पातो मूर्तस्यासर्वगस्य च ॥
सत्यं सा व्यापिनी नित्या सहजा शिववत्स्थिता ।
किंत्वियं मलकर्मादिपाशबन्धेषु संवृता ॥
पक्वपाकेषु सुव्यक्ता पतितेत्युपचर्यते ॥ इति ।

नन्वेवं यदि शक्तिपातेनैवाज्ञानध्वंसस्तर्हि तं त्वौपनिषदं पुरुषं पृच्छामि ' इति श्रुत्यादिवशात् ।

स्वाध्यायधर्मपठितं निजवेदशाखावेदान्तभूमिगतमादरपालितं च ।
संन्यासिना परदृशा गुरुणोपदिष्टं साक्षान्महावचनमेव विमुक्तिहेतुः ॥

इति श्रीमत्संक्षेपशारीरकाचार्यादिभिः शब्दापरोक्षवादाङ्गीकरणं व्यर्थं स्यादिति चेन्न । उक्तदीक्षादिद्वारा शक्तिपातेन ज्ञानप्रतिबन्धकध्वंसमात्रस्यैव विवक्षितत्वेन ज्ञानोदये निरुक्तवाक्यस्यैव स्मृत्यादिद्वारा साक्षात्प्रयोजकत्वात् । तदुक्तं सूतसंहितायां तत्रैव । तस्य शिष्यस्य विप्रेन्द्राः कर्मसाम्ये सतीत्यादिश्लोकोत्तरम्—

तदा शिष्यस्य चिद्रूपे कल्पिता मोहरूपिणी ।
माया दग्धा भवेत्किंचित्तदा पतति विग्रहः ॥

अत्र टीका माधवी—मोहरूपिणीति । शिष्यस्य चिद्रूपे स्वात्मनि चिच्छक्तितिरोधायिका हेयोपादेयविवेकज्ञानमावृण्वती मोहात्मिका या मायाऽऽश्रिता सा सच्चिद्रूपिण्याः शिष्यस्य स्वात्मन्यभिव्यक्तायाः परशक्तेः प्रसादेन किंचिदपसरतीत्यर्थः । तदा पतति विग्रह इति । मायासंबन्धनिबन्धनो ह्यात्मनः कर्तृत्वभोक्तृत्वादिसंबन्धस्तथाविधस्याऽऽत्मनः स्वोपभोक्तव्यसुखदुःखहेतुभूतपुण्यपापात्मककर्मनिबन्धनो भोगायतनभूतदेहेन संबन्धस्तथा च शक्तिपातेन मायाया अपसरणादात्मनः कर्तृत्वभोक्तृत्वादिसंबन्धशैथिल्ये पुण्यपापनिमित्तस्य देहसबन्धस्यापि गलितत्वात्तदभिमानाभावेन तत्पात इत्यर्थः । तदुक्तमागमे—

देहपातस्तथा कम्पः परमानन्दहर्षणे ।
स्वेदो रोमाञ्च इत्येतच्छक्तिपातस्य लक्षणम् ॥ इतीति ।
शिष्यस्य देहे विप्रेन्द्रा धरण्यां पतिते सति ।
प्रसादः शांकरस्तस्य द्विजाः संजात एव हि ॥
यस्य प्रसादः संजातो देहपातावसानकः ।
कृतार्थ एव विप्रेन्द्रा न स भूयोऽभिजायते ॥

इति श्लोकत्रयेण शक्तिपातकार्यादिकमुक्त्वाऽग्रे—

तस्य प्रसादयुक्तस्य विद्या वेदान्तवाक्यजा ।
दहत्यविद्यामखिलां तमः सूर्योदयो यथा ॥ इति ।

नन्वेवं यदि ज्ञानस्य स्वरूपोत्पत्तौ यः प्रतिबन्धः स शक्तिपातमात्रनिरस्यश्चेद्यस्य जिज्ञासोस्तादृशाचार्यचरणलाभाभावादिना न शक्तिपातस्तस्य का गतिरिति चेच्छृणु। शमाद्यन्तरङ्गसाधनैः श्रवणादिभिरन्तरङ्गतरसाधनैश्च श्रीगुर्वादिपरमभक्तिपूर्वकं भूयोऽभ्यस्तैः क्रमेण प्रतिबन्धक्षयाद्वाक्यार्थानुसंधानाज्ज्ञानं संपाद्य मुच्यत एव सः । शक्तिपाते तु तत्क्षण एव मुच्यत इति विशेषः । एतदप्युक्तं तत्रैवाग्रे—

शक्तिपातविहीनोऽपि सत्यवाग्गुरुभक्तिमान् ।
आचार्याच्छ्रुतवेदान्तः क्रमान्मुच्येत बन्धनात् ॥
शक्तिपातेन संयुक्ता विद्या वेदान्तवाक्यजा ।
यदा यस्य तदा तस्य विमुक्तिर्नात्र संशयः ॥ इति ।

ननु पूर्वोदाहृतवासिष्ठवाक्ये दर्शनात्स्पर्शनादित्यत्र व्याख्याने टीकाकारेण सत्यसंकल्पानां त्वादृशां कृपादृष्ट्याऽपि सच्छिष्यस्येत्यादिना शक्तिपातः सिध्यतीत्यन्तेन दर्शनादिसाध्यशक्तिपाते सत्यसंकल्पत्वस्य कारणतोक्ता तथा चेद्विनैव दर्शनादिकं करुणामृतमयैकशरीराणां श्रीमत्सद्गुरुचक्रवर्तिचूडाचिन्तामणीनाममानित्वादिस्वाभाव्यान्महावाक्यार्थोपदेशे दर्शनादिना शक्तिपातसमावेशे च सुतरामनुत्सुकानां कदाचिद्व्युत्थानावसरे कस्यचित्सच्छिष्यस्य स्मरणे जातेऽस्य ज्ञानप्रतिबन्धध्वंसोऽञ्जसैवास्त्विति संकल्पादेव पूर्वोक्तशक्तिपातः स्यात्, तथा मनसैव तदन्तःकरणं प्रविश्य योगैश्वर्येण प्रत्यक्षीभूतं ज्ञानोत्पत्तिप्रतिबन्धकं दुरितं निरस्तं स्यादिति चेदिष्टापत्तिः। अत एव भगवता बादरायणाचार्येण श्रीमच्छारीरकसंज्ञकोत्तरमीमांसासूत्रे चतुर्थाध्याये योगाद्यैश्वर्यं प्रकृत्य 'जगद्व्यापारवर्जम्' इतिसूत्रेण परमेश्वरतुल्यमेव तस्योपासकयोगीन्द्रस्यैश्वर्यं भवति परं तु तत्र जगद्व्यापारो नाम जगदुत्पत्तिस्थितिप्रलयकरणस्वातन्त्र्यं यत्परमेश्वरे वर्तते तन्मात्रवर्जं तावन्मात्रहीनमस्यैश्वर्यं भवति, अन्यत्सकलमपि परमेश्वरतुल्यमेवेति सूत्रितम्। किंच कुलार्णवाख्ये तन्त्रेऽपि दीक्षाकथनप्रसङ्गेन त्रैविध्यं वदता भगवता श्रीशंकरेणापि दीक्षादातुर्योगीन्द्रब्रह्मविद आचार्यस्य सत्यसंकल्पत्वं ध्वनितम् । तथाहि—

यथा पक्षी स्वपक्षाभ्यां शिशून्संवर्धयेच्छनैः ।
स्पर्शदीक्षोपदेशस्तु तादृशः कथितः प्रिये ॥
स्वापत्यानि यथा कूर्मी वीक्षणेनैव पोषयेत् ।
दृग्दीक्षाख्योपदेशस्तु तादृशः कथितः प्रिये ॥
यथा मत्स्यी स्वतनयान्ध्यानमात्रेण पोषयेत् ।
वेधदीक्षोपदेशस्तु मनसः स्यात्तथाविधः ॥ इति ।

तस्माद्यतोऽयं मुनिरुक्तलक्षणशक्तिपातविशिष्टचाक्षुष्यादिगुरुदीक्षाक्षततमा । अत एव व्यामोहं न भजति, तादृशज्ञानहीनो योऽकृतोपास्तिस्तत्त्ववित्स तु यत्किंचिद्व्यवहारेऽपि व्यामोहं भजत्येवेति भावः । तदयमत्र ज्ञानभेदसंग्रहः—तत्त्वज्ञानं तावद्दैवमार्षं पौरुषं चेति-भेदात्त्रिविधम् । तत्र दैवं ज्ञानं स्थूलादिचतुर्विधशक्तिपातजन्यं तदजन्यं चेतिभेदात्पञ्चविधम् । तच्च साम्यासाम्यप्रदत्वभेदेन पुनर्द्विविधम् । एवमिदं दशविधं दैवज्ञानम् । आर्षं चैकधैव । मानुषं पुनः सोपासनत्वनिरुपासनत्वभेदेन दैववद्दशविधमपि विंशन्तिधेति सर्वमेकीभूयैकत्रिंशत्प्रकारकं तत्त्वज्ञानं भवति । एतल्लक्षणादिकं तूक्तं मदीयाद्वैतामृतमञ्जर्यां सव्याख्यायाम्—

तत्त्वज्ञानं त्रिविधं भेदाद्दैवार्षपौरुषत्वस्य ।
आर्षं च प्रातिभमिति वार्तिक आर्षत्वसंज्ञोक्तेः ॥ १ ॥

दैवार्षं पौरुषत्वस्य भेदात्त्रिविधं तत्त्वज्ञानमित्यन्वयः । देवेभ्यो भवं दैवम्, ऋषेः स्वयंप्रभाताद्वेदाज्जातमार्षं पुरुषेभ्यो जातं पौरुषं तेषां भावस्तत्त्वं तस्य भेदादुक्तोत्पत्तिसामग्रीभेदात्त्रिप्रकारं ब्रह्मज्ञानमित्यर्थः । नन्वेवं भेदकल्पने किं मानमिति चेत्तैत्तिरीयकवार्तिकमेव प्रमाणत्वेनोपलक्षणविधया वदन्नुक्तत्रैविध्ये हेतुमाह—आर्षं चेति । तथाहि—अहं वृक्षस्य रेरिवेत्यादिरूपस्य मन्त्रस्य व्याख्यानं प्रकृत्याऽऽहुः श्रीमत्सुरेश्वराचार्यचरणकमलपरागास्तैत्तिरीयोपनिषद्वार्तिके—'त्रिशङ्कोर्ब्रह्मभूतस्य ह्यार्षं संदर्शनं परम्' इति । त्रिशङ्कुनाम्नो महर्षेरहं वृक्षस्येत्यादिमन्त्रार्थीभूतमद्वैतात्मज्ञानरूपमत एव परमत एव ब्रह्मभूतस्योक्तर्षेरार्षमुपदेशानपेक्षं संदर्शनं प्रादुर्बभूवेत्यर्थकमर्धश्लोकमुक्त्वा ततस्तन्मन्त्रजपप्रयोजनादिकमभिधायाग्रे—

मुमुक्षोस्तत्परस्यैव श्रौतस्मार्तेषु कर्मसु ।
आर्षं च प्रातिभं ज्ञानमाविर्भवति मोक्षदम् ॥ इति ।

अस्य टीका श्रीमदानन्दज्ञानविरचिता—ईश्वरार्थेषु श्रौतेषु स्मार्तेषु च कर्मसु फलाभिसंधिवार्जितस्येश्वरायेत्येवंतात्पर्येण प्रवृत्तस्य परिशुद्धबुद्धेर्मोक्षमेवापेक्षमाणस्याऽऽर्षं यथार्थं प्रातिभमुपदेशानपेक्षं मोक्षफलं ज्ञानमुद्भवतीत्यर्थ इति । अत्राऽऽर्षमितिपदं यथार्थमिति व्याख्यातम् । तद्याथार्थ्यं वेदं विनाऽन्यत्र नैवास्तीति हेतोर्मया ऋषेर्वेदादिति व्याख्यातम् । तथा प्रातिभमिति पदमुपदेशानपेक्षमिति विवृतं तद्दृशान्मया स्वयंप्रभातादिति यद्वेदस्य विशेषणं दत्तं तत्समीचीनमेव । नन्वस्त्वेवमार्षलक्षणप्रामाण्यं तादृक्संज्ञाभेदादिकं तथाऽपि दैवादिसंज्ञादौ किं गमकमिति चेदुपलक्षणविधयैव दैवपौरुषयोरपीति ज्ञेयम् । न चोपलक्षणत्वे तयोरेव किमिति ग्रहणम् ।

अजातशत्रुरध्याये चतुर्थे ब्राह्मणैस्त्रिभिः ।
विद्यां बालाकये प्राह तां विस्पष्टमिह ब्रुवे ॥

इत्यनुभूतिप्रकाशोक्तेरजातशत्रोः क्षत्रियत्वात्क्षात्रादिसंज्ञकस्यापि ज्ञानस्य ग्रहणं किमिति न कृतमिति वाच्यम् । 'तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्या-

णाम्' इतिश्रुतौ मुख्यत्वेन देवादिजातित्रयस्यैव गृहीतत्वादेवमवान्तरभेदग्रहस्य प्रकृतानुपयुक्तत्वादनन्तभेदापत्तेश्च। तदत्रैवं योजना—आर्षं च प्रातिभमित्युक्तवार्तिके तत्त्वज्ञानस्याऽऽर्षत्वसंज्ञोक्तेर्हेतोर्दैवार्षपौरुषत्वस्य भेदात्त्रिविधं तत्त्वज्ञानमिति ॥ १ ॥

एवं प्रतिज्ञातत्रैविध्ये क्रमेण सोदाहरणानि तल्लक्षणान्याह यद्देवैरित्यादिभिस्त्रिभिः पद्यैः—

यद्देवैरुपदिष्टं तद्दैवं ज्ञानमुच्यते सद्भिः।

श्रीकृष्णादिगुरुवरैर्यथाऽर्जुनप्रभृतिशिष्येभ्यः ॥ २ ॥

अत्राऽऽदिप्रभृतिपदाभ्यां श्रीमच्छिवराघवयोर्ग्रहः ॥ २ ॥

यद्योगभ्रष्टत्वात्स्मृत्वा स्वयमेव सार्थकं वाक्यम्।
जातं तदार्षमेव ज्ञानं यद्वत्त्रिशङ्क्वादेः ॥ ३ ॥

योगेति।

शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते।
अथ वा योगिनामेव कुले भवति धीमताम् ॥

इति स्मृतेः कस्य चिद्योगीन्द्रस्य जन्मान्तरकृतयोगतश्च्युतावपीह जन्मनि योगीश्वरादिकुले प्रादुर्भूतस्य योगवासनावशात्तदेकनिरतस्य सार्थकमर्थेनाद्वैतब्रह्मात्म्यैक्यतात्पर्येण सहितमेतादृशमहं ब्रह्मास्मीत्यहंग्रहाभिधनिर्गुणोपासनासंस्कारादहं ब्रह्मास्मीति बृहदारण्यकमहावाक्यं स्वयमेव स्मृत्वा 'ऋतंभरा तत्र प्रज्ञा' इति भगवत्पतञ्जलिसूत्रात्तत्र सबीजयोगे समाहितचित्तस्य या प्रज्ञा जायते सा सत्यमबाधितमेव वस्तु बिभर्ति विषयीकृत्य पुष्णातीवेतितात्पर्यकान्निरुक्ताहंग्रहाख्यनिर्गुणोपासनबीजविशिष्टयोगसंज्ञकसमाधिनिष्ठस्य सत्यब्रह्मात्म्यैक्यरूपाद्वैततत्त्वमात्रविषयकं यथार्थज्ञानमाविर्भवतीत्युक्तत्वेन पूर्वोक्ताधिकारिणो जातं प्रादुर्भूतं यज्ज्ञानं तदार्षमेव ऋषेरहं ब्रह्मास्मीत्यादिमहावाक्यलक्षणात्स्वयंप्रभाताद्वेदादेव भवमार्षमित्यन्वर्थसंज्ञकमेव ज्ञेयं न तु रथंतरं सामेत्यादिवत्केवलसंज्ञामात्रशालीत्यर्थः। ततः स्वयंप्रभातमहावाक्यमात्रजन्ययथार्थज्ञानत्वमार्षज्ञानलक्षणमिति भावः। उदाहरति—यद्वदिति। यथा त्रिशङ्कुनामा कश्चिन्महर्षिरुक्तयोगपरिपाकान्तकर्मादिमहिम्ना तैत्तिरीयोपनिषद्याम्नातमहं वृक्षस्येत्यादिकमद्वैतात्मतत्त्वानुभवप्रकाशकं सार्थकं मन्त्रमुपदेशादिकं विनैव दृष्ट्वा ब्रह्माहमस्मीत्यार्षज्ञानेन ब्रह्मात्मैक्यमनुभूतवांस्तद्वदित्यर्थः। ननु मुमुक्षोस्तत्परस्यैव श्रौतस्मार्तेषु कर्मस्वित्याद्युक्तवार्तिके तु श्रौतादिकर्मनिष्ठस्यैवोक्तज्ञानोदयप्रतीतेः कथं त्वया यद्योगेत्यादौ योगादिपूर्वकमहंग्रहोपासकस्यैव तादृग्ज्ञानोदयः प्रतिपादित इति चेन्न। चित्तवृत्तिनिरोधरूपस्य योगस्य तथा निर्गुणाहंग्रहोपासनस्यापि निरुक्तकर्मत्वविवक्षया तत्रैवान्तर्भावात्। तदुक्तं समन्वयसूत्रे भाष्ये—क्रिया हि नाम सा। याऽत्र वस्तुस्वरूपनिरपेक्षैव चोद्यते पुरुषचित्तव्यापाराधीना च। यथा यस्यै देवतायै हविर्गृहीतं स्यात्तां ध्यायेद्वषट्करिष्यन्निति। संध्यां मनसा ध्यायेदिति च, एव-

मादिषु ध्यानं चिन्तनं यद्यपि मानसं तथाऽपि पुरुषेण कर्तुमकर्तुमन्यथा वा कर्तुं शक्यं पुरुषतन्त्रत्वादिति । आदिना वामदेवादेर्ग्रहः । तदुक्तमस्यैव मन्त्रस्य ' इति त्रिशङ्कोर्वेदानुवचनम् ' इति चरमवाक्यभाष्ये—इत्येवं त्रिशङ्कोर्ऋषेर्ब्रह्मभूतस्य ब्रह्मविदो वेदो वेदनमात्मैकत्वविज्ञानं तस्य प्राप्तिमनुवचनं वेदानुवचनमात्मनः कृतकृत्यताख्यापनार्थं वामदेववत्त्रिशङ्कुनाऽऽर्षेण दर्शनेन दृष्टो मन्त्राम्नाय आत्मविद्याप्रकाशक इत्यर्थ इति । वामदेवो हि योगभ्रष्टत्वाद्गर्भ एव यथार्थर्षिदर्शनेनाद्वैतात्मानमनुभूतवान्नित्यस्नातमैतरेयोपनिषदि गर्भे नु सन्निति मन्त्रमुक्त्वाऽग्रे—'गर्भ एवैतच्छयानो वामदेव एवमुवाच' इति । बृहदारण्यकेऽपि—'तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवꣳ सूर्यश्चेति' इति ॥ ३ ॥

विधिवद्गुरूपसत्त्या तदुक्तवाक्यार्थतस्तु यज्ज्ञातम् ।
ज्ञानं तत्पौरुषमिह शुकाद्यथा विष्णुरातस्य ॥ ४ ॥

विधिवत् । ' तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ' इति 'शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्यति' इत्यादिश्रुतिचोदितविधिपूर्वकमित्यर्थः । गुर्विति । उक्तलक्षणगुरुसमीपगत्या । तदिति गुरूक्ततत्त्वमस्यादिमहावाक्यार्थश्रवणेन तु यज्ज्ञानमिहास्मिञ्शरीरे जातं तत्पौरुषं पुरुषान्मानवाज्जातं पौरुषं मनुष्यजातीयगुरुजन्यत्वात्तथा ज्ञेयमित्यर्थः । तदुदाहरति शुकादित्यादिना । विष्णुरातः परीक्षित् ॥ ४ ॥

एवं सोदाहरणं दैवादित्रिविधं ज्ञानं निरूप्य तद्धेतूनप्याह—

देवं ध्यातुर्दैवं ह्यहंग्रहोपासकस्य पुनरार्षम् ।
गुरुभक्तस्य तु पौरुषमनेकभवपुण्यपाकेन ॥ ५ ॥

देवमिति । देवं शिवशौरिशक्तिसुर्यसूमुखानामन्यतमस्वरूपमन्तर्यामिणं परमेश्वरं ध्यातुश्चिन्तयितुरित्यर्थः । ज्ञानं भवतीति शेषः । हिरवधारणे । अहमिति । अहं ब्रह्मास्मीति निरन्तरचिन्तनमेव प्रकृतेऽहंग्रहोपासना । अनेकेति । एवं ज्ञानत्रयेऽपि प्रत्येकं त्रिविधमपि साधनमनेकजन्मस्वेवानुष्ठितं चेत्तत्पुण्यपरिपाक एव कारणमित्यर्थः । तदुक्तं श्रीमद्भगवद्गीतासु—

'बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते' । इति ।

दैवार्षादिभेदस्तु तत्तच्चित्तप्रीतिसंस्कारतस्तत्तत्साधनप्राधान्यादेवेति भावः ॥ ५ ॥

तत्राऽऽर्षस्यैवैकविधत्वाद्दैवपौरुषयोरेव शक्तिपातजन्यत्वतदजन्यत्वाभ्यां द्वैविध्यमाह—

दैवमथो पौरुषमपि चेज्ज्ञानं शक्तिपाततो जातम् ।
तेन विनाऽपीति भिदा द्विविधं ज्ञेयं विपश्चिद्भिः ॥ ६ ॥

दैवमिति । शक्तीति वक्ष्यमाणदेवादिकृतशक्तिपातसामग्र्येत्यर्थः । ' भृगुर्वै वारुणिः । वरुणं पितरमुपससार अधीहि भगवो ब्रह्मेति ' इत्याद्युपक्रम्य तैत्तिरीयोपनिषदि वरुणेन भृगुं

पुत्रं प्रत्युपदिष्टविचारस्थलीभूतपञ्चकोशविवेचनेनैव तत्कृतेन तस्य ज्ञानजननाद्यमेन नचिकेतसं प्रति विवेकस्यैवोक्तेश्च शक्तिपातं विनाऽपि दैवज्ञानं प्रसिद्धमेव भवतीतिभावः ।

तत्रापि पौरुषस्य सोपासननिरुपासनत्वभेदेन पुनर्द्वैविध्यं बोधयति—

पौरुषमिदं द्विविधमपि नूनं ज्ञानं पुनर्द्विधा बोध्यम् ।
एकमुपासनपूर्वं तद्विपरीतं तथाऽन्यत्तत् ॥ ७ ॥

पौरुषमिति । इदं, पूर्वोक्तलक्षणत्वेन बुद्धिस्थम् । तत्प्रकारमाहैकमित्यादिना । तदुद्दिष्टं द्विविधपौरुषज्ञानम् ॥ ७ ॥

अथ शक्तिपातजन्यत्वावच्छिन्नस्य दैवादेर्ज्ञानस्य स्थूलादिसंज्ञकवक्ष्यमाणशक्तिपातप्रकारभेदेन पुनश्चातुर्विध्यं विधत्ते—

यच्छक्तिपातजातं दैवमथ द्विविधपौरुषं चैतत् ।
प्रत्येकमपि चतुर्धा विज्ञेयं तद्विभेदेन ॥ ८ ॥

यदिति । यच्छक्तिपातजातं दैवं ज्ञानं तथा शक्तिपातजातमेव द्विविधपौरुषं सोपासननिरुपासनत्वभेदेन द्विप्रकारकं पौरुषं च प्रत्येकमपि तद्विभेदेन तत्तद्गुरुकृतस्य तस्य तस्य शक्तिपातस्य रीतिविभेदेन चतुर्धा विज्ञेयमित्यर्थः । अत्र पौरुषज्ञानस्यैव सोपासनत्वादिभेदेन द्वैविध्योक्तेर्दैवार्षज्ञानयोरुपासनैकपूर्वकत्वादनुपासनपूर्वकत्वाभावो द्योत्यते ॥ ८ ॥

तद्विभेदेनेतिसूचितं शक्तिपातरीतिभेदं तल्लक्षणभेदपूर्वकं स्थूलादिसंज्ञापूर्वकं च कथयति—

विद्धि स्थूलं सूक्ष्मं सूक्ष्मतरं सूक्ष्मतममपि क्रमतः ।
स्पर्शनभाषणदर्शनसंकल्पनजत्वतश्चतुर्धा तम् ॥

विद्धि स्थूलमिति । गुरुविभेदेनेति पूर्वपद्यसूचितो यो नानाविधः शक्तिपातस्तं क्रमतोऽनुक्रमेण स्थूलादिसंज्ञकं चतुर्धा चतुष्प्रकारं विद्धि भो शिष्य त्वं जानीहीत्यध्याहृत्य योजना । तत्र हेतुमाह स्पर्शनेत्यादिना । यः श्रीगुरुवरदकरस्पर्शजः शक्तिपातः सः स्थूलसंज्ञकः साक्षात्स्पर्शस्य भाषणाद्यपेक्षया स्थूलत्वात् । एवं क्रमेण सर्वत्र योजनीयम् । संकल्पनस्य तु स्पर्शनादौ सर्वत्र कारणत्वेऽपि प्रधानोपसर्जनभावेन व्यवस्था ज्ञेया । एवं शक्तिपातभेदस्तूक्तो बृहद्योगवासिष्ठे निर्वाणप्रकरणपूर्वार्धे तं प्रकृत्य—

दर्शनात्स्पर्शनाच्छब्दात्कृपया शिष्यदेहके ।
जनयेद्यः समावेशं शांभवः स हि देशिकः ॥ इति ।

संकल्पनजत्वं तु तस्य 'यं यं लोकं मनसा संविभाति विशुद्धसत्त्वः कामयते यांश्च कामान् । तं तं लोकं जयते तांश्च कामान्, इतिश्रुत्या तथा—

यद्दुष्करं दुराराध्यं दुर्जयं दुरतिक्रमम् ।
तत्सर्वं तपसा साध्यं तपो हि दुरतिक्रमम् ॥

इतिस्मृत्या च कैमुत्येनैव सूचितत्वाच्चार्थसिद्धमेवं । ‘ मनसश्चेन्द्रियाणां च ऐकाग्र्यं परमं तपः ’ इति स्मृतेर्जीवन्मुक्तयोगीन्द्राणां श्रीमद्वसिष्ठप्रभृतीनां परमतपस्वित्वेन सत्यसंकल्पत्वादेव तपसासंकल्पसिद्धिरिति योगभूत्यनुसारेण भवतीति भावः । तस्माच्छक्तिपातरूपकारणभेदात्तत्कार्यं ज्ञानमपि तृणारणिमणिजन्यवह्निन्यायेन तत्तत्स्थूलादिसंज्ञकं चतुर्विधं तथा दैवपौरुषभेदेन त्रिविधमपि प्रत्येकं सिद्धम् । यद्यप्यसौ शक्तिपातः शिष्यदेहस्थकुण्डलिन्याश्चालनेन षट्चक्रभेदपूर्वकं सप्राणवायुब्रह्मरन्ध्रप्रवेशेन मनसोऽसंप्रज्ञातसमाधिदार्ढ्याधायको यौगिकः, तथा—

सुसमे सुप्रदेशे तु निर्जने निर्भये शुभे ।
गोमयेनोपलिप्ते तु पुष्पैरभ्यर्चिते तथा ॥

इत्यादिना सूतसंहितोक्तरीत्या कुण्डमण्डपाद्यपेक्षतान्त्रिकदीक्षाप्रदानादिरूपस्तान्त्रिकः, तथा निरुक्तश्रुत्यादिसिद्धसंकल्पादिना शिष्यस्य तत्त्वज्ञानोत्पत्तितत्फलजीवन्मुक्तिप्रतिबन्धकपापविशेषात्मकरजस्तमःसंस्कारमलप्रध्वंसनरूपो वासिष्ठादिप्रसिद्धत्वाच्छास्त्रीय इति त्रिविधोऽस्ति तथाऽपि प्रकृतोपयोगित्वाच्चरम एवात्र ग्राह्य इत्याशयः ॥ ९ ॥

एवं प्रतिज्ञातशक्तिपातजातज्ञानचातुर्विध्यं शक्तिपातचातुर्विध्यकथनेनोपपाद्याधुना तस्य स्थूलादिशक्तिपातजनितस्य चतुर्विधज्ञानस्यैव स्वोत्पत्तिमात्रेण गुरुसाम्यप्रदत्वं तथा स्वोत्पत्त्या पुनर्जन्माभावमात्रप्रदत्वं न तु गुरुवच्छक्तिपातादिकृतिपूर्वकमितराधिकारितारकत्वमिति भेदेन द्वैविध्यं प्रतिजानीते—

तत्रापि चरमयुक्तं साम्यासाम्यप्रदत्वतो द्विविधम् ।
साम्यं तु शक्तिपाते गुरुवत्स्वस्यापि सामर्थ्यम् ॥ १० ॥

तत्रापीति । तत्राप्युक्तभेदेन चतुर्विधज्ञानेष्वपि । चरमम्’ अन्त्यं सूक्ष्मतममिति यावत् । तत्स्थूलादिकं तु द्विविधमित्यर्थः ॥ १० ॥

इदानीं प्रतिज्ञातं साम्येत्यादिना द्वैविध्यमेव क्रमेण सदृष्टान्तं स्पष्टयति स्थूलं ज्ञानमित्यादिभिः पद्यैः—

स्थूलं ज्ञानं द्विविधं गुरुसाम्यासाम्यदत्वभेदेन ।
दीपप्रस्तरयोरिव संस्पर्शात्स्निग्धवर्त्ययसोः ॥ ११ ॥

दीपेति । प्रस्तरः स्पर्शमणिरिति शास्त्रे, ‘ परिस ’ इति महाराष्ट्रलोके च प्रसिद्धः । स्वस्पर्शेन लोहस्य सद्यो हेमत्वापादकः पाषाणविशेष इत्यर्थः । स्निग्धेति । स्निग्धवर्ती घृताद्यार्द्रकार्पासादिवर्तिका प्रसिद्धैव । शिष्टं तु स्पष्टमेव ॥ ११ ॥

तद्वद्द्विविधं सूक्ष्मं शब्दश्रवणेन कोकिलाम्बुदयोः ।
तत्सुतमयूरयोरिव तद्विज्ञेयं यथासंख्यम् ॥ १२ ॥

तद्वत्, साम्यादिभेदेनोक्तस्थूलज्ञानद्वैविध्यवदित्यर्थः। सूक्ष्मं, प्रागुक्तसूक्ष्मज्ञानम्। कोकिलेति शब्देति तत्सुतेत्यादि यथा कोकिलाम्बुदयोः शब्दश्रवणेन यथासंख्यम्। अनुक्रमेण काकरक्षितकोकिलबालकेऽहं कोकिलोऽस्मीति स्फूर्तितः कोलिलसाम्यमेवाऽऽविर्भवति मयूरस्य तु मेघशब्दश्रवणेनाऽऽनन्दविशेषमात्रमाविर्भवति न तु मेघसाम्यं तद्वदित्यर्थः॥ १२॥

इत्थं सूक्ष्मतरमपि द्विविधं कूर्म्या निरीक्षणात्तस्याः।
पुत्र्यास्तथैव सवितुर्निरीक्षणात्कोकमिथुनस्य॥ १३॥

कूर्म्या इत्यादि। अयमाशयः—यथा लोके शास्त्रे च प्रसिद्धमेव कूर्मदृष्टिसंचारमात्रेणैव तदपत्यतृप्तिर्भवतीति तद्वद्गुरोः कृपादृष्टिसंचारलक्षणशक्तिपातेन जायमानं ज्ञानमपि स्वशिष्येऽपि कालान्तरे स्वकृपादृष्टिसंचारमात्रेणैव तच्छिष्येऽपि ज्ञानजननशक्तिसाम्यं संपद्यत इति। अत्र तत्पुत्रीग्रहणं तु कालेन तस्याः संततौ सत्यां स्वनिरीक्षणमात्रेण तत्तृप्तिकारित्वरूपमातृसाम्यद्योतनार्थमेव। यद्यप्यस्मिन्नुदाहरणे कालापेक्षाऽस्ति तथाऽपि साम्यं तु सिद्धमेव तत्स्फुटी भविष्यति तद्वद्दार्ष्टान्तिकेऽपि निरीक्षणात्मकचाक्षुषदीक्षाशक्तिपातजातज्ञानिनोऽप्यधिकारिशिष्यलाभे सति ज्ञानक्षणमारभ्य सिद्धमेव स्वगुरुसाम्यं प्रकटी भविष्यतीति भावः॥ १३॥

अथ संकल्पजनितशक्तिपातज्ञानमुदाहरति—

सूक्ष्मतममपि द्विविधं मत्स्याः संकल्पतस्तु तद्दुहितुः।
तृप्तिर्नगरादिजनिर्मान्त्रिकसंकल्पतश्च भुवि तद्वत्॥ १४॥

सूक्ष्मतममपीति। मत्स्या इति। इदमपि लोकादौ प्रसिद्धमेव। तुरवधारणे। मत्स्याः संकल्पत एव स्मृतिमात्रेणैव तद्दुहितुस्तृप्तिर्भवतीति प्राग्वदेव साम्यांश इदमुदाहरणम्। नगरादीति। मान्त्रिकसंकल्पत ऐन्द्रजालिकसंकल्पमात्रेणैव भुवि भूतले नगरादिजनिर्नगराद्याविर्भूतिस्तद्वदित्यसाम्यांश उदाहरणम्।

वैश्यवर्य त्वया यश्च वरोऽस्मत्तोऽभिवाञ्छितः।
तं प्रयच्छामि संसिध्यै तव ज्ञानं भविष्यति॥

इति मार्कण्डेयपुराणोक्तदेवतावरदानजनिततत्त्वज्ञानभेदस्य तु सोपासने शक्तिपातजातसूक्ष्मतमैदेवज्ञानभेद एवान्तर्भावः। वरदातृदेवतासंनिधानं विनैव कालान्तरे स्वयमेव ज्ञानोदयस्य विनोक्तदेवतानिष्ठस्वभक्तस्मृतिसंभवात्। वासिष्ठेऽपि भक्त्या प्रत्यक्षीकृतभगवतः प्रह्लादेन स्तुतौ कृतायां सत्यां ततः प्रसन्नोऽसौ तत्प्रार्थितं प्रददानस्तं प्रति। श्रीभगवानुवाच—

सर्वसंभ्रमसंशान्त्यै परमाय फलाय च।
ब्रह्मविश्रान्तिपर्यन्तो विचारोऽस्तु तवानघ॥ इति॥ १४॥

एवं च 'तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणाम्' इति श्रुतेरद्वैतात्मैक्यविषयकप्रमात्वेनैकरूपमपि तृणारणिमणिजन्यवह्निन्यायेन स्वोत्पत्त्याश्रयभेदात्त्रिविधमपि निरुक्तचतुर्विधशक्तिपातजत्वतदजत्वाभ्यां दैवं ज्ञानं पञ्चविधमप्याचार्यशक्तिसाम्याभ्यां दशविधमेव। आर्षं तूक्तरीत्यैकविधमेव। मानुषं पुनर्निरुक्तरीत्या दशविधमपि सोपासनत्वनिरुपासनत्वाभ्यां द्वैविध्याद्विंशतिप्रकारकमेवेति सर्वं मिलित्वैकत्रिंशत्प्रकारकं सिद्धम्। तादृग्ज्ञानवत एव वक्ष्यमाणज्ञानरक्षादिप्रयोजना मनोनाशादिसाध्या पञ्चम्यादिभूमिकालक्षणा जीवन्मुक्तिरवश्यं यत्नसाध्या नेतरेषां तादृग्यत्नसाध्येति। अथवा दैवज्ञानवतो भगवतो याज्ञवल्क्यस्यापि श्रुतौ जीवन्मुक्त्यर्थं संन्यासदर्शनात्सोपासनपौरुषज्ञानवतो भगवतो बादरायणेरपि संशयादिसंस्कारस्य योगवासिष्ठे कथितत्वाच्चाशक्तिपातजं दैवमशक्तिपातजं सोपासनं निरुपासनं च पौरुषमिति त्रिविधमपि ज्ञानं जीवन्मुक्तौ यत्नापेक्षमिति तत्त्वम्। तस्मान्नोक्तभाष्यकारवचनं ब्रह्मविदां यथेष्टाचरणबोधनपरं किंतु योगस्य शक्तिपातजातज्ञानस्य च माहात्म्यप्रतिपादनपरमेवेति नाऽऽधुनिकानुभूतेरपि ब्रह्मविदां यथेष्टचेष्टाप्रसक्तिरिति तत्त्वविदोऽप्यस्तु यथेष्टचेष्टेति प्रलापो निर्मूल एव। ननु तर्हि 'जक्षन्क्रीडन्रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा' इति च्छान्दोग्यश्रुतेः, तथा—

सर्वथा वर्तमानोऽपि स योगी मयि वर्तते।
सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते॥
हत्वाऽपि स इमाँल्लोकान्न हन्ति न निबध्यते।

इत्यादिस्मृतेश्च का गतिरिति चेच्छृणु। छान्दोग्यश्रुतिस्तु ब्रह्मविद्याफलस्य सार्वात्म्यस्यैव बोधिका श्रीमद्भाष्यकारचरणारविन्दरेणुभिस्तथैव व्याख्यातत्वात्। तथाहि—'जक्षन्क्रीडन्रममाणस्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजनꣳ स्मरन्निदꣳ शरीरम्' इति। अत्र भाष्यम्—क्वचिदिन्द्राद्यात्मना जक्षद्भक्षयन्वा भक्ष्यानुच्चावचानीप्सितान्क्वचिन्मनोमात्रेण संकल्पादेव समुत्थितैर्ब्राह्मलौकिकैर्वा क्रीडन्स्त्र्यादिभी रममाणश्च मनसैव नोपजनं स्त्रीपुंसयोरन्योन्योपगमेन जायत इत्युपजनमिदं शरीरं तन्न स्मरंस्तत्स्मरणे हि दुःखमेव स्याद्दुःखात्मकत्वात्तस्येति। अत्र क्वचिदिन्द्राद्यात्मनेत्युक्तेः स्पष्टमेव सार्वात्म्यपरत्वम्। एवमेवेयमनुभूतिप्रकाशेऽपि भाष्यादितात्पर्यज्ञैर्मूलकारैरपि विवृता—

इन्द्रराजादिदेहेषु नानाखाद्यादि भक्षयन्।
बालैः साकं हसन्स्त्रीभिः कदाचिद्रमते सह॥
यानैः क्वापि ज्ञातिभिश्च सहितो मोदते खलु।
न कदाचित्स्मरत्येतद्वपुर्जनसमीपगम्॥
एतद्देहेन तादात्म्यभ्रान्त्या दुःखमभूत्पुरा।
विवेकेन भ्रमेऽपेते तद्दुःखं नाऽऽद्य वीक्ष्यते॥

इन्द्रराजादिदेहेषु न तादात्म्यं पुराऽपि च ।
अतो न तद्देहदुःखशङ्काऽप्यस्य तु विद्यते ॥
सुखानि तद्देहगानि साक्षी सर्वाण्यवेक्षते ।
साक्ष्यात्मत्वाभिमानी सञ्ज्ञानी तान्यभिमन्यते ॥
दुःखान्यपीक्षते साक्षी तथाऽप्येतेषु तत्त्ववित् ।
नाभिमानमुपादत्ते दुःखानां मायिकत्वतः ॥
ब्रह्मानन्दस्य लेशाः स्युरानन्दा विषयोत्थिताः ।
अतस्तत्त्वविदः पक्षपातो ह्येतेषु विद्यते ॥
पुण्यमेवामुमाप्नोति न देवान्पापमाप्नुयात् ।
इति श्रुत्यन्तरे ब्रूते सुखं सर्वात्मदर्शिनः ॥
प्रजाः शोचन्ति यत्किंचित्तासामेव भवेदिदम् ।
न सर्वात्मदृशोऽस्तीति प्राहैतदपि सा श्रुतिः ॥
सर्वात्मत्वेऽपि देहादिदोषलेपो न मेऽस्ति हि ।
अदुष्टा सूर्यता यद्वच्चण्डालादिस्पृगप्यसौ ॥
ब्रह्माद्याः स्थावरान्ता ये प्राणिनो मम पूः स्मृताः ॥
कामक्रोधादयो दोषा जायेरन्मे कुतोऽन्यतः ।
इत्याचार्या ब्रह्मबोधकुशला अब्रुवन्पुरा ॥
सुखमात्रग्राहिणोऽत्र दृष्टान्ताः सन्त्यनेकशः ।
वृक्षे मधुकरः पुष्पे रसं गृह्णाति नेतरत् ॥
यतिर्भिक्षामुपादत्ते नाऽऽशौचं कस्य चिद्गृहे ।
मुर्खस्यापि सुखे पक्षपातोऽस्तीत्युच्यते यदि ॥
तर्हि तस्य प्रसिद्ध्यर्थं तत्त्वं सोऽप्यगवच्छतु ।
तत्त्वे बुद्धे स्वदेहेन तादात्म्यं न स्मरत्यसौ ।
तेन दुःखे विनष्टेऽथ सुखमेव सदेक्षते ॥ इति ।

अत्र नोपजनं स्मरन्नितिवाक्यशेषरयोक्तव्याख्यान्यथानुपपत्त्येन्द्रराजादिदेहेष्विति पदं मोदते खल्वित्यन्तेषु सर्वत्र योजनीयम् । तेनेन्द्राद्यात्मना मनसैव स्त्र्यादिभी रममाणश्चेति भाष्ययोजनमपि द्योतितं भवति तथा यथेष्टचेष्टाशङ्काऽपि व्युदस्ता । न चैवं यदि मूलकृतामिष्टं तर्हि चित्रदीपे कथमेतैरेवोक्तं साक्षेपं भरतादेरप्रवृत्तिः पुराणोक्तेति चेत्तदा 'जक्षन्क्रीडन्रतिं विन्दन्नित्यश्रौषीर्न किं श्रुतिम्' इतीति वाच्यम् । तत्रैतद्वाक्यस्य वादिमुखपिधानार्थं संरम्भमात्रैणैव तैरुदाहृतत्वात् । अन्यथाऽनेन श्रुत्युदाहरणेनैव वादिनि परास्तेऽप्युत्तरवाक्ये

न ह्याहारादि संत्यज्य भरताद्या स्थिताः क्वचित् ।
काष्ठपाषाणवत्किंतु सङ्गभीता उदासते ॥

इति भरतादिप्रवृत्त्युपपादनेन पुनर्वादिसमाधानानुपपत्तेः । तथा सङ्गभीता उदासत इति सङ्गभयोदाहरणेनाग्रिमश्लोके—

सङ्गी हि बाध्यते लोकैर्निःसङ्गः सुखमश्नुते ।
तेन सङ्गः परित्याज्यः सर्वदा सुखमिच्छता ॥

इति सावधारणं सङ्गसत्त्वे लोककृतपीडासत्त्वम् । लोक इति पाठ आध्यात्मिकादितापैर्बाध्यत इत्यध्याहृत्य योजनीयम् । तथा च सङ्गसत्त्व आध्यात्मिकादितापैर्दुःखसत्त्वं तदभावे तदभाव इति सान्वयव्यतिरेकं च । सर्वदा जीवन्मुक्तिसुखेच्छोर्ज्ञानिनोऽपि सर्वदा सङ्गत्यागविधानवैयर्थ्यापत्तेश्च । तस्मादिदमत्र रहस्यम्—वादिना जडभरतादीनां ब्रह्मविदामप्रवृत्त्यंशे पुराणोदाहरणं दत्तं तदा ततोऽपि बलवत्तरं ब्रह्मविदां प्रवृत्त्यंशे श्रौतमेवोदाहरणं देयमिति धिया रभसेनेयं श्रुतिः साक्षेपं संरम्भेणैवोपन्यस्ता । ततो वादिमुखपिधानेऽपि भाष्यादिविरुद्धार्थपरतया श्रुतियोजनमसांप्रदायिकम् । तथा—

तत्त्वं बुद्ध्वाऽपि कामादीन्निःशेषं न जहासि चेत् ।
यथेष्टाचरणं ते स्यात्कर्मशास्त्रातिलङ्घिनः ॥
बुद्धाद्वैतसतत्त्वस्य यथेष्टाचरणं यदि ।
शुनां तत्त्वदृशां चैव को भेदोऽशुचिभक्षणे ॥
बोधात्पुरा मनोदोषमात्रात्क्लिष्टोऽस्यथाधुना ।
अशेषलोकनिन्दा चेत्यहो ते बोधवैभवम् ॥
विड्वराहादितुल्यत्वं मा काङ्क्षीस्तत्त्वविद्भवान् ।
सर्वधीदोषसंत्यागाल्लोकैः पूज्यस्व देववत् ॥

इति द्वैतविवेके स्वयमेव स्वपरिकरं बुद्धाद्वैतसतत्त्वस्येति नैष्कर्म्यसिद्धिस्थश्रीमद्वार्तिककारचरणनलिनवचनप्रमाणोपन्यासपुरःसरं निरस्तयथेष्टाचरणस्यात्र पुनस्तद्विरुद्धमङ्गीकरणं चेति दोषजातं चेतसि निधाय न ह्याहारादीत्यादिग्रन्थेन वाद्यानीतभरताद्युदाहरणविवेचनेन तेषामप्याहारादिव्यवहारोपपादनेन ज्ञानोत्तरं मूढकल्पितकाष्ठादिवदवस्थानमात्रखण्डनं कृतमिति । नो चेदत्रैव मूले नोपजनमित्यादेरुक्तश्रुतिवाक्यशेषस्य चित्रदीपकारैरेव—उपजनं जनानां समीपे वर्तमानमिदं शरीरं न स्मरन्ब्रह्मविद्वर्तते पार्श्वस्थजना एव तत्त्वविदः शरीरं पश्यन्ति स्वयं तु निर्मनस्कत्वान्मदीयमिदं शरीरमिति न स्मरतीति वक्ष्यमाणं व्याख्यानं चित्रदीपोक्तश्रुत्याशयेनात्यन्तविरुद्धं कथं कृतं स्यात् । अहो यत्र देहतादात्म्यस्मृतेरप्यभावस्तत्र क्व नाम यथेष्टचेष्टावकाशः । न हि प्रचण्डमार्तण्डमण्डलेध्वान्तसंभावनाऽपि प्रामाणिकानाम् । तस्मादस्मदुक्त एव चित्रदीपवचनाशयः साधीयान्नात्र कल्पनान्तरलेशोऽपीति दिक् । एतेन

आरब्धकर्मनानात्वाद्बुधानामन्यथाऽन्यथा ।
वर्तनं तेन शास्त्रार्थे भ्रमितव्यं न पण्डितैः ॥

इति चित्रदीपस्थ एवोपसंहारग्रन्थगतश्लोकेऽन्यथाऽन्यथेतिपदाभ्यां यथेष्टचेष्टोपपादनभ्रान्तिः प्रत्याख्याता । तत्र हि—

अज्ञात्वा शास्त्रहृदयं मूढो वक्त्यन्यथाऽन्यथा ।
मूर्खाणां निर्णयस्त्वास्तामस्मत्सिद्धान्त उच्यते ॥

इति स्वसिद्धान्तकथनं प्रतिज्ञाय

वैराग्यबोधोपरमाः सहायास्ते परस्परम् ।
प्रायेण सह वर्तन्ते वियुज्यन्ते क्वचित्क्वचित् ॥

इति तमुक्त्वा मध्ये वैराग्यादीनां हेतुस्वरूपकार्याण्युक्त्वा ' तत्त्वबोधः प्रधानं स्यात्साक्षान्मोक्षप्रदत्वतः ' इति बोधप्राधान्यं विधाय ।

त्रयोऽप्यत्यन्तयुक्ताश्चेन्महतस्तपसः फलम् ।
दुरितेन क्वचित्किंचित्कदाचित्प्रतिबध्यते ॥

इत्यत्र क्वचिद्देशे जनकसदसि भगवतो याज्ञवल्क्यस्येव किंचित्स्वल्पमेव कदाचित्सुवर्णालंकृतगोसहस्रग्रहणकामक्षण एव वैराग्यादिकं प्रतिबध्यत इत्युक्तम् । तत्र बोधस्य प्रतिबद्धत्वे मोक्षाभावमग्रिमश्लोकेनोक्त्वा—

पूर्णे बोधे तदन्यौ द्वौ प्रतिबद्धौ यदा तदा ।
मोक्षो विनिश्चितः किंतु दृष्टदुःखं न नश्यति ॥

इत्यनेन श्रवणादित्रयं, तद्वत्तत्त्वमिथ्याविवेचनं ' पुनर्ग्रन्थेरनुदयो बोधस्यैते त्रयो मताः ' इत्यत्रोक्तबोधहेतुस्वरूपफललक्षणैः पूर्णे तथोत्तरवाक्ये ' देहात्मवत्परात्मत्वदार्ढ्ये बोधः समाप्यते ' इत्यत्राहं ब्राह्मण इतिबोधवदहं ब्रह्मास्मीति बोधदृढत्वेन च पूर्णे बोधे मोक्षनिश्चयोक्तेर्वैराग्योपरमयोरेव क्वचित्किंचित्कदाचित्प्रतिबद्धत्वाप्रतिबद्धत्वादिबहुविधभेदेन तत्तारतम्यवशानानाविधत्वेऽपि यथेष्टचेष्टाभिन्नमेव ।

केऽपि वर्णाश्रमाचारनिष्ठापरा मुग्धबालप्रमत्तोपमाश्चापरे ।
रागिणो भोगिनो योगिनश्चेतरे ज्ञानिनां लक्ष्यते नैकरूपा स्थितिः ॥

इति स्वाराज्यसिध्युक्तानेकप्रकारैर्वर्तनमेवान्यथाऽन्यथाशब्देन विवक्षितं न तु विपरीतविपरीतं यथेष्टचेष्टात्मकमिति । नो चेत्स्ववचनविरोधोपक्रमादिविरोधपूर्वाचार्यवचनविरोधाद्यापत्तेर्दुर्वारत्वात् । प्रपञ्चितं चैतन्मयाऽऽत्मविद्याविलासव्याख्याने स्वानन्दनन्दनवने । एतेन—

व्यवहारो लौकिको वा शास्त्रीयो वाऽन्यथाऽपि वा ।
ममाकर्तुरलेपस्य यथारब्धं प्रवर्तताम् ॥

इति तृप्तिदीपवचनं व्याख्यातम् । तस्य प्रौढिवादमात्रत्वात्तत्रोक्तपूर्वाचार्यवचनविरोधाद्य-स्वारस्यादेव ।

अथवा कृत्यकृत्योऽपि लोकानुग्रहकाम्यया ।
शास्त्रीयेणैव मार्गेण वर्तेऽहं काममक्षतिः ॥

इतिशास्त्रीयमार्गवर्तनरूपपक्षान्तरोक्तेः । तस्मान्नोक्तजक्षदित्यादिश्रुतिर्यथेष्टचेष्टापरेति सिद्धम् । ननु तथाऽपि स्वाराज्यसिद्धिवचने मुग्धेत्यादिना पुनर्यथेष्टचेष्टाङ्गीकृतिरेव भाति ततो विफलमिदं त्वदुपपादनमिति चेन्न । स्वाराज्यसिद्धावपि मुग्धादिपदैर्यथेष्टचेष्टाया अनभिमतत्वात्प्रत्युतास्मदभिमतार्थस्यैव तत्रापि विवक्षितत्वाच्च । तथा हि कैवल्यकल्पद्रुमाख्ये तन्मूलकृतामेव तदीयव्याख्याने केऽपीतिपद्यव्याख्या । यथा—केऽपि तत्त्वज्ञा वसिष्ठाद्या अन्ये च तत्त्वविदो वर्णाश्रमाचाराणां निष्ठायामनुष्ठाने प्रवर्तने च परास्तत्पराः श्रूयन्ते दृश्यन्ते च । अपरऋभुजडभरतदत्तात्रेयप्रभृतयोऽन्ये च मुग्धा अप्रौढचित्ता बालाः प्रसिद्धाः प्रमत्ता ग्रहावेशादिना पराधीनस्वान्तास्त उपमा दृष्टान्तो येषां तथाविधास्त्यक्तसर्वकर्माणः श्रूयन्ते दृश्यन्ते चेत्यर्थः । इतरे सौभरिप्रभृतयो रागिणः सन्तो वशीकृतसिद्धित्वाद्योगिनो भोगपराः श्रूयन्ते । जैगीषव्यप्रभृतयस्तु योगिनः समाधिनिष्ठा एव श्रूयन्त इति ज्ञानिनां स्थितिश्चैकरूपैवेति न लक्ष्यत इत्यर्थ इति । अत्र रागिणः सन्तो वशीकृतसिद्धित्वाद्योगिनः सौभरिप्रभृतय इत्युक्तेः का नाम यथेष्टचेष्टाशङ्काऽपि । सौभर्यादेर्हि योगीन्द्रत्वेन वशीकृत-सिद्धित्वेऽपि रागवशाद्योगित्वेऽपि स्ववर्णाश्रमधर्मानुल्लङ्घनान्नैव यथेष्टाचरणलेशोऽपीति प्रसिद्धमेव श्रीमद्भागवते । तत्र हि नवमस्कन्धे षष्ठाध्याये—

यावत्सूर्य उदेति स्म यावच्च प्रतितिष्ठति ।
सर्वं तद्यौवनाश्वस्य मान्धातुः क्षेत्रमुच्यते ॥
शशबिन्दोर्दुहितरि बिन्दुमत्यामधान्नृपः ।
पुरुकुत्समम्बरीषं मुचुकुन्दं च योगिनम् ॥

नृपः पूर्वोक्तो युवनाश्वस्य पुत्रो मान्धाता शशबिन्दुसंज्ञस्य नृपस्य बिन्दुमतीनाम्न्यां दुहितरि परिणीतायां भार्यायां पुरुकुत्सादिसंज्ञकं पुत्रत्रयं निर्मितवानित्यर्थः ।

तेषां स्वसारः पञ्चाशत्सौभरिं वव्रिरे पतिम् ॥

तेषां पुरुकुत्सादीनां पञ्चाशत्संख्याकाः स्वसारो भगिन्यो मान्धातृकन्या इत्यर्थः । इति सौभरिमुपक्रम्य यमुनान्तर्जले मग्न इत्यादिना तस्य मत्स्यमैथुनदर्शनजनितरागवशान्मान्धातारं प्रति कन्यायाचनप्रभृत्युपाख्याय 'वृतश्च राजकन्याभिरेकः पञ्चशतावरः' इत्यादिना तद्गार्हस्थ्य-मुपवर्ण्य—

यद्गार्हस्थ्यं तु संवीक्ष्य सप्तद्वीपवतीपतिः ।
विस्मितः स्तम्भमजहात्सार्वभौमश्रियाऽन्वितम् ॥

इत्यन्तेन तत्तपःसिद्धिवद्दिव्यरूपत्वं दिव्यभोगशालित्वं परिणीतपञ्चाशत्स्त्रीषु विधिमार्गेणैव रममाणत्वं च वर्णितम्। किंच प्रत्युत तदनन्तरम्।

स कदाचिदुपासीन आत्मापह्नवमात्मनः।
ददर्श बह्वृचाचार्यो मीनसङ्गसमुत्थितम्॥

इत्यादिना तस्य कदाचिद्ध्यानकाले मीनसङ्गवशात्स्वस्य लुप्तविवेकबुद्धिस्मरणपूर्वकं वैराग्ये जाते।

सङ्गं त्यजेत मिथुनव्रतिनां मुमुक्षुः सर्वात्मना न विसृजेद्बहिरिन्द्रियाणि।
एकश्चरन्रहसि चित्तमनन्त ईशे युञ्जीत तद्व्रतिषु साधुषु चेत्प्रसङ्गः॥

इत्यादिना लोकोपदेशं स्वनिदर्शनेनोपवर्ण्य—

वनं जगामानुययुस्तत्पत्न्यः पतिदेवताः।
तत्र तप्त्वा तपस्तीक्ष्णमात्मकर्षणमात्मवान्॥
सहैवाग्निभिरात्मानं युयोज परमात्मनि।
ताः स्वपत्युर्महाराज निरीक्ष्याऽऽध्यात्मिकीं गतिम्॥
अन्वयुस्तत्प्रभावेण अग्निं शान्तमिवार्चिषः।

इत्यन्तेन वानप्रस्थाश्रमयोगाभ्यासविदेहकैवल्यादिकमेव वर्णितमिति न कोऽपि शङ्कावकाशः। यत्तु।

सर्वथा वर्तमानोऽपि स योगी मयि वर्तते।
सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते॥
हत्वाऽपि स इमाँल्लोकान्न हन्ति न निबध्यते।

इति श्रीमद्भगवद्गीतोदाहरणं तत्तु तद्भाष्यादितात्पर्यविद्भिः श्रीमधुसूदनसरस्वतीभिः सर्वथा वर्तमानोऽपि स योगीतिश्लोकटीकायाम्—यावत्तु तस्य बाधितानुवृत्त्या शरीरादिदर्शनमनुवर्तते तावत्प्रारब्धकर्मप्राबल्यात्सर्वकर्मत्यागेन याज्ञवल्क्यादिवद्विहितेन कर्मणा वा जनकादिवन्निषिद्धेन वा कर्मणा दत्तात्रेयादिवत्सर्वथा येन केनापि रूपेण वर्तमानोऽपि व्यवहरन्नपि स योगी ब्रह्माहमस्मीति विद्वान्मयि परमात्मन्येवाभेदेन वर्तते सर्वथा तस्य मोक्षं प्रति नास्ति प्रतिबन्धशङ्का। 'तस्य ह न देवाश्च नाभूत्या ईशत आत्मा ह्येषां स भवति' इति श्रुतेः। देवा महाप्रभावा अपि तस्य मोक्षाभावाय नेशते किमुतान्ये क्षुद्रा इत्यर्थः। ब्रह्मविदो निषिद्धे कर्मणि प्रवर्तकतया रागद्वेषयोरसंभवेन निषिद्धकर्मासंभवेऽपि तदङ्गीकृत्य ज्ञानस्तुत्यर्थमिदमुक्तं सर्वथा वर्तमानोऽपीति। हत्वाऽपि स इमाल्लोकान्न हन्ति न निबध्यत इतिवदिति ज्ञानस्तुत्यर्थपरत्वेन स्फुटमेव व्याख्यातमिति न तेनाऽपि भवदभिमतयथेष्टचेष्टासिद्धिः। एतेन 'निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेधः' इति

श्रीमच्छुकवाक्यमपि व्याख्यातम् । तत्रापि गङ्गाधरेन्द्रसरस्वत्याख्यैस्तद्व्याख्यातृभिर्ब्रह्मपरतयैव विध्याद्यभावोक्तेः । तथाहि तत्राष्टके प्रथमश्लोके—तथा च विधिनिषेधशास्त्रयोः सर्वप्रमाणप्रमेयव्यवहारस्याविद्याविषयत्वान्निरस्ताविद्यस्य पूर्णानन्दाद्वितीयब्रह्मभूतस्य मम न विधिनिषेधशास्त्रविषयत्वमित्येतत्सिद्धमिति भाव इति । न चात्र निषिद्धेन वा कर्मणा दत्तात्रेयादिवदित्यनेन मदिष्टसिद्धिरेवेति वाच्यम् । दत्तात्रेयोदाहरणस्य तु प्रागस्मिन्नेव प्रघट्टके महता प्रबन्धेन मया दत्तोत्तरत्वादिति यत्किंचिदपि न दोषलेशः । एतेन 'पश्वादिभिश्चाविशेषात्' इति श्रीमद्भगवत्पूज्यपादपादारविन्दपरागवचनं श्रीमच्छारीरकोत्तरमीमांसाध्यासभाष्यस्थं ब्रह्मविदां जीवन्मुक्तानामपि व्यवहारे पश्वादिसाम्यमेव प्रतिपादयतीति भ्रान्तप्रलपितमपि परास्तम् । एवं हि तद्भाष्यम्—तस्मादविद्यावद्विषयाण्येव प्रत्यक्षादिप्रमाणानि शास्त्राणि चेति । पश्वादिभिश्चाविशेषात् । यथा हि पश्वादयः शब्दादिभिः श्रोत्रादीनां संबन्धे सति शब्दादिविज्ञाने प्रतिकूले जाते ततो निवर्तन्तेऽनुकूले च प्रवर्तन्ते । यथा दण्डोद्यतकरं पुरुषमभिमुखमुपलभ्य मामयं हन्तुमिच्छतीति पलायितुमारभन्ते हरिततृणपूर्णपाणिमुपलभ्य तं प्रत्यभिमुखी भवन्ति, एवं पुरुषा अपि व्युत्पन्नचित्ताः क्रूरदृष्टीनाक्रोशतः खड्गोद्यतकरान्बलवत उपलभ्य ततो निवर्तन्ते तद्विपरीतान्प्रति प्रवर्तन्ते । अतः समानः पश्वादिभिः पुरुषाणां प्रमाणप्रमेयव्यवहारः । पश्वादीनां च प्रसिद्धोऽविवेकपूर्वकः प्रत्यक्षादिव्यवहारः । तत्सामान्याद्व्युत्पत्तिमतामपि पुरुषाणां प्रत्यक्षादिव्यवहारस्तत्कालः समान इति निश्चीयत इति । अत्रापि पूर्ववाद्यभिमतं पश्वादिनिदर्शनेन ब्रह्मविदामपि यथेष्टाचरणं तद्विरुद्धतयैव श्रीमत्पद्मपादाचार्यपादपद्मादिविरचितपञ्चपादिकादितात्पर्यविद्भिः श्रीमदानन्दज्ञानादिभिर्विवृतत्वात् । यथाऽऽहुः श्रीमदानन्दज्ञानाचार्याः—नन्वविवेकिव्यवहारस्याऽऽध्यासिकत्वेऽपि नाविद्यावद्विषयाण्येव प्रमाणानि विवेकिनामपि तद्व्यवहारात्तत्राऽऽह—पश्वादिभिश्चेति । चशब्दः शङ्का व्यावृत्त्यर्थः । यौक्तिकविवेकस्याध्यक्षभ्रान्त्यविरोधित्वाद्विरोधित्वेऽपि तदननुसंधाने विवेकिनामपि व्यवहारे पश्वादिभिरविशेषात्तद्व्यवहारोऽप्याध्यासिक एवेत्यर्थ इति । तथाऽग्रेऽपि दार्ष्टान्तिकं वदन्व्यवहारलिङ्गेनाध्यासमनुमातुं तस्य पक्षधर्मतामाह—एवमिति । पित्रादिनयशिक्षाजन्यपदवाक्याद्यभिज्ञता व्युत्पन्नचित्ततेति च । अन्यत्रापि संप्रत्यनुमानमाह—तत्सामान्येति । तैः पश्वादिभिः सामान्यं व्यवहारवत्त्वं तस्य विवेकिषु भानादिति यावत् । अपरोक्षाध्यासस्य व्यवहारपुष्कलकारणत्वात्तस्याध्यासस्य काल एव कालो यस्य व्यवहारस्य स तत्कालः समानः पश्वादिभिरिति शेषः । विमतो व्यवहारोऽध्यासकृतो व्यवहारत्वात्संमतवत् । विमता अध्यासवन्तो व्यवहारवत्त्वात्पश्वादिवदिति प्रयोगः । मानयुक्तिभ्यां विवेकेऽप्यध्यासविरोधिप्रमित्यभावादध्यासवत्त्वमिति मत्वा व्युत्पत्तिमतामपीत्युक्तमिति च । अत्र यौक्तिकविवेकस्येति पित्रादिनयशिक्षेति च मानयुक्तिभ्यामिति चोक्तेरद्वैतब्रह्मापरोक्षज्ञानहीनानां लौकिकशास्त्रीयप्रमाणयुक्तिमात्रकुशलानामेव विवेकिनां पश्वादिसाम्यं व्यवहारे न तु

ब्रह्मविदां जीवन्मुक्तानामिति स्फुटमेव द्योतितम्। ततो नैतन्मतेनात्र तत्प्रसङ्गः। यद्यपि भाष्यरत्नप्रभायाम्—ननु यदुक्तमन्वयव्यतिरेकाभ्यां व्यवहारोऽध्यासकार्य इति तदयुक्तं विदुषामध्यासाभावेऽपि व्यवहारदृष्टेरित्यत आह—पश्वादिभिश्चेति। चशब्दः शङ्कानिरासार्थः। किं विद्वत्त्वं ब्रह्मास्मीति साक्षात्कार उत यौक्तिकमात्मानात्मभेदज्ञानम्। आद्ये बाधिताध्यासानुवृत्त्या व्यवहार इति समन्वयसूत्रे वक्ष्यते। द्वितीये परोक्षज्ञानस्यापरोक्षभ्रान्त्यनिवर्तकत्वाद्विवेकिनामपि व्यवहारकाले पश्वादिभिरविशेषादध्यासवत्त्वेन तुल्यत्वाद्व्यवहारोऽध्यासकार्य इति युक्तमित्यर्थ इत्युक्तम्। तथा ब्रह्मविद्याभरणेऽपि—ननु प्रत्यक्षादिव्यवहारस्याध्यासमूलत्वे विवेकिनां तद्व्यवहारो न स्यात्, शास्त्रजन्यज्ञानरूपस्य विवेकस्याध्यासविरुद्धत्वादिशङ्कयाऽऽह—पश्वादिभिश्चेति। संग्रहवाक्यं विवृणोति—यथा हीति। द्विविधा हि विवेकिनः केचिद्देहातिरिक्तात्ममात्रपर्यवसितविवेकाः केचिदशनायाद्यतीतात्मपर्यवसितविवेकाः। तत्राऽऽद्यो विवेकः कर्तृत्वादिभ्रमविरोधी न भवत्येव ततश्च न तस्य ज्योतिष्टोमादिप्रवृत्तिविरोधित्वम्। तेन च शरीरतादात्म्याध्यासस्यानपोदितत्वात्पश्वादितुल्यतयेष्टसाधनताज्ञाने प्रवृत्तिर्लौकिक्यनिष्टसाधनताज्ञाने निवृत्तिश्च मनुष्योऽहमित्याद्यभिलापश्चोपपद्यते। सति हि दोषे जातमपि देहातिरिक्तात्मज्ञानं न देहतादात्म्याध्यासविरोधि। अत एव देहातिरिक्तात्मज्ञानवन्तोऽप्यस्माकमिदमिष्टसाधनमिति वदन्तोऽङ्गुल्या शरीरमेव निर्दिशन्ति लौकिकव्यवहारेषु। विवेककृतस्तु तेषां व्यवहारो नाहं मनुष्यो देहपातोत्तरं परलोके फलं भविष्यतीति। अशनायाद्यतीतात्मज्ञानं तु तेषां लौकिकवैदिकप्रवृत्त्युपयोग्येव न भवति। प्रत्युत दृढस्तन्निश्चयोऽविश्वासापादकः प्रवृत्तिविरोध्येव। येषामपि दृढोऽशनायाद्यतीतात्मनिश्चयस्तेषामपि प्रारब्धदोषवशादेहमात्रयात्रयाऽऽत्माध्यासोऽनुवर्तत इति तत्कृतो ब्राह्मणोऽहं भुञ्ज इत्यादिव्यवहार उपपद्यत इति प्रवद्दकार्थ इति चोक्तम्। तद्वशात्तथा चैतन्मूलीभूतं श्रीमद्विद्यारण्यगुरुविरचितानुभूतिप्रकाशस्थम्—

सुखदुःखप्रदारब्धकर्मवेगश्चतुर्विधः।
तीव्रो मध्यो मन्दसुप्तौ चेति तस्य विधा मताः॥
तीव्रवेगे स पश्वादितुल्यो नाऽऽत्मानमीक्षते।
आत्मनि प्रीतिरस्तीति भवेदात्मरतिस्तदा॥

इतिवचनम्। तद्वशाच्च। ब्रह्मविदपि व्यवहारकाले पश्वादितुल्य एव बाधिताध्यासानुवृत्त्या भातीत्यागतम्। तथाऽपि न पश्वादिसाम्ये न त्वदभिमतयथेष्टचेष्टासिद्धिः। तव्द्यवहारस्य बाधिताध्यासानुवर्तकसंस्कारैकजन्यत्वात्तत्संस्काराणां च शुद्धत्वस्य प्रागेवोपपादितत्वात्प्रारब्धप्राबल्यस्य तु मूल एवाग्रे निरसिष्यमाणत्वाच्च व्युत्थानदशायां व्याघ्रादेर्निवृत्तिर्गङ्गोदकपानादौ प्रवृत्तिरित्यंश एव पश्वादिसाम्यस्य विवक्षितत्वाच्च। नो चेत्समन्वयसूत्रे भाष्ये—तस्मान्मिथ्याप्रत्ययनिमित्तत्वात्सशरीरत्वस्य सिद्धं जीवतोऽपि विदुषोऽशरीरत्वम्।

तथा च ब्रह्मविद्विषया श्रुतिः ‘ तद्यथाऽहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदं शरीरꣳ शेते । अथायमशरीरोऽमृतः प्राणो ब्रह्मैव तेज एव ’ इति । ‘ सचक्षुरचक्षुरिव सकर्णोऽकर्ण इव सवागवागिव समना अमना इव सप्राणोऽप्राण इव ’ इति च । स्मृतिरपि—‘ स्थितप्रज्ञस्य का भाषा ’ इत्याद्या स्थितप्रज्ञलक्षणान्याचक्षाणा विदुषः सर्वप्रवृत्त्यसंबन्धं दर्शयति । तस्मान्नावगतब्रह्मात्मभावस्य यथापूर्वं संसारित्वम् । यस्य तु यथापूर्वं संसारित्वं नासाववगतब्रह्मात्मभाव इत्यनवद्यम् । इति तत्त्वज्ञानाज्जीवन्मुक्तिं संसाध्य तत्र श्रुतिस्मृती उदाहृत्य जीवमुक्तस्य यथापूर्वं संसारित्वमप्यन्वयव्यतिरेकाभ्यां कथं खण्डितं स्यात् । अहो यत्र ब्रह्मविदां यथापूर्वं संसारित्वमपि न संभवति तत्र का नाम कथा यथेष्टचेष्टायाः । तस्मादुक्तांश एव पश्वादिसाम्यं भाष्यरत्नप्रभाकारादिमतेऽपि व्युत्थानकाले प्रतिभासमात्रसंसारित्वादिव्यवहाराणां जीवन्मुक्तानां न यथेष्टचेष्टादावपीति सिद्धम् । व्याख्यातं चेदं भाष्यमेवमेव श्रीमदानन्दज्ञानाचार्यैः—तत्राहंधियो मिथ्यात्वेऽपि किं सिध्यति तदाह—तस्मान्मिथ्येति । न केवलं विदुषो जीवतोऽप्यशरीरत्वं यौक्तिकं किंतु श्रौतं चेत्याह—तथा चेति । अत्र ब्रह्म समश्नुत इति पूर्ववाक्ये जीवन्मुक्तिरुक्ता स जीवन्मुक्तो देहस्थोऽपि पूर्ववन्न संसारीत्यत्र दृष्टान्तमाह—तद्यथेति । तत्तत्र जीवन्मुक्तदेहे जीवन्मुक्ते च दृष्टान्तः । यथा लोकेऽहिनिर्ल्वयनी सर्पनिर्मोकस्तदीया त्वग्वल्मीकादौ प्रत्यस्ता प्रक्षिप्ता मृता पूर्वमिवाहिनाऽऽत्मत्वेनानिष्टा वर्तेत तथैवेदं विदुषः शरीरं मुक्तेन प्रागिवाऽऽत्मत्वेनानिष्टं तिष्ठतीत्यर्थः । सर्पदार्ष्टान्तिकमाह—अथेति । तथार्थोऽथशब्दः । यथा प्रत्यस्तया त्वचा युक्तोऽपि तामहमिति नाहिरभिमन्यते तथाऽयं जीवन्मुक्तो देहस्थोऽपि न तत्राहंधियमादधाति । अत एवामृतः । देहाभिमानवतो हि मृतिः । निरुपाधिः सन्प्राणिति जीवतीति प्राणः साक्षी स च ब्रह्मैव तच्च तेजो विज्ञानं ज्योतिरेवेत्यर्थः । तत्रैव श्रुत्यन्तरमाह—सचक्षुरिति । वस्तुतोऽचक्षुरपि बाधितानुवृत्त्या सचक्षुरित्यादि योज्यम् । श्रौतेऽर्थे स्मृतिमपि संवादयति—स्मृतिरपीति । विदुषो जीवन्मुक्तौ प्रमितायां फलितमाह—तस्मान्नेति । प्रमितं जीवन्मुक्तिसत्त्वं तच्छब्दार्थः प्रतीतिमात्रशरीरं संसारित्वमनुजानाति—यथेति । ननु ब्रह्मविदामेवास्माकं संसारित्वमबाधितमनुभूयते नेत्याह—यस्येति । साक्षात्कृततत्त्वस्य पूर्वमिव संसारित्वायोगाद्युक्ता वस्तुमात्रोक्ते रज्जुस्वरूपोक्तिवदर्थवत्तेत्युपसंहरति—अनवद्यमितीति । ननु भवतु नामैवं श्रुतिस्मृत्योर्व्यवस्थितिः पुराणादौ तु तत्त्वविदां यथेष्टाचरणं स्पष्टमेव दृष्टम् । न च तेषामर्थवादत्वेन ज्ञानस्तुतिद्वारा तत्प्रापकश्रवणादिविधावेव पर्यवसन्नत्वेन स्वार्थे तात्पर्याभावो वाच्यः । अर्थवादत्वेऽपि ।

विरोधे गुणवादः स्यादनुवादोऽवधारिते ।
भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः ॥

इत्यभियुक्तोक्तेः प्रमाणान्तरविरोधावधारणयोरभावेन भूतार्थवादस्यावश्यवाच्यत्वेन स्वार्थतात्पर्यवत्त्वसत्त्वात् ।

पुराणेष्वर्थवादत्वं ये वदन्ति नराधमाः ।
तैरर्जितानि पुण्यानि तद्वदेव भवन्ति वै ॥
समस्तकर्मनिर्मूलसाधनानि नराधमः ।
पुराणान्यर्थवादेन ब्रुवन्नरकमश्नुते ॥

इति बृहन्नारदीयप्रथमाध्याये पुराणानामर्थवादत्वकल्पनस्यातिनिन्द्यत्वाच्च तद्वातिवार्त्यैव । तथा च स्कान्दे सूतसंहितायां मुक्तिखण्डे सप्तमाध्याये श्रीशंकरः श्रीविष्णुं प्रति—

शृणुष्व चान्यत्परया मुदा हरे तवाहमद्याभिवदामि सद्गुरोः ।
विलक्षणस्याऽऽत्मविदो महात्मनः शरीरशुश्रूषणजं महाफलम् ॥
पुरा महापापबलात्पुरातनान्निहत्य वेश्या सुभगाभिधा पतीन् ।
धनानि तेषामभिवाञ्छया हरे सदा समादाय सुहृज्जनैरपि ॥
स्वदासवर्गैः सह पुत्रकैः स्वकैस्तथाऽम्बया भुक्तवती महासुखम् ।
पिशाचिकाभिः परिपीडिता पुनः सदा महाव्याधिभिरप्यतीव सा ॥
निद्राऽपि नाभूत्पुरुषोत्तमास्याः कष्टां दशामाप सह स्वकीयैः ।
तस्या गृहं चक्रधरातिविद्वान्क्षुत्पीडितो विवशः संप्रपेदे ॥
अनेकजन्मार्जितपुण्यकर्मणा विलक्षणं ब्रह्मविदं गृहागतम् ।
विलोक्य सा भूमितले समाहिता प्रणम्य तत्पादसरोरुहद्वयम् ॥
स्वान्तर्गृहे शीतलगन्धतोयैः प्रक्षाल्य पादोदकमादरेण ।
आदाय पीत्वा सुभगा विमुक्ता पिशाचिकाभिश्च समस्तरोगैः ॥
ततः प्रशान्तं सुभगाऽतिविस्मिता महानुभावं परमार्थवेदिनम् ।
अपूपशाल्योदनपूर्वकैर्वरैः सुभोजितं चन्दनकुङ्कुमादिभिः ॥
वस्त्रैः सुसूक्ष्मैश्च सुगन्ध(न्धि)पुष्पैस्ताम्बूलवल्लीदलपूर्वकैश्च ।
आराध्य भक्त्या सह सुप्रसन्ना तं प्रार्थयामास परात्मनिष्ठम् ॥
त्वद्दर्शनेनैव समस्तरोगतो विमुक्तदेहाऽहमतीव निर्मला ।
अतश्च मामामरणादतिप्रभो सुभुङ्क्ष्व दास्यं करवाणि ते सदा ॥
इत्येवं प्रार्थितः सम्यक्तया प्रीतो जनार्दन ।
प्रारब्धकर्मणा नीतस्तथा चक्रे मतिं बुधः ॥
साऽपि नित्यं महाविष्णो श्रद्धया परया सह ।
अतीव पूजयामास स्वात्मना च धनेन च ॥
वत्सराणां त्रयं पूजां कृत्वा तस्य महात्मनः ।
सुभगा सा तथा ज्ञानं लब्ध्वा मुक्ताऽभवद्धरे ॥ इति ।

तथा तत्रैव यज्ञवैभवखण्डे पूर्वभाग एकत्रिंशाध्याये सूतः शौनकादीन्प्रति—

पुरा काचित्कुलालस्त्री बभूवातीव सुन्दरी ।
सा सहस्रत्रयं हत्वा विप्राणामर्थवाञ्छया ॥
महाधनवती भूत्वा मायया परिमोहिता ।
यथेष्टं भूतले विप्राश्चचार परिगर्विता ॥
कश्चिद्विज्ञानसंपन्नो महायोगी सुनिश्चलः ।
श्रीमद्दक्षिणकैलासं शिवस्थानोत्तमोत्तमम् ॥
वर्तितं श्रद्धयाऽऽगच्छद्विदित्वा देशवैभवम् ।
तं दृष्ट्वा सा स्वभोगार्थं प्रणिपत्य तपस्विनम् ॥
परिगृह्यातिसंतुष्टा गृहे स्वीये विचक्षणा ।
स्नाप्य वस्त्रादिकं दत्त्वा भोजयित्वाऽनुमोदितः ॥
चन्दनाद्यैरलंकृत्य दत्त्वा ताम्बूलपूर्वकम् ।
समाश्वास्य महात्मानं प्रियं भुक्तवती द्विजाः ॥
सोऽपि विज्ञानसंपन्नो महायोगी निराकुलः ।
अतीव प्रीतिमापन्नस्तया सह मुनीश्वराः ॥
श्रीमद्दक्षिणकैलासे शिवस्थानोत्तमोत्तमे ।
अवर्तत चिरं कालमतीव प्रीतिसंयुतः ॥
देवदेवो महाप्रीतस्तया शुश्रूषया द्विजाः ।
तस्यै परमकैवल्यं ददौ विज्ञानपूर्वकम् ॥ इति च ।

तथा पाद्मेऽपि भूमिखण्डे विष्णुरुवाच—

तुङ्गपुत्र महाभाग आयुर्नाम क्षितीश्वरः ।
सार्वभौमः स धर्मात्मा सत्यधर्मपरायणः ॥
इन्द्रोपेन्द्रसमो राजा तेन दुःख्यप्यजायत ।

तेन सुताभावेनेत्यर्थः ॥

चिन्तयामास धर्मात्मा कथं मे जायते सुतः ।
इति चिन्तां समापेद आयुः स पृथिवीपतिः ॥
पुत्रार्थं परमं यत्नमकरोत्सुसमाहितः ।
अत्रिपुत्रं महात्मानं दत्तात्रेयं द्विजोत्तमम् ॥
क्रीडमानं स्त्रिया सार्धं मदिरानन्दिलोचनम् ।
वारुण्या मत्तधर्मात्मा स्त्रीवृन्देन समाहितः ।

वारुण्या करणेन मत्त इव धर्मः स्वभावो यस्य स आत्माऽन्तःकरणं यस्येत्यर्थः ।

अङ्के युवतिमाधाय सर्वयोषिद्वरां शुभाम् ।
गायते नृत्यते विप्रः सुरां च पिबते भृशम् ॥
विना यज्ञोपवीतेन स्थितो योगीश्वरो नृप ।
पुष्पमालाभिर्दिव्याभिर्मुक्ताहारपरिच्छदैः ॥
गुरुचन्दनदिग्धाङ्गो राजमानो मुनीश्वरः ।
तस्याऽऽश्रमं नृपो गत्वा दृष्ट्वा च द्विजसत्तमम् ॥
प्रणाममकरोन्मूर्ध्ना दण्डवत्सुसमाहितः ।
अत्रिपुत्रः स योगीन्द्रः समालोक्य नृपोत्तमम् ॥
प्रणतं पुरतो भक्त्या अवज्ञाय ततः स्थितः ।
एवं वर्षशतं प्राप्तं तस्य भूपस्य सत्तम ॥
निश्चलत्वं परिज्ञाय मानसं भक्तितत्परम् ।
समाहूय समाहेदं किमर्थं क्लिश्यसे नृप ॥
ब्रह्माचारेण हीनोऽस्मि ब्रह्मत्वं नास्ति मे कदा ।
सुरामांसप्रलुब्धोऽस्मि स्त्रिया सक्तः सदैव हि ॥
वरदाने न मे शक्तिरन्यं शुश्रूष ब्राह्मणम् ।

आयुरुवाच—

भवादृशो महाभाग नास्ति ब्राह्मणसत्तम ।
सर्वकामप्रदाता च त्रैलोक्ये परमेश्वरः ॥
अत्रिवंशे महाभाग गोविन्दस्तु सुरोत्तम ।
ब्राह्मणस्य च रूपेण भवान्वै गरुडध्वजः ॥

नमोऽस्त्वित्यादिना तेन स्तुतस्ततो बहुदिवसानन्तरं तं राजानं सुरादि याचयित्वा तेन तत्परमभक्त्याऽऽनीय दत्ते ततस्तस्मै तदभिमतगुणं पुत्रं वरदानेन दत्तवान्, आम्रफलं च त्वद्भार्यायै भक्षणाय दीयतामिति दत्तवान्भगवान्दत्तात्रेय इत्युपाख्यातम् । अत्र यथेष्टचेष्टा तु स्पष्टैव । तथेतिहासेऽपि महाभारताख्ये मोक्षधर्मेषु षष्ठाध्याये प्रह्लादाजगरसंवादं प्रक्रम्य प्रह्लादं प्रति तेनपृष्टोऽजगरमुनिः स्ववृत्तिं वर्णयन्—

कणान्कदाचित्खादामि पिण्याकमपि च ग्रसे ।
भक्षये शालिमांसानि भक्ष्यांश्चोच्चावचान्यतः ॥ इति ।

अत्राप्यजगरवृत्त्या जीवतो मुनेः श्रौतक्रियाद्यभावाद्धुतशेषं भक्षयेदित्यादिविधानं विना मांसभक्षणं स्फुटमेव यथेष्टाचरणम् । एवं महारामायणाख्ये बृहद्योगवासिष्ठापरनाम्न्यार्षे

काव्येऽपि निर्वाणप्रकरणस्य पूर्वार्धे पञ्चसप्ततितमे सर्गे पूर्वसर्गे त्रितलनामानं मुनिं ब्रह्मजिज्ञासुः शरणीभूय तेन तत्त्वे समु[प]दिष्टेऽपि भगीरथ उवाच—

शरीरेऽस्मिंश्चिरारूढो गिरौ तरुरिव स्वके ।
अहंभावो महाभाग वद मे त्यज्यते कथम् ॥

इत्यहंकाराख्यविपरीतभावनोपशमद्वारा ब्रह्मात्मत्वापरोक्षानुभवोदयप्रतिबन्धध्वंसोपाये पृष्टे—

शान्ताशेषविशेषणो विगतभीः संत्यक्तसर्वैषणो
गत्वा नूनमकिंचनत्वमरिषु त्यक्त्वा समग्रां श्रियम् ॥
शान्ताहंकृतिरस्तदेहकलनस्तेष्वेव भिक्षामटन् ।
मामप्युज्झितवानलं यदि भवत्युच्चैस्त्वमुच्चैरसि ॥

इत्यन्तग्रन्थेन त्रितलेन सर्वत्याग एवोपदिष्टे ततोऽस्मिन्सर्गेऽग्निष्टोममखं कृत्वा तदुत्तरं सर्वस्वं ब्राह्मणादिभ्यो दत्त्वा राज्यमपि शत्रवे दत्त्वा ततः—

आक्रान्ते द्विषता राज्ये मुनिः सद्मानि मण्डले ।
अधोवासोऽवशेषोऽसौ निर्जगाम स्वमण्डलात् ॥

इति तस्य सर्वस्वत्यागो वर्णितः । अत्र टीका—अधोवासः कौपीनाच्छादनं तदवशेष इति अत्र—

त्रयाणामविशेषेण संन्यासश्रवणं श्रुतौ ।
यदोपलक्षणार्थं स्याद्ब्राह्मणग्रहणं तदा ॥

इति श्रीमद्वार्तिककारचरणसरोजवचनात् ‘ ब्राह्मणो निर्वेदमायात् ’ ‘ ब्राह्मणाः पुत्रैषणादिभ्यो व्युत्थायाथ भिक्षाचर्यं चरन्ति ’ इत्यादिश्रुतिषु ब्राह्मणग्रहणस्योपलक्षणार्थत्वात्त्रयाणामपि ब्राह्मणक्षत्रियवैश्यानां संन्याससंभवाद्भगीरथस्यापि संन्यास एव सिद्धो न वानप्रस्थत्वम् । किंच—

भ्रमन्द्वीपानि भूपीठे कदाचित्काल्योगतः ।
अवशः शत्रुणाऽऽक्रान्तं स्वमेव प्राप तत्पुरम् ॥

टीका—द्वीपानि नद्यन्तरितानि मण्डलानि । अवशः सन्दर्शनाधीनचित्तः ।

नानागारांश्च तत्रासौ प्रवाहपतितांश्चरन् ।
पौरांश्च मन्त्रिणश्चैव शमी भिक्षामयाचत ॥

टीका—प्रवाहपतितान्क्रमप्राप्तान्नानागारान् । छान्दसं पुंस्त्वम् । प्राप्येति शेषः । इत्यादिना तद्भिक्षाजीवित्वस्याप्युक्तेरावश्यकी तत्संन्याससिद्धिः । श्रीमद्भागवते तु क्षत्रियस्याप्यृषभस्य स्पष्टमेवोक्तः संन्यासः । तथा हि पञ्चमस्कन्धे श्रीशुक उवाच—‘ एवमनुशास्याऽऽत्म-

जान्स्वयमनुशिष्टानपि लोकानुशासनार्थं महानुभावः परमसुहृद्भगवानृषभापदेश उपशमशीलानामुपरतकर्मणां महामुनीनां भक्तिज्ञानवैराग्यलक्षणं पारमहंस्यधर्ममुपशिक्षमाणः स्वतनयशतज्येष्ठं परमभागवतं भगवज्जनपरायणं भरतं धरणीपालनायाभिषिच्य स्वयं भवन एवोर्वरितशरीरमात्रपरिग्रह उन्मत्त इव गगनपरिधानः प्रकीर्णकेश आत्मन्यारोपिताहवनीयो ब्रह्मावर्तात्प्रवव्राज ' इति । नन्वस्तु नामैवं भगीरथस्यापि संन्यासस्ततः किमिति चेन्न । तस्य पुनरप्यत्रैव राज्यस्वीकृतिवर्णनात्तेन ।

आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते पुनः ।
प्रायश्चित्तं न पश्यामि येन शुध्येत्स आत्महा ॥

इति स्मृतावारूढपतितत्वस्य निषिद्धत्वात्तच्छीलत्वेन यथेष्टचेष्टायाः सिद्धत्वाच्च । उक्तं ह्यत्रैव सर्गे तस्य जीवन्मुक्त्यन्तं ब्रह्मज्ञानदार्ढ्यं तथाऽग्रिमसर्गे परेच्छया परराज्यस्वीकरणं ततः स्वराज्यस्वीकरणं च । तथा हि—शमी भिक्षामयाचतेत्यनन्तरं विविदुस्ते नृपं पौरा इत्यादिना तस्य किंचित्कालं तत्र स्वपुरे स्थितिमुक्त्वाऽथान्यत्रोपशान्तात्मेत्यादिना त्रितलस्य स्वगुरोः प्राप्तिं पर्वतविशेषे स्थितिं च तेन सहोक्त्वा—

समतामुपयातौ तौ गुरुशिष्यौ समौ स्थितौ ।
कलयामासतुः स्वस्थौ विनोदं देहधारणम् ॥

इत्यादिना सर्गान्तं गुरुसाम्यवर्णनेन जीवन्मुक्त्यन्तमात्मनिष्ठत्वं वर्णितम् । अग्रिमसर्गे तु कस्मिंश्चिद्राजमण्डले पुत्रविहीने तद्राजे मृते तत्प्रधानादयो योग्यराजान्वेषणतत्परा इत्युपाख्याय

तं भगीरथमासाद्य स्थिरं भिक्षाचरं मुनिम् ।
परिज्ञाय समानीय सैन्ये चक्रुर्महीपतिम् ॥

टीका—सर्वगुणलक्ष्मीसमन्वितोऽयमिति परिज्ञाय प्रत्यभिज्ञाय तत्राऽऽगते सैन्येऽभिषिच्य महीपतिं चक्रुः । इत्यादिना परराज्यप्राप्तिमुक्त्वा—

तत्र तं पालयन्तं तद्राज्यं राजानमादृताः ।
आजग्मुः प्राक्प्रकृतयः प्राहुरित्थं नृपाधिपम् ॥

प्रकृतय ऊचुः—

राजन्नस्माकमधिपो यस्त्वया सुपुरस्कृतः ।
मृत्युना विनिगीर्णोऽसौ मत्स्येनेवाऽऽमिषं मृदु ॥
तत्तत्पालयितुं राज्यं प्रसादं कर्तुमर्हसि ।
अप्रार्थितोपयातानां त्यागोऽर्थानां च नोचितः ॥

श्रीवसिष्ठ उवाच—

इति संप्रार्थितो राजा तदङ्गीकृत्य तद्वचः ।
सप्तसागरचिह्नायाः स बभूव भुवः पतिः ॥

इति स्वराज्यस्वीकरणमपि तस्योक्तसंन्यासोत्तरमुक्तम्, अतः सिद्धमेव पुराणादौ ब्रह्मविदां जीवन्मुक्तानामपि यथेष्टाचरणम्। ततः पुराणादेः श्रुत्यर्थविवेचकत्वाच्छ्रुत्यादीनामपि प्रागुदाहृतानामेतत्परत्वेनापि लापयितुं शक्यत्वाद्व्यर्थ एवायं त्वत्प्रयास इति चेन्न। उक्तपुराणादितात्पर्यस्यैव त्वयाऽज्ञातत्वात्पूर्वापरपर्यालोचनेन तत्तात्पर्यस्य मदिष्टसाधकत्वाच्च। तथा हि स्कान्दे सूतसंहितायां तावत्त्वदुदाहृतोदाहरणद्वयेऽपि ब्राह्मणादिपदाभावाद्विदुरादीनां शूद्राणामपि तत्त्वज्ञानदर्शनाच्छूद्रस्यैव तत्र तत्रातिविद्वदादिपदैर्ग्रहीतुमुचितत्वाद्वेश्यादिकृतहत्यादिभिस्तत्पातित्यस्य तु क्षुत्पीडितो विवशः संप्रपेद इति श्रद्धयाऽऽगच्छद्विदित्वा देशवैभवमित्युक्त्या चाकस्मादनिकेतवासित्वादिस्वाभाव्येन देशान्तरागतत्वेन व्युत्थितास्थितप्रज्ञत्वेन लोकव्यवहारप्रावण्योदासीनत्वेन चाऽऽदावज्ञातत्वात्कालान्तरे तज्ज्ञानसंभवेऽपि वेश्यादिना स्वमहारत्नलाभभङ्गभिया तत्समाधिपारवश्यबाहुल्येन च तद्गोपितत्वस्यापि संभवादूर्ध्वरेतस्त्वेन शूद्रत्वेन च वेश्यादिस्वीकरणस्याप्युचितत्वात्तस्य च गान्धर्वविवाहस्याप्यमन्त्रकस्यैव विहितत्वेनोक्तवेश्यादिकरुणया योगीन्द्रजीवन्मुक्तत्वेन विषयपारवश्याभावेऽप्यनिषिद्धस्य तादृग्व्यवहारस्य तत्र तत्स्वीकृतत्वाच्च न यथेष्टचेष्टालेशोऽपि। पाद्मोदाहरणं तु भगवद्दत्तात्रेयविषयमस्त्यतस्तस्याऽऽदावेव मार्कण्डेयपुराणोदाहरणरीत्या दत्तोत्तरत्वात्तत्रैव विस्मृतिशीलत्वेन पुनस्तदुदाहरतो देवानांप्रियत्वम्। एवं मोक्षधर्मस्थाजगरोदाहरणेऽपि कृतयुगत्वेन तदानीं ब्राह्मणानामपि क्षत्रियादिगृहगतमृगादिमांसभोजित्वस्य पुराणादौ सुप्रसिद्धत्वात्तादृग्व्यवहारस्यानिषिद्धत्वात्प्रत्युत चातुर्वर्ण्यं चरेद्भैक्ष्यमित्यादिविहितत्वाच्च नैव दोषावकाशः। न चैवं कल्पने मानाभावः शङ्क्यः। ब्राह्मणादिपदप्रयोगाभावपूर्वकमतिविद्वदादिपदप्रयोगस्यैव स्कान्दोदाहरणे तथा प्रह्लादस्य कृतादिगतत्वेन पुराणेषु वर्णितत्वस्य मोक्षधर्मोदाहरणे च प्रमाणत्वात्। संभवत्यविरोधेन संगतिकत्वे हठेन विरोधोद्भावनस्य वैतण्डिकत्वाच्च युक्तमेवोक्तम्। यत्तु महारामायणस्थं भगीरथोदाहरणं तत्र वार्तिकोक्तरीत्या क्षत्रियादेरपि संन्याससंभवेन संन्यासं तस्य कल्पयित्वा पुना राज्यस्वीकृत्याऽऽरूढपतितत्वेन जीवन्मुक्तस्य तस्य यथेष्टाचरणं प्रतिपादितं तन्न।

अधिकारविशेषस्य ज्ञानाय ब्राह्मणग्रहः।
न संन्यासविधिर्यस्माच्छ्रुतौ क्षत्रियवैश्ययोः॥

इति श्रीमद्वार्तिककारचरणारविन्दैरेव।

मुखजानामयं धर्मो यद्विष्णोर्लिङ्गधारणम्॥
बाहुजातोरुजातानां नायं धर्मो विधीयते।

इति स्मृतेस्त्वदुदाहृतवार्तिकस्य ‘काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः’ इति श्रीमद्भगवद्गीतोक्तकाम्यकर्मसंन्यासपरत्वादिकम्। यत्तु संन्यासस्य सर्वाधिकारित्वे वार्तिकवचनं तद्विद्वत्संन्यासविषयं न त्वातुरविविदिषासंन्यासे भाष्याभिप्रायविरुद्धे सर्वाधिकारप्रतिपादनपरम्।

सर्वाधिकारविच्छेदि विज्ञानं चेदुपेयते ।
कुतोऽधिकारनियमो व्युत्थाने क्रियते बलात् ॥

इत्यनन्तरश्लोकेन ब्रह्मज्ञानोदयानन्तरं जीवन्मुक्तेन क्रियमाणे विद्वत्संन्यास एवाधिकारनियमनिराकरणादिति सिद्धान्तलेशेऽप्पय्यदीक्षितवर्णितविद्वत्संन्यासपरत्वरूपं वाऽभिप्रायं मनसि निधाय क्षत्रियादेर्मुख्यसंन्यासस्य वारितत्वात्ततो भगीरथस्य तदभावात्कौपीनधारणभिक्षाचर्यादेस्तु सर्वस्वदानेन

यतिश्च ब्रह्मचारी च विद्यार्थी गुरुपोषकः ।
अध्वगः क्षीणवृत्तिश्च षडेते भिक्षवः स्मृताः ॥

इति वचनादध्वगत्वेनोपपन्नत्वात् । यद्वा 'शान्ताहंकृतिरस्तदेहकलनस्तेष्वेव भिक्षामटन्' इति पूर्वोक्तत्रितलाख्यगुरुवचनाद्विश्वामित्रवचनाच्छ्रीरामस्य ताटकाख्यस्त्रीवधवदतुष्टत्वाच्च संन्यासाभावादेव ब्रह्मविद्याप्रतिबन्धध्वंसार्थं सर्वत्यागस्यानुष्ठेयत्वोक्तेः पुनस्तदुत्तरं सहजस्थित्या रागाभावेऽपि परेच्छया राज्यस्वीकारस्यानिषिद्धत्वेन सुतरामुचितत्वाच्च । ऋषभस्य तु भगवदवतारत्वाच्छ्रीमद्दत्तात्रेयादिवदपर्यनुयोज्यत्वादुपशमशीलानामित्यादिनाऽन्यमुमुक्षुबोधार्थमेव संन्यासाभावेऽपि गगनपरिधानत्वात्संन्यासाभावादेव प्रकीर्णकेशत्ववर्णनाच्च प्रवव्राजेतिपदस्य गमनमात्रपरत्वान्नैव संन्यासो नापि यथेष्टचेष्टेति । तस्मात्सर्वत्र पुराणादौ यत्र यत्र भूतार्थवादस्तत्र तत्रोक्तदिशा जीवन्मुक्तस्थितिव्यवस्थैवमेव ज्ञेया सूरिवरैरतोऽतिरम्यमखिलम् । किंच पूर्वाचार्यैरखिलैरपि खण्डितमेव ब्रह्मविदां यथेष्टाचरणम् । उक्तं हि नैष्कर्म्यसिद्धौ चतुर्थाध्याये श्रीमत्सुरेश्वराचार्यचरणकमलैः—

निवृत्तसर्पः सर्पोत्थं यथा कम्पं न मुञ्चति ।
प्रध्वस्ताखिलमोहोऽपि मोहकार्यं तथाऽऽत्मवित् ॥

इति जीवन्मुक्तमुपक्रम्य—

तरोरुत्खातमूलस्य शेषेणैव यथा क्षयः ।
तथा बुद्धात्मतत्त्वस्य निवृत्यैव तनुक्षयः ॥
बुद्धाद्वैतसतत्त्वस्य यथेष्टाचरणं यदि ।
शुनां तत्त्वदृशां चैव को भेदोऽशुचिभक्षणे ॥
अधर्माज्जायतेऽज्ञानं यथेष्टाचरणं ततः ।
धर्मकार्ये कथं तत्स्याद्यत्र धर्मोऽपि नेष्यते ॥
प्रत्याचक्षाण आहातो यथेष्टाचरणं हरिः ।
यस्य सर्वे समारम्भाः प्रकाशं चेति सर्वदृक् ॥ इति ।

विवरणेऽपि नवमवर्णके श्रीमत्प्रकाशात्ममुनिवरचरणैरेवमेवोक्तम्। ननु तत्त्वदर्शिनः शास्त्रनियमाभावे यथेष्टाचरणं स्यात्। न। हिताहितप्राप्तिपरिहारनिमित्तत्वादाचरणस्य स्वात्मन्येव निरतिशयानन्दमशेषानर्थनिवृत्तिं च साक्षादनुभवतः साध्यपुरुषार्थप्रार्थनाभावात्कुतो यथेष्टाचरणप्रसङ्ग इति। स्वाराज्यसिद्धावप्युक्तं गङ्गाधरेन्द्रसरस्वतीश्रीचरणैर्विवृतं च तैरेव तत्पद्यं कैवल्यकल्पद्रुमाख्यायां तद्व्याख्यायाम्—

रागलोभप्रमादादिदोषक्षयान्नायमासज्जते दुश्चरित्रे क्वचित्।
साधुवत्साधुचारित्र्यरक्षापरः साधुमार्गेण संस्कारतो वर्तते॥ इति।

टीका—अयं विद्वान्क्वचिदपि देशे काले वा दुश्चरित्रे शास्त्रनिषिद्धाचरणे परानिष्टाचरणे वा नाऽऽसज्जते न प्रसक्तो भवति। कुतः। रागलोभप्रमादादीनां भोगलाम्पट्याद्यपराधादिहेतूनां दोषाणां क्षयादात्यन्तिकोच्छेदात्। 'यः शलाटुः सुमधुरः पाके तस्य कुतोऽम्लता' इति न्यायेन ज्ञानोदयात्प्रागभ्यासकालेऽपि यो रागलोभादिदुष्टो नाभूत्स तत्परिपाके महाभाग्यफलज्ञानोदये तथा भविष्यतीति संभावनाऽप्यसंभाविनीति भावः। स तर्हि कथमास्ते तत्राऽऽह—साधुवदिति। साधूनां महतां श्रौतस्मार्तधर्मानुवर्तिनां ब्रह्मविदां यच्चारित्र्यं स्वाश्रमविहितधर्मानुष्ठानसमाध्यभ्यासादि तस्य रक्षायां लोकहिताय शुद्धसंप्रदायप्रवर्तनेन परिपालने पर उद्युक्तः स साधुमार्गेण सर्वजनानुकूलमार्गेणैव वर्तते। तत्र हेतुमाह—संस्कारत इति। 'अनेकजन्मसंसिद्धस्ततो याति परां गतिम्' इति भगवद्वचनाच्चिराभ्यस्तसाध्वाचरणसंस्कारस्य तथैव प्रवर्तकत्वाद्दयालुत्वाच्चेत्यर्थः। तथा हि कुलालचक्रादेरमत्रनिष्पत्त्यनन्तरमपि पूर्ववदेव भ्रमणं दृश्यते न तु तद्विपरीतमिति भाव इति। एवं पूर्वाचार्यैर्भूरि खण्डितेऽपि यथेष्टाचरणे यद्यप्यत्र मत्प्रयासस्यानौचित्यमेव तथाऽपि येऽनभिवीक्षिताकराः किंचिदुदरंभरितया प्रकरणमात्रादराः परवञ्चनतत्पराः संश्रितदुराचाराः पामराः सन्तोऽपि पण्डितंमन्यतया तिरस्कृतभूसुरवराः प्रलपन्ति तद्दमनार्थं परममुमुक्षूद्वेगशमनार्थं च मयाऽत्र विस्तरेण प्रपञ्चितं प्राचामेवाऽऽशयजातमिति ग्रन्थगौरवात्माऽयं मदीयोऽविनयः सहनीयः सूरिवरैः सकलदोषोद्दलनसूक्ष्मगुणप्रकाशनत्रय्यात्मकरैः।

पूर्वाचार्यवचो विचार्य सुचिरं तात्पर्यपर्याप्तितोऽ-
प्यार्याणामनुभूतिपर्यवसितिं प्रोद्धार्य मर्यादया।
कार्याकार्यविधिर्न तुर्यगदशां यद्यप्यथाप्यार्यता-
संस्कारेण सुवर्यमेव चरितं तेषामिति स्फार्यते॥ १॥

उक्तेऽर्थे यावदुपनिषत्परिसमाप्तिवाक्यशेषानुकूल्यमपि दर्शयति तथेत्यादिना—

**तथा "त्रिकाण्डं[1] कमण्डलुं शिक्यं पात्रं जलपवित्रं शिखां यज्ञोपवीतं चेत्येतत्सर्वं भूः स्वाहेत्यप्सु परित्यज्या[2]ऽऽत्मानमन्विच्छेत्" इति त्रिदण्डिनः**

---

१ छ. त्रिदण्डं। २ भ. घ. °प्सु विसृज्या°।

**सत एकदण्डलक्षणं विविदिषासंन्यासं विधाय तत्फलरूपं विद्वत्संन्यासमेवमुदाजहार—"यथाजातरूपधरो निर्द्वंद्वो निष्परिग्रहस्तत्त्वब्रह्ममार्गे[1] सम्यक्संपन्नः शुद्धमानसः प्राणसंधारणार्थं यथोक्तकाले विमुक्तो भैक्षमाचरन्[2]नुदरपात्रेण लाभालाभौ समौ कृत्वा शून्यागारदेवगृहतृणकूटवल्मीकवृक्षमूलकुलालशालाग्निहोत्रनदीपुलिनगिरिकुहरकंदरकोटरनिर्झरस्थण्डिलेष्वनिकेतवास्यप्रयत्नो निर्ममः शुक्लध्यानपरायणोऽध्यात्मनिष्ठः शुभाशुभकर्मनिर्मूलनपरः[3] संन्यासेन देहत्यागं करोति स एव परमहंसो नाम " इति ।**

पात्रं, भिक्षापात्रम् । जलपवित्रं, वस्त्रपूतं पिबेज्जलमिति श्रीमद्भागवतैकादशस्कन्धोक्तेर्जलशोधकं वासः । शेषं स्पष्टम् । अयं हि कुटीचकबहूदकान्यतर एव त्रिदण्डलिङ्गाद्गम्यते । 'कुटीचको बहूदश्चेत्युभावेतौ त्रिदण्डिनौ' इति मूल एव प्रागुक्तत्वेन त्रिदण्डस्य हंसेऽसत्त्वात् । ननु ' यात्राद्यशक्तिशक्तिभ्यां तीव्रे न्यासद्वयं भवेत् ' इति तत्प्रागुक्त्वा कुटीचक इत्याद्युक्तेस्तयोः कथं विविदिषासंन्यासपारमहंस्येऽधिकार इति चेत्, चित्तशुध्या विवेकवैराग्यादिसाधनपौष्कल्याद्ब्रह्मचार्यादीनामपि यदा ' यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वाऽथ पुनर्व्रती वाऽव्रती वा स्नातको वाऽस्नातको वोत्सन्नाग्निरनग्निको वा यदहरेव विरजेत्तदहरेव प्रव्रजेत् ' इति लघुजाबालोपनिषच्छ्रुतेर्निरुक्तसंन्यासेऽधिकारस्तदाऽसौ कुटीचकादेरस्तीति किं वाच्यम् । आरुण्युपनिषच्छ्रुतिस्तु कण्ठत एव प्रकृतसंन्यासमुपन्यस्य ' कुटीचको ब्रह्मचारी कुटुम्बं विसृजेत्पात्रं विसृजेत्पवित्रं विसृजेद्दण्डाँल्लोकाग्नीन्विसृजेदिति होवाच ' इति कुटीचकादेः सति(त्यां) साधनसंपत्तावुक्तसंन्यासाधिकृतिं दर्शयति । तथा कुटीचकादावेव त्रिदण्डादिसंभवोक्तेश्चात्र न काऽप्यनुपपत्तिः । आत्मानमन्विच्छेदित्यनेनैकदण्डलक्षणविविदिषासंन्यासविधानम् । एकदण्डलक्षणमित्येवोक्तौ हंसप्रसङ्गः । विविदिषासंन्यासमित्येतावति चोक्ते प्रकृतश्रुतेरेव पूर्ववाक्ये ' अथ विवर्णवासा मुण्डोऽपरिग्रहः शुचिरद्रोही भैक्षाणो ब्रह्मभूयाय भवति ' इति दण्डग्रहणानुक्तेस्तद्ग्रहणं विविदिषुणाऽपि न कार्यमिति केषांचिद्भ्रमः स्यात्तन्निरासाय प्रकृतश्रुतौ तद्ग्रहणानुक्तावपि ' दण्डमाच्छादनं कौपीनं च परिग्रहेच्छेषं विसृजेच्छेषं विसृजेत् ' इत्यारुणिश्रुत्युक्तेस्तद्ग्रहणावश्यकत्वादुभयमपि युक्तम् । न च दण्डमाच्छादनमित्युक्तश्रुतिर्हंसपरैवेति वाच्यम् । तत्पूर्वोत्तरवाक्यविरोधात् । तथा हि—

द्वयं तीव्रतरे ब्रह्मलोकमोक्षविभेदतः ।
तल्लोके तत्त्वविद्धंसो लोकेऽस्मिन्परहंसकः ॥

१ क. ख. ग. घ. च. स्तत्र ब्र° । २ क. ख. ग. ग. घ. ङ. च. भैक्ष्यमा° । ३ ध. °लनाय सं° ।

इति प्रागुक्तमूलवचनाद्ब्रह्मलोकप्रातिक्रममुमुक्षुर्हंस इति सिद्धम् । प्रकृतश्रुतौ तु पूर्ववाक्य आरुणेः प्रजापतिं प्रति सकलकर्मविसर्जनसाधनप्रश्नेन संन्यासमुपक्रम्य पुत्रादिस्वाध्यायान्तत्यागं प्रजापतिवाक्येन विधाय भूर्लोकभुवर्लोकसुवर्लोकमहर्लोकजनोलोकतपोलोकसत्यलोकं चेत्यनेन ब्रह्मलोकापरपर्यायसत्यलोकत्यागविधानविरोधः, तथोत्तरवाक्येऽपि 'अत ऊर्ध्वममन्त्रवदाचरेदूर्ध्वगमनं विसृजेत्' इत्यूर्ध्वगमनसाध्यब्रह्मलोकेच्छात्यागविधिबाधश्च । न चोर्ध्वगमनं धूमादिमार्गेण चन्द्रलोकापरपर्यायस्वर्गगमनमेवात्रेति वाच्यम् । दण्डमाच्छादनं चेत्येतदव्यवहितपूर्ववाक्ये ब्रह्माण्डं च विसृजेदित्युक्तेः, तथैतद्दीपिकायाम् —'अमन्त्रवन्मन्त्राहित्येनाऽऽचरेत्स्नानाचमनादिकं कर्म कुर्यात्' इत्युक्त्वोर्ध्वगमनमिति व्याख्याने विद्याविताद्दिनोत्कर्षसंपादनमित्यर्थ इति विद्याशब्दितक्रममुक्त्याप्तिफलकोपासनावद्योतितश्रीशंकरानन्दाचार्योक्तेश्च भङ्गापत्तिः । तस्मात्साधूक्तं विविदिषोरेकदण्डग्रहणम् । **तत्फलरूपमिति** । तस्य विविदिषासंन्यासस्य फलं तत्त्वज्ञानं रूप्यते विसंवादाभावेन प्रकाश्यतेऽनेनेति तथा तम् । सति हि विद्वत्संन्यासे तत्त्वज्ञाने जीवन्मुक्तिप्रयोजनेन विसंवादाभावेन तत्त्वज्ञानस्य सर्वसंमतत्वं नान्यथेत्यग्रे मूल एवोपपादयिष्यति । यथाजातरूपधरः, शरीरेतरपरिग्रहरहितः । निर्द्वंद्वः, शीतोष्णादिद्वंद्वसहिष्णुः । एतेनोक्तशरीरेतरबाह्यपरिग्रहराहित्यदार्ढ्यं ध्वनितम् । निष्परिग्रहः, आभ्यन्तरलोकवासनादिपरिग्रहहीनः । एतेन वासनाक्षयाख्यं जीवन्मुक्तिसाधनं सूचितम् । **तत्त्वेति** । तत्त्वं स्वात्माभिन्नमद्वैतं यद्ब्रह्म तस्य मार्गोऽविद्याध्वंसमात्रेणैव प्राप्तिसाधनमपरोक्षसाक्षात्कारस्तत्र सम्यक्कालत्रयमपि संपन्नः 'तच्चिन्तनं तत्कथनमन्योन्यं तत्प्रबोधनम् । एतदेकपरत्वं च ज्ञानाभ्यासं विदुर्बुधाः' इत्यभियुक्तोक्ततदभ्यासमात्रपरायण इत्यर्थः । अनेन ज्ञानाभ्यासरूपं द्वितीयं तत्साधनं ध्वनितम् । **शुद्धमानसः** ।

मनो हि द्विविधं प्रोक्तं शुद्धं चाशुद्धमेव च ।
अशुद्धं कामसंकल्पं* शुद्धं कामविवर्जितम् ॥
मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।
बन्धाय विषयासक्तं मुक्त्यै निर्विषयं स्मृतम् ॥

इत्यमृतबिन्दूपनिषन्मन्त्रात् ।

प्रजहाति यदा कामान्सर्वान्पार्थ मनोगतान् ।
आत्मन्येवाऽऽत्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥

इति श्रीमद्भगवदुक्तेश्च मनोनाशापरपर्यायसकलकल्पनाराहित्यपूर्वकाद्वैतानन्दात्ममात्रनिमग्नत्वलक्षणमनःशुद्धिशालीत्यर्थः । अनेन मनोनाशलक्षणं तृतीयं तत्साधनं बोधितम् । **प्राणसंधारणार्थमिति** । प्राण इत्युपलक्षणं पञ्चप्राणानाम् । एतेषामेव न तु देहेन्द्रियादीन

---

* संकल्पादिति पाठान्तरम् ।

पुष्टितुष्ट्याद्यर्थम् । सम्यङ्मनोनाशसाधनीभूतयोगाभ्यासोपयोगित्वेन यद्धारणं तदर्थम् । हितमितमेध्यभोजनेन प्राणैकनिर्वहणार्थमित्यर्थः । तदुक्तं श्रीमद्भगवद्गीतासु—'नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः' इति । व्याख्यातं च मधुसूदन्याम्—यद्भुक्तं सज्जीर्यति शरीरस्य च कार्यक्षमतां संपादयति तदात्मसंमितमन्नं तदतिक्रम्य लोभेनाधिकमश्नतो न योगोऽस्ति, अजीर्णदोषेण व्याधिपीडितत्वात् । नचैकान्तमनश्नतो योगोऽस्ति, अनाहारादत्यल्पाहाराद्वा रसपोषणाभावेन शरीरस्य कार्याक्षमत्वात् । 'यद्ध ह वा आत्मसंमितमन्नं तदवति यद्भूयो हिनस्ति तद्यत्कनीयो न तदवति' इति शतपथश्रुतेः । तस्माद्योगी नाऽऽत्मसंमितादन्नादधिकं न्यूनं वाऽश्नीयादित्यर्थः । अथ वा—

पूरयेदशनेनार्धं तृतीयमुदकेन तु ।
वायोः संचारणार्थं च चतुर्थमवशेषयेत् ॥

इत्यादियोगशास्त्रोक्तपरिमाणादधिकं न्यूनं वाऽश्नतो योगो न संपद्यत इत्यर्थ इति । **यथोक्तकाल इति ।** विमुक्तोऽपि 'विमुक्तश्च विमुच्यते' इति श्रुतेस्तत्त्वापरोक्ष्याज्जीवन्मुक्तोऽपि व्युत्थानदशायां लोकसंग्रहार्थं यथोक्तकाले शास्त्रविहितसमये प्राणसंधारणार्थमुदरपात्रेण भैक्षमाचरन्नित्यन्वयः । एतेन तत्त्ववित्त्वात्सर्वकर्मलेपाभावेऽपि विहितकालोल्लङ्घनमपि तस्य न संभवतीति श्रुत्या यदा तल्लक्षणत्वेन दर्शितं तदाऽमेध्याशनप्रसक्तिस्तु दूरापास्तैवेति भावः । कालस्तूक्तः पाराशरमाधवीये मनुः—

एककाले चरेद्भैक्षं न प्रसज्येत विस्तरे ।
भैक्षप्रसक्तो हि यतिर्विषयेष्वपि सज्जति ॥
विधूमे सन्नमुसले व्यङ्गारे भुक्तवज्जने ।
वृत्ते शरावसंपाते भिक्षां नित्यं यतिश्चरेत् ॥ इति ।

विधूमे विगतधूमे । सन्नमुसले षद्लृविशरणगत्यवसादनेष्विति धातोः सन्नानि कण्डनव्यापारादुपरम्य स्वस्थानं गतानि मुसलानि यस्मिंस्तत्र । पाकाद्यर्थं व्रीह्यादिकण्डनव्यापारोपरम इति यावत् । व्यङ्गारे महानसादिगतज्वलत्काष्ठशून्य इत्यर्थः । अत एव भुक्तवज्जने । एतादृशेऽपराह्णकाल इति शेषः । अयमपि कालनियमो माधूकर एव नान्यत्र । तत्रैव स्वकर्तृकत्वात्, प्राक्प्रणीतादौ भैक्षे तु पारतन्त्र्यात् । शरावाणां शरावोपलक्षितपाकादिपात्राणां संपाते सम्यगन्नलेपादिपातनं क्षालनेन शुद्धिरित्यर्थः । तस्मिन्वृत्ते संपन्ने सति । शेषं स्पष्टम् । अयमपि कालनियमो नाद्य, कलिवर्ज्यत्वात् । तदुक्तं निर्णयसिन्धौ कलिवर्ज्यान्युपक्रम्य माधवीये पृथ्वीचन्द्रोदये च । तत्र कानिचित्कलिवर्ज्यान्युक्त्वा 'यतेश्च सर्ववर्णेषु भिक्षाचर्या विधानतः' इति 'चातुर्वर्ण्यं चरेद्भैक्षम्' इत्यादिविधिप्राप्तां सर्ववर्णभिक्षाचर्यां कलिवर्ज्यत्वेन विधायान्यान्यपि कलिवर्ज्यान्यभिधाय

यतेः सायंगृहत्वं च सूरिभिस्तत्त्वदर्शिभिः ।
एतानि लोकगुप्त्यर्थं कलेरादौ महात्मभिः ॥
निवर्तितानि विद्वद्भिर्व्यवस्थापूर्वकं बुधैः ।

इति प्रमाणमुपन्यस्यैतद्व्याख्यानावसरे कमलाकरेणैव—सायंगृहत्वं विधूमे सन्नमुसल इत्युक्तम् । पृथ्वीचन्द्रेण तु—

अटन्ति वसुधां विप्राः पृथिवीदर्शनाय च ।
अनिकेता अनाहारा यत्र सायंगृहास्तु ते ॥

इति विष्णुपुराणोक्तो निषिद्ध इति । सायंगृहो यतिरिति शेषः । तस्माद्युगान्तरविषय-मिदमिति सिद्धम् । ज्ञानित्वेऽपि तेन भैक्षार्थमपि विहितपात्रपरिग्रहोऽपि न क्रियत इत्याह—**उदरपात्रेणेति** । उपलक्षणमिदं पाणिपात्रस्यापि । तथा चाऽऽरुण्युपनिषदि—'यतयो हि भिक्षार्थं ग्रामं प्रविशन्ति पाणिपात्रमुदरपात्रं वा' इति । व्याकृतं चेदं श्रीशंकरानन्दैर्दीपिकायाम्—पाणिरञ्जलिर्दक्षिणपाणिर्वा भिक्षार्थं पात्रं पाणिपात्रम् । उदरपात्रं वा । उदरं जठरं ग्रासागमनसमये मुखप्रसारणेन पात्रं भिक्षाप्रक्षेपस्थलमिति । एतेन वैराग्य-दार्ढ्यं ध्वनितम् । तत्पञ्चविधत्वमुक्तं पाराशरमाधवीये, उशना—

माधूकरमसंक्लृप्तं प्राक्प्रणीतमयाचितम् ।
तात्कालिकं चोपपन्नं भैक्षं पञ्चविधं स्मृतम् ॥
मनःसंकल्परहितान्गृहांस्त्रिःसप्तपञ्चकान् ।
मधुवदाहरणं यत्तु माधूकरमिति स्मृतम् ॥
शयनोत्थापनात्प्राग्यत्प्रार्थितं भक्तिसंयुतैः ।
तत्प्राक्प्रणीतमित्याह भगवानुशना मुनिः ॥
भिक्षाटनसमुद्योगात्प्राक्केनापि निमन्त्रितम् ।
अयाचितं हि तद्भैक्षं भोक्तव्यं मनुरब्रवीत् ॥
उपस्थाने च यत्प्रोक्तं भिक्षार्थं ब्राह्मणेन ह ।
तात्कालिकमिति ख्यातं तदत्तव्यं मुमुक्षुणा ॥
सिद्धमन्नं भक्तजनैरानीतं यन्मठं प्रति ।
उपपन्नं तदित्याहुर्मुनयो मोक्षकाङ्क्षिणः ॥ इति ।

तत्र मधूनि करोतीति भ्रमरो मधुमक्षिका च तस्य तस्याश्चेदं वृत्तं माधूकरमिति व्युत्पत्त्या माधूकरमपि द्विविधम् । तथा हि—भ्रमरो यत्र मधु लभते तत्रैव तावत्प्राश्यान्यत्र याति तद्वद्यत्र यावद्भैक्षं मिलति तत्रैव तावत्करोदरान्यतरपात्रेण भुक्त्वाऽन्यत्र गमनरूपमेकम् । मधुमक्षिका तु ततस्ततो मध्वानीयैकत्र संचित्याश्नाति तद्वत्संचित्यैकत्र भोजनमपरमिति ।

तत्र प्रकृते तु संचयार्थं पात्राभावात्प्रथममेवेति भावः । तत्राप्ययं विशेषो दिगम्बरपरमहंसानाम् । तत्र परमहंसानामित्यारभ्योक्तलक्षणानामेव पाणिपात्रमुदरपात्रं चेति । एवं भैक्षाचरणेऽपि लाभालाभयोर्हर्षविषादौ न करोतीत्याह—**लाभेति** । यथा लाभालाभौ समौ हर्षविषादाजनकौ स्यातां तथाऽयं भूत्वा भैक्षारम्भात्प्राक्तादृक्तत्त्वानुसंधानदार्ढ्यं मनसि संपाद्य ततो निरुक्तलक्षणं भैक्षमाचरन्भवतीति संबन्धः । अयमेव भैक्षप्रकारो विश्वेश्वर्यां द्वितीयसंग्रहे मैत्रायणीयश्रुतिमुदाहृत्य दर्शितः । सा चेत्थम्—' कामक्रोधलोभमोहदम्भदर्पाहंकारममकारानृतादींस्त्यजेच्चतुर्षु वर्णेषु भैक्षं चरेदभिशस्तपतितवर्जं पाणिपात्रेणाशनं कुर्यादौषधवत्प्राश्नीयात्प्राणसंधारणार्थं यथा मेदोवृद्धिर्न जायतेऽरण्यनिष्ठो भिक्षार्थी ग्रामं प्रविशेत् ' इति । चतुर्षु वर्णेष्वित्यत्र श्रीमत्संक्षेपशारीरके तु परिसंख्यैवोक्ता—

अचतुर्गुणशौचवारणात्स्वयमेवास्य चतुर्गुणं भवेत् ।
अचतुर्ष्वशनस्य वारणात्स्वयमेवास्य चतुर्षु भोजनम् ॥ इति ।

पाराशरमाधवीये तु भिक्षान्नं प्रशंसति यमः—

यश्चरेत्सर्ववर्णेषु भैक्षमभ्यवहारतः ।
न स किंचिदुपाश्नीयादापो भैक्षमिति स्थितिः ॥

इत्युक्त्वाऽग्रे व्याख्यातं ' सर्वान्नानुमतिः प्राणात्यये तद्दर्शनात् ' इति श्रीमच्छारीरकसूत्रं मनसि निदधद्भिर्माधवाचार्यैः । अत्र सर्ववर्णेष्वित्यापद्विषयमिति । अभिशस्तो मिथ्याभिशापेनाभिदूषितः । एवं तदाहारमुक्त्वा विहारमाह—**शून्यागारे**त्यादिना । शून्यागारं जननिवासहीनं विप्रादिगृहं न म्लेच्छानां शून्यालयम् । तृणकूटेत्यारण्यकरचिततृणालपगृहमित्यर्थः । गिरिकुहरं पर्वतगुहा । कन्दरो दरी । कोटरो वृक्षस्य स्तम्भवर्तिबिलाकारः । निर्झरो जलप्रस्रवणस्थलम् । स्थण्डिलमरण्यादिषु लोकरचितोटजः । अत्र देवगृहाग्निहोत्रशालयोरीश्वरस्वरूपत्वद्योतनाय, वल्मीकस्य निजनिर्भयत्वपरीक्षणाय, कुलालशालायाः 'यथैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ' इति च्छान्दोग्यश्रुत्युक्तकार्यमिथ्यात्वनिदर्शनसूचनाय, शेषाणां विविक्तदेशत्वार्थं ग्रहणमिति व्यज्यते । अत्रापि नियतैकत्रवासं वारयति—**अनिकेतेति** । 'अनिकेतः स्थिरमतिः' इति स्मृतिरपि । अप्रयत्न इत्यादिविशेषणपञ्चकं पूर्वोक्तवासनाक्षयादिजीवन्मुक्तिसाधनत्रयसिद्ध्यर्थम् । 'तच्छुभ्रं ज्योतिषां ज्योतिः' इतिश्रुतेः शुक्लमत्र स्वप्रकाशमद्वैतं ब्रह्म । यथायोग्यं हेतुहेतुमद्भावः । यो यथाजातरूपेत्यादिविशेषणवैशिष्ट्यरूपफलसंन्यासेन विशिष्टः सन्प्रारब्धपरिसमाप्त्या देहत्यागं लोकदृष्ट्या करोतीव स एवैतल्लक्षण एव न त्वन्यः परमहंसो नामेति प्रसिद्धमित्यन्वयः । अत्र नामेति प्रसिद्ध्यर्थकाव्ययग्रहणादेकदण्डिनो विदुषोऽपि पारमहंस्यं गूढमिति ध्वनितम् । तथाहि विश्वेश्वर्यां तत्र परमहंसा नामेत्यारभ्य सर्वस्यापि लघुजाबालोपनिषत्पञ्चमखण्डस्यास्य संक्षेपेणार्थं स्मरति काण्वायनः—' तत्र परमहंसा नाम एकदण्डधरा मुण्डा-

स्तथा कौपीनवाससोऽव्यक्तलिङ्गा अव्यक्ताचारा अनुन्मत्ता उन्मत्तवदाचरन्तः शिखायज्ञोपवीतत्रिदण्डकमण्डलुकपालानां च त्यागिनः शून्यागारदेवगृहवासिनो न तेषां धर्मो नाधर्मो न सत्यं नापि चानृतं सर्वसहाः सर्वसमाः समलोष्टाश्मकाञ्चना उपपन्नमात्राहाराश्चातुर्वर्ण्यं भैक्षं चरन्त आत्मानं मोक्षयन्तः ' इति ।

एवं प्रतिज्ञातं द्विविधपारमहंस्यं सिद्धमित्युपसंहरति **तस्मा**दित्यादिना—

**तस्मादनयोरुभयोः परमहंसत्वं सिद्धम् । समानेऽपि परमहंसत्वे सिद्धे विरुद्धधर्माक्रान्तत्वादवान्तरभेदोऽप्यभ्युपगन्तव्यः । विरुद्धधर्मत्वं चाऽऽरुण्युपनिषत्परमहंसोपनिषदोः पर्यालोचनायामवगम्यते । केन भगवन्कर्माण्यशेषतो विसृजा[1]नीति शिखायज्ञोपवीतस्वाध्यायगायत्रीजपाद्यशेषकर्मत्यागरूपे विविदिषासंन्यासे शिष्येणाऽऽरुणिना पृष्टे सति गुरुः प्रजापतिः " शिखां यज्ञोपवीतम् " इत्यादिना सर्वत्यागमभिधाय " दण्डमाच्छादनं कौपीनं च परिग्रहेत् " इति दण्डादिस्वीकारं विधाय " त्रिसंध्यादौ स्नानमाचरेत् । संधिं[2] समाधावात्मन्याचरेत्सर्वेषु वेदेष्वार[3]णमावर्तयेत् । उपनिषदमावर्तयेत् " इति वेदनहेतूनाश्रमधर्माननुष्ठेयतया विधत्ते ।**

यद्युभयोरपि पारमहंस्यसाम्यं तर्हि भेदः किंनिबन्धन इति चेद्धर्मभेदादित्याह—**समानेऽपी**त्यादिना । विरुद्धधर्माक्रान्तत्वमेव कुत इति चेच्छ्रुतितात्पर्यपर्यालोचनादित्याह— **विरुद्धधर्मत्वं** चेत्यादिना । तत्राऽऽरुण्युपनिषद्वाक्यान्याह—**के**नेत्यादिना । केन विधिना सर्वकर्मत्यागसमर्थः स्यामित्यर्थः । आदिशब्देन यागादिग्रहः । **कौपीनं चे**ति । चकारात्कन्थादि । तदुक्तं पराशरमाधवीये स्कान्दे—

कौपीनाच्छादनं वस्त्रं कन्थां शीतनिवारिणीम् ।
अक्षमालां च गृह्णीयाद्वैणवं दण्डमव्रणम् ॥

विश्वेश्वर्यां तु पात्राण्यन्यदप्यध्यात्मशास्त्रपुस्तकादिकमुक्तम् । तथा हि याज्ञवल्क्यः—

यतिपात्राणि मृद्वेणुदार्वलाबुमयानि च ।
सलिलैः शुद्धिरेतेषां गोवालैश्चावघर्षणम् ॥

तत्रैव—

अध्यात्मपुस्तकं विप्रैर्दत्तं गृह्णीत भिक्षुकः ।
न तावद्द्रव्यमादाय लेखयेद्दोषदर्शनात् ॥ इति ।

---

१ क. ख. ग. घ. ङ. च. °जामीति । २ घ. संध्यां । ३ ग. घ. °रण्यमा° ।

**त्रिसंध्यादाविति**। आदिशब्दोऽत्र पूर्वकालवाची। तदुक्तं श्रीशंकरानन्दैर्दीपिकायां तिस्रः संध्याः प्रातर्मध्याह्नापराह्णकालभूतास्तासामादौ पूर्वमिति। **संधिमिति**। एतदपि तत्रैव व्याख्यातं संधिं छिद्रं जीवब्रह्मणोर्भेदरूपं समाधौ भेदशून्य आत्मनि स्वरूप आचरेत्सर्वतो भक्षयेद्भेदगन्धं निवारयेदित्यर्थ इति। **आरणमिति**। इदमपि च तत्रैव विवृतम्—आरणमारण्यकमरण्याध्ययनयोग्यमुपनिषद्भागमित्यर्थ इति। **उपनिषदमिति**। अरण्येष्वपि ब्रह्मप्रतिपादको भागोऽभ्यसनीयो न त्वन्य इत्यपि तदीयमेव विवरणम्। विश्वेश्वर्यां तु त्रिषवणस्नाने विकल्प उक्तः। तथा हि व्यासः—

प्रातर्मध्याह्नयोः स्नानं वानप्रस्थगृहस्थयोः।
भिक्षूणां तु त्रिषवणमेकं तु ब्रह्मचारिणः॥

सर्वेऽपि वा सकृत्कुर्युरिति। विकल्पव्यवस्था तु शरीरपाटवाद्यवस्थाभेदेन ब्रह्मविचारयोगाभ्यासतारतम्यभेदेन च ज्ञेया। **वेदनहेतूनिति**। चित्तशुध्युत्कर्षेण वैराग्यादिदार्ढ्यद्वारा तत्त्वज्ञानकारणीभूतानित्यर्थः। साक्षात्कारणं तु ज्ञानस्य विचारितमहावाक्यमेवेति भावः। तदुक्तं श्रीमत्सर्वज्ञात्ममुनीश्वरचरणैः संक्षेपशारीरके—

स्वाध्यायधर्मपठितं निजवेदशाखावेदान्तभूमिगतमादरपालितं च।
संन्यासिना परदृशा गुरुणोपदिष्टं साक्षान्महावचनमेव विमुक्तिहेतुः॥ इति।

ज्ञानद्वारेति शेषः।

एवं विविदिषुधर्मेष्वारुण्युपनिषदमुदाहृत्य विद्वद्धर्मेष्वपि प्रतिज्ञानुरोधात्परमहंसोपनिषदं संक्षिप्य प्राग्वदेवाऽऽहाथेत्यादिना—

**अथ योगिनां परमहंसानां कोऽयं मार्ग इति विद्वत्संन्यासे[1] नारदेन पृष्टे सति गुरुर्भगवान्प्रजापतिः स्वपुत्रमित्रेत्यादिना पूर्ववत्सर्वत्यागमभिधाय कौपीनं दण्डमाच्छादनं च स्वशरीरोपभोगार्थाय लोकस्योपकारार्थाय च परिग्रहेदिति। दण्डादिस्वीकारस्य लौकिकत्वमभिधाय तच्च न मुख्योऽस्तीति शास्त्रीयत्वं प्रतिषिध्य कोऽयं मुख्य इति[2] चेदयं मुख्यो न दण्डं न शिखां न यज्ञोपवीतं नाऽऽच्छादनं चरति परमहंस इति दण्डादिलिङ्गराहित्यस्य शास्त्रीयतामुक्त्वा न शीतं न चोष्णमित्यादिवाक्येनाऽऽशाम्बरो निर्नमस्कार इत्यादिवाक्येन च लोकव्यवहारातीतत्वमभिधायान्ते यत्पूर्णानन्दैकबोधस्तद्ब्रह्माहमस्मीति कृतकृत्यो भवतीत्यन्तेन[3] ग्रन्थेन ब्रह्मानुभवमात्रपर्यवसानमाचष्टे। अतो**

१ ग. घ. छ. °वत्संन्यासम°। २ क. ग. °ति स प°। ३ ग. घ. छ. °त्यनेन।

**विरुद्धधर्मोपेतत्वादस्त्येवानयोर्महान्भेदः । स्मृतिष्वप्ययं भेद उक्त-दिशा द्रष्टव्यः ।**

**“ संसारमेव निःसारं दृष्ट्वा सारदिदृक्षया ।**
**प्रव्रजन्त्यकृतोद्वाहाः परं वैराग्यमाश्रिताः ॥**
**प्रवृत्तिलक्षणो योगो ज्ञानं संन्यासलक्षणम् ।**
**तस्माज्ज्ञानं पुरस्कृत्य संन्यसेदिति बुद्धिमान् ॥ ”**

**इत्यादिविविदिषासंन्यासः ।**

एतद्व्याख्यानं तु मूलकारा एवान्ते वक्ष्यन्ति । उक्तं विरुद्धधर्मत्वमुपसंहरति—**अत इति** । निरुक्तभेदं स्मृतिष्वतिदिशति—**स्मृतिष्वपीति** । तत्र पाराशरमाधवीये स्वोदाहृताङ्गिरसो वाक्यमाह—**संसारमेवेति** । स्मृत्यन्तरमप्याह—**प्रवृत्तीति** । ज्ञानयोगेन सांख्यानां कर्मयोगेण योगिनाम् ’ इति स्मृतेः कर्मयोग एवात्र योगशब्दाभिधेयः । स तु प्रवृत्तिलक्षणः । प्रवृत्तिः संध्यावन्दनादौ विधितः प्रवर्तनं तदेव लक्षणं ज्ञापकं यस्य स तथा । ज्ञानं तु संन्यासलक्षणम् । संन्यासः प्रपञ्चिताधिकारानुसारेण सर्वकर्मत्यागः स एव लक्षणमिति प्राग्वत् । यतोऽनयोः कर्मज्ञानयोः प्रवृत्तिनिवृत्तिज्ञाप्यत्वं तस्माज्ज्ञानं पुरस्कृत्याद्वैतात्मतत्त्वसाक्षात्कारमुद्दिश्यैव तमोनिरसनं विना सूर्यानुदयवन्निरुक्तसंन्यासाभावे यथोक्तज्ञानानुदय एवेति बुद्धिमान्पुमान्संन्यसेदिति संबन्धः । इह बुद्धिमानिति पाठे त्विह संसारे विवेकीत्यर्थः । **इत्यादीति** । इत्यादिस्मृत्युक्तो विविदिषासंन्यासोऽस्तीति मध्यमपदलोपी शाकपार्थिवादिवत्समासः । अत्राऽऽदिशब्दात्स्मृत्यन्तरपुराणादीनां संग्रहः । तथा हि पाराशरमाधवीये नारदः—

प्रथमादाश्रमाद्वाऽपि विरक्तो भवसागरात् ।
ब्राह्मणो मोक्षमन्विच्छंस्त्यक्त्वा सङ्गान्परिव्रजेत् । इति ॥

तत्रैव नृसिंहपुराणवचनम्

यस्यैतानि सुगुप्तानि जिह्वोपस्थोदरं शिरः ।
संन्यसेदकृतोद्वाहो ब्राह्मणो ब्रह्मचर्यवान् । इति ॥

शिरसि सुगुप्तत्वं तु गुर्वादिषु वन्द्येष्वतिनम्रत्वमेवेत्याशयः । उदरे चाल्पभुक्तेनापृथुत्वम् ।

---

१ क. ख. ग. घ. ङ. च. दिदृक्षु° ।

विद्वत्संन्यासेऽपि स्मृतिमाह—

"यदा तु विदितं तत्स्यात्परं ब्रह्म सनातनम् ।
तदैकदण्डं संगृह्य सोपवीतशिखां त्यजेत् ॥
ज्ञात्वा सम्यक्परं ब्रह्म सर्वं त्यक्त्वा परिव्रजेत् ॥"

**इत्यादिविद्वत्संन्यासः ।**

**ननु कलाविद्यास्विव कदाचिदौत्सुक्यमात्रेणापि वेदितुमिच्छा संभवत्येवं विद्वत्ताऽप्यापातदर्शिनः पण्डितंमन्यस्यात्रावलोक्यते । न च तौ प्रव्रजितौ दृष्टौ । अतो विविदिषाविद्वत्ते कीदृशे विवक्षिते इति चेदुच्यते ।**

**यदा त्विति । विदितमिति ।** परोक्षत्वेन ज्ञातमित्यर्थः । तदैकदण्डं संगृह्येति दण्डग्रहणोक्तेर्ज्ञात्वेत्यादिनाऽपरोक्षज्ञानोक्तेश्च । यद्वा परमहंसोपनिषदुक्तोऽत्रापि गौणादिभिन्नो विद्वत्संन्यास एवास्तु द्विविधः । **सम्यगिति ।** अप्रामाण्यज्ञानानास्कन्दितत्वे सति प्रमात्रभिन्नविषयत्वलक्षणेनापरोक्षत्वेन ज्ञात्वेत्यर्थः । तथा चात्र विविदिषासंन्यासानुवादपूर्वकं विद्वत्संन्यासकथनमिति भावः । अत्राप्यादिशब्देन प्राग्वत्स्मृतिपुराणादिसंग्रहः । स्मृतिस्तु विश्वेश्वर्यां क्रतुः—

अहमेव परं ब्रह्म वासुदेवाख्यमव्ययम् ।
इति भावो दृढो यस्य तदा भवति भैक्षभुक् । इति ॥

मोक्षधर्मेष्वपि—

त्यक्त्वा यः प्राकृतं कर्म नित्यमात्मरतिर्मुनिः ।
सर्वभूतात्मभूतस्तस्मात्स गच्छेदुत्तमां गतिम् । इति ॥

एवं पुराणवचनमप्यूहनीयम् । इत्यादीति पूर्ववद्व्याख्येयम् । तेन दण्डिना ज्ञानोत्तरं दण्डादि यत्नेन त्याज्यमित्याशयोऽस्याः स्मृतेः केचित्कल्पयन्ति ते परास्ताः । तथात्वे तु शिखां त्यजेदितिपदोत्तरमथशब्दः प्रयुक्तः स्यात् । तस्मान्मदुक्त एवार्थः श्रेयानधिकारिभेदेन संन्यासद्वयविधानरूप इति विभावनीयं नयनिपुणैः । अस्त्वेवं संन्यासद्वयं तथाऽपि विविदिषादितत्कारणस्वरूपनिर्णयाभावेन व्यर्थमेव तद्विवरणम् । न च वेदनार्थं शास्त्रादौ प्रवृत्तिर्विविदिषा, तथाऽधीताद्वैतशास्त्रत्वमेव विद्वत्तेति प्रसिद्धमेव विविदिषादितत्कारणमिति वाच्यम् । कदाचित्कुतूहलितया प्रवृत्तस्य फलपर्यन्तज्ञानानुदयादिति पञ्चपादिकावचनात्, 'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन' इति श्रुतेश्च प्रसिद्धविविदिषादिवैयर्थ्यात् । अथ वा कार्यलिङ्गकानुमानेन तन्निश्चय इति चेत्तदपि

१ क. ख. ङ. च. तत्त्वं परं । २ क. ख. ग. घ. ङ. च. °व्रजन्तौ दृ° ।

न संभवति, अन्वयव्यतिरेकव्यभिचारात् । तथा हि—यत्र संन्यासस्तत्र प्रसिद्धविविदिषाद्यभावोऽपि दृश्यतेऽतोऽन्वयव्यभिचारः । यत्र च संन्यासाभावस्तत्र तत्सद्भावोऽपीति व्यतिरेकव्यभिचारः । अतश्च स्वाभिमतं तल्लक्षणं कथनीयमिति शिष्यप्रश्नमुत्थाप्य समाधातुमुपक्रमते—**नन्वि**त्यादिना । कलाः संगीताद्याः । विद्याः पुराणाद्याः पुराणन्यायमीमांसेत्यादिस्मृतिप्रसिद्धाः । **आपातदर्शिन इति** । पातं यथार्थविचारपूर्वकं प्रमाणोत्पन्नेन तत्त्वज्ञानेन प्राक्तनस्य मिथ्याज्ञानस्य ध्वंसं मर्यादीकृत्येत्यापातं यथा स्यात्तथा द्रष्टुं ज्ञातुं शीलमस्येत्यापातदर्शी तस्येति विग्रहः । अतत्त्वेऽपि तत्त्वमानिन इति यावत् । अत एव पण्डितंमन्यस्य । सार्वज्ञ्याभिमानिन इत्यर्थः । अत्र, लोके । प्रव्रजितौ संन्यस्तौ । प्रव्रजन्ताविति पाठेऽपि पूर्वं किंचित्कालं संन्यासस्य प्रारब्धेन प्रतिबद्धत्वेऽपि सांप्रतं संन्यासं कर्तुमुद्युक्तावपि नेक्षिताविति तात्पर्यम् ।

प्रतिपृष्टसमाधानकथनमेव विविदिषादेः स्वाभिमतलक्षणशिक्षणेन समाचक्षाणो दृष्टान्तमेवाऽऽदौ बोधयति—

**यथा तीव्रायां बुभुक्षायामुत्पन्नायां भोजनादन्यो न रोचते व्यापारो भोजने च विलम्बोऽपि सोढुं न शक्यते तथा जन्महेतुषु कर्मस्वत्यन्तमरुचिर्वेदनसाधनेषु[1] च श्रवणादिषु त्वरा महती संपद्यते तादृशी विविदिषा संन्यासहेतुः ।**

**विद्वत्तावा अवधिरुपदेशसाहस्र्यामभिहितः—**

**“ देहात्मज्ञानवज्ज्ञानं देहात्मज्ञानबाधकम् ।**
**आत्मन्येव भवेद्यस्य स नेच्छन्नपि मुच्यते ॥ ॥ ”इति ॥**

**श्रुतावपि—“भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।**
**क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥ ” इति ॥**

**यथेति** । तीव्रायामिति हेतुगर्भं विशेषणम् । अत एव भोजनादन्यव्यापारारुचिस्तद्विलम्बासहिष्णुता चेति । तीव्रत्वं चोक्तोभयकार्यैकोन्नेयम् । दार्ष्टान्तिकमाह—**तथेति** । जन्महेतुष्वितीदमपि पदं हेतुघटितमेव । कर्मसु, स्वस्ववर्णाश्रमविहितनित्याद्यखिलक्रियास्वित्यर्थः । तेषां जन्मापादकत्वं तु प्रागेव व्याख्यातम् । रुच्यभावस्याऽऽत्यन्तिकत्वं नाम पिपासोरपि मृगजलत्वेन ज्ञातमृगजलेऽनादर इव कदाऽप्यादराभाववैशिष्ट्यमेव । **श्रवणादिष्विति** । आदिपदान्मनननिदिध्यासनसंग्रहः । एवं त्वराया अपि महत्त्वं नाम यावज्जागरावस्थं श्रवणाद्यन्यतमैकपरत्ववैशिष्ट्यमेव । **संपद्यत इत्यादि** । ययेदं व्यापारद्वयं संपद्यते संपन्नं भवति तादृशी तल्लक्षणा चित्तवृत्तिः संन्यासहेतुर्विविदिषेति योजना ।

---

१ घ. छ. °धनश्र° ।

अत्र ययेति चित्तवृत्तिरिति पदद्वयाध्याहारः। तथा च सद्यः स्वतत्त्वसाक्षात्कारकरणैकपरायणत्वं जनयत्स्वचित्तवृत्तित्वं विविदिषात्वमिति तल्लक्षणमुक्तं वेदितव्यम्। अत्र 'द्वौ क्रमौ चित्तनाशस्य योगो ज्ञानं च राघव' इति योगवासिष्ठवचनाच्चित्तनाशशब्दितसंसारध्वंसस्य योगेनापि संभवान्मुमुक्षोरष्टाङ्गयोगैकतत्परत्वं जनयन्त्यां वृत्तौ व्यभिचारवारणाय सद्य इति पदम्। यद्यपि योगोऽपि ब्रह्मज्ञानसाधनं तथाऽपि निर्विकल्पसमाध्यन्तपरिपाकद्वारैवेति तत्र महान्विलम्बः। अत एव भगवतः पतञ्जलेः सूत्रम्—'स तु दीर्घकालनैरन्तर्यसत्कारासेवितो दृढभूमिः' इति। व्याकृतं चेदं मधुसूदन्यां षष्ठाध्याये 'असंशयं महाबाहो मनो दुर्निग्रहं चलम्' इति श्लोके। यथा—अनिर्वेदेन दीर्घकालासेवितो विच्छेदाभावेन निरन्तरासेवितः सत्कारेण श्रद्धातिशयेन चाऽऽसेवितो दृढभूमिर्विषयसुखवासनया चाऽऽलयितुमशक्यो भवति। अदीर्घकालत्वे दीर्घकालत्वेऽपि विच्छिद्य सेवने श्रद्धातिशयाभावे च लयविक्षेपकषायसुखास्वादानामपरिहारे व्युत्थानसंस्कारप्राबल्याद्दृढभूमिरभ्यासः फलाय न स्यादिति त्रयमुपात्तमिति। श्रवणादीनां तु प्रमाणासंभावनादिप्रतिबन्धमात्रध्वंसपर्यन्तमावृत्त्यपेक्षत्वेऽपि नैतावान्विलम्बः। एवं प्रकृतमुमुक्षुमात्राश्रितत्वमेव साक्षात्कारतदिच्छयोः क्रमाद्बोधयितुं स्वपदद्वयम्। तेन स्वब्रह्मबोधार्थमन्येच्छायामन्यस्य तदर्थं स्वेच्छायां च नैवातिव्याप्तिरिति हृदयम्। अद्वैतब्रह्मेतरवस्तुप्रत्यक्षहेतुतादृग्वृत्तावतिव्याप्त्यभावार्थं तत्त्वेति। ब्रह्मात्माभिन्नवस्तुमात्रस्य बाधितत्वेन कालत्रयाबाधितत्वरूपतत्त्वरूपत्वाभावात्। साक्षात्कारस्थले ज्ञानेत्युक्तौ परोक्षज्ञानकारणनिरुक्तवृत्तावतिप्रसङ्गस्तद्वारणाय साक्षात्कारेति। तथा करणस्थले हेतुपदनिवेशे कर्मणां शान्त्यादीनामपि बहिरङ्गान्तरङ्गहेतुत्वेन तादृक्स्थले व्यभिचारपरिहारार्थं करणेति। असाधारणकारणत्वरूपकरणत्वं श्रवणादीनामेवेति युक्तमेव करणपदम्। न च महावाक्यस्यैव प्रमाणत्वात्पूर्वोक्तं श्रीमत्सर्वज्ञात्ममुनीश्वरचरणवचनाच्च करणत्वं न श्रवणादेरिति वाच्यम्। तत्प्रतिबन्धनिरासिश्रवणादिविशिष्टस्यैव तस्य तथात्वात्। एकपदं लौकिकव्यापारान्तरव्युदासाय। परायणपदं वैदिककर्मरत्यभावार्थम्। जनयदिति प्रतिबन्धराहित्यार्थम्। यद्यपि वह्निस्तृणदाहहेतुर्भवति तथाऽपि मण्यादिप्रतिबद्धश्चेत्तृणदाहं न जनयति तदभावे तु जनयति तृणदाहमिति योग्यमेवोक्तपदम्। चित्तेति पराभिमतात्मधर्मेच्छाव्यावृत्त्यर्थम्। एवं विद्वत्तालक्षणमपि पूर्वाचार्यसंमतिपूर्वकमाह—**विद्वत्ताया इति।** श्रीमद्भाष्यकारचरणसरोजरेणुभिरिति शेषः। अवधिः परा काष्ठेत्यर्थः। तद्वाक्यमेव पठति—**देहात्मज्ञानवदिति।** यथा देहात्मज्ञानं सर्वप्राणिनामपरोक्षं सर्वदाऽहं ब्राह्मण इत्याद्यसंदिग्धमेव वर्तत एवमपरोक्षमसंदिग्धं चोक्तदेहात्मज्ञानोपलक्षितसकलसकारणकद्वैताध्यासस्य बाधकं मिथ्यात्वापादकमसंभावनाद्यखिलप्रतिबन्धशून्यमिति यावत्। एतादृशं ज्ञानं यस्य पुरुषधौरेयस्याऽऽत्मन्येव

यच्चाऽऽप्नोति यदादत्ते यच्चात्ति विषयानिह।
यच्चास्य संततो भावस्तस्मादात्मेति कथ्यते॥

इत्यभियुक्तोक्तेरात्मशब्दलक्ष्येऽनन्तस्वप्रकाशपरमानन्दसत्यप्रत्यगभिन्नाद्वैतब्रह्मण्येव विषये न तु भेदघटिते देवतादौ भवेदनन्तसुकृतवशाद्यदि स्यात् , इति ज्ञानस्यातिदौर्लभ्यं सूचितम् , स पुमान् " यो वेद निहितं गुहायां परमे व्योमन् । सोऽश्नुते सर्वान्कामान्त्सह । ब्रह्मणा विपश्चिता " इत्यादिश्रुतेर्निरुक्तज्ञानसमकालमेव सकलकामसंपूर्तेर्मुक्तिं विदेहकैवल्यं नेच्छन्नपि, अनभिलषन्नपि मुच्यते तल्लभते । यथा वृक्षाग्रच्युतफलस्य भूपतनेच्छादेरभावेऽपि पतनावश्यंभावस्तथोक्तज्ञानशालिनो जीवन्मुक्तस्य मुक्त्यवश्यंभाव इति भावः । अत्राऽऽत्मन्येवेत्यन्तेन ज्ञानलक्षणं शेषेण तद्वतो लक्षणं ज्ञानफलं चोक्तम् । संमतिदार्ढ्यार्थमत्र श्रुतिं प्रमाणयति—**श्रुतावपीति** । विद्वत्ताया अवधिरभिहित इत्यनुकर्षः । अपिशब्दः श्रद्धादार्ढ्यार्थः । तां श्रुतिं पठति—**भिद्यते हृदयग्रन्थिश्छिद्यन्त** इत्यादि ।

उदाहृतश्रुतिं भेदवादिकृतनानाव्याख्यानविह्वलजिज्ञासुमनःसमाधानार्थं स्वयमेव यथार्थसंप्रदायेन विशदयति **परमपी**त्यादिना—

**परमपि हिरण्यगर्भादिकं पदमवरं यस्मादसौ परावरः, हृदये बुद्धौ साक्षिणस्तादात्म्याध्यासोऽनाद्यविद्याविनिर्मितत्वेन ग्रन्थिवद्दृढसंश्लेषरूपत्वाद्ग्रन्थिरित्युच्यते । आत्मा साक्षी कर्ता वा, साक्षित्वेऽप्यस्य ब्रह्मत्वमस्ति वा न वा, ब्रह्मत्वेऽपि तद्बुद्ध्या वेदितुं शक्यते न वा, शक्यत्वेऽपि तद्वेदनमात्रेण मुक्तिरस्ति न वेत्यादयः संशयाः । कर्माण्यनारब्धान्यागामिजन्मकारणानि । तदेतद्ग्रन्थ्यादित्रयमविद्यानिर्मितत्वादात्मदर्शनेन निवर्तते ।**

हिरण्यगर्भः समष्टिलिङ्गशरीराभिमानी सूत्रात्मा । आदिपदेन विराडादि । तत्र ग्रन्थिपदार्थं प्रथयति—**बुद्धाविति** । अहंकार इत्यर्थः । अत्र बुद्धेर्हृदयपुण्डरीकस्थत्वाद्धृदयशब्देन जहत्स्वार्थया लक्षणया स्थण्डिले जुहोति देवदत्त इत्यादौ तत्रत्याग्निग्रहणवद्धृदयशब्देन श्रौतेन बुद्धिग्रहणमिति भावः । यद्वा ' चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः ' इति कोशाच्छक्तिरेवास्तु तत्र किं क्षतम् । साक्षिणः, साक्षाद्द्रष्टरि संज्ञायामिति पाणिनीयोक्तेरव्यवधानेन प्रकाशकस्य चिद्धातोरित्यर्थः । तादात्म्याध्यासः, संसर्गाध्यासस्वरूपाध्यासोभयसाधारणलक्षणः परस्परैक्याध्यास इत्यर्थः । तथा चाहंकारस्य साक्षिणि स्वरूपाध्यासः । साक्षिणस्त्वहंकारे संसर्गाध्यास एव, अहमुपलभ इत्यनुभवादेव । अन्यथा साक्ष्यहं चिदहमित्यनुभवापत्तिरित्याशयः । एतदध्यासत्रैविध्यमुक्तं सत्यानृते मिथुनीकृत्येति—

---

१ क. °नात्मनि°

रजतप्रतीतिरिदमि प्रथते ननु यद्वदेवमिदमित्यपि धीः ।
रजते तथा सति कथं न भवेदितरेतराध्यसननिर्णयधीः ॥

इति श्रीमच्छारीरकभाष्यगद्यसंक्षेपशारीरकपद्ययोर्व्याख्यानावसरे श्रीरामानन्दमधुसूदनसरस्वतीभ्यां क्रमेण । सत्यमनिदं चैतन्यं तस्यानात्मनि संसर्गमात्राध्यासो न स्वरूपस्य । अनृतं युष्मदर्थस्तस्य स्वरूपतोऽप्यध्यासात्तयोर्मिथुनीकरणमध्यास इति । एकैवेदं रजतमिति धीः । तत्र यथा रजतस्येदमा तादात्म्यं भासत एवमिदमोऽपि रजततादात्म्यमित्यनुभव एवात्रेतरेतराध्यासे मानमित्यर्थ इति । अत्रानृतं युष्मदर्थस्तस्य स्वरूपतोऽपीत्यपिशब्देन यथा युष्मदर्थस्याहंकारादिसकलसकारणकद्वैतस्याऽऽत्मनि स्वरूपेणाऽऽरोप एवं संसर्गाख्यसंबन्धेनापि तस्याऽऽरोपोऽस्तीति सूचितम् । आत्मनस्तु तत्र संबन्धमात्रेणैवाऽऽरोप इति स्फुटमेव । तेन परस्परविलक्षणं संसर्गाध्यासस्वरूपाध्यासोभयानुगततादात्म्याध्यासाख्यमध्यासत्रैविध्यं सिद्धम् । पुनरप्येतदर्थाध्यासज्ञानाध्यासभेदेन द्विधेति षोढाऽध्यासा इति भावः । विस्तरस्तु तत्रैव ज्ञेयः । उक्तग्रन्थित्वे हेतुमाह—**अनादी**त्यादिना । 'अजामेकां लोहितशुक्लकृष्णाम् ।' 'प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि' इत्यादिश्रुतिस्मृत्यादिवशादविद्याया अनादित्वम् । एवं ग्रन्थिं निरूप्य संशयान्विशदयति—**आत्मे**त्यादिना । आत्मा हि त्वं पदार्थस्तत्त्वमसीति वाक्ये । तत्र संशयकारणं तु नानावादिविप्रतिपत्तय एव । ताश्च विप्रतिपत्तयो दर्शिताः श्रीमधुसूदनसरस्वतीभिः सिद्धान्तबिन्दौ तत्र देहाकारपरिणतानि चत्वारि भूतान्येव त्वंपदार्थ इति चार्वाकाः । चक्षुरादीनि प्रत्येकमित्यपरे । मिलितानीत्यन्ये । मन इत्येके । प्राण इत्यन्ये । क्षणिकं विज्ञानमिति सौगताः । शून्यमिति माध्यमिकाः । देहेन्द्रियातिरिक्तो देहपरिमाण इति दिगम्बराः । कर्ता भोक्ताजडो विभुरिति वैशेषिकतार्किकप्राभाकराः । जडो बोधात्मक इति भाट्टाः । भोक्तैव केवलं बोधात्मक इति सांख्याः पातञ्जलाश्चेति । तत्र दिगम्बरान्ता नास्तिकषड्दर्शनीकारभेदाः । शेषास्त्वास्तिकपञ्चदर्शनीकारभेदा इति विभागः । यथाकथंचिदात्मनः साक्षित्वे निर्णीतेऽपि तस्य ब्रह्मत्वे माध्वादिवादिविप्रतिपत्तय एव संशयबीजम् । दैवात्तत्सिद्धावपि तद्ब्रह्मत्वं बुध्या कथं ज्ञायेत यतस्तत्र 'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह' इतिप्रभृतिश्रुतिशतैर्बुद्धिसंचारनिराकरणादिति तस्य बुद्धिग्राह्यत्वे श्रुत्यादितात्पर्यानभिज्ञत्वमेव हेतुः । एवं तज्ज्ञानमात्रेण मुक्तावपि 'अपाम सोमममृता अभूम' 'हिरण्यदा अमृतत्वं भजन्ते' इत्यादिश्रुतिस्वारस्याज्ञत्वमेव संशयनिमित्तमित्याशयः । कर्माणि विवृणोति—**कर्माणीति** । अनारब्धानि, प्रारब्धेतराणि संचितानि क्रियमाणानि च पुण्यपापानीत्यर्थः । अत एवाऽऽगामिजन्मनां कारणानीति योज्यम् । फलितमाह—**तदेतदिति** । यतोऽविद्यानिर्मितमत एवाऽऽत्मदर्शनेन विशुद्धाद्वैतपरमानन्दप्रत्यगभिन्नब्रह्मसाक्षात्कारेण ग्रन्थ्यादित्रयकारणीभूताविद्यायां निवृत्तायां सत्यां तत्कार्यत्वेनेदं ग्रन्थ्यादित्रय-

मपि निवर्तते । यथा शुक्त्यज्ञाने शुक्तिप्रमयाऽपयातेऽर्थाद्रजतमप्यपैति तद्वत् । अत एव मूलकारैः पञ्चदश्यां चित्रदीपे बोधहेतुस्वरूपकार्यनिर्णये पुनर्ग्रन्थ्यनुदय एव तत्कार्यत्वे-नोक्तः । यथा—

श्रवणादित्रयं तद्वत्तत्त्वमिथ्याविवेचनम् ।
पुनर्ग्रन्थेरनुदयो बोधस्यैते त्रयो मताः ॥ इति ।

अत्राविद्यानिर्मितत्वादिति हेतुस्तु यतो ज्ञानमज्ञानस्यैव निवर्तकमिति श्रीमत्पद्मपादाचार्य-चरणारविन्दानां व्याप्तिसूचकवचनेन सहाविरोधायेति ध्येयम् । एतन्नयं तु निवर्तत इति वदता ध्वस्तमेवाविद्येव भवति न तु सोपाधिकभ्रमाख्यप्रतिबिम्बादिकार्यवद्भावितामिति तात्पर्यं सूचितम् ।

विद्वत्तावधौ स्मृतिमपि प्रमाणयति—

**स्मृतावप्ययमर्थ उपलभ्यते—**

**" यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।**
**हत्वाऽपि स इमाल्लोकान्न हन्ति न निबध्यते ॥ " इति ॥**

**यस्य ब्रह्मविदो भावः सत्ता स्वभाव आत्मा नाहंकृतोऽहंकारेण तादात्म्याध्यासातिशयादन्तर्भावितः । बुद्धिलेपः संशयः । तदभावे त्रैलोक्यवधेनापि न बध्यते । किमुतान्येन कर्मणेत्यर्थः । नन्वेवं सति विविदिषासंन्यासफलेन तत्त्वज्ञानेनैवाऽऽगामिजन्मनां निवारितत्वाद्वर्तमानजन्मशेषस्य भोगमन्तरेण निवारयितुमशक्यत्वात्कृतमनेन विद्वत्संन्यासप्रयासेनेति चेत् । मैवम् । विद्वत्संन्यासस्य जीवन्मुक्तिहेतुत्वात्, तस्माद्वेदनाय यथा विविदिषासंन्यास एवं जीवन्मुक्तये विद्वत्संन्यासः संपादनीयः । इति विद्वत्संन्यासः ।**

**स्मृतावपीति** । अपिनोपलभ्यत इतिपदेन चोक्तशङ्काव्यावृत्तिः । तद्वाक्यं पठति—**यस्येति** । एतस्याप्यर्थान्तरतामपाकर्तुं स्वयमेव तत्स्वारस्यमाह—**यस्ये**त्यादिना । भूसत्तायामिति पाणिनिस्मरणाद्भावः सत्तेत्याशयः । सैव स्वभावः स्वस्वरूपं ' तत्सत्यं स आत्मा ' इति श्रुतेरिति भावः । अत्र पूर्वार्धेन ग्रन्थिभेदसंशयोच्छेदौ शेषेण कर्मासंबन्धादिश्चेति ज्ञेयम् । ब्रह्मविदः क्रियमाणासंबन्ध एव श्रीमद्भगवत्संमतो न तु यथेष्टाचरणं हिंसादीति द्योतयितुमपिशब्दस्य कैमुतिकन्यायपरतोक्तेत्याह—**त्रैलोक्यवधेनापी**त्यादिना । यद्येवं ब्रह्मविद्याफलं

---

१ क. ख. ग. ङ. च. °तोऽहं° । २ क. ख. ग. ङ. च. °सादन्तर्नाऽऽच्छादितः । ३ क. ख. ग. ङ. च. °न्मनो वा° । ४ ग. °ण निवर्तितुम° ; ख. ङ. च. °ण विनाशयितुमशक्यत्वात्किमने° ।

तर्हि संचितक्रियमाणयोर्विनाशाश्लेषाभ्यां जन्माभावोपलक्षितमोक्षसिद्धेर्न विद्वत्संन्यासोपयोग इति शङ्कते—**नन्वि**त्यादिना। एवं सति, उक्तश्रुत्यादिवशाज्ज्ञानात्कर्मक्षये सतीत्यर्थः। समाधत्ते॰ **मैवमिति**। तत्र हेतुमाह—**विद्वदिति**। निगमयति—**तस्मादिति**। वेदनार्थं विविदिषासंन्यासवज्जीवन्मुक्त्यै विद्वत्संन्यासोऽपि सप्रयोजनत्वात्संपादनीय इति योजना। उपसंहरति—**इतीति**। निरूपित इति शेषः। ननु भवत्वेवं संन्यासद्वयोपपादनं तथाऽप्यधुना तु तद्द्वयर्थमेव कुत इति चेत्—

अग्निहोत्रं गवालम्भं संन्यासं पलपैतृकम्।
देवराच्च सुतोत्पत्तिं कलौ पञ्च विवर्जयेत्॥

इति निगमोक्तेरिति चेन्न। तदुक्तेः सामान्यत्वात्। तथा हि—इदमेव वचनं कलिवर्ज्यप्रकरणे निर्णयसिन्धावुदाहृत्यैवं व्याख्यातं कमलाकरेण—अग्निहोत्रं तदर्थमाधानम्। एतच्च सर्वाधानपरम्।

अर्धाधानं स्मृतं श्रौतस्मार्ताग्न्योस्तु पृथक्कृतिः।
सर्वाधानं तयोरैक्यकृतिः पूर्वयुगाश्रिता॥

इति लौगाक्षिवचनादिति स्मृतिचन्द्रिकायाम्। एतेन—

चत्वार्यब्दसहस्राणि चत्वार्यब्दशतानि च।
कलेर्यदा गमिष्यन्ति तदा त्रेतापरिग्रहः॥
संन्यासश्च न कर्तव्यो ब्राह्मणेन विजानता।

इति व्यासवचनं व्याख्यातम्। सर्वाधानेऽपि विशेषमाह देवलः—

यावद्वर्णविभागोऽस्ति यावद्वेदः प्रवर्तते।
संन्यासं चाग्निहोत्रं च तावत्कुर्यात्कलौ युगे॥ इति।

संन्यासस्त्रिदण्ड इति। अत्र यदा कलेश्चत्वार्यब्दसहस्राणि चत्वारि संवत्सरसहस्राणि तथा चत्वारि वर्षशतानि च गमिष्यन्ति तदा श्रौतस्मार्ताग्न्योः समकालकृतिरूपं सर्वाधानमेव न कर्तव्यम्। श्रौतस्मार्ताग्न्योः पृथक्कृतिरूपमर्धाधानं तु तदुत्तरमपि कर्तव्यमेवेत्यर्थः। यावद्वर्णविभाग इति देवलवचनं तु संकरेभ्यो वर्णानां पृथक्करणरूपो वर्णविभागो यावत्, यावच्च वेदस्य नियमाध्ययनरूपप्रकर्षेण वृत्तिस्तावत्कर्तव्यमेव द्वयमित्यर्थकं पूर्वोक्तकालबोधकव्यासवचनेनैव नियमितमिति तावत्कालमेव सर्वाधानेऽनुष्ठेयत्वरूपो विशेषो यावद्वर्णविभाग इति वदता देवलेन दर्शित इति भावः। तथा संन्यासस्त्रिदण्ड इति व्याख्यात्रा कमलाकरेण परमहंसादिसंन्यासभिन्नः कुटीचकबहूदकाख्यसंन्यास एव कलेश्चतुःशताधिकचतुःसहस्रवर्षपर्यन्तमेवानुष्ठेयो हंसपरमहंसाख्यैकदण्डसंन्यासस्तु तदूर्ध्वमप्यनुष्ठेय इति ध्वनितम्। कुत इति चेत्कुटीचकबहूदकयोरेवात्रैव मूले ‘ कुटीचको बहूदश्चेत्युभावेतौ त्रिदण्डिनौ ’

इत्युक्त्या त्रिदण्डत्वात्, हंसादेरेकदण्डत्वस्य त्वर्थसिद्धत्वाच्च । तस्मादग्निहोत्रं गवालम्भमित्युत्सर्गरूपं 'सायं प्रातर्द्विजातीनामशनं श्रुतिचोदितम्' इति वचनवत्सामान्यम् । यावद्वर्णविभाग इति वचनं तु

अर्कपर्वद्वये रात्रौ चतुर्दश्यष्टमी दिवा ।
एकादश्यामहोरात्रं भुक्त्वा चान्द्रायणं चरेत् ॥

इतिवचनवत्प्रतिप्रसवापरनामकापवादलक्षणं चतुर्दशीत्याद्यार्षसप्तम्यभावकं विशेषवचनमिति पूर्वोक्तसामान्यवचनबाधकमेव । अतो यदा

द्वयं तीव्रतरे ब्रह्मलोकमोक्षविभेदतः ।
तल्लोके तत्त्वविद्धंसो लोकेऽस्मिन्परहंसकः ॥

इत्यस्मात्तीव्रतरे वैराग्ये सति हंसपरमहंसाख्यं क्रमेण ब्रह्मलोकप्राप्तिपूर्वकमुमुक्षयेहैव मुमुक्षया च संन्यासद्वयं भवतीत्यर्थकान्मूलस्थवचनादेव ब्रह्मलोकप्राप्तिपूर्वकमुमुक्षाविहितस्य हंससंन्यासस्यापि सति तीव्रतरवैराग्ये पूर्वोक्तचतुःशताधिकचतुःसहस्रवर्षोत्तरमपि कलावप्यनुष्ठेयता सिद्धा तदा किं वक्तव्यमिहैव मुमुक्षया विहितस्य सति तादृग्वैराग्ये परमहंससंन्यासस्याधुनाऽप्यनुष्ठेयत्वेनोपपादनयोग्यत्वं, किमुतरां विद्वत्संन्यासस्यापि तादृक्त्वेन तदिति न वैयर्थ्यशङ्कालेशोऽपि । ननु यद्यप्यत्राग्निहोत्रमित्यादिसंन्यासादिनिषेधककालनियमपूर्वकविधायकवाक्यत्रये संन्यासशब्देन त्रिदण्ड एव कमलाकरेणोक्तः । तत्र ' सर्वाधानं तयोरैक्यकृतिः पूर्वयुगाश्रिता ' इति सर्वाधाने मानवन्मानं तु नैवोक्तम् । ततो यदि कमलाकरस्यैवाभियुक्तत्वेन तद्वचस एव प्रामाण्यमित्युच्येत तर्हीतरेषां प्राचामर्वाचां चाभियुक्तशिखामणीनां वचसामप्रामाण्यमेव स्यात् । तदर्थं सर्वेषामप्यभियुक्तानां वचांसि प्रमाणान्येवेत्यवश्यं वाच्यम् । तथात्वे कमलाकरेणात्र संन्यासपदेन त्रिदण्डो व्याख्यातः । शब्दसिद्धान्तमञ्जूषायां नागोजिभट्टेन तु—अत एवाऽऽधुनिकानां कर्मसाङ्गत्वं जानतामनधिकारिणामपि बहुवित्तव्ययायाससाध्येषु

यावद्वर्णविभागोऽस्ति यावद्वेदः प्रवर्तते ।
संन्यासं चाग्निहोत्रं च तावत्कुर्यात्कलौ युगे ॥

इति देवलवाक्यस्य संकरेभ्यो वर्णानां पृथक्करणरूपो वर्णविभागो यावत्, यावच्च वेदस्य नियमाध्ययनरूपप्रकर्षेण वृत्तिस्तावदेतद्द्वयमनुष्ठेयमित्यर्थकस्य कालबोधकैः ।

चत्वार्यब्दसहस्राणि चत्वार्यब्दशतानि च ।
कलेर्यदा गमिष्यन्ति तदा त्रेतापरिग्रहः ॥
संन्यासश्च न कर्तव्यो ब्राह्मणेन विजानता ।

इत्यादिव्यासवाक्यादिभिः कलिवर्ज्येष्वप्यग्निहोत्रयागादिषु धनलाभफलकप्रतिष्ठार्थं प्रवृत्तिरिति वदता संन्यासशब्देन तद्विशेषानुक्तेः सर्वोऽपि संन्यासोऽभिहितकालोत्तरं कलौ नैव

कर्तव्य इति द्योतितम् । तस्मान्मूलप्रमाणाभावादभियुक्तान्तरविरोधाच्च कमलाकरवचनमाग्रहमात्रपर्यवसायीति पुनस्तादवस्थ्यमेवोक्तसंन्यासोपपादनस्येति चेत् । नूनमभिनवोऽयं भवान्देवानांप्रियः । यतो ग्रन्थपौर्वापर्यतात्पर्यमजानन्नपि पूर्वपक्षमात्रकरणनिपुणोऽसि । तथा हि मञ्जूषायां तावत्—ननु स्वर्गत्वस्य वाजपेयगङ्गास्नानदानादिजन्यस्वर्गसाधारण्येन कथं ज्योतिष्टोमे स्वर्गसाधनताग्रहः कार्यतावच्छेदकस्यातिप्रसक्तत्वादिति चेत् । न । प्रवर्तनया वाक्यान्तरपर्यालोचनतो विजातीयस्वर्गसाधनत्वस्यैवानुमानात् । ध्वनितं चेदं स्वरितञित इतिसूत्रे भाष्ये । तत्र हि—न चान्तरेण यार्जि यजिफलं लभन्त इत्युक्तम् । न हि स्वर्गादिफलं यागमन्तरेण भवतीति कैयट इति ग्रन्थेन । स्वर्गत्वं यद्वर्तते तद्वाजपेयाख्ययागजन्ये स्वर्गे तथा गङ्गास्नानजन्ये स्वर्गे तथा तुलापुरुषादिदानजन्ये स्वर्गे, आदिपदादग्निहोत्रजन्ये स्वर्गे च सर्वत्र साधारणमेवास्ति ततो ज्योतिष्टोमे कथं स्वर्गसाधनत्वनियमग्रहणम् । गङ्गास्नानादिनाऽपि तत्संभवात् । कार्यतावच्छेदकं यज्ज्योतिष्टोमादिनिष्ठकारणतानिरूपितस्वर्गाख्यकार्यतापरिच्छेदकं स्वर्गत्वं तस्य गङ्गास्नानादिजन्ये स्वर्गेऽप्यतिप्रसक्तत्वादित्याशङ्क्य सर्वत्र गङ्गास्नानादिसाधनादावप्यधिकारिणां प्रवर्तनया 'सितासिते सरिते' इत्यादिवचनान्तरतात्पर्यादपि गङ्गास्नानादीनां ज्योतिष्टोमादिसाध्यस्वर्गेभ्यो विजातीयस्वर्गसाधनत्वस्यैवानुमानादिति समाधाय तत्र सकैयटं भाष्यं प्रमाणत्वेनोदाहृत्य—एतेन यत्कैश्चिदुक्तं सर्वेषां स्वर्गसाधनत्वमेव गृह्यते । न च ज्योतिष्टोमाग्निहोत्रयोः फलसाम्यापत्तावल्पवित्तव्ययायाससाध्याग्निहोत्रेणैव सिद्धेः श्रमाधिक्येन द्वेषाज्ज्योतिष्टोमादावप्रवृत्तौ तद्विधीनामननुष्ठानलक्षणाप्रामाण्यापत्तिरिति वाच्यम् । तत्फलस्वर्गाणां भूयस्त्वाल्पत्वकल्पनया प्रवृत्तिसंभवात् । युक्तं चैतत् । न हि वैजात्यमात्रज्ञानात्प्रवृत्तिः । संभवत्यपि क्षीरपाने मण्डपाने प्रवृत्त्यापत्तेः । तत्रापि फलवैजात्यज्ञानात् । भूयस्त्वमनेकधा फलबाहुल्यं फल उत्कटत्वं बहुस्वपुरुषगामित्वं शीघ्रता चेत्यादि । अन्यथा* 'सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ' इत्युक्तेः समारब्धदर्शपूर्णमासानां काम्येष्टिप्रवृत्तिविलोपस्तवापि दुर्वारः । यद्वा लौकिकप्रतिष्ठारूपफलेच्छा यस्य तस्य प्रवृत्तिसंभवः । अत +एव सकलशास्त्रविदां युधिष्ठिरादीनां स्वल्पफलकराज्यार्थं गोत्रजब्राह्मणादिवधे प्रवृत्तिः । दर्शितं चार्जुनं प्रति तदेव फलं भगवता 'अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम्' इत्यादिना । अत एवाऽऽधुनिकानां कर्मासाङ्गत्वं जानतामनधिकारिणामपि बहुवित्तव्ययायाससाध्येषु

यावद्वर्णविभागोऽस्ति यावद्वेदः प्रवर्तते ।
संन्यासं चाग्निहोत्रं च तावत्कुर्यात्कलौ युगे ॥

इति देवलवाक्यस्य संकरेभ्यो वर्णानां पृथक्करणरूपो वर्णविभागो यावत्, यावच्च वेदस्य नियमाध्ययनरूपप्रकर्षेण वृत्तिस्तावदेतद्द्वयमनुष्ठेयमित्यर्थकस्य कालबोधकैः—

---

* भूयस्त्वाल्पत्वानादरे । + लौकिकप्रतिष्ठारूपफलेच्छायाः प्रवृत्तिं तु न्वादेव ।

चत्वार्यब्दसहस्राणि चत्वार्यब्दशतानि च ।
कलेर्यदा गमिष्यन्ति तदा त्रेतापरिग्रहः ॥
संन्यासश्च न कर्तव्यो ब्राह्मणेन विजानता ।

इत्यादिव्यासवाक्यादिभिः कलिवर्ज्येष्वप्यग्निहोत्रयागादिषु धनलाभफलकप्रतिष्ठार्थं प्रवृत्तिः । प्रतिष्ठाद्युपाधिवशाज्जायमानोत्कटेच्छैव प्रयोजिकेति न दोषः । अत एव गीतायाम्—

अभिसंधाय तु फलं दम्भार्थमपि चैव यत् ।
इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥

इत्यनेन दम्भस्यापि यज्ञफलतोक्ता । दम्भो धार्मिकत्वेन ख्यापनम् । अपि चेतिपदाभ्यां विकल्पेन समुच्चयेन फलत्रयमुक्तमिति तद्व्याख्यातारः । यद्यप्ययं निषिद्धत्वात्संप्रत्यधर्म एव तथाऽपि तत्त्वमजानतां लोकानां धर्मत्वभ्रमाद्दम्भार्था तत्र प्रवृत्तिः ।

विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् ।
श्रद्धाविरहितं यज्ञं तामसं परिचक्षते । इति च ॥

किंच समानफलानामपि कर्मणां शक्ताशक्तभेदेन व्यवस्था—

सहस्रशक्तिश्च शतं शतशक्तिर्दशापि च ।
दद्यादपश्च यः शक्त्या सर्वे तुल्यफलाः स्मृताः ॥

इति भारतोक्तेः । अत एव ' वित्तशाठ्यं न कारयेत् ' इति तत्तद्व्रतप्रकरणे पठ्यत इति तत्परास्तमिति ग्रन्थेन । एतेन पूर्वोक्तमहाभाष्यादिद्योतिततत्तत्कर्मजन्यतत्तत्स्वर्गवैजात्यस्वीकारेण यत्कैश्चिदुक्तमित्यादिना स्वर्गे विजातीयत्वमनिच्छतां सर्वकर्मभ्यः स्वर्गास्त्वेकरूपा एव भवन्ति परं तु केनचित्कर्मणा नानाविधसुखदः स्वर्गः केनचिच्चैकविधमेव महत्तरं सुखं केनचिच्च

यस्य वेदश्च वेदी च विच्छिद्येते त्रिपूरुषम् ।
स वै दुर्ब्राह्मणो ज्ञेयः सर्वकर्मसु गर्हितः ॥

इत्युक्तेर्वेदाध्ययनादिवतः पुरुषत्रयपर्यन्तं दौर्ब्राह्मण्याभावद्योतितसद्ब्राह्मणादिजन्यस्वर्गविशेषस्यापि सूचितत्वाद्बहुषु स्वकीयपुरुषेषु गमनशीलं सुखं तथा केनाचिच्च पुत्रेष्ट्यादिना कर्मणाऽत्रैव शीघ्रमेव पुत्रप्राप्त्यादिरूपं सुखमेवमादि फलभूयस्त्वं, तथा फलाल्पत्वं च कल्प्यते । तेन भूयस्त्वादिफलेच्छयाऽग्निहोत्रजन्यसजातीयत्वेऽपि ज्योतिष्टोमजन्यस्वर्गे सत्यपि ज्योतिष्टोमादौ प्रवृत्तिर्युक्तैव । ततो विजातीयस्वर्गवादिनाऽपि सकलव्यवस्थार्थं भूयस्त्वादिकं स्वीक्रियत एव । तथा च किमपराद्धं वैजात्यमात्रेणेत्यस्मिन्पक्षेऽस्वरसं मनसि निधाय यद्वेत्यादिना

'तामसं परिचक्षते' इति चेत्यन्तेनाग्निहोत्रादिकर्मणां सर्वेषां फलसाम्येऽपि प्रतिष्ठार्थमेव ज्योतिष्टोमादावस्तु प्रवृत्तिरिति पक्षं सपरिकरं प्रतिपाद्य ततो नन्वस्तु नामाऽऽधुनिकादीनां काम्यकर्मादौ प्रतिष्ठार्थं प्रवृत्तिकल्पनया व्यवस्था तथाऽपि 'वसन्ते वसन्ते ज्योतिषा यजेत' इतिश्रुतेर्नित्यस्य ज्योतिष्टोमादेः का गतिः। न च नित्यानां फलाभावः कर्मणा पितृलोक इति कर्मत्वसाधारणस्य नित्यस्यापि पितृलोकवाच्यस्वर्गफलत्वश्रवणादित्याशङ्कायां किंचेत्यादिना पठ्यत इत्यन्तेन शक्ताशक्तभेदेन व्यवस्था सप्रमाणं प्रतिपादिता। तदनन्तरमितिशब्देन, इति यत्कैश्चिदुक्तमित्यत्र संबद्धेनोक्तप्रकारकमतमुपसंहृत्य तत्परास्तं नाम तन्मतं निरस्तमित्यर्थकेनैकविधस्वर्गवादिमतखण्डनं तदुपन्यासपूर्वकं प्रतिज्ञाय, उक्तभाष्यविरोधात्पूर्वोक्तं भाष्यं यन्न चान्तरेण यजिमित्यादि तद्विरोधात्। तत्र तु स्वर्गादिफलं यागमन्तरेण न हि भवति। हिरवधारणे। नैव भवतीति कैयटेन व्याख्यतरीत्या सिद्धम्, अत्र त्वन्मते तु स्वर्गस्यैकरूपत्वाद्योऽग्निहोत्रादावसमर्थस्तस्य गङ्गास्नानादिनाऽपि स एव स्वर्गो भवतीति निर्णीतं तेन स्पष्ट एवोक्तभाष्यविरोध इत्यर्थकं हेतुमभिधाय ननु तर्हि विजातीयस्वर्गवादिनोऽपि केवलं विजातीयफलकताज्ञानं वर्तते फलभूयिष्ठत्वज्ञानं तु नास्ति चेन्महायासादिसाध्ये ज्योतिष्टोमादौ कथं प्रवृत्तिः स्यात्। न हि संभवति क्षीरपानेऽधिकफलत्वज्ञानं विना विजातीयत्वज्ञानमात्रेणोदकक्षेपणं विनैव मथितदधिलक्षणस्य मण्डकस्य पाने प्रवृत्तिः कस्य चित्संभवतीत्यर्थिकां पूर्वोक्ताशङ्कां तत्तद्वैजात्यस्यापि तत्तद्भूयस्त्वसमनियतत्वादित्यनेन यत्र यत्र वैजात्यं स्वर्गादावास्ति तत्र ज्योतिष्टोमादिजन्यस्वर्गादावग्निहोत्रादिजन्यस्वर्गापेक्षया भूयस्त्वसंज्ञकमाधिक्यमपि वैजात्येन समं सह तुल्यं वा नियतं निश्चितमेव भवतीत्यर्थकेन हेतुना निरस्य न दोष इत्युपसंहृतम्। तत्र कलौ संन्यासो न कार्य इत्यंशे त्वदुदाहृतस्यात एवाऽऽधुनिकानामित्यारभ्य धनलाभफलकप्रतिष्ठार्थं प्रवृत्तिरित्यन्तस्य ग्रन्थस्य केचिन्मतपातित्वान्नैव नागोजिभट्टसंमतत्वम्। न चात एवेत्यादेः कलौ संन्यासादिनिषेधकस्योदाहृतग्रन्थस्य केचिन्मतान्तःपातित्वेन पूर्वोत्तरपर्यालोचनान्नागोजिभट्टानभिमतत्वेऽप्यसंजातविरोधितया तत्संमतत्वमस्त्येव। असंजातविरोधित्वं च यथा—नागोजिभट्टेन तावद्यागमन्तरेण स्वर्गादिफलं नैव भवतीत्यर्थकं पूर्वोक्तमहाभाष्यं हृदि निधाय तत्तत्कर्मजन्यस्वर्गाणां विजातीयत्वं सिद्धान्तितं तत्तत्कर्मणां स्वर्गसाधनताविधायकशास्त्रप्रामाण्यार्थम्। तेन साकं विरोधित्वं तु पूर्वोपन्यस्तकेचिन्मतमध्य एकजातीया एव स्वर्गाः सर्वेभ्योऽपि कर्मभ्यो जायन्त इत्यंशस्यैव न तु कलौ संन्यासादि न कार्यमित्यस्यापि। न हि शरदि दधि न भोज्यमित्युक्ते दधिमध्यस्थं नवनीतमप्यभोज्यं भवति। तस्मात्केचिन्मतान्तःपातित्वेऽप्यसंजातविरोधितया कलौ संन्यासवर्जनस्य नागोजिभट्टेष्टत्वात्कस्य तात्पर्यपर्यालोचकत्वाभाव इति विभावनीयं मध्यस्थैरिति वाच्यम्। उक्तभाष्यात्मकस्मृतिविरोधेन स्वर्गाणामल्पत्वादिभेदेऽप्येकजातीयानामेव सर्वकर्मसाधारणफलत्वमनङ्गीकर्तुस्तस्य श्रुत्यादिविरुद्धसंन्यासाननुष्ठानानङ्गीकरणस्य तु

कैमुतिकन्यायसिद्धत्वात् । अस्ति हि प्रसिद्धैव श्रुतिः—'यदहरेव विरजेत्तदहरेव प्रव्रजेत्' इत्येवकारद्वयेन क्रमेण 'विरक्तिर्द्विविधा प्रोक्ता तीव्रा तीव्रतरेति च' इति मूले श्रीमद्विद्यारण्यगुरुविवृतवैराग्यं विना संन्यासं सति चोक्तलक्षणवैराग्ये संन्यासाकरणं च वारयन्ती । न चात्रैवकारावयोगव्यवच्छेदकावेव नीलं सरोजं भवत्येवेत्यादिवत्तथा चायमर्थः—यदहः, यस्मिन्नहनि विरजेदेव वैराग्यं प्राप्नुयादेव तदहस्तस्मिन्नहनि प्रव्रजेदेव संन्यासं कुर्यादेवेति । यथा नीलं सरोजं भवत्येवेत्यत्र सरोजे नीलत्वस्यायोगमात्रं व्यवच्छिद्यते न त्वन्यत्र तद्धार्यते न वा तज्जातीये शुक्लत्वादि निषिध्यते तद्वदत्र यदहर्विरजेदेवेति योजनया वैराग्योदयक्षणे संन्यासायोग एव निवार्यते न तु तत्प्राक्तद्योगस्तज्जातीये पुरुषान्तरवर्तिनि वैराग्योदयक्षणे च स निरस्यत इति भाव इति वाच्यम्। एतव्द्याख्यानस्य वक्रत्वाद्यथाश्रुतेनैव निर्वाहे तदङ्गीकृतेरप्रयोजकत्वात्पूर्वाचार्यव्याख्यानविरुद्धत्वाच्च । व्याख्यातं चैतच्छ्रुतिवाक्यं श्रीमाधवाचार्यैर्लघुपाराशरस्मृतिविवृतौ तात्पर्यतः संन्यासप्रकरणे पार्थ एव धनुर्धर इत्यादिवदेवकारद्वयस्यान्ययोगव्यवच्छेदकत्वमुररीकृत्य यथाश्रुतमेव । तद्यथा—ननु ब्रह्मचर्यादेव प्रव्रज्याङ्गीकारे मनुवचनानि विरुध्येरन्—

ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् ।
अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः ॥
अधीत्य विधिवद्वेदान्पुत्रानुत्पाद्य धर्मतः ।
इष्ट्वा च शक्तितो यज्ञैर्मनो मोक्षे निवेशयेत् ॥
अनधीत्य गुरौ वेदाननुत्पाद्य तथाऽऽत्मजान् ।
अनिष्ट्वा चैव यज्ञैश्च मोक्षमिच्छन्व्रजत्यधः ॥ इति ।

ऋणत्रयं श्रुत्या दर्शितम्—'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य एवानृणो यः पुत्री यज्वा ब्रह्मचारिवासी' इति । यदा स्वर्गप्रापकपितृयाणमार्ग ऋणापकरणमन्तरेण न संभवति तदा कैव कथा मोक्षमार्गे । अत एव मन्त्रवर्णः—'अनृणा अस्मिन्ननृणाः परस्मिन्तृतीये लोके अनृणाः स्याम ये देवयाना उत पितृयाणाः सर्वान्पथो अनृणा अक्षीयेम' इति । ब्राह्मणमपि 'सर्वा लोकानृणो*संगच्छति' इति । मैवम् । अविरक्तविषयत्वादेतेषां वचनानाम् । अत एव विरक्तस्य प्रव्रज्यायां कालविलम्बं निषेधति जाबालश्रुतिः—'यदहरेव विरजेत्तदहरेव प्रव्रजेत्' इति । ननूक्तरीत्या ब्रह्मचर्यादिषु त्रिष्वाश्रमेषु यथावद्धर्मानुष्ठायिनां तत्तदाश्रमात्प्रव्रजेदिति प्रतीयते । तथा सति स्नातकविधुरादीनामनाश्रमिणां च केषांचित्केनचित्प्रतिबन्धेन विहितधर्माननुष्ठायिनां सत्यपि वैराग्ये संन्यासो न प्राप्नुयात् । मैवम् । तेषां प्रत्यक्षश्रुत्यैव तद्विधानात् । 'अथ

---

* अत्रायं संधिश्छान्दसः ।

पुनर्व्रती वाऽव्रती वा स्नातको वाऽस्नातको वोत्सन्नाग्निरनाग्निको वा यदहरेव विरजेत्तदहरेव प्रव्रजेत् इती' इति । तस्मात् 'पुनरावृत्तिसहितो लोको मे माऽस्तु कश्चन । इति तीव्रतरत्वं स्यात्' इति मूलोक्तलक्षणतीव्रतरवैराग्यवतश्चत्वार्यब्दसहस्राणीत्यादिकलिमर्यादोत्तरकालमप्युक्तव्याख्यानविशिष्टप्रत्यक्षश्रुत्यैव परमहंससंन्यासस्य समनुष्ठेयतया सुतरां विहितत्वात्कथंचिदपि तस्य तत्र कलिवर्ज्यत्वेन नैव नागोजिभट्टाभीष्टत्वशङ्काऽपि । यो हि निर्माल्योल्लङ्घनाद्बिभेति स देवतोल्लङ्घनं कृतवानिति वचः क्वचिदपि श्रद्धेयमस्तीत्यतो विफलैवेयं तव कल्पना । किंच तत्र यद्वा लौकिकप्रतिष्ठारूपफलेच्छा यस्येति प्रतिष्ठाफलेच्छया कर्माणि प्रवृत्तिं प्रतिज्ञाय तत्र युधिष्ठिरादीनुदाहृत्य दर्शितं चार्जुनं प्रति तदेव फलं भगवतेत्येवकारेण कीर्तिलक्षणप्रतिष्ठाभिन्नफलाभाव एव कर्मणां भगवदभिप्रेत इति द्योतितं तत्तु सुतरामनुचितम् । अकीर्तिं चापीत्युदाहृतश्लोकस्याव्यवहितपूर्वम्—

स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि ।
धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते ॥
यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ।
सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम् ॥
अथचेत्त्वमिमं धर्म्यं सङ्ग्रामं न करिष्यसि ।
ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥

इति श्लोकत्रयेण यदृच्छावाप्तयुद्धस्य क्षत्रियाणां स्वर्गफलकस्वधर्मत्वोक्तेस्तत्त्यागे पापोक्त्या नित्यत्वस्यापि तत्राभिधानान्मुमुक्षुत्वे चित्तशुद्ध्यादेः कामुकत्वे च स्वर्गादेरेव मुख्यफलत्वेनोक्तत्वात्कीर्त्यादेस्त्वानुषङ्गिकफलत्वोक्तत्वाच्च तस्मादेवमादिदोषग्रस्तत्वात्कथं तन्मतमुक्तांशेऽपि प्रमाणत्वेन संमतमभियुक्तस्य नागोजिभट्टस्य स्यादतो मदुक्तरीत्या कमलाकरवचनात्त्रिदण्डसंन्यास एवोक्तसंख्याकवर्षोत्तरं कलिवर्ज्यो न तु हंसो न सुतरां परमहंस इति दिक् । यस्त्विदानीमपि रामानुजानां त्रिदण्डसंन्यासः स तूक्तरीत्या चिन्त्य एव । ननु मूले तदुक्तं विद्वत्संन्यासस्य जीवन्मुक्तिहेतुत्वादित्यादिना विद्वत्संन्यासस्य जीवन्मुक्त्यर्थमवश्यानुष्ठेयत्वं तत्रेदं विचार्यते । किं तत्त्वज्ञानं स्वोदयमात्रेण जीवन्मुक्तिं ददाति न वा । आद्ये कृतं विद्वत्संन्यासेन । अन्त्येऽपि किं केवलं न ददात्युत सहकारिविशेषविशिष्टमपि । नान्त्यः, कृतोपास्तीनां देवहूत्यादीनामुपास्त्याख्यसहकारिविशेषविशिष्टज्ञानोदयसमकालमेव जीवन्मुक्तेः श्रीमद्भागवतादावुक्तत्वात् । आद्येऽपि किं तत्सहकारिकारणं कृतोपास्तित्वं किं वा विद्वत्संन्यासः । नाऽऽद्यः, याज्ञवल्क्यादेः कृतोपास्तित्वेऽपि विद्वत्संन्यासात्प्राक्

अहो निष्पन्नयोगोऽपि सङ्गात्पतति निश्चितम् ।
अहमेतादृशो विद्वान्नरकेऽत्र यतः स्थितः ॥

इत्याद्यात्मपुराणवचनमुदाहरता त्वयैव जीवन्मुक्त्यनङ्गीकारात् । नान्त्यः, देवहूत्यादौ विद्वत्संन्यासाभावेऽपि तद्दृष्टेः । यदि च तत्रापि विद्वत्संन्यासोऽङ्गीक्रियेत तर्ह्यपरोक्षात्मविद्विहितत्वे सति ससाधनवैधाखिलकर्मत्यागलक्षणस्य विद्वत्संन्यासस्य तत्र कथं संभव इति वाच्यम् । स्त्रीत्वेन वैधाखिलकर्मत्यागानधिकारात् । न हि स्त्रीणां प्रैषोच्चारणादिविधिना ससाधनाखिलकर्मत्यागः क्वचिदप्युक्तः । न च स्त्रीणां मध्ये या ब्रह्मवादिन्यस्तासां सुलभादीनां त्रिदण्डसंन्यासः पूर्वमुक्त एव यास्तु सद्योवध्वस्तासां कायवाङ्मनोभिः स्वपतिपरिचर्यां विनाऽन्यद्विहितं कर्म नास्त्येव तथा च कर्दमयाज्ञवल्क्यादिभिस्तत्पतिभिः संन्यासे कृते पश्चाद्देवहूतिमैत्रेय्यादीनामुक्तकर्माभावस्य स्वतःसिद्धत्वात्तत्पत्युच्चारितप्रैषोद्भूतपुण्यापूर्वस्य ‘ सुहृदः पुण्यकृत्यां द्विषन्तः पापकृत्यां गृह्णन्ति ’ इतिश्रुतेस्तास्वपि तत्सजातीयाविर्भूतपुण्यात्मना सत्त्वादुक्तलक्षणः संन्यासस्तासामपि संभवत्येवेति वाच्यम् । युगान्तरवर्तिनीनां तासां तत्संभवेऽपि द्वापरादिगतस्त्रीणां तदभावात् । यदि युगान्तरवर्तिनीनामुपनयनसत्त्वेऽपि तद्व्यवस्थोक्तरीत्या जाता तदा कैव कथोपनयनहीनानां द्वापरादिगतस्त्रीणां पूर्वोक्तपतिपरिचर्येतरवैधकर्मरहितानाम् । अतस्तास्वपि निरुक्तलक्षणोऽसावस्त्येवेत्युच्येत तर्हि समीचीनमेव । तथाऽपि न केवलं विद्वत्संन्यास एव जीवन्मुक्तिप्रद इति वक्तुं शक्यं देवहूत्यादौ कृतोपास्तित्वस्यापि सत्त्वात् । न च द्वयमपि तत्प्रयोजकमिति वक्तव्यम् । शुकादौ तत्सत्त्वेऽपि जनकं प्रति प्रष्टुं गतत्वेन संशयादिसंस्कारसत्त्वात्कृतोपास्तित्वविद्वत्संन्यासमात्रेण जीवन्मुक्त्यदृष्टेश्च । तस्माद्विफल एवायं विद्वत्संन्यासोपपादनप्रयास इति चेन्न । विद्वत्संन्यासस्य मनोनाशवासनाक्षयद्वारा जीवन्मुक्तिप्रदत्वात्तथात्वस्य तु यथा विविदिषासंन्यासिना तत्त्वज्ञानाय श्रवणादीनि संपादनीयानि तथा विद्वत्संन्यासिनाऽपि मनोनाशवासनाक्षयौ संपादनीयाविति मूलेऽस्मिन्नेव प्रकरण उक्तत्वेन तवैव तद्विस्मृतिशीलस्य भ्रान्तत्वाच्च । यत्तु देवहूत्यादौ विद्वत्संन्यासाङ्गीकरणमुक्तं तत्तथैव । इदमत्राऽऽकूतम्—उक्तलक्षणविद्वत्संन्याससत्त्वे मनोनाशादिद्वारा जीवन्मुक्तिसत्त्वं तदभावे तदभाव इति व्याप्तिरूपसाहचर्यनियमस्य वेदनाय यथा विविदिषासंन्यास एवं जीवन्मुक्तये विद्वत्संन्यासः संपादनीय इति ग्रन्थेन ‘ ज्ञात्वा सम्यक्परं ब्रह्म सर्वं त्यक्त्वा परिव्रजेत् ’ इत्यादिस्मृत्यादिविधिसहस्रवशाद्विद्वत्संन्यासस्यावश्यानुष्ठेयत्वं विदधता मूलकारेणैव द्योतितत्वात्स्त्र्यादिष्वप्यसौ जीवन्मुक्तिनिर्वाहार्थमवश्यमङ्गीकार्यः । तथा च यथा विविदिषासंन्यासस्तावज्जन्मापादककर्मादित्यागमात्रात्मकः प्रैषोच्चारणपूर्वकदण्डधारणाद्याश्रमरूपश्चेति मूलोक्तलक्षणेनालिङ्गत्वसलिङ्गत्वभेदाद्द्विविध एवं विद्वत्संन्यासोऽपि । तत्रालिङ्गो मैत्रेय्यादीनां स्त्रीणां विदुरादीनां शूद्राणां च ज्ञेयः । सलिङ्गस्तु श्रीमद्याज्ञवल्क्यादिषु द्विजेन्द्रेषूक्त एव । उक्तं हि श्रीमच्छंकरानन्दश्रीचरणैरात्मपुराणे सप्तमाध्याये मैत्रेय्यामलिङ्गविद्वत्संन्यासवत्त्वम्—

मैत्रेयी सकलं त्वेतद्वेद यस्मात्ततोऽत्र सा ।
पत्युः संप्राप्तविज्ञाना ब्रह्मचर्यादिसंयुता ॥

चतुर्थाश्रमलिङ्गेन शून्या भूमिं चचार सा।
याज्ञवल्क्यस्य मैत्रेय्या वैषम्यं लिङ्गधारणम्॥
अभून्नैवापरं किंचिच्चतुर्थाश्रमधर्मतः। इति।

नन्वव्यक्तलिङ्गा इत्यत्रैव मूलोदाहृतश्रुत्या 'ज्ञात्वा सम्यक्परं ब्रह्म सर्वं त्यक्त्वा परिव्रजेत्' इति तथाविधस्मृत्या च सह विरुद्धमेवेदं विद्वत्संन्यासिनोऽपि याज्ञवल्क्यस्य लिङ्गधारणप्रतिपादकमात्मपुराणवचनमिति चेन्न। पञ्चम्यादिभूमिकावस्थायां सत्यधिकारे याज्ञवल्क्यादेः काषायवसनदण्डधारणादिलिङ्गस्य बाधकाभावात्। न च मुण्डत्वादिलिङ्गाभावेऽपि यथाजातरूपधर इत्याशाम्बर इति च श्रुतिप्रसिद्धं दिगम्बरत्वादिकं तु देवहूत्यामपि—

स्वाङ्गं तपोयोगमयं मुक्तकेशं गताम्बरम्।
दैवगुप्तं न बुबुधे वासुदेवप्रविष्टधीः॥

इति श्रीमद्भागवते वर्णितमेवेति वाच्यम्। तस्योक्तलक्षणविद्वत्संन्याससमकालाजन्यत्वे सति सप्तमभूमिकान्तजीवन्मुक्तिपरिपाकजन्यत्वात्। एवं च क्षत्रियवैश्ययोरप्यलिङ्गकोक्तविद्वत्संन्यासस्तु कैमुतिकन्यायसिद्ध इति ततो विद्वत्संन्यासस्याप्यपरोक्षात्मविद्विहितत्वे सति ससाधनवैधाखिलकर्मत्यागपूर्वकसलिङ्गकत्वं ब्राह्मविद्वत्संन्यासत्वं, तथाऽपरोक्षात्मविद्विहितत्वे सति ससाधनवैधाखिलकर्मसु निष्फलत्वबुद्धिदार्ढ्येन तदास्थाराहित्यं क्षत्रियादिविद्वत्संन्यासत्वमिति तल्लक्षणभेदाद्द्वैविध्यं ज्ञेयमिति। अत्र निष्फलत्वबुद्धीत्युक्तेर्न त्यागाख्यविविदिषासंन्यासेऽतिव्याप्तिः, तत्र भगवदाज्ञापरिपालनमात्रस्यापि फलत्वात्। दार्ढ्येनेत्युक्तेर्न ज्ञानोत्तरमुक्तसंन्यासाभावदशायां व्यभिचारः, ज्ञानोदयमात्रेण स्वस्यापरोक्षाखण्डात्मत्वेन भगवदाज्ञापरिपालनमात्रप्रयोजनत्वस्यापि राहित्येन स्वीयश्रौतादिनित्यादिकर्मणां निष्फलत्वेऽपि तत्संस्कारसत्त्वात्। एतेन—

मुखजानामयं धर्मो यद्विष्णोर्लिङ्गधारणम्।
बाहुजातोरुजातानां नायं धर्मो विधीयते॥

इति स्मृत्या साकमप्यविरोधो व्याख्यातः। तत्र लिङ्गधारणशब्दितमुण्डत्वादिपूर्वकप्रैषोच्चारणादिपुरःसरं काषायदण्डग्रहणादिचिह्नविशेषस्यैव निषिद्धत्वान्न त्वेषणात्रयव्युत्थानाख्यससाधनवैधाखिलकर्मसु निष्फलत्वबुद्धिदार्ढ्येन तदास्थाराहित्यस्यापि। श्रीमद्वार्तिककारचरणारविन्दपरागाणामेवाऽऽशयवशात्क्षत्रियादेरप्यत्र विद्वत्संन्यासोऽङ्गीकृतः। दर्शितश्च तादृगाशयः प्रागेव मया सिद्धान्तलेशमुदाहरताऽप्पय्यदीक्षितवाक्यैरेव। तस्माद्यतो विद्वत्संन्यासं विनोक्तद्वारा जीवन्मुक्तिर्न सिध्यत्यशक्तिपातजातदैवज्ञानवतस्तथाऽशक्तिपातजातसोपासननिरुपासनपौरुषज्ञानवतोश्च तां विना ज्ञानरक्षा न सिध्यति तया विना च यौगिकसप्तमभूमिकाख्यजीवद्विदेहमुक्तिरपि प्रतिबध्यत इत्यवश्यं विद्वत्संन्यासाद्यपेक्षोक्तत्रिविधज्ञानिनाम्। येषां

तु वसिष्ठवामदेवादीनां विद्वत्संन्यासं विनाऽपि वैचारिकजीवन्मुक्तिर्दृष्टा ते पूर्वोक्तज्ञानभेदमध्येऽन्तर्भाव्या इति रहस्यम् । अत एव वार्तिकामृते चतुर्थाध्यायस्य चतुर्थब्राह्मणे संन्यासेन समुचितमेव ज्ञानं मुक्तिदमित्युक्तं श्रीमत्सुरेश्वराचार्यचरणनलिनरेणुभिः सप्रपञ्चम्—

सत्यपि ब्रह्मवेदित्वे नासंत्यक्तैषणो यतिः ।
मुक्तिभागिति चेहोक्तः संन्यासेन समुच्चयः ॥
निरस्तातिशयज्ञानो याज्ञवल्क्यो यतो गृही ।
कैवल्याश्रममास्थाय प्राप तद्वैष्णवं पदम् ॥
त्याग एव हि सर्वेषां मोक्षसाधनमुत्तमम् ।
त्यजतैव हितज्ज्ञेयं त्यक्तुः प्रत्यक्परं पदम् ॥
मुक्तेश्च विभ्यतो देवा मोहेनापिदधुर्नरान् ।
ततस्ते कर्मसूद्युक्ताः प्रावर्तन्ताविपश्चितः ॥
मोहमात्रैकहेतूनि तस्मात्कर्माण्यशेषतः ।
संन्यस्यैकात्म्यसंबोधाद्धित्वा मोहं विशुद्धधीः ॥
ज्ञानमेवाऽऽत्मनाऽऽत्मानमुपासीनोऽमृतो भवेत् ।
इति प्रमाणमत्रार्थे वचनं भाल्लविश्रुतौ ॥ इति ।

अत्र टीका शास्त्रप्रकाशिका श्रीमदानन्दज्ञानश्रीचरणकर्तृका—सत्यपीति । संन्यासस्य ज्ञानाङ्गत्वख्यापनायाऽऽरम्भः प्रागुक्तोऽधुना ज्ञानस्य तेन समुच्चयविधानायेतिभेदः । ज्ञाने सत्यपि संन्यासाभावादमुक्तेरदृष्टेर्न मुक्तौ समुच्चयस्तत्राऽऽह—निरस्तेति । अतः संन्यासज्ञानयोर्युक्तो मुक्तौ समुच्चय इति शेषः । तत्समुच्चितधियो मुक्तिहेतुत्वे न केवलं लिङ्गमेव मानं किंतु स्मृतिरपीत्याह—त्याग इति । तर्हि त्यागस्यैव मुक्तिहेतुता न तत्समुच्चितज्ञानस्येत्याशङ्क्याऽऽह—त्यजतेति । तत्रैव श्रुतिं दर्शयितुं कर्मणां मोहमात्रोत्थत्वं श्रावयति—मुक्तेश्चेति । तेषां तन्मात्रजत्वेऽपि विवेकपूर्वकवैराग्यात्तत्त्यागेन समुचितात्तत्त्वबोधादबोधध्वस्तौ सकार्यं तं हित्वा शुद्धे ब्रह्मणि स्थिरधीस्तदेव स्वरूपत्वेन सदाऽनुसंदधानो विदेहजीवन्मुक्तौ कैवल्यं गच्छतीति फलितमाह—मोहेति । प्रमाणमुपसंहरति—इति प्रमाणमितीति । तेषामिति फक्किकाया अयमर्थः—तेषां कर्मणां तन्मात्रजत्वेऽपि मोहमात्रजत्वेऽपि । तत्त्यागेन पूर्वोक्तरीत्या कर्मसंन्यासेन सकार्यं रागद्वेषादिकार्यसहितं तं मोहं हित्वा त्यक्त्वा शुद्धेऽविद्यादिमलहीने ब्रह्मण्यद्वैतात्मतत्त्वे विदेहजीवन्मुक्तौ पूर्वोक्तलक्षणात्तत्त्वबोधादेव व्यज्यमानविदेहमुक्तिविशिष्टायां रागद्वेषादिकार्यसहितकर्ममात्रहितसाधनत्वबुद्धिलक्षणमोहत्यागोत्तरं विशुद्धाद्वैतात्मतत्त्वमात्राकाराखण्डवृत्त्याद्यात्मकमनोनाशादिसाधनव्यज्यमानपञ्चम्यादिभूमिकालक्षणजीवन्मुक्तौ सत्यां प्रार-

ब्धनाशे कैवल्यं गच्छतीति। अत्र तत्त्यागेनेति विविदिषासंन्यासोक्तिः। सकार्यं तं हित्वेति विद्वत्संन्यासोक्तिः। स्थिरधीरिति समाहितस्थितप्रज्ञत्वकथनम्। तदेव स्वरूपत्वेनेत्यादि व्युत्थितस्थितप्रज्ञत्वकथनम्। यद्वा यतस्तदेव बोधप्रत्यक्षीकृताद्वैतब्रह्मैवाऽऽत्मत्वेन स्वस्वरूपत्वेन सर्वदाऽनुसंदधानोऽतः शुद्धे ब्रह्मणि स्थिरधीरिति हेतुहेतुमद्भावोऽस्तु। नन्वस्त्वेवं सर्वत्र संन्यासापेक्षा तव्द्यवस्था च तथाऽपि तिर्यञ्चामितिहासपुराणादौ तत्त्वज्ञानवर्णनात्तत्र संन्यासव्यतिरेकादुक्तवार्तिकादिरीत्या तु संन्याससमुच्चयं विना ज्ञानस्य मोक्षदानासामर्थ्यादितिहासपुराणादौ तत्त्वज्ञत्वेन वर्णितानां श्रीमन्नन्दिकेश्वरखगेश्वरकपीश्वरभुजगराजभुसुण्डकाकादीनां तत्त्वज्ञानस्य मोक्षदत्वाभावात्तज्जीवन्मुक्त्याद्यभिधायकेतिहासादेर्विरोधे गुणवादः स्यादित्युक्तेरुक्तवार्तिकादिविरुद्धासंन्यासज्ञानवर्णनलक्षणविरोधेन ज्ञानार्थं तिर्यगादिभिरपि श्रवणादेरनुष्ठितत्वात्किमु वाच्यं सदसद्विवेकिभिर्मनुष्यादिभिः साधनपूर्वकं श्रवणादिकं ज्ञानार्थमवश्यमनुष्ठेयमिति गुणवादत्वमेव स्यात्तत्तु सुतरामनुचितं न हि संप्रदायप्रवर्तकत्वयोगीन्द्रत्वादिना महानुभावानां तेषां वर्णिततत्त्वज्ञानाद्यपलापः श्लाघ्यस्तस्मान्नायं संन्याससमुच्चयानियमो वार्तिकादिकं तु प्रायकाभिप्रायकमिति चेत्सत्यम्। अस्त्येवं नन्दिकेश्वरादीनां तत्त्वज्ञानं संन्यासं विनैव तथाऽपि तेषां देवादिवत्कर्माभावान्न तत्संन्यासापेक्षेति। देवादीनां तु संन्यासाभावेऽपि मुख्याधिकारित्वमुक्तं सिद्धान्तलेशेऽपय्यदीक्षितैः, देवानामनुष्ठेयकर्मवैयग्र्याभावात्स्वत एवानन्यव्यापारत्वं संभवतीति क्रममुक्तिफलकसगुणविद्याविधायिशास्त्रप्रामाण्याद्विनाऽपि संन्यासं तेषां मुख्याधिकाराभ्युपगमादित्याहुरिति। यद्वा रामायणे श्रीरामबाणविद्धेन वालिना निरपराधोऽहं सर्वज्ञेनापि त्वया व्यर्थमेव हत इत्याक्षेपे कृते श्रीरामेण भ्रातृजायापहारित्वलक्षणपातकित्वरूपसापराधत्वोक्त्यन्यथानुपपत्त्या तिर्यञ्चामप्यस्तु कर्माधिकारस्तथाऽपि तत्रेत्थं व्यवस्था—तिर्यञ्चो हि जन्मान्तरीयपुण्यादिवशात्केचिन्मनुष्यादिवत्सदसज्ज्ञानवन्तः केचित्तच्छून्याश्चेति द्विविधाः। तत्राऽऽद्यानां कर्माधिकृतेर्जनकादिवत्सालिङ्गको जन्मान्तरीयो विविदिषासंन्यासः। ऐहिकस्तु पूर्वोक्तलक्षणोऽलिङ्गक एव सः। तथा ज्ञानोत्तरं विद्वत्संन्यासोऽपि पूर्वोक्तमनोनाशादिसापेक्षजीवन्मुक्तिप्रदाशक्तिपातजातदैवादित्रिविधज्ञानान्यतमज्ञानवतामेव। अन्त्यानां तु यद्यपि कर्माधिकारो नास्ति।

> श्वशूकरखरोष्ट्राणां गजाविमृगपक्षिणाम्।
> चाण्डालपुल्कसादीनां ब्रह्महा योनिमृच्छति ॥

इत्युक्तेः कुम्भीपाकादिनरकोपभुक्तमहापापफलावशेषमात्रोपभोगार्थधृतशरीरत्वान्मनुष्यादिवज्ज्ञानाभावाच्च। अत एव न ज्ञानाधिकारोऽपि सुतराम्। तथाऽपि पुराणादीनां गुणवादत्वनिरासार्थं गङ्गास्नानादिजाताज्ञातपुण्योत्पत्तिस्तु तेष्वप्यवश्यं वाच्यैव। यत्र च पुराणादौ तेषां पापमपि वर्णितं तत्र वालिन्यायेनाज्ञतिर्यक्त्वमेव। एतेनासुरादीनामपि क्षत्रियादिदृष्टान्तेन

यथायथं संन्यासव्यवस्था व्याख्याता । राक्षसादीनां तु देवादिष्वेवान्तर्भावान्न संन्यासापेक्षाऽपि ।

विद्याधराप्सरोयक्षरक्षोगन्धर्वकिंनराः ।
पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः ॥

इतिकोशव्याख्याने विद्याधरादयो दश देवयोनिरेषां ते देवयोनयो देवांशका इत्यर्थ इति रामाश्रमोक्तेः । न च राक्षसत्वेऽपि रावणादीनामग्निहोत्रादिकर्मप्रसिद्धेः कथं तेषां देवादिवत्कर्माधिकाराभाव इति वाच्यम् । रावणादीनां मुनिपुत्रत्वात्क्षेत्रमाहात्म्यादिना राक्षसत्वेऽपि स्वकर्माधिकारध्रौव्याच्च । उक्तं हि दानवराक्षसादिजातिष्वपि तत्त्वज्ञानं निर्वाणप्रकरणे महारामायणे जीवन्मुक्तानुपक्रम्य—

दानवानां हिरण्याक्षबलिप्रह्लादशम्बराः ।
मयवृत्रान्धनमुचिकेशिपुत्रमुरादयः ॥
विभीषणाद्या रक्षःसु प्रहस्तेन्द्रजिदादयः ।
शेषतक्षककर्कोटमहापद्मादयोऽहिषु ॥ इति ॥

नन्वस्त्वेवं क्षत्रियादितिर्यगन्तानां सर्वेषां संन्यासव्यवस्था तथाऽपि प्रकृतेषु मुख्याधिकारिषु ब्राह्मणेषु तत्त्वज्ञानिषु ये कृतोपास्तयस्तेषां तु यथाजातरूपधर इत्याद्युक्तलक्षणो विद्वत्संन्यासः सुकर एव समाधिदशायां द्वैतप्रतिभासस्याप्यभावेन शीताद्यस्फूर्तेः । व्युत्थानदशायां तु समाधिसंस्कारप्राबल्येन शिशिरादौ स्वमातृपृष्ठतोऽनुधावमानदिग्वसनबालकवच्छीतादिस्फुरणेऽपि तदनादरणाच्च । परं तु येऽकृतोपास्तयो ज्ञानिनस्तेषां तु सुदुष्कर एव सः । तत्त्वज्ञत्वेऽपि योगाद्यभावेन

पूर्णे बोधे तदन्यौ द्वौ प्रतिबद्धौ यदा तदा ।
मोक्षो विनिश्चितः किंतु दृष्टदुःखं न नश्यति ॥

इति चित्रदीपोक्तेः शीतादिदुःखप्रसक्त्या मनोनाशादितदुत्तरानुष्ठेयसाधनविघातध्रौव्यात् । गार्हस्थ्यादौ हि निर्विक्षेपेण मनोनाशादिकं नैव संभवतीत्यवश्यं तत्सिद्ध्यर्थं विद्वत्संन्यास एवानुष्ठेयः । अनुष्ठिते च तस्मिन्यदि शीतादिविक्षेपसहस्रेण तदसिद्धिरेव तर्हि भक्षितेऽपि लशुने न शान्तो व्याधिरितिन्यायापत्तेर्वरं तस्याननुष्ठितिरेव । न च 'तच्च न मुख्योऽस्ति' इति परमहंसोपनिषद्वचनव्याख्याने यत्कौपीनादिपरिग्रहणमस्ति तदस्य योगिनः परमहंसस्य मुख्यः कल्पो न भवति किंत्वनुकल्प एवेति वक्ष्यमाणमूलानुसारेणानुकल्पात्मकं मनोनाशादिसिद्धिपर्यन्तं कौपीनादिग्रहणमप्यास्त्विति वाच्यम् । दण्डस्य वैणवत्वादिलक्षणमाच्छादनस्य कन्थात्वादिलक्षणं च परीक्षितुं दण्डादिकं संपादयितुं रक्षितुं च चित्ते व्यापृते सति चित्तवृत्तिनिरोधलक्षणो योगो न सिध्येदित्यादिना तत्रैव तद्ग्रहेऽपि योगसिद्धिनिराकरणात्पुन-

रपि लशुनन्यायापाताच्च। तस्मादकृतोपास्तीतरविषयोऽयं विद्वत्संन्यास इति चेन्न। अकृतोपास्तीनां यावन्मनोनाशादिदार्ढ्यं योगिनामनुकल्पात्मकस्याप्याच्छादनादिग्रहस्य मुख्यत्वात्तत्परीक्षणादिविक्षेपदूषणस्य तु कृतोपास्तित्वेन योगिपरमहंसविषयत्वाच्च। योगो न सिध्येदित्यादेस्तु सिद्धोऽपि योगो निरुक्तविक्षेपैर्व्याहतः स्याद्गार्हस्थ्यादिना याज्ञवल्क्यादेरिवेत्यर्थकत्वाच्च। तदुक्तं विश्वेश्वर्याम्—

कपालं वृक्षमूलानि कुचेलमसहायता।
समता चैव सर्वस्मिन्नेतन्मुक्तस्य लक्षणम्॥ इति।

तथा काण्वायनः—'एकदण्डधरा मुण्डास्तथा कौपीनवाससः' 'अव्यक्तलिङ्गा अव्यक्ताचारा अनुन्मत्ता उन्मत्तवदाचरन्तः' इत्यादि च।

कन्थाकौपीनवासाश्च दण्डधृग्ध्यानतत्परः।
एकाकी रमते नित्यं तं देवा ब्राह्मणं विदुः॥

इति स्मृत्यन्तरमपि। अत्र कपालं मुक्तस्येत्यादिपदैः स्पष्टमेव विद्वत्संन्यासिनोऽपि दण्डादिग्रहणकथनमिति युक्तैवोक्तयुक्तिः। न चैवमाच्छादनादिग्रहे सिद्धेऽपि मनोनाशादौ ततस्तत्त्यागविध्यभावात्तद्दशायामपि पुनर्विक्षेपतादवस्थ्यमेवेति वाच्यम्। तस्य देवहूत्यादिन्यायेन समाधिमहिम्नाऽनादरात्स्वत एव तत्त्यागसंभवात्, विधिना त्यागानपेक्षितत्वाच्च। एतेनाकृतोपास्तिना कृतोपास्तिना वा विविदिषासंन्यासिना दण्डादिग्रहे कृते पुनर्विद्वत्तोत्तरं तत्त्यागो विध्यभावात्कथं कार्य इति प्रश्नोऽपि प्रत्युक्तः। एवमत्र सम्यगनुष्ठितैरिति लक्षणेन विद्वच्छिरोमणिरित्युदाहरणेन कहोलब्राह्मणेऽपीति प्रमाणेन यथा विविदिषासंन्यासिनेति प्रयोजनेन ननु कलाविद्येति साधनेन च विद्वत्संन्यासो निरूपितोऽपीतिकर्तव्यता तस्य नोक्तेति सपरिकरं जीवन्मुक्तिनिरूपणानन्तरमथ तदुपकारिणं विद्वत्संन्यासं निरूपयाम इति पुनः प्रतिज्ञाय परमहंसोपनिषद्विवरणमिषेण तदुपपादनान्न पौनरुक्त्यमित्यलं पल्लवितेन सत्सु क्षितितलगतजङ्गमात्मकरत्नेषु।

पूर्णानन्देन्दुकौमुद्यां प्रकाशे षोडशे गुरोः।
पूर्णोऽस्ति विद्वत्संन्यासोल्लासः पादप्रसादतः॥

इति विद्वत्संन्यासोल्लासो द्वितीयः॥ २॥

---

एवं प्रतिज्ञानुसारेण संन्यासद्वयमुपपाद्य विद्वत्संन्यासस्य प्रयोजनीभूतां जीवन्मुक्तिं तत्स्वरूपप्रमाणसाधनफलपूर्वकमुपपादयितुं तद्विषयं शिष्यप्रश्नमुत्थापयत्यथेत्यादिना—

**अथ केयं जीवन्मुक्तिः, किं वा तत्र प्रमाणम्, कथं वा तत्सिद्धिः, सिद्धौ वा किं प्रयोजनमिति चेत्। उच्यते। जीवतः पुरुषस्य**

**कर्तृत्वभोक्तृत्वसुखदुःखादिलक्षणश्चित्तधर्मः क्लेशरूपत्वाद्बन्धो भवति, तस्य निवारणं जीवन्मुक्तिः ।**

समाधातुं प्रतिजानीते—**उच्यत इति ।** तत्राऽऽदौ जीवन्मुक्तिस्वरूपं वक्तुं तत्प्रतियोगिबन्धस्वरूपमाह—**जीवत इति ।** पुरुषस्य, पुरि शेत इति व्युत्पत्त्या देहत्रयाख्यपुरे शयनाख्याभिमानं कर्तुर्जीवस्येत्यर्थः । कर्तृत्वं कायिकादिचेष्टानुष्ठातृत्वम् । भोक्तृत्वं तत्फलीभूतसुखादिभाक्त्वम् । अनुकूलवेदनीयश्चित्तवृत्तिविशेषः सुखं प्रतिकूलवेदनीयः स एव दुःखम् । आदिपदात्कामादिग्रहः । ननु ' यो वै भूमा तत्सुखम् ' इति श्रुतेः कथं सुखस्य चित्तधर्मत्वमिति चेन्न । अत्र सुखशब्देनेष्टदर्शनादिना जायमानप्रियादिनामकचित्तवृत्तिप्रतिबिम्बितपरिच्छिन्नसुखस्य विवक्षितत्वात् । श्रुतौ तु भूमशब्दितापरिच्छिन्नसुखस्योक्तत्वाच्च न कोऽपि दोषः । तथा चोक्तं मूलकारैरेवानुभूतिप्रकाशे तैत्तिरीयोपनिषद्विवरणे—' कारणे बुद्धिवृत्तौ च स्वानन्दः प्रतिबिम्बति ' इत्युपक्रम्य—

> प्रियं मोदः प्रमोदश्चेत्युच्यते धीसुखं त्रिधा ।
> इष्टस्य दर्शनाल्लाभाद्भोगाच्च स्युः प्रियादयः । इति ॥

न चैकस्य चित्तस्य कथं भोक्तृत्वं भोग्यरूपसुखादित्वं च धर्मः स्यात्कर्तृकर्मभावविरोधादिति वाच्यम् । अत्र चित्तशब्देनान्तःकरणस्य विवक्षितत्वात्तस्य च वृत्तिभेदेन भोक्तृभोग्यात्मकपरिणामद्वयस्याङ्गीकारात् । तदुक्तं तैरेव चित्रदीपे ' अहंवृत्तिरिदंवृत्तिरित्यन्तःकरणं द्विधा ' इति । निरुक्तचित्तधर्मस्य बन्धत्वे हेतुः—**क्लेशरूपत्वादिति ।** क्लेशास्तूक्ता भगवता पतञ्जलिना—' अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः ' इति । तत्र कर्तृत्वभोक्तृत्वयोरभिनिवेशेऽन्तर्भावः । सुखदुःखयोस्तु तद्विषयकरागद्वेषयोरिति । अयं हि चित्तधर्मोऽपि जीवस्य तादात्म्याध्यासात्स्फटिकस्य कुङ्कुमधर्मवद्बन्धनरूपत्वाद्बन्धो भवति । जीवन्मुक्तिं लक्षयति—**तस्येति ।** यथा विदेहमुक्तेरात्मरूपत्वमेवं जीवन्मुक्तेरपि वस्तुतोऽद्वैतात्मरूपत्वमेव । ' तस्मिन्नित्यसुखाम्बुधौ गलितधीर्ब्रह्मैव न ब्रह्मवित् ' इति मनीषापञ्चके श्रीमद्भगवत्पूज्यपादपादारविन्दोक्तेः ।

> दर्शनादर्शने हित्वा स्वयं केवलरूपतः ।
> यास्तिष्ठति स तु ब्रह्मन्ब्रह्म न ब्रह्मवित्स्वयम् ॥

इति बृहद्वासिष्ठोक्तेश्च । ब्रह्मैव जीवन्मुक्तिर्धर्मधर्मिणोरभेदादतोऽस्या यद्यपि ब्रह्मलक्षणभिन्नं लक्षणं परमार्थतो नैव निरूपयितुं शक्यं तथाऽपि बुभुत्सुव्युत्पादनाय यथाऽऽरोग्यस्य स्वाभाविकत्वाद्रोगनिवारणाद्व्यज्यमानत्वात्तत्साध्यत्वमारोग्यत्वमित्यारोग्यलक्षणे वक्तव्येऽपि लोके रोगनिवारणमारोग्यमित्येव प्रायशः प्रोच्यते तद्वत्प्रकृतेऽपि चित्तधर्मनिवारणसाध्या जीवन्मुक्तिरिति वक्तव्ये चित्तधर्मनिवारणं जीवन्मुक्तिरित्येवोक्तम् । तस्याः स्वात्मत्वेन चित्तधर्माभि-

भवव्यङ्ग्यत्वात्तत्साध्यत्वेऽपि लाङ्गलं जीवनमिति न्यायेन साध्यसाधनयोरभेदोपचारादिति ज्ञेयम् । निवारणं त्वत्राध्यासप्रतिभासाभाव एव न ध्वंसः, सति चित्ताख्ये धर्मिणि तद्धर्मध्वंसायोगादित्यर्थः ।

निवारणशब्दस्य योगरूढिभ्यां ध्वंस एव शक्तिस्तथा च नोक्तरूपा जीवन्मुक्तिः संभवतीति तात्पर्यवान्पूर्ववादी विकल्प्य पृच्छति—

**नन्वयं बन्धः किं साक्षिणो निवार्यते, किं वा चित्तात् । नाऽऽद्यः, तत्त्वज्ञानेनैव निवारितत्वात् । न द्वितीयः, असंभवात् । यदा तु जलाद्द्रवत्वं[1] वह्नेर्वौष्ण्यत्वं निवार्येत, तदा चित्तात्कर्तृत्वादिनिवारणसंभवः, स्वाभाविकं[2] तु सर्वत्र समानम् । मैवम् । आत्यन्तिकनिवारणासंभवेऽप्यभिभवस्य संभवात् । यथा जलगतं द्रवत्वं मृत्तिकामेलनेनाभिभूयते, वह्नेरौष्ण्यं मणिमन्त्रादिना, तथा सर्वाश्चित्तवृत्तयो योगाभ्यासेनाभिभवितुं शक्यन्ते ।**

**नन्विति** । अत्र चित्तशब्देन साभासमन्तःकरणं विवक्षितं न तु केवलम् । तस्य जडत्वेन तद्बन्धनिवर्तनस्यापुरुषार्थतया तच्छङ्कानवकाशादित्यर्थः । आद्यं दूषयति— **नाऽऽद्य इति** । तत्र हेतुः—**तत्त्वेति** । तत्त्वपदं परोक्षादिव्युदासार्थम् । द्वितीयमसंभवेन निवारयति—**न द्वितीय इति** । असंभवमेव दृष्टान्ताभ्यां विवृणोति—**यदा त्विति** । दृष्टान्तवैषम्यं शमयति—**स्वाभाविकं त्विति** । धर्मजातमिति शेषः । तथा च स्वोत्पत्तिसिद्धं धर्मजातं दृष्टान्तदार्ष्टान्तिकयोस्तुल्यमित्यर्थः । तत्र सिद्धान्ती तावदाद्यमङ्गीकृत्य द्वितीयं विघटयितुं प्रतिजानीते—**मैवमिति** । किं निवारणशब्दाभिधेयो ध्वंसो न संभवतीति त्वयोच्यते किं वा ‘ शेषोऽन्वगाद्वारि निवारयन्फणैः ’ इति श्रीमद्भागवतादावभिभवेऽपि निवारणशब्दप्रयोगदर्शनादभिभवोऽपीति विकल्प्याऽऽद्यमङ्गीकृत्यान्त्यं निकृन्तति—**आत्यन्तिके**त्यादिना । हेतुमुपपादयति—**यथे**त्यादिना । वाद्युक्तदृष्टान्तयोरेव धर्माभिभवसंभवं समुपलम्भयति—**जलेति** । मणिमन्त्रादिनेत्यत्राऽऽदिशब्देन तपआदि ग्राह्यम् । दार्ष्टान्तिके स्पष्टयति—**तथेति** । तत्रोपायमाह—**योगेति** । ‘ योगश्चित्तवृत्तिनिरोधः ’ इति भगवता पतञ्जलिना सूत्रितो यश्चित्तवृत्तिनिरोधस्तस्याभ्यासः पौनःपुन्येन निरन्तरमस्वेदप्रवृत्त्या यथोपदिष्टमनुष्ठानं तेनेत्यर्थः । उपलक्षणमिदं वैराग्यस्यापि । तथा च स्मृतिसूत्रे—‘ अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ’ इति । ‘ अभ्यासवैराग्याभ्यां तन्निरोधः ’ इति च । एवं च स्वस्मिन्स्वदृशा सतताध्यासप्रतिभासे सति यावत्प्रा-

---

१ क. ख. ग. घ. ङ. च. °त्वं नि° । २ क. ख. ग. घ. ङ. च. °विकत्वं तु ।

रब्धं स्वचित्ताद्यवस्थितिर्जीवन्मुक्तिरिति तल्लक्षणं फलितम् । तत्राज्ञसमाधौ लोकदृष्ट्याऽध्यासाप्रतिभासे सत्येव चित्ताद्यवस्थितिरस्तीति तत्रातिव्याप्तिवारणाय स्वस्मिन्स्वदृशेति । यद्यपि तत्र जनदृष्ट्याऽयं हि ज्ञानी यतः समाधिस्थस्ततोऽस्य क्वाध्यास इत्यध्यासाप्रतिभासे सत्येव स्वचित्ताद्यवस्थितिरस्ति तथाऽपि समाहितो यः कश्चिदज्ञः स एव स्वशब्देन गृह्यते चेत्तदृष्ट्या तु नास्त्येव चित्ताद्यवस्थितिः । परं तु मूलाज्ञानस्यानिरस्तत्वेन तत्कार्यस्याध्यासस्यापि तत्रावश्याङ्गीकार्यत्वमेव । स्वानध्यास इति प्रयोगे तु स्वशब्दवाच्यात्मतत्त्वं विना क्व चित्ताद्यवस्थितिः स्यात्तस्मिंस्त्वध्यासापरनामकमारोपं विना तदवस्थित्यभावाल्लक्षणासंभव एव । यथोक्तप्रयोगे तु यावदारब्धं नाम यावत्संस्कारमध्याससत्त्वेऽपि तस्य जीवन्मुक्तदृष्ट्या तत्त्वज्ञानेन बाधितत्वाद्वह्न्यौष्ण्यस्य सत्त्वेऽपि मण्यादीनां प्रतिबद्धत्वेन प्रतिभासाभाववद्वक्ष्यमाणयोगादिना प्रतिबद्धत्वेन प्रतिभासाभावादप्रतिभासपदसार्थक्यम् । किंच स्वस्मिन्निति सप्तम्यन्ताभावे जन्मान्धस्य शुक्तिरजताध्यासप्रतिभासाभावात्तस्याज्ञत्वेऽपि निरुक्ताध्यासाप्रतिभासेन स्वशब्दितस्य तस्य यावत्प्रारब्धं चित्ताद्यध्यासावस्थितिरस्त्येव तदूर्ध्वं तु निरुक्ताध्याससंभवान्न निरुक्ताध्यासेन तच्चित्ताद्यवस्थितिरस्तीतिहेतोरुक्तान्धदशापन्नस्य तस्य चित्ताद्यवस्थितावतो युक्त एव तत्संनिवेशः । तथा तत्त्वज्ञानोत्तरक्षणिकवृत्त्यभावे व्यभिचारवारणाय सततेति पदम् । अपि च स्वाध्यासाप्रतिभासेनावस्थितिरित्येतावन्मात्रोक्तौ विदेहमुक्तावतिव्याप्तिः शुकादिसकलजीवन्मुक्तस्थितिष्वव्याप्तिश्च । तथा हि विदेहमुक्तौ तावत्—'यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय । तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' इतिश्रुतेर्विदेहमुक्तस्याद्वैतात्ममात्रत्वेन स्थितेः सर्वस्य दृश्यस्य ब्रह्मणि कल्पितत्वाल्लोकदृशा सकलदृश्याध्यासस्य तत्र प्रतिभासेऽपि स्वदृशा तदप्रतिभानेनैव स्वावस्थितिरिति तत्रातिव्याप्तिस्तद्वत्सकलजीवन्मुक्तानां तु यावदारब्धमध्यासस्य बाधितत्वेन प्रतिभासमानत्वमाकाशकार्ष्ण्यवदस्त्येवेति तत्राप्यव्याप्तिः स्पष्टैव । एवं स्वचित्तेत्यत्र स्वपदमादिपदं च क्रमात्कस्यचिज्जीवन्मुक्तिसत्त्वे कस्मिंश्चिदज्ञे यावत्प्रारब्धं चित्ताद्यवस्थितिसत्त्वात्तत्रातिव्याप्तिस्तथा व्युत्थितस्थितप्रज्ञे चक्षुरादिसत्त्वात्तत्राव्याप्तिरिति तयोर्व्यावृत्त्यै । एवं च स्वतो व्युत्थानरूपिण्यां पञ्चमीनाम्न्यां परतो व्युत्थानरूपिण्यां षष्ठीनाम्न्यां च जीवन्मुक्तिभूमिकायां नाव्याप्तिः । स्वस्मिन्स्वदृष्ट्याऽध्यासाप्रतिभासे सति यावत्प्रारब्धं चित्ताद्यवस्थितिरूपलक्षणस्य तत्रापि समाधौ व्युत्थाने च सत्त्वात् । अत एव न स्वतः परतश्च व्युत्थानहीनायां सप्तम्यभिधायां जीवन्मुक्तिचरमभूमिकायामप्यव्याप्तिः । संस्कारात्मना निगूढं चित्तादेस्तत्रापि सत्त्वात् । न च 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' इतिश्रुतेर्यावत्प्रारब्धं चित्ताद्यवस्थितेर्जीवन्मुक्त एव सत्त्वात्सत्यन्तं नैव लक्षणे विशेषणं देयमिति वाच्यम् । तथात्वे निरुक्तभूमिकान्यतमभूमिकाहीने ज्ञानिमात्रेऽतिव्याप्तेः । एवं तर्हि पूर्वदलमेवास्त्विति चेन्न । पुनर्विदेहमुक्तावतिव्याप्तेः । तस्माद्यथास्थितमेव तल्लक्षणं

विज्ञेयम् । यावत्प्रारब्धं बाधिताचित्तादिमत्त्वमेव जीवन्मुक्तत्वमिति तल्लक्षणं फलितम् । बाधश्च स्फुट एव । वक्ष्यति चाग्रे वासनाक्षयप्रकरणे स्वयमेव मूलकृदुक्तलक्षणस्य सूचनम् । तर्ह्याभासत्वानुसंधानानुवृत्तौ न कोऽपि बाध इति चेच्चिरं जीवतु भवानियमेवास्मदभिमता जीवन्मुक्तिरिति । तत्रायं संग्रहः—

स्वास्मिन्स्वदृशा बाधात्प्रतिभासे सति निजस्य चित्तादेः ।
यावत्प्रारब्धं स्थितिरिह जीवन्मुक्तिरुक्ताऽसौ ॥ इति ।

द्वैतविवेके तु—

जीवद्वैतं तु शास्त्रीयमशास्त्रीयमिति द्विधा ।
उपाददीत शास्त्रीयमा तत्त्वस्यावबोधनात् ॥
आत्मब्रह्मविचाराख्यं शास्त्रीयं मानसं जगत् ।

इति जीवकल्पितं द्वैतं द्विकोटिकं प्रतिज्ञाय तत्र शास्त्रीयस्य जीवद्वैतस्य यावत्तत्त्वबोधोदयं समुपादेयतां तत्स्वरूपं चोक्त्वाऽग्रे तस्य बोधोत्तरं हेयतां सप्रमाणमभिधाय—

अशास्त्रीयमपि द्वैतं तीव्रं मन्दमिति द्विधा ।
कामक्रोधादिकं तीव्रं मनोराज्यं तथेतरत् ॥

इत्यशास्त्रीयस्यापि जीवद्वैतस्य द्वैविध्यं प्रतिज्ञाय तत्स्वरूपं चोक्त्वा—

उभयं तत्त्वबोधात्प्राङ्निवार्यं बोधसिद्धये ।
शमः समाहितत्वं च साधनेषु श्रुतं यतः ॥
बोधादूर्ध्वं तच्च हेयं जीवन्मुक्तिप्रसिद्धये ।
कामादिक्लेशबन्धेन युक्तस्य न हि मुक्तता ॥

इति बोधात्प्रागूर्ध्वं च बोधजीवन्मुक्त्योः सिध्द्यर्थं तद्धेयतां सप्रमाणं सयुक्तिकं चाभिधाय जीवन्मुक्तिरियं मा भूज्जन्माभावे त्वहंकृतीत्याद्युत्तरग्रन्थेन साशङ्कं सयुक्तिकं सप्रयोजनं ससाधनं सप्रमाणं च जीवन्मुक्तिमुक्त्वाऽन्ते ‘ जीवन्मुक्तेः परा काष्ठा जीवद्वैतविवर्जनात् ’ इति कण्ठत एव जीवन्मुक्तिस्वरूपलक्षण[स्य] परा काष्ठोक्ता । तथा चित्रदीपेऽपि—

सदा विचारयेत्तस्माज्जगज्जीवपरात्मनः ।
जीवभावजगद्भावबाधे स्वात्मैव शिष्यते ॥

इति बाधस्य विचारजन्यत्वाद्विचारविधिं सविषयमभिधाय जीवजगतोर्बाधेनाद्वैतात्मतत्त्वावशेषं विचारजबोधफलमुक्त्वा—

नाप्रतीतिस्तयोर्बाधः किंतु मिथ्यात्वनिश्चयः ।
नो चेत्सुषुप्तिमूर्छादौ मुच्येतायत्नतो जनः ॥

इति साक्षेपं बाधलक्षणं संक्षिप्य

परमात्मावशेषोऽपि तत्सत्यत्वविनिश्चयः ।
न जगद्विस्मृतिर्नो चेज्जीवन्मुक्तिर्न संभवेत् ॥

इति परमात्मावशेषस्वरूपनिरूपणं स्वसंमतं कृत्वोत्तरार्धेन पराभिमततल्लक्षणं प्रत्याचक्षाणोऽर्थात्पूर्वोक्तमेव जीवन्मुक्तिलक्षणमनुमनुते मूलकार एव। ननु त्वया यल्लक्षणं कृतं तत्त्वत्र मूले द्वैतविवेके चित्रदीपे च मूलकारस्य नैव संमतं ग्रन्थत्रयेऽपि चित्तधर्माभिभवमात्रस्य तस्य तल्लक्षणत्वे नेष्टत्वात्तस्मादसंगतमिदं व्याख्यानमिति चेन्न । मद्व्याकृतेस्तु मूलैकतात्पर्यपर्यालोचनपरत्वेन परमसांगत्यसंभवात् । तथा हि मूले तावन्न चित्तधर्माभिभवो जीवन्मुक्तिलक्षणत्वेनेष्टः । अभिभवसाध्याया जीवमुक्तेरपीत्यग्रिमग्रन्थे तत्साध्यत्वस्य तल्लक्षणत्वेनेष्टत्वात् । तथा द्वैतविवेकेऽपि तच्च हेयं जीवन्मुक्तिप्रसिद्धय इत्यादिना तथैवोक्तत्वात् । तेनात्राभिभवसाध्याया जीवन्मुक्तेः कारणादेः स्वरूपलक्षणे निरूपणाच्च न कोऽपि दोषः । सर्वचित्तधर्माणां मूलकारणस्यैकस्याध्यासस्यैव निजदृष्ट्याऽप्रतिभासेन चित्ताद्यवस्थाने संपन्ने सकलचित्तधर्माभिभवस्तत्त्वज्ञानपुरःसरं संपन्न एव । तथा चित्तवृत्त्यात्मकस्य शास्त्रीयादिजीवद्वैतस्य विवर्जनमपि । किंच मूल आभासत्वानुसंधानानुवृत्तिः कण्ठत एवोक्ता सैव चित्रदीपेऽप्युक्तवाक्येऽर्थादेवाङ्गीकृता । साऽपि निरुक्तलक्षणे तु तन्नान्तरीयकसिद्धैव । यथा स्फटिके कुङ्कुमसांनिध्येन पद्मरागोऽयमित्यध्यासस्य विवेकादिनाऽप्रतिभासेऽपि यावत्कुङ्कुमसांनिध्यं तत्र तद्रागावभासस्याऽऽभासत्वानुसंधानानुवृत्तिरर्थसिद्धैव । एवं स्वदृष्ट्या जीवन्मुक्तस्य स्वात्मनि विवेकादिना मूलाज्ञानध्वंसेन यावद्दृश्याध्यासाप्रतिभासेऽपि यावदारब्धादिस्वाज्ञानकार्यात्मकचित्ताद्युपलक्षितसकलदृश्यस्याऽऽभासत्वानुसंधानानुवृत्तिः किमिति न स्यात्। तस्माद्युक्तमेवोक्तलक्षणं जीवन्मुक्तेः । उक्तानुवृत्तेरप्यार्थिकत्वोक्त्या नासंप्रज्ञातसमाधिक्षणे जीवन्मुक्तावव्याप्तिः । तदा चित्तवृत्त्यात्मिकायास्तस्या अभावेऽप्यार्थिक्यास्तस्यास्तत्त्वज्ञाननान्तरीयकसिद्धत्वाद्द्वैतमिथ्यात्वाच्चेति दिक् ।

एवं शास्त्रीययत्नेन चित्तवृत्त्यभिभवव्यङ्ग्यायां जीवन्मुक्तौ संभावितायां प्रारब्धवादी शङ्कते—

**ननु प्रारब्धं कर्म कृत्स्नाविद्यातत्कार्यनाशने प्रवृत्तस्य तत्त्वज्ञानस्य प्रतिबन्धं कृत्वा स्वफलदानाय देहेन्द्रियादिकमवस्थापयति, न च सुखदुःखादिभोगश्चित्तवृत्तिभिर्विना संभवति ततः कथमभिभवः । मैवम् ।**

---

१ क. ख. ग. ङ. च. वृत्तिं विना संपादयितुं शक्यते त० ।

**अभिभवसाध्याया जीवन्मुक्तेरपि सुखातिशयरूपत्वेन प्रारब्धफल एवान्तर्भावात्।**

**नन्विति।** ननु केनोक्तं जीवन्मुक्त्या देहेन्द्रियादिनिवारणं प्रत्युत चित्ताद्यवस्थितिरिति लक्षणवाक्यशेषेण तद्भानप्रयोजकावस्थानमेवोक्तमिति चेत् । सत्यम्। तथाऽपि यदर्थं प्रारब्धेन देहाद्यवस्थापितं तत्तूक्तजीवन्मुक्तौ न स्यादिति स्वाशयं विशदयति पूर्ववादी—**न चेति।** तत्त्वविच्चित्तवृत्त्यभिभवोऽसंभवी, अहेतुत्वाद्वन्ध्यासुतवत्। न च हेत्वसिद्धिः। योगसूत्रे—'योगश्चित्तवृत्तिनिरोधः' इत्युपक्रम्य 'अभ्यासवैराग्याभ्यां तन्निरोधः' इति सूत्रेण तद्धेतूपलब्धेरिति वाच्यम्। 'भोगेन त्वितरे क्षपयित्वा संपद्यते' इति श्रीमच्छारीरकसूत्रेण 'इतरे समारब्धफले पुण्यपापे तत्त्वविद्भोगेनोपभोगेन तत्फलीभूतसुखाद्यनुभवेनेत्यर्थः। क्षपयित्वा नाशयित्वा संपद्यते प्रारब्धक्षयान्ते ज्ञानसमकाललब्धविदेहकैवल्यमेव द्वैताप्रतिभासेन प्राप्नोतीव' इत्याशयेन सकार्यकाज्ञाननिवर्तकतत्त्वज्ञानोत्तरमपि प्रारब्धफलभोगावश्यकत्वं वदता तद्भोगसाधनीभूतचित्तवृत्तीनामभिभवसामग्र्याः स्वकार्याजनकत्वमेव सूचितम्। यथा तृणदाहहेतोर्वह्निज्वालायाः प्रतिबन्धकमणिना ग्रीष्मनिशि वह्निप्रकाशसांनिध्येऽपि शैत्यानुभवानभिभवरूपस्वफलदानाय तदौष्ण्यप्रतिरोधः क्रियत एवमेव प्रारब्धेनापि चित्तवृत्त्यभिभवसामग्र्याः शक्तिप्रतिबन्ध एव चित्तवृत्त्येकसाध्यस्वफलसुखादिभोगदानार्थं क्रियत इति भावः। अतो न युक्ता जीवन्मुक्तिरित्याह—**तत इति।** तुष्यतु दुर्जन इति न्यायेनाङ्गीकृत्य सिद्धान्ती समाधत्ते—**मैवमिति।** तत्र हेतुमाह—**अभिभवे**त्यादिना। पूर्वोक्तरीत्या जीवन्मुक्तिसुखस्याऽऽत्मरूपत्वेन स्वाभाविकत्वेऽपि तत्प्रतिबन्धकचित्तधर्माणामभिभवाख्यसामग्र्या तद्व्यज्यत इति कूपाकाशस्य साध्यत्ववत्तस्यापि प्रारब्धफलत्वं कल्प्यत इति भावः। यद्वा जीवन्मुक्तिसुखं स्वरूपसुखत्वेऽपि प्रारब्धफलान्तर्भूतं सुखत्वाद्विषयसुखवदित्यर्थः।

न च सिद्धं न समीहितं यत्नवैमुख्याख्यमिति वाच्यम्। त्वज्जीवनस्यापि यत्नवैमुख्ये सत्यसिद्धिप्रसङ्गादिति समाधातुं यथा मदालसासुतानां स्वकीययत्नं विनैव तत्त्वज्ञानं मार्कण्डेयपुराणे वर्णितमेवं जीवन्मुक्तिरपि प्रारब्धवशादेव भविष्यति किं प्रयत्नेनेति शङ्कते—

**तर्हि कर्मैव जीवन्मुक्तिं संपादयिष्यति मा भूत्पुरुषप्रयत्न इति चेत्। कृषिवाणिज्यादावपि समानः पर्यनुयोगः। कर्मणः स्वयमदृष्टरूपस्य दृष्टसाधनसंपत्तिमन्तरेण फलजननासमर्थत्वादपेक्षितः कृष्यादौ पुरुषप्रयत्न इति चेज्जीवन्मुक्तावपि समं समाधानम्।**

**तर्हीति।** किं सर्वोऽपि यत्नो माऽस्त्विति तवाभिमतमुत शास्त्रीय एव जीवन्मुक्तिफलकः। आद्ये जीवनासिद्धिः, द्वितीयेऽर्धजरतीयन्यायापातः। स्वेष्टविषयार्थं यत्नमङ्गीकृत्य

ज्ञत्वं प्रकटयितुं जीवन्मुक्तिफलकशास्त्रीययत्नमात्रमनङ्गीकृतवतो भवतो देवानांप्रियतापत्तिरेव प्रत्युतातिवृद्धिमिष्टवतो मूलमपि नष्टमिति न्यायापातश्च । तस्मान्नैव युक्तोऽयं प्रारब्धवादभक्तस्य तव प्रयत्नवादे द्वेष इति तात्पर्येण कृष्यादावपि दोषसाम्यमाह—**कृषीति** । पर्यनुयोगो दोष इत्यर्थः । दोषोद्धारं शङ्कते—**कर्मण इति** । अदृष्टं दृष्टापेक्षयैव फलदमदृष्टत्वादित्यादियुक्त्या कृष्यादौ दृष्टयत्नापेक्षत्वान्न दोष इति यदि वदसि तर्हि किमपराद्धं तव जीवन्मुक्त्यैव । वस्तुतस्तु—

चीराणि किं पथि न सन्ति दिशन्ति भिक्षां
नैवाङ्घ्रिपाः परभृतः सरितोऽप्यशुष्यन् ।
रुद्धा गुहाः किमजितोऽवति नोपसन्ना—
न्कस्माद्भजन्ति कवयो धनदुर्मदान्धान् ॥

इति श्रीमद्भागवते श्रीमच्छुकाचार्योक्तिः । तस्या अयमर्थः—चीराणि जीर्णवस्त्रखण्डानि । पथि लोकमार्गे । अङ्घ्रिपाः पादपा वृक्षा इत्यर्थः । यतस्ते परभृतः परपोषका अतो भिक्षां पक्वपर्णादि योगियोग्यमदनीयमिति यावत् । तेऽपि स्वत एव याच्ञादिकं विनाऽपि न दिशन्ति किं नार्पयन्ति किम् । न हि वृक्षाणां पक्वपर्णादित्यागे परयाच्ञाद्यपेक्षा तस्माद्भैक्षं वासश्च स्वायत्नलभ्यमेवेति भावः । पानीयशयनीययोस्तथात्वमाह—सरित इत्यादिना । ननु वर्षाकालादौ पक्वपर्णादीनामप्यनुपलम्भे कथं जीवनम् । यद्वा तद्ग्रहणेऽपि स्वहस्तव्यापारादियत्नापेक्षाऽस्त्येवेति कृष्यादितौल्यमेव तत्राऽऽह—किमजित इति । यतोऽजितोऽत उपसन्नानपि नावति किम् । यो हि शरणागतं न रक्षति स तेन हृतसुकृतत्वाज्जित एव भवति, अयं परमेश्वरस्त्वजितो न केनापि पराजित इति सर्वत्र प्रसिद्धकीर्तिः कथं न शरणागतपरित्राणं करोत्यपि तु करोत्येव । अवतीति वर्तमानप्रयोगेणापरोक्षतोक्त्याऽत्रानाश्वासो नैव कार्य इति ध्वनिः । एवं सामग्र्यामप्यविवेकिनां विषययत्न एव रोचत इत्यत आह—कवय इति । ननु याज्ञवल्क्यादयः कवयोऽपि गोकामा एव वयमिति श्रुतेर्विषयादियत्नशालिनः कथमिति तत्राऽऽह—धनेति । न जनकादयो धनदुर्मदान्धाः किंतु जिज्ञासव इति । तस्माद्विवेकिना तत्त्वविदा शरीरनिर्वाहमात्रविषयाद्यर्थमपि यत्नं विहाय जीवन्मुक्त्येकसिद्ध्यर्थं शास्त्रीयप्रयत्नवता भाव्यमित्याशयेन जीवन्मुक्तावपि त्वदुक्तदोषोद्धारसाम्यमेवेत्याह—**जीवन्मुक्तावपीति** ।

ननु कृष्यादावपि भूरिप्रयत्नेऽपि क्वचित्फलाभावादल्पप्रयत्नेऽपि क्वचिद्भूरिफलदर्शनादन्वयव्यतिरेकाभ्यां प्रयत्नस्य निमित्तमात्रत्वमेव । मुख्यत्वं तु फलनिष्पत्तौ प्रारब्धस्यैवेति न जीवन्मुक्तिदोषसाम्यं तत्रेति प्रकारान्तरेण दोषोद्धारमाशङ्क्याऽऽह—

**सत्यपि पुरुषप्रयत्ने कृष्यादौ फलपर्यवसानं यत्र न दृश्यते तत्र प्रब-**

**लेन कर्मान्तरेण प्रतिबन्धः कल्पनीयः। तच्च प्रबलं कर्म स्वानुकूल-वृष्ट्यभावादिरूपां दृष्टसामग्रीं संपाद्यैव प्रतिबध्नाति । स च प्रतिबन्धो विरोधिना प्रबलतरेणोत्तम्भकेन कारीरीष्ट्यादिरूपेण कर्मणाऽपनीयते । तच्च कर्म स्वानुकूलां वृष्टिलक्षणां दृष्टसामग्रीं संपाद्यैव प्रतिबन्धमपनयति ।**

**सत्यपीति ।** फलपर्यवसानं फलपरिपाकः । प्राबल्यं प्रतिवध्याधिकशक्तिमत्त्वम् । कर्मान्तरेण, प्रारब्धकर्मविशेषेणेत्यर्थः । प्रतिबन्धः, शक्तिनिरोधः । ननु मण्यादौ प्रतिबन्धे मन्त्रादौ तदुत्तेजके च न काचित्स्वकार्यजनने दृष्टसामग्र्यपेक्षा दृष्टेत्यत्रापि प्रतिबन्धकत्वाद्यविशेषात्किमिति तदपेक्षेत्याशङ्क्य कर्मणः स्वयमदृष्टरूपस्येत्यादि त्वदुक्तमेव त्वया कथं विस्मृतं तत्स्मृतौ च मण्यादेर्दृष्टरूपत्वात्कर्मणस्त्वदृष्टरूपत्वाद्दृष्टान्तवैषम्यादत्र समपेक्षितैव दृष्टसामग्रीत्याशयेनाऽऽह—**तच्चे**त्यादिना । स्वानुकूल्यं स्वकार्यसहकारिकारणत्वम् । काऽसौ तत्र दृष्टसामग्री यया कृष्याद्युपयुक्तप्रयत्ने फलानुपपत्तिरित्याशङ्क्य तामाह—**वृष्ट्यभावादीति ।** आदिग्रहणात्—

> अतिवृष्टिरनावृष्टिर्मूषकाः शलभाः शुकाः ।
> स्वचक्रं परचक्रं च षडेता ईतयः स्मृताः ॥

इत्यादिशास्त्रोक्तेतिसंज्ञकातिवृष्ट्यादिपञ्चकं संगृह्यते । नन्वेवं तत्रापि प्रारब्धकर्मैव प्रतिबन्धकं चेन्मदिष्टसिद्धिरेवेत्यत आह—**स चेति ।** प्रबलतरेणेति तरप्प्रत्ययेन प्रतिबन्धककर्मतोऽपि तत्र शक्त्याधिक्यं द्योत्यते । **विरोधिनेति ।** तमसस्तेजोवद्ध्वंसकेनेत्यर्थः । ननूत्तेजकस्य मन्त्रादेर्मण्यादिवस्तुनः प्रतिबन्धकस्य प्रतिबन्धनशक्तिरोधकत्वमेव दृष्टं न मण्यादिध्वंसकत्वमतो न विरोधिनेति विशेषणेन त्वदिष्टसिद्धिरित्याशङ्क्य विशिनष्टि—**उत्तम्भकेनेति ।** उत्तम्भकत्वं प्रतिबन्धकशक्तिरोधकत्वम् । न चैतावतैव विशेषणेनालं माऽस्तु प्रागुक्तविशेषणद्वयं विरोधिना प्रबलतरेणेति च तावतैव प्रतिबन्धापनयासिद्धेरिति वाच्यम् । तत्प्रयोजनसंभवात् । तथा हि—न हि मण्युत्तम्भकमन्त्रादेर्वृष्ट्यभावकारिवृष्टिप्रतिबन्धककर्माद्युत्तम्भकत्वं दृष्टमविरोधित्वात्, तेजसस्तमोविरोधित्वेऽपि न खद्योततेजसोऽखिलध्वान्तध्वंसकत्वं दृष्टं दुर्बलत्वादिति सप्रयोजनमेवोक्तविशेषणद्वयम् । किं तदुक्तविशेषणं कर्मान्तरमिति तत्स्वरूपं निरूपयति—**कारीर्यादीति ।** 'शुष्यत्सस्याप्यायनकामः कारीर्या यजेत' इति विधिप्रसिद्धा कारीरीष्टिः । आदिनाऽतिवृष्टिरोधकश्रीगोवर्धनोद्धारकाराधनादिग्रहः । कर्मणा, कारीर्यादिजन्यपुण्यापूर्वेणेत्यर्थः । अपनीयते, दूरी क्रियते । यथा प्रतिबन्धकं कर्म दृष्टसामग्रीं पूर्वं संपाद्य ततः सस्योत्पत्तिशक्तिं प्रतिबध्नाति तथैवोत्तम्भकमपि कर्म दृष्टसामग्रीं पूर्वं संपाद्यैवानन्तरमेव सस्योत्पत्तिशक्तिरोधनमपनयतीत्यत्रापि तत्तौल्यमेवेत्याह—**तच्चे**त्यादिना ।

उपसंहरति—

**किं बहुना प्रारब्धकर्[1]मण्यत्यन्तमक्तेन भवता योगाभ्यासरूपस्य पुरुषप्रयत्नस्य वैयर्थ्यं मनसाऽपि चिन्तयितुमशक्यम् ।**

**किं बहुनेति ।** अयं भावः—सर्वेषां जीवानां तावत्प्रारब्धं कर्मापि त्रिविधं स्वेच्छया फलदं परेच्छया फलदमनिच्छया फलदं चेति । उक्तं हि श्रीमद्भारतीतीर्थैस्तृप्तिदीपे—'इच्छाऽ-
५२ निच्छा परेच्छा च प्रारब्धं त्रिविधं स्मृतम्' इति । तत्र स्वेच्छाप्रारब्धं तु स्वप्रयत्नमन्तरेण स्वस्मै फलदानायाशक्तं सदवश्यं प्रयत्नमपेक्षत एवेति सर्वानुभवसिद्धम् । किं बहुना परेच्छानिच्छात्मकयोरपि तयोः स्वफलदानार्थं क्रमेण परप्रयत्नापेक्षा सत्यसंकल्परूपपरमेश्वरप्रयत्नापेक्षा चेति पाके काष्ठवह्निस्थालीजलतण्डुलादिसंपादनरूपप्रयत्नस्यापि लौकिकस्य सार्थक्यं किं पुनः परमपुमर्थसाधकस्य शास्त्रीयस्य तस्येति । किंच मूलकारैरेवानुभूतिप्रकाशे सनत्कुमारविद्याख्यचतुर्थाध्याये प्रकारान्तरेण प्रारब्धचातुर्विध्यमप्युक्तं तद्यथा—

जीवन्मुक्तो रतिक्रीडामिथुनानन्दलक्षणान् ।
व्यवहारान्क्रमेणैति प्रारब्धस्यानुसारतः ॥
सुखदुःखप्रदारब्धकर्मवेगश्चतुर्विधः ।
तीव्रो मध्यो मन्दसुप्तौ चेति तस्य विधा मताः ॥
तीव्रवेगे स पश्वादितुल्यो नाऽऽत्मानमीक्षते ।
आत्मनि प्रीतिरस्तीति भवदात्मरतिस्तदा ॥
मध्यवेगे तु भोगानां प्राधान्यं स यदा कदा ।
कृत्वाऽवकाशमात्मानं वदन्क्रीडति बालवत् ॥
मन्दवेगे तिरस्कृत्य भोगान्प्रायेण चिन्तयन् ।
धियाऽऽत्मानं द्वंद्वसुखं प्राप्नोति मिथुनं यथा ॥
सुप्तवेगेऽतिनिर्विघ्नो निर्विकल्पसमाधिभाक् ।
आत्मानन्दावशेषः सन्नास्ते मुक्तवदद्वयः ॥ इति ।

अत्रापि स्वेच्छादित्रैविध्यस्य प्रत्येकं संभवादुक्तरीत्या प्रयत्नशरणता दुर्वारैव ।

स्वेच्छातीव्रं तु यथा मत्स्यक्रीडानिरीक्षणात्तोये ।
सौभरिमुनेर्विलासो मान्धातुः कन्यकाभिरनिशमभूत् ॥ १ ॥
तदपि परेच्छातीव्रं चन्द्रे गुरुशापतः क्षयो वृद्धिः ।
पक्षद्वये क्रमेण स्पष्टं भवतीति दृष्टमिदम् ॥ २ ॥

---

१ क. ख. ग. घ. ङ. च. °र्मण्येवात्य° ।

एवमनिच्छातीव्रं माण्डव्ये शूलसमधिरोहादि ।
व्युत्थाने विज्ञातं दुःखादिप्रदमिह प्रथितम् ॥ ३ ॥
स्वेच्छामध्यं तु यथा ह्यजातशत्रोः श्रुतं स्पष्टम् ।
राज्ये भोगान्भोक्तुर्यथावकाशं चितिं स्मर्तुः ॥ ४ ॥
अपि च परेच्छामध्यं शिखिध्वजे तत्त्वबोधतोऽप्यूर्ध्वम् ।
राज्यं चूडालेच्छावशात्सुखादिप्रदं दृष्टम् ॥ ५ ॥
तद्वदनिच्छामध्यं भगीरथे दृष्टमन्यराज्यमपि ।
स्वैरविमुक्तकरिण्या मालां दत्त्वाऽऽत्मशिरसि सति निहिते ॥ ६ ॥
स्वेच्छामन्दं दृष्टं प्रारब्धं कविहरिप्रभृतेः ।
स्फुटयोगिनवकपङ्क्तेर्यत्सर्वे तेऽनुसंधितात्मसुखाः ॥ ७ ॥
अस्ति परेच्छामन्दं प्रारब्धं नारदेच्छया लोके ।
आत्मसुखस्मृतिरूपं ध्रुवस्य हरिदर्शनाज्जातम् ॥ ८ ॥
तद्वदनिच्छामन्दं प्रारब्धं वामदेवादेः ।
यद्गर्भेऽपि च तस्य प्रादुरभूत्तत्त्वविद्यादि ॥ ९ ॥
स्वेच्छासुप्तं दृष्टं प्रारब्धं त्वृषभदेवस्य ।
यत्तस्य निर्विकल्पकसमाधिविघ्नो न कुत्रापि ॥ १० ॥
अपि च परेच्छासुप्तं प्रारब्धं दृष्टमस्ति विन्ध्याद्रेः ।
कुम्भोद्भवशिष्यस्य प्रसिद्धमेवेह शास्त्रेऽपि ॥ ११ ॥
किंचानिच्छासुप्तं प्रारब्धं भवति जन्मतः पृथ्व्याः ।
श्रुत्यादिसिद्धतत्त्वज्ञानाया देवतात्वेन ॥ १२ ॥

एवं चोक्तभेदभिन्नस्य यावत्प्रारब्धस्य प्रयत्नापेक्षत्वाद्योगाभ्यासरूपप्रयत्नसाफल्यं तदावश्यकता च सर्वथा सिद्धैव । अत एवोक्तं योगवासिष्ठ उत्पत्तिप्रकरणे शतोपर्येकादशसर्गे श्रीरामं प्रति श्रीवसिष्ठैः—

स्वपौरुषैकसाध्येन स्वेप्सितत्यागरूपिणा ।
मनःप्रशममात्रेण विना नास्ति शुभा गतिः ॥
नूनं दैवमनादृत्य मूढसंकल्पकल्पितम् ।
पुरुषार्थेन संवित्त्या नय चित्तमचित्तताम् ॥ इति च ।

पुरुषार्थोऽत्राद्वैतात्मतारूपो मोक्षः । तद्रूपा या संवित्तिरात्मचितिस्तया सततानुसंधितयैव चित्तं तदुपलक्षितं द्वैतमचित्ततामद्वैततां नयेत्यर्थः । अत्राऽऽद्यपद्ये विविदिषोरन्त्ये विदुषश्च दैवानादरपुरःसरं मनःप्रशमनरूपपुरुषप्रयत्न एव समनुष्ठेयत्वेन समुपदिष्ट इति सर्वमवदा-

तम् । एतेषामुदाहरणानि सलक्षणान्युक्तानि मदीयेऽद्वैतामृतमञ्जरीनाम्नि निबन्धे सव्याख्ये । तद्यथा—

स्वेच्छातीव्रं यदि चेत्प्रारब्धं व्यवहरति समः पशुभिः ।
जीवन्मुक्तोऽपि तदा गोकामो याज्ञवल्क्य इव ॥ १ ॥

तथा हि श्रीमद्भगवत्पादीयेऽध्यासभाष्ये 'पश्वादिभिश्चाविशेषात्' इति स्पष्टमेव पश्वादिसाम्यम् । गोकामत्वं च याज्ञवल्क्यस्य बृहदारण्यकपञ्चमप्रपाठके स्फुटमेव—'नमो वयं ब्रह्मिष्ठाय कुर्मो गोकामा एव वयम्' इति ॥ १ ॥

यदि च परेच्छातीव्रं तच्चेदुदयं प्रयाति सोऽपि तदा ।
अन्येच्छया तथैव व्याप्रियते कश्यपो यथा दितितः ॥ २ ॥

तत्प्रारब्धम् । सोऽपि जीवन्मुक्तोऽपि तथैव व्याप्रियते पशुवदेव व्यवहरति । दितितः, दितिकृतप्रदोषकालरतीच्छयेत्यर्थः ॥ २ ॥

यदि तदनिच्छातीव्रं तदाऽप्यसौ तद्वदेव संयतते ।
जयविजयाभ्यां शापं दातुं सनकादिरिव भगवान् ॥ ३ ॥

तत्प्रारब्धम् । असौ जीवन्मुक्तः । तद्वदेव संयतते, पशुवदेव सम्यगिष्टानिष्टप्राप्तिपरिहारयोर्यत्नं करोति । भगवानितिविशेषणात्सनकादेः सदैव शुद्धसत्त्वगुणप्रधानत्वेन कदाऽपि परापकारानिच्छुत्वेऽपि वैकुण्ठे रागद्वेषाद्यभावेन सुतरां तदभावेऽपि श्रीमदन्तर्यामिप्रेरितानिच्छातीव्रप्रारब्धबुद्ध्या शापप्रदानमिति भावः ॥ ३ ॥

स्वेच्छामध्यं यदि चेत्प्रारब्धं बालवत्तदा रमते ।
भोगप्राधान्यात्तच्छिद्रेऽद्वैतं वदन्यथा दत्तः ॥ ४ ॥

तच्छिद्रे, भोगाभावकाले । दत्तः श्रीदत्तात्रेयः । स तु भोगानां प्राधान्यं लोके प्रदर्शयन्मध्ये मध्ये भोगाभावकाले कार्तवीर्यादिकं प्रति स्वगुह्यरूपपरमात्मत्वप्रकाशतोषेणाद्वैतात्मानं वदन्नासेति मार्कण्डेयपुराणोपाख्यानं प्रागेव विद्वत्संन्यासोल्लासे समुदाहृतम् ॥ ४ ॥

यदि च परेच्छामध्यं तच्चेत्क्रीडति तथैव सोऽपि तदा ।
राज्ञो रहूगणस्य तु शिबिकोद्वहने यथैव जडभरतः ॥ ५ ॥

तत्, प्रारब्धम् । तथैव बालवदेव । सोऽपि जीवन्मुक्तोऽपि । जडभरतो हि रहूगणेन राज्ञा शिबिकोद्वहने नियोजितः सर्वभूतसुहृत्त्वेन प्राणिहननभिया मन्दं गच्छंस्तेन राज्ञाऽऽक्षिप्तस्तं प्रत्यद्वैततत्त्वमपि भोगावसान उवाचेत्याख्यातं श्रीमद्भागवते पञ्चमस्कन्धे । तथा च तद्वचस्तत्रैव—

स्थौल्यं कार्श्यं व्याधय आधयश्च क्षुत्तृड्भयं कलिरिच्छा जरा च ।
निद्रा रतिर्मन्युरहंमदः शुचो देहेन जातस्य हि मे न सन्ति ॥ इति ।

देहेन सह तादात्म्याभिमानेन जातस्याज्ञस्यैते धर्माः सन्ति मम तु ज्ञत्वेनाद्वैतत्वात्ते न सन्तीति भावः ॥ ५ ॥

यदि तदनिच्छामध्यं तदाऽप्यसौ विलसति स्फुटं तद्वत् ।
स्वस्वाधिकारकर्माणि भगवान्सूर्यादिरिव लोके ॥ ६ ॥

तत्प्रारब्धम् । असौ जीवन्मुक्तः । तद्वत्, बालवत् । भगवतः सूर्यादेर्हि जीवन्मुक्तत्वेन निरतिशयाद्वैतानन्दतृप्तत्वात्स्वस्वाधिकारभोगानिच्छुत्वेऽप्यन्तर्यामिप्रेरिततादृक्प्रारब्धवशात्तत्प्राधान्येऽपि तद्विरामकाले याज्ञवल्क्यादिकं प्रत्यद्वैतात्मानं वदन्बालवदेव लीलया विलसतीत्याशयः ॥ ६ ॥

स्वेच्छामन्दं यदि चेत्प्रारब्धं तर्हि भोगमपहाय ।
मिथुनमिव द्वंद्वसुखी संप्रज्ञातस्थितो बलिवत् ॥ ७ ॥

मिथुनमिव, दम्पतीव । संप्रज्ञातस्थितः, सविकल्पनामकाहंब्रह्मास्मीतिवृत्त्यात्मकशब्दानुविद्धसंप्रज्ञातसमाधिस्थ इत्यर्थः । बलिवदिति । बलिर्हि बहुकालं भोगान्भुक्त्वा कदाचिज्जातवैराग्यस्तत्त्वज्ञानं संपाद्य समाधिं कुर्वन्नासेति बृहद्वासिष्ठोपशमप्रकरणे समुपाख्यायते । तथा च तत्रैव सप्तविंशतितमे सर्गे तदुक्तिः—

न द्वेषोऽस्ति न रागोऽस्ति न मनो नास्य वृत्तयः ।
चिन्मात्रस्यातिशुद्धस्य विकल्पकलना कुतः ॥
दृश्यदर्शननिर्मुक्तकेवलामलरूपवान् ।
नित्योदितो निराभासो द्रष्टाऽस्मि परमेश्वरः ॥ इति ।

अत्र प्रथमश्लोके भोगहानं द्वितीये तु तत्त्वानुसंधानमिति भावः ॥ ७ ॥

यदि च परेच्छामन्दं तदाऽप्यसौ तद्वदेव सुखमेति ।
श्रीविष्णोरिच्छातः प्रह्लाद इवाविकल्पात्प्राक् ॥ ८ ॥

असौ जीवन्मुक्तः । तद्वदेव मिथुनवदेव । अविकल्पात्प्राक्, निर्विकल्पसमाधेः पूर्वम् । प्रह्लादस्तु भगवदिच्छयैव लब्धविवेकः सन्समाधिनिष्ठो बभूवेत्युपाख्यातं बृहद्वासिष्ठोपशमप्रकरण एव । तत्र च संप्रज्ञातावस्थायां तदुक्तिर्यथा—

चेत्यवर्जितचिन्मात्रमहमेषोऽवभासकः ।
सबाह्याभ्यन्तरव्यापी निष्कलामलसन्मयः ॥ ८ ॥ इति ।
यदि तदनिच्छामन्दं तदाऽपि सुखमेत्यसौ तथैव परम् ।
सिद्धाभिगीततत्त्वश्रवणोत्तरमेव जनक इव ॥ ९ ॥

तत्प्रारब्धम् । असौ जीवन्मुक्तः । तथैव मिथुनवदेव । एवं ह्युपाख्यातं बृहद्वासिष्ठोपशमप्रकरण एव—कदाचिदुपवनं गतेन जनकेनानिच्छताऽपि केषांचिदाकाशगामिनां

स्वभावेनैवाऽऽत्मतत्त्वं परस्परं जल्पतां सिद्धानां शब्दं श्रुत्वा विचारोऽवाप्तोऽभूदिति। तत्रेदं तद्वाक्यं सविकल्पसमाध्यवस्थासूचकम्—

अरज्जुरेव बद्धोऽहमयं कोऽस्मि कलङ्कितः।
पतितोऽस्म्युपरिस्थोऽपि हा ममाऽऽत्मन्हता स्थितिः॥ इति।

अरज्जुरेवेति। अयं भावः—या जीवबन्धकृदविद्यारज्जुः सा तु नास्त्येव मयि विचारेणेति पुरा व्यर्थमेव बद्धोऽभवमित्यद्वैतात्मनि वस्तुतो बन्धाभावस्तथाऽयं नित्यापरोक्षस्वप्रकाशः कः कलङ्कितोऽस्मि न कोऽपि संसारकलङ्कवानस्मीति च पुनस्तदभावस्तथा पतित इत्यप्युपरि सर्वोपरि स्वे महिम्नि स्थितोऽपि व्यर्थमेव मोहमहोदधौ पतित इत्यपि भूयस्तदभावसूचनपूर्वकमद्वैततत्त्वानुसंधानेन हा, इति खेदे ममाऽऽत्मन्मन्मानस त्वया व्यर्थमेव पूर्वं स्वरूपस्थितिर्हतेति संप्रज्ञातसमाधिद्योतनमिति॥ ९॥

स्वेच्छासुप्तं यदि चेत्प्रारब्धं तर्ह्यसौ विगतविघ्नः।
कैवल्यं प्राप्त इवासंप्रज्ञाते स्थितः सुखं शुकवत्॥ १०॥

असौ जीवन्मुक्तः। असंप्रज्ञाते निर्विकल्पसमाधौ। शुकवदिति। शुको हि स्वेच्छयैव जनकतश्छिन्नसंशयो मेरुशिखरे बहुकालं निर्विकल्पसमाधिस्थोऽभूदित्युपाख्यातं योगवासिष्ठ एव। तद्यथा—

अनुशिष्टः स इत्येवं जनकेन महात्मना।
विशश्राम शुकस्तूष्णीं स्वच्छे परमवस्तुनि॥
वीतशोकभयायासो निरीहश्छिन्नसंशयः।
जगाम शिखरं मेरोः समाध्यर्थमनिन्दितम्॥
तत्र वर्षसहस्राणि निर्विकल्पसमाधिना।
दश स्थित्वा शशामासावात्मन्यस्नेहदीपवत्॥ इति॥ १०॥

यदि च परेच्छासुप्तं तदाऽप्यसौ तद्वदेव सुखरूपः।
श्रीरघुवीरः श्रीमद्वसिष्ठकृतशक्तिपाततो यद्वत्॥ ११॥

असौ जीवन्मुक्तः। तद्वदेव लब्धकैवल्यवदेव। उपाख्यातमेतद्बृहद्वासिष्ठे निर्वाणप्रकरणे पूर्वार्धस्य चरमसर्गे। तथा हि श्रीमद्वसिष्ठप्रसादाच्छ्रीरामे निर्विकल्पसमाधिस्थे सति श्रीवसिष्ठं प्रति तद्व्युत्थापनं स्वकार्यार्थं देवकार्यार्थं च प्रार्थयञ्श्रीविश्वामित्र उवाच—

हे वसिष्ठ महाभाग ब्रह्मपुत्र महानसि।
गुरुत्वं शक्तिपातेन तत्क्षणादेव दर्शितम्॥
दर्शनात्स्पर्शनाच्छब्दात्कृपया शिष्यदेहके।
जनयेद्यः समावेशं शांभवः स हि देशिकः॥ इति।

अत्र स्पष्टमेव श्रीवसिष्ठेच्छावशाच्छ्रीरामस्य निर्विकल्पसमाध्यवाप्तिः ॥ ११ ॥

यदि तदनिच्छासुप्तं तदाऽपि सुखरूप एव स प्राग्वत् ।
सुतलालसा समाधिं कर्तुमनुत्काऽपि देवहूतिरिव ॥ १२ ॥

सः, जीवन्मुक्तः । प्राग्वत्, लब्धकैवल्यवत् । सुतलालसेति । तदुक्तं श्रीमद्भागवते तृतीयस्कन्धे—

वनं प्रव्रजिते पत्यावपत्यविरहातुरा ।
ज्ञाततत्त्वाऽप्यभून्नष्टे वत्से गौरिव वत्सला ॥

पत्यौ कर्दमनामकमुनौ । तत्राप्यपत्यविरहातुरा । स्वस्यास्तत्त्वमुपादिश्य श्रीमत्कपिलाचार्ये स्वपुत्रेऽप्यरण्यं गते तद्वियोगव्याकुलेत्यर्थः । एतेन सुतलालसेति विशेषणमूलमुक्तम् । यतः सुतलालसाऽत एव समाधिं कर्तुमनुत्काऽनुत्कण्ठितेत्यर्थः । तदपि तत्रैवोक्तमग्रे—

तमेव ध्यायती नित्यमपत्यं कपिलं हरिम् ।
बभूवाचिरतो वत्सनिःस्पृहा तादृशे गृहे ॥

एतेन समाध्यर्थमनुत्कण्ठा ध्वनिता । तथाऽप्यनिच्छासुप्तप्रारब्धोदयाद्यथा निर्विकल्पसमाधिं देवहूतिः प्राप्तवती तद्वदिति योजना । एतदपि तत्रैवोक्तमग्रे—

नित्यारूढसमाधित्वात्परावृत्तगुणभ्रमा ।
न सस्मार तदाऽऽत्मानं स्वप्ने दृष्टमिवोत्थितः ॥
तद्देहः परतः पोष्योऽप्यकृशः स्वाध्यसंभवात् ।
बभौ मलैरवच्छिन्नः सधूम इव पावकः ॥
स्वाङ्गं तपोयोगमयं मुक्तकेशं गताम्बरम् ।
दैवगुप्तं न बुबुधे वासुदेवप्रतिष्ठधीः ॥ इति ॥ १२ ॥

अथाज्ञप्रारब्धभेदाः—

अज्ञः स्वेच्छातीव्रे प्रारब्धे पशुरिवाऽऽचरति सकलम् ।
नहुषो यथा मुनीनपि शिबिकोद्वहने नियोजितवान् ॥

स्पष्टमिदं महाभारतादौ ॥ १३ ॥

सति च परेच्छातीव्रे तत्रासौ व्यवहरति तथैव परम् ।
वसुदेवः स्वापत्यं कंसायादाद्यथा हन्तुम् ॥ १४ ॥

असावज्ञानी । तथैव पशुवदेव । अवशिष्टं तु स्पष्टमेव ॥ १४ ॥

तत्रानिच्छातीव्रे सोऽपि तथैवोद्यतो भवति चरिते ।
भरतो यथा मुमुक्षुर्मृगशावार्थं समासक्तः ॥ १५ ॥

तत्र तस्मिन्प्रारब्धे। सोऽप्यज्ञोऽपि। तथैव पशुवदेव। चरिते, आचरिते। भरतो मुमुक्षुर्मृगशावार्थं समासक्त इति प्रसिद्धमेव श्रीमद्भागवते पञ्चमस्कन्धे। तस्य तदासक्तेराकस्मिकत्वेनानिच्छातीव्रत्वमित्याशयः ॥ १५ ॥

स्वेच्छामध्ये क्रीडति शिशुवत्तत्त्वं वदन्परोक्षतया।
अज्ञो भोगासक्तो बालाकिवदेव बोधात्प्राक् ॥ १६ ॥

बालाकिनामा मुनिर्बोधाभावेऽपि तत्त्वविन्मन्यः सन्नजातशत्रुं तत्त्वज्ञामपि तथात्वेनाप्रसिद्धं तत्त्वं बोधयितुं प्रतिष्ठादिभोगासक्त्या गत्वा किंचित्स्वस्य ब्रह्मत्वेनाभिमतं वस्तूवाचेति बृहदारण्यके चतुर्थ( द्वितीय )प्रपाठके पठ्यते दृप्तबालाकिरित्यादिना—'दृप्तबालाकिर्हानूचानो गार्ग्य आस स होवाचाजातशत्रुं काश्यं ब्रह्म ते ब्रवाणि' इत्युपक्रम्य 'स होवाच गार्ग्यो य एवासावादित्ये पुरुष एतमेवाहं ब्रह्मोपासे' इत्याद्युक्तिप्रत्युक्तिभिः। अत्र दृप्तपदेनाज्ञत्वं भोगासक्तिश्च द्योतिता ॥ १६ ॥

तत्र परेच्छामध्ये रमतेऽसौ तद्वदेव कार्यरतः।
जनको यथा सुलभया पृष्टो योगेन हृदि गतया ॥ १७ ॥

तत्र तस्मिन्प्रारब्धे। असावज्ञः। तद्वदेव शिशुवदेव। कार्यरतो भोगासक्तः। जनक इति। धर्मध्वजनाम्नो जनकस्य ब्रह्मनिष्ठत्वकीर्तिं श्रुत्वा सुलभानाम्नी काचिद्ब्रह्मवादिनी कौमारादेव त्रिदण्डसंन्यासं कृत्वा भैक्षभोजनं मोक्षशास्त्रश्रवणमेकान्त आत्मध्यानं च कुर्वती जनककीर्तिर्वास्तवा न वेतिप्रत्ययार्थं स्वीयं पूर्वं रूपं विहाय योगमहिम्नाऽतिसुकुमारमनुपमं रूपं कृत्वा जनकपुरीं भैक्षमिषेण प्रविश्य जनकगृहं गत्वा तेन कृतातिथ्या भोजनोत्तरं तत्सदसि स्थिता तं राजानं मनसा तन्नेत्रद्वारेण योगमहिम्ना प्रविश्यापृच्छत्। सोऽपि तां स्वशरीर एव सूक्ष्मरूपेण प्रवदतीति मोक्षधर्मेषूपाख्यातम्। तत्र जनकोक्तिर्यथा—

यश्च मे दक्षिणं बाहुं चन्दनेन समुक्षयेत्।
सव्यं वाऽस्यापि यस्तक्षेत्समावेतावुभौ मम ॥
सुखी सोऽहमवाप्तार्थः समलोष्टाश्मकाञ्चनः।
मुक्तसङ्गः स्थितो राज्येऽविशिष्टोऽन्यैस्त्रिदण्डिभिः ॥ इति।

अनेन ब्रह्मवादित्वं स्पष्टमेव। ततः—

इदं मे स्यादिदं नेति द्वंद्वैर्मुक्तस्य मैथिल।
काऽसि कस्य कुतो वेति वचनैः किं प्रयोजनम् ॥
तदयुक्तस्य ते मोक्षे योऽभिमानो नराधिप।
सुहृद्भिः स निवार्यस्तेऽविरक्तस्येव भेषजम् ॥
तस्य ते मुक्तसङ्गस्य पाशानाक्रम्य तिष्ठतः।
छत्रादिषु विशेषेषु पुनः सङ्गः कथं वद ॥

स गार्हस्थ्याच्च्युतश्च त्वं मोक्षं वाऽनाप्य दुर्विदम् ।
उभयोरन्तराले च वर्तसे मोक्षवार्तिके ॥

इत्यादिसुलभोक्त्याऽस्य जनकस्याज्ञत्वं राज्यकर्तृत्वोक्त्या भोगासक्तत्वं च स्फुटमेवेति भावः ॥ १७ ॥

सति चानिच्छामध्ये विहरति स प्राग्वदेव भोगपरः ।
आत्मज्ञंमन्यः सन्विरोचनोऽवदादिवाऽऽत्मानम् ॥ १८ ॥

सः, अज्ञानी । प्राग्वत्, बालवदेव । तथा हि छान्दोग्येऽष्टमप्रपाठके समाम्नायते—इन्द्रविरोचनौ प्रजापतेरुपदेशाद्देहमेवाऽऽत्मत्वेन मन्यमानाविति पूर्वमुपक्रम्य 'स ह शान्तहृदय एव विरोचनोऽसुराञ्जगाम तेभ्यो हैतामुपनिषदं प्रोवाचाऽऽत्मैवेह महय्य आत्मा परिचर्य आत्मानमेवेह महयन्नात्मानं परिचरन्नुभौ लोकाववाप्नोतीमं चामुं चेति ' इति । आत्मा देहः । महय्यः पूज्यः । मह पूजायामिति धातोः । महयन्पूजयन् । अत्रानिच्छामध्यत्वं तु तत्प्रश्नं विनैव वदनस्याऽऽकस्मिकत्वादिति भावः । अज्ञत्वादिकं तु स्पष्टमेव ॥ १८ ॥

स्वेच्छामन्दे तिष्ठति भोगानन्यान्विहाय मिथुनमिव ।
द्वंद्वसुखासक्तमनाः कदर्युभिक्षुर्यथाऽनुभवतः प्राक् ॥ १९ ॥

कदर्युभिक्षुरिति । कदर्युः पूर्वाश्रमे धनलुब्धः सन्यो भिक्षुः संन्यासी जातः स यथा भोगत्यागपूर्वकमज्ञत्वेऽपि मुमुक्षुत्वेन विवेकवेलायां परोक्षात्मानुसंधानेन मिथुनमिव दम्पती इव द्वंद्वसुखी तद्वदित्यर्थः । तदुक्तं श्रीमद्भागवत एकादशस्कन्धे संन्यासावस्थायां मूढैः पीडितो द्विज उवाच—

नायं जनो मे सुखदुःखहेतुर्न देवताऽऽत्मा ग्रहकर्मकालाः ।
मनः परं कारणमामनन्ति संसारचक्रं परिवर्तयेद्यत् ॥

इत्युपक्रम्य—

एतां स आस्थाय परात्मनिष्ठामध्यासितां पूर्वतमैर्महर्षिभिः ।
अहं तरिष्यामि दुरन्तपारं तमो मुकुन्दाङ्घ्रिनिषेवयैव ॥

इत्यन्तेन । तत्र नायं जनो मे सुखेत्यादिना सर्वोदासीनतापूर्वकं परोक्षतयाऽऽत्मानुसंधानं तथाऽहं तरिष्यामीत्यज्ञत्वं च ध्वनितमित्याशयः ॥ १९ ॥

सति तु परेच्छामन्दे तथैव तिष्ठत्यसौ सुखासक्तः ।
तत्त्वज्ञानात्पूर्वं वरुणसुतो भृगुरिवेच्छया स्वगुरोः ॥ २० ॥

तथैव मिथुनवदेव । असावज्ञः । तत्त्वेति । तैत्तिरीयोपनिषदि भृगुवल्ल्यामाम्नायते—' भृगुर्वै वारुणिः । वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति ' इत्युपक्रम्य तं प्रति वरुणवाक्यम्—' तपसा ब्रह्म विजिज्ञासस्व ' इत्युक्त्वा ' स तपोऽतप्यत ' इत्यादि ।

तत्र 'मनसश्चेन्द्रियाणां च ऐकाग्र्यं परमं तपः' इतिस्मृतेरन्नादिकोशानां ब्रह्मत्वं विचारेणानुसंदधन्भृगुर्ज्ञानात्प्राग्यथा संप्रज्ञातसमाधिभाक्त्वेन द्वंद्वसुखी बभूव तद्वदित्यर्थः ॥ २० ॥

तत्रानिच्छामन्दे सोऽपि सुखी तिष्ठति स्फुटं प्राग्वत् ।
आकस्मिकनिर्वेदाज्ज्ञानात्प्राक्पिङ्गला यद्वत् ॥ २१ ॥

तत्र तस्मिन्प्रारब्धे । सोऽप्यज्ञोऽपि । प्राग्वन्मिथुनवत् । उक्तं ह्येकादशस्कन्ध एव— मिथिलायां काचिद्वेश्या कस्मिंश्चिद्दिवसे जारमलभमानाऽकस्मान्निर्विण्णा । पिङ्गलोवाच— अहो मे मोहविततिं पश्यतेत्यादिना निर्वेदमुक्त्वा—
सुहृत्प्रेष्ठतमो नाथ आत्मा चायं शरीरिणाम् ।

तं विक्रीयाऽऽत्मनैवाहं रमेऽनेन यथा रमा ।

इति त्वंपदार्थापरोक्षत्वेऽपि 'त्यक्त्वा दुराशाः शरणं व्रजामि तमधीश्वरम्' इत्यन्ते तत्पदार्थपारोक्ष्याद्यद्भोगत्यागेनाऽऽत्मानुसंधानं स त्वज्ञत्वेऽपि संप्रज्ञातसमाधिरेव । तस्याऽऽकस्मिकत्वादनिच्छामन्दप्रारब्धत्वमिति भावः ॥ २१ ॥

स्वेच्छासुप्ते लब्धे प्रारब्धे निर्विकल्पसुख्यज्ञः ।
योगाद्विदेहवत्स्याज्जाजलिरिव तत्त्वलब्धेः प्राक् ॥ २२

जाजलिरिवेति । मोक्षधर्मेषूपाख्यायते । जाजलिनामा कश्चिद्विप्रो महत्तपश्चकारेत्युपक्रम्य तत्तपो वर्णयन्भीष्मो युधिष्ठिरं प्रति—

ततः कदाचित्स मुनिर्वर्षास्वाकाशमास्थितः ।
अन्तरिक्षाज्जलं मूर्ध्ना प्रत्यगृह्णन्मुहुर्मुहुः ॥
अथ तस्य जटाः क्लिन्ना बभूवुर्ग्रथिताः प्रभो ।
अरण्यगमनान्नित्यं मलिनोऽमलसंयुतः ॥

टीका—अमलसंयुतः, निष्पापः ।

स कदाचिन्निराहारो वायुभक्षो महातपाः ।
तस्थौ काष्ठवदव्यग्रो न चचाल च कर्हिचित् ॥
तस्य स्म स्थाणुभूतस्य निर्विचेष्टस्य भारत ।
कलिङ्गशकुनौ राजन्नीडं शिरसि चक्रतुः ॥
स तौ दयावान्ब्रह्मर्षिरुपप्रैक्षत दम्पती ।

टीका—उपप्रैक्षत, उपेक्षांचक्रे न वारितवानित्यर्थः ।

कुर्वाणौ नीडकं तत्र जटासु तृणतन्तुभिः ।
यदा न स चलत्येव स्थाणुभूतो महातपाः ॥

ततस्तौ सुखविश्वस्तौ सुखं तत्रोषतुस्तदा।
अतीतास्वथवर्षासु शरत्काल उपस्थिते॥
प्राजापत्येन विधिना विश्वासात्काममोहितौ।
तत्रापातयतां राजञ्शिरस्यण्डानि खेचरौ॥
तान्यबुध्यत तेजस्वी स विप्रः शंसितव्रतः।
बुद्ध्वा च स महातेजा न चचाल च जाजलिः॥
धर्मे कृतमना नित्यं नाधर्मं स त्वरोचयत्।
अहन्यहनि चाऽऽगत्य ततस्तौ तस्य मूर्धनि॥
आश्वासितौ निवसतः संप्रहृष्टौ तदा विभो।
अण्डेभ्यस्त्वथ पुष्टेभ्यः प्राजायन्त शकुन्तकाः॥
व्यवर्धयन्त तत्रैव न चाकम्पत जाजलिः।
स रक्षमाणस्त्वण्डानि कुलिङ्गानां धृतव्रतः॥
तथैव तस्थौ धर्मात्मा निर्विचेष्टः समाहितः।
ततस्तु कालसमये बभूवुस्तेऽथ पक्षिणः॥

टीका—कालसमये कालमर्यादायां सत्यां ते शकुन्तकाः पक्षिणः पक्षवन्तो बभूवुः।

बुबुधे तांस्तु स मुनिर्जातपक्षान्कालिङ्गकान्।
ततः कदाचित्तांस्तत्र पश्यन्पक्षीन्यतव्रतः॥

टीका—पक्षीन्, आर्षो मत्वर्थीयः।

बभूव परमप्रीतस्तदा मतिमतां वरः।
तथा तानपि संवृद्धान्दृष्ट्वा तावाप्नुतां मुदम्॥
शकुनौ निर्भयौ तत्र ऊषतुश्चाऽऽत्मजैः सह।
जातपक्षांश्च सोऽपश्यदुड्डीनान्पुनरागतान्॥
सायं सायं द्विजान्विप्रो न चाकम्पत जाजलिः।

टीका—द्विजान्, शकुन्तान्।

तथा ते दिवसं चापि गत्वा सायं पुनर्नृप।
उपावर्तन्त तत्रैव निवासार्थं शकुन्तकाः॥
कदाचिद्दिवसान्पञ्च समुत्पत्य विहंगमाः।
षष्ठेऽहनि समाजग्मुर्न चाकम्पत जाजलिः॥
क्रमेण च पुनः सर्वे दिवसान्सुबहूनथ।
नोपावर्तन्त शकुना जातप्राणाः स्म ते यदा॥

कदाचिन्मासमात्रेण समुत्पत्य विहंगमाः ।
नैवागच्छंस्ततो राजन्प्रातिष्ठत स जाजलिः ॥
ततस्तेषु प्रलीनेषु जाजलिर्जातविस्मयः ।

टीका—प्रलीनेषु प्रडीनेषु ।

सिद्धोऽस्मीति मतिं चक्रे ततस्तं मान आविशत् ॥

टीका—मानो गर्वः ।

स तथा निर्गतान्दृष्ट्वा शकुन्तान्नियतव्रतः ।
संभावितात्मा संभाव्यो भृशं प्रीतमनाऽ*भवत् ॥
स नद्यां समुपस्पृश्य तर्पयित्वा हुताशनम् ।
उदयन्तमथाऽऽदित्यमुपातिष्ठन्महातपाः ॥
संभाव्य चटकान्मूर्ध्नि जाजलिर्जपतां वरः ।
आस्फोटयत्तथाऽऽकाशे धर्मः प्राप्तो मयेति वै ॥

टीका—संभाव्य, वर्धयित्वा । आस्फोटयत् , बाहुशब्दमकरोत् ॥

अथान्तरिक्षे वागासीत्तां च शुश्राव जाजलिः ॥
धर्मेण न समस्त्वं वै तुलाधारस्य जाजले ।
वाराणस्यां महाप्राज्ञस्तुलाधारः प्रतिष्ठितः ॥
सोऽप्येवं नार्हते वक्तुं यथा त्वं भाषसे द्विज । इति ।

अत्र निर्विचेष्टः समाहित इत्युक्तेरसंप्रज्ञातसमाधिस्थत्वं किं(कं)चित्कालमवगम्यते तेन सुप्तप्रारब्धत्वम् । कस्यचिदुपदेशं विनैव तथाऽऽकस्मिकोद्योगं विना च शनैस्तपसे स्वयमेवोद्युक्तत्वात्स्वेच्छात्वम् । अज्ञत्वं तु स्पष्टमेवेति भावः ॥ २२ ॥

सति च परेच्छासुप्ते तदाऽप्यसौ प्राग्वदेव सुखमग्नः ।
अनुभूतेः पूर्वं गुरुवचनाच्छान्तो भगीरथोऽत्र यथा ॥ २३ ॥

असावज्ञः प्राग्वदेव विदेहवदेव । अनुभूतेरिति । उक्तं हि बृहद्योगवासिष्ठे निर्वाणप्रकरणपूर्वार्धे त्रितलसंज्ञकं मुनिं निर्विण्णो मुमुक्षुर्भगीरथ उवाच—

शरीरेऽस्मिंश्चिरारूढो गिरौ तरुरिव स्वके ।
अहंभावो महाभाग वद मे त्यज्यते कथम् ॥

त्रितल उवाच—पौरुषेण प्रयत्नेन त्यक्त्वा भोगौघभावनाम् ।

गत्वा विकसितां सत्तामहंकारो विलीयते ॥

---

* अत्र संधिरार्षः ।

यन्त्राणां पञ्जरं यावद्भग्नं लज्जादिनाऽखिलम् ।
अकिंचनत्वशेषेण स्फुटा तावदहंकृतिः ॥
सर्वमेतद्धिया त्यक्त्वा यदि तिष्ठसि निश्चलः ।
तदहंकारविलये त्वमेव परमं पदम् ॥

इति गुर्वाज्ञावशादग्रिमसर्गे सर्वस्वदक्षिणे ज्योतिष्टोमे सर्वं धनादि ब्राह्मणेभ्यो दत्त्वा राज्यमपि स्वशत्रवे दत्त्वा परिधानमात्रशेषेण देहेनारण्यं गत्वा भगीरथः—

इत्यनल्पेन कालेन प्रशान्तसकलैषणः ।
परमेण शमेनासावाप विश्रान्तिमात्मनि ॥

इति श्रीवसिष्ठैः श्रीरामं प्रति । तत्र परमेण शमेनेत्युक्तेर्निर्विकल्पसमाधिर्गम्यते तस्यैव परमशमत्वात् । आप विश्रान्तिमात्मनीत्युक्तानुभूतेः पूर्वमसंप्रज्ञातसमाधिस्थस्य भगीरथस्य त्रितलाख्यगुरुप्रेरणया प्रवृत्तत्वात्परेच्छासुप्तप्रारब्धमज्ञत्वे सत्यपीत्याशयः ॥ २३ ॥

तत्रानिच्छासुप्ते भवति तथैव स्थितः समाधौ सः ।
तत्त्वोदयात्पुरा सा राक्षस्यपि कर्कटी यद्वत् ॥ २४ ॥

तत्र तस्मिन्प्रारब्धे । तथैव विदेहवदेव । सोऽज्ञः । तत्त्वोदयादिति । कर्कटीनाम्नी काचिद्राक्षसी बृहच्छरीरत्वात्क्षुच्छान्तिमलभमाना सतीत्युपक्रम्योत्पत्तिप्रकरणे योगवासिष्ठे ह्येवमुपाख्यातम्—

तपः करोमि परममखिन्नेनैव चेतसा ।
इति संचिन्त्य सा सर्वजन्तुजातजिघांसया ॥

इत्यादिना तस्यास्तप एकसहस्रसंवत्सरमुक्त्वा ततः प्रत्यक्षीभूते चतुर्मुखे कर्कट्युवाच—

भगवन्भूतभव्येश स्यामहं जीवसूचिका ।
अनायसी चाऽऽयसीव विधे दास्यसि चेद्वरम् ॥

वसिष्ठ उवाच—

एवमस्त्विति तामुक्त्वा पुनराह पितामहः ।
सूचिका सोपसर्गा त्वं भविष्यसि विषूचिका ॥

इति दत्ते वरे—

सगुणं निर्गुणं चैव जनमासादयिष्यसि ।
सगुणानां चिकित्सार्थं मन्त्रोऽयं तु मयोच्यते ॥

इत्यादिना तच्छामकं मन्त्रमुक्त्वा ततः साऽनेकदेहिनः पीडयित्वा ।

सूच्यां मयि हताशायां मनागपि न माति हि ।
स्वादुमांसरसग्रासो वसा वा रक्तमेव च ॥

इति संचिन्त्य चित्तस्थं संहृत्य जनमारणम् ।
तदेव हिमवच्छृङ्गं जगाम तपसे पुनः ॥
सर्वतश्चित्तमाकृष्य निर्वेद रसगर्भिणी ।
सूचीदेहेन सोद्विग्ना तेपेऽतिकठिनं तपः ॥
निःसंकल्पा निराहारा निस्तरङ्गमनोमयी ।
अथ वर्षसहस्रान्ते सा प्राप परमां दशाम् ॥
बभूव निर्मला सूची तपसा क्षीणकिल्विषा ।
जाता विदितवेद्या सा स्वयमेव तया धिया ॥
ततो वर्षसहस्राणि निःसंकल्पतया तया ।
तस्थौ निखिलसंसारहेयतां हृदि कुर्वती ॥

इत्यादिश्रीवसिष्ठेन श्रीरामं प्रति । अत्र कर्कट्या स्वप्राक्तनदेहावाप्तिपूर्वकक्षुन्निवृत्त्यर्थमेव पुनरपि तपः कृतमिति स्वादुमांसेत्यादिसूचीदेहेन सोद्विग्नेत्यन्तेन ज्ञायते । तेन कठिनतरतपःकरण एव तदिच्छा । तदेवोक्तं—निःसंकल्पेति । निःसंकल्पा निरुक्तेच्छेतरसंकल्पशून्या । निराहारा त्यक्तसर्वाशना । तप इति । 'तपो नानशनात्परं यद्धि परं तपस्तद्दुर्द्ध(र्ध)र्षं तद्दुराधर्षं तस्मात्तपसि रमन्ते ' इति तैत्तिरीयशाखायां नारायणोपनिषत्संज्ञकान्तिमप्रश्नश्रुतेस्तादृशानशनाख्यपरमतपःप्रभावात्स्वयमनिच्छन्त्यपि निस्तरङ्गमनोमयी निस्तरङ्गं निर्विकल्पसमाधिस्थत्वेन सुप्तिवत्सर्ववृत्तिरहितं यन्मनस्तन्मयी तत्प्रचुरा भूत्वा । अथ तादृशासंप्रज्ञातसमाधेरीश्वरेच्छयैव लाभोत्तरं परमां दशां प्रापेति योज्यम् । तत्र हेतुः—बभूवेति । दशामेव विवृणोति—जातेति । स्वयमेव । अनिच्छाप्रारब्धरूपेश्वरेच्छयैवेत्यर्थः । तया धिया सा विदितवेद्या जातेत्यन्वयः । तयेतिसर्वनाम्ना या निःसंकल्पमनोमयीत्यनेनोक्ताऽसंप्रज्ञातसमाधिरूपा धीस्तत्परामर्शः । तस्मादुक्ततत्त्वोदयात्पुरा वर्षसहस्रान्तं कर्कट्याः प्रारब्धमज्ञत्वेऽप्यनिच्छासुप्तमिति तात्पर्यम् ॥ २४ ॥

एतेन तत्त्वज्ञानं विना निर्विकल्पसमाधिर्नैव भवतीति केचित्ते परास्ताः । उक्तं हि चित्रदीपे मूलकारैरेव—

वैराग्योपरती पूर्णे बोधस्तु प्रतिबध्यते ।
यस्य तस्य न मोक्षोऽस्ति पुण्यलोकस्तपोबलात् ॥

इति ज्ञानं विनाऽप्युपरतेः पूर्णत्वमुक्त्वाऽग्रे तद्व्याख्यातुं 'सुप्तिवद्विस्मृतिः सीमा भवेदुपरमस्य हि' इति सुप्तिसाम्येन निर्विकल्पाख्यासंप्रज्ञातसमाधिमेवोपरतिसीमत्वेन वदद्भिः स्पष्टमेव विनाऽपि तत्त्वज्ञानं निर्विकल्पसमाधिसिद्धिरिति । एवं चोक्तभेदभिन्नस्य प्रारब्धत्वावच्छिन्नयावत्प्रारब्धस्य स्वपरेश्वरान्यतमयत्नापेक्षत्वाद्योगाभ्यासादिरूपशास्त्रीयप्रयत्नसाफल्यं

तदावश्यकता च सर्वथा सिद्धैव । अत एव श्रीमद्बृहद्वासिष्ठ उत्पत्तिप्रकरण एकादशोत्तरशततमसर्गे भगवानाह वसिष्ठः श्रीरामं प्रति—

स्वपौरुषैकसाध्येन स्वेप्सितत्यागरूपिणा ।
मनःप्रशममात्रेण विना नास्ति शुभा गतिः ॥
नूनं दैवमनादृत्य मूढसंकल्पकल्पितम् ।
पुरुषार्थेन संवित्त्या नय चित्तमचित्तताम् ॥ इति च ।

अत्र पुरुषार्थस्त्वद्वैतात्मतालक्षणो मोक्षः । संवित्तिरपरोक्षज्ञानं तया चित्तं तेनोक्तपुरुषार्थेन सहाचित्ततां नय निर्विकल्पतां प्रापयेत्यर्थः । अत्र प्रथमश्लोके विविदिषोश्चरमे तु विदुषोऽपि दैवानादरपुरःसरं मनःप्रशमनरूपप्रयत्नानुष्ठानोपदेश इति भावः । नन्वभिभवसाध्याया जीवन्मुक्तेरपि सुखातिशयरूपत्वेन प्रारब्धफल एवान्तर्भावादिति मूले तथा 'सुतवेगेऽतिनिर्विघ्नो निर्विकल्पसमाधिभाक्' इत्याद्युदाहृतानुभूतिप्रकाशवाक्ये च निर्विकल्पसमाधेः प्रारब्धफलत्वं वदद्भिः श्रीमद्विद्यारण्यगुरुभिस्तत्साम्यात्सुषुप्त्यादेरपि प्रारब्धफलत्वं प्रापितम् । तच्च श्रुतिपूर्वाचार्योक्तिविरुद्धम् । तथा हि श्रुतयस्तावत्—' सुषुप्तिकाले सकले विलीने तमोभिभूतः सुखरूपमेति ' । ' अनन्वागतं पुण्येनानन्वागतं पापेन तीर्णो हि तदा सर्वाञ्शोकान्हृदयस्य भवति' । 'न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्' इत्याद्याः सुषुप्तेः प्रारब्धकर्मफलाभावत्वं तस्यामवस्थायां सर्वलयपुण्यपापतत्फलाभावद्वैताभावप्रतिपादनैः कथयन्ति । तथा पूर्वाचार्योक्तयोऽपि—'यत्र सुप्तो न कंचन कामं कामयते न कंचन स्वप्नं पश्यति सुषुप्तस्थान एकीभूतः' इति माण्डूक्यश्रुतौ श्रीमद्भगवत्पादीयं भाष्यम्—यत्र यस्मिन्स्थाने काले वा सुप्तो न कंचन स्वप्नं पश्यति न कंचन कामं कामयते, न हि सुषुप्ते पूर्वयोरिवान्यथाग्रहणलक्षणं स्वप्नदर्शनं कामो वा कश्चन विद्यते । तदेतत्सुषुप्तं स्थानमस्येति सुषुप्तस्थानः स्थानद्वयप्रविभक्तं मनःस्पन्दितं द्वैतजातं तच्च यथारूपापरित्यागेनाविवेकापन्नं नैशतमोग्रस्तमिवाहः सप्रपञ्चमेकीभूत इत्युच्यत इति । 'अथ यदा सुषुप्तो भवति यदा न कस्यचन वेद ' इति बृहदारण्यकचतुर्थाध्यायप्रथमब्राह्मणैकोनविंशतिकण्डिकाश्रुतौ—

कर्मोत्थत्वात्प्रमात्रादेस्तत्क्षयेऽक्षयवत्त्वतः ।
षष्ठीयं कर्मणि न्याय्या द्वयाभावविवक्षया ॥

इति श्रीमत्सुरेश्वराचार्यवार्तिकम् । षष्ठी, कस्येति श्रुतिगतषष्ठी विभक्तिः । तथा पञ्चपादिकायामहंकारं प्रकृत्य ' यत्संभेदात्कूटस्थचैतन्योऽनिदमंश आत्मधातुरपि मिथ्यैव भोक्तेति प्रसिद्धिमुपागतः स च सुषुप्ते समुत्खातनिखिलपरिणामायामविद्यायां कुतस्त्यः ' इति श्रीमत्पद्मपादाचार्यवचनम् । तथाऽत्र विवरणकारवचनमपि—न( स ) च सुषुप्त इति ।

अज्ञानकार्यलिङ्गशरीरप्रविलयो हि सुषुप्तिरित्यर्थ इति । तथा संक्षेपशारीरकाचार्यवचनमपि—

स्वप्नश्च जागरितमप्युभयं तथैव मोहप्रसूतमपि कर्मफलं विभाति ।
कर्मक्षये तदखिलं परमात्ममायामाश्रित्य सूक्ष्ममवतिष्ठत एव लीनम् । इति ॥

एवमाद्याः क्रमेण सुषुप्तौ यावद्द्वैताभावकर्मोत्थप्रमात्राद्यभावभोक्त्रभावाज्ञानकार्यलिङ्गशरीराभावकर्मफलाभावप्रतिपादनैः सुषुप्तेः कर्मफलत्वशून्यत्वमेव बोधयन्ति । किंच श्रीमत्सर्वज्ञात्ममुनिभिस्तु कर्मक्षये तदखिलमित्युत्तरार्धेन तथात्वं सुप्तेः कण्ठत एवोक्तम् । तस्मादनुचितमिदं जीवन्मुक्तिसुखात्मकासंप्रज्ञातसमाधेः प्रारब्धकर्मफलत्वाङ्गीकरणमिति चेन्न । तद्व्यवस्थासंभवान्मूलकर्तुस्तात्पर्यस्य त्वयाऽनभिज्ञातत्वाच्च । तथा हि—सत्त्वादिगुणपरिणामभेदात्त्रिविधा निद्रा । तदुक्तं वार्तिकसारे मूलकारैरेव—

आहारादिविभेदेन सात्त्विकी राजसी तथा ।
तामसीति तथा सुप्तिः स्यात्परामृश्यते त्रिधा ॥
सुखमस्वाप्समद्याद्य दुःखमस्वाप्समद्य तु ।
गाढमूढोऽहमस्वाप्समित्युक्तिः सार्वलौकिकी ॥ इति ।

तत्र या सात्त्विकी राजसी च निद्रा सा तु प्रारब्धकर्मफलं या तु तामसी सैव मुख्या निद्रा सर्वलयावस्थेति निर्णीयते । तस्यामस्तु नाम कर्मफलत्वाभावः । न च सात्त्विकराजस्योस्तथात्वकल्पने किमपराद्धं तामस्यैव निद्रयेति वाच्यम् । 'तमोभिभूतः सुखरूपमेति' इत्यादिश्रुतिभिस्तमोगुणाकारपरिणताज्ञानावृतत्वस्यैव मुख्यसुषुप्तित्वोक्तेः । न च सुखमहमस्वाप्समित्यादिजाग्रत्कालीनपरामर्शेऽपि तदानीमहंकारावच्छिन्नचैतन्यरूपप्रमात्रभावेन कथं प्रारब्धफलत्वमित्यपि वाच्यम् । स्फुटाहंकाराभावेऽप्यस्मितारूपस्य सूक्ष्मस्य तस्य तत्र सत्त्वाङ्गीकारात् । न च त्रिविधस्वापोत्तरं सुखमहमित्यादिपरामर्शसाम्येऽपि तामसस्वापेतरत्रैव सूक्ष्माहंकाराङ्गीकरणे विनिगमनाविरह इति वाच्यम् । उक्तसुखाद्यनुभवस्यैव तत्र विनिगमकत्वात् । यद्यपि सुखानुभवस्य स्वरूपसुखाविषयकत्वेन जाग्रत्स्वप्नयोरिन्द्रियादेः श्रमोत्कर्षात्तत्र तदभावाद्दुःखाभावविषयत्वेन वाऽऽरोग्यवानहमद्य सुखीत्यादिवद्यथाकथंचिदुपपत्तिसंभवेऽपि दुःखानुभवस्य तदसंभवाच्च । न च शय्यादेरसमीचीनत्वेन दुःखमित्युपचाराद्दुःखमहमस्वाप्समितिप्रत्ययोपपत्तिरिति सिद्धान्तबिन्दौ मधुसूदनसरस्वतीभिस्तस्याप्युपपत्तिरुक्तेति वाच्यम् । गत्यन्तरसंभवे तूपचारकल्पनाया अन्याय्यत्वात् । एतदस्वरसादेव तैरेव तत्रैवानुपदमथवेत्यादिग्रन्थेनोक्तसुप्तित्रैविध्यप्रतिपादकप्रत्येकावस्थात्रैविध्याविधानाच्च । न च दुःखपरामर्शान्यथानुपपत्त्या सुप्तित्रैविध्यकल्पनं ततस्तत्र सूक्ष्माहंकृतिकल्पनं कर्मफलत्वकल्पनं च तथा तत्सामान्येऽपि तामससुप्तौ तदकल्पनं चेति गौरवाद्वरमुक्तोपचारकल्पनमेव लाघवादिति वाच्यम् । प्रमा-

णसिद्धे वस्तुनि गौरवस्यादोषत्वात्सर्ववादिसंमतत्वाच्च । प्रमाणं तु—‘ त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यद्भवेत् ’ ‘ आनन्दभुक्चेतोमुखः प्राज्ञः ’ इत्याद्याः श्रुतय एव । ननु तर्हि पूर्वोदाहृत[स्य] ‘सुषुप्तिकाले सकले विलीने तमोभिभूतः सुखरूपमेति’ इत्यादिश्रुत्यादेः का गतिरिति चेच्छृणु । उक्तश्रुत्यादीनि वचांसि निरुक्ततामसाख्यसुषुप्तिसंज्ञकमुख्यस्वापावस्थाविषयाणि । त्रिषु धामस्वित्यादीनि तु सात्त्विकादिसुषुप्तिजाग्रदाद्याख्यगौणसुप्त्यवस्थापराणीति । एवंचावस्थात्रयस्यापि त्रैविध्याङ्गीकारात्सुषुप्तावपि दुःखमुपपद्यते । तथा हि— प्रमाज्ञानं जाग्रज्जाग्रत् । शुक्तिरजतादिविभ्रमो जाग्रत्स्वप्नः । श्रमादिना स्तब्धीभावो जाग्रत्सुषुप्तिः । एवं स्वप्ने मन्त्रादिप्राप्तिः स्वप्नजाग्रत् । स्वप्नेऽपि स्वप्नो मया दृष्ट इति बुद्धिः स्वप्नस्वप्नः । जाग्रद्दशायां कथयितुं न शक्यते स्वप्नावस्थायां यत्किंचिदनुभूयते तत्स्वप्नसुषुप्तिः । एवं सुषुप्त्यवस्थायामपि सात्त्विकी या सुखाकारा वृत्तिः सा सुषुप्तिजाग्रत् । तदनन्तरं सुखमहमस्वाप्सामिति परामर्शः । तत्रैव या राजसी वृत्तिः सा सुषुप्तिस्वप्नः । तदनन्तरमेव दुःखमहमस्वाप्सामिति परामर्शोपपत्तिः । एवं तामसी वृत्तिः सुषुप्तिसुषुप्तिः । तदनन्तरं गाढमूढोऽहमासमिति परामर्शः । यथा चैतत्तथा वासिष्ठवार्तिकामृतादौ स्पष्टमिति सिद्धान्तबिन्दौ मधुसूदनसरस्वतीभिः सुषुप्तौ दुःखोपपत्त्यर्थं प्रत्येकमवस्थात्रैविध्यकरणं सुषुप्तेरपि जाग्रदादिसंज्ञाकरणं तत्र प्रमाणकथनं च यत्कृतं तत्सर्वमुपपद्यते । अन्यथा कर्मफलत्वं विना सुषुप्तौ दुःखोक्तेर्गुणक्षोभस्य च निर्निमित्तत्वापत्तिः । किंच ‘ अभावप्रत्ययालम्बनी वृत्तिर्निद्रा ’ इति पातञ्जलयोगसूत्रव्याख्याने नागोजिभट्टेनैवमेव सौषुप्तिकश्रुतिविरोधपरिहारव्यवस्थापनं कृतम् । तद्यथा— ननु वृत्तिं विना स्वापस्य साक्षिभास्यत्वेनैव स्मरणमस्त्विति चेन्न । तद्विषयस्मृतेश्चित्ताश्रितत्वाभावापत्तेः । अन्येनान्यदृष्टास्मरणात् । साक्षिणि तत्स्मरणमसंभवि संस्काराभावात्स्मृत्याख्यपरिणामासंभवाच्च । अत एव ‘ त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यद्भवेत् ’ इति श्रुत्या सुषुप्तेऽपि भोग्यसत्त्वोक्ता । न च ‘न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्’ इति सुषुप्तश्रुतिविरोधः, तया हि तदानीं ज्ञानाभाव एवावगम्यत इति वाच्यम् । अर्धसमग्रभेदेन सुषुप्तद्वैविध्यात् । अर्धपराऽऽद्या श्रुतिरत्यन्तपरा द्वितीयेत्यविरोध इति । नन्वेवंरीत्या गाढेतरसुषुप्तौ यदि सुखदुःखानुभवात्कर्मफलत्वं स्वीक्रियते तर्ह्यादर्शकारेण कथमुक्तम्—

सुषुप्त्यवस्थासुखदुःखभोगो विनाऽपि कर्मास्य तथा प्रतीतेः ।
तत्राप्यविद्यागुणवृत्तमेतन्निवृत्तिरस्याः परमः पुमर्थः ॥

इत्यस्मिन्पद्ये विनाऽपि कर्मेति । तथैतट्टीकायामपि कथं व्याख्यातमहं सुखमस्वाप्सं दुःखमस्वाप्समिति प्रतीतेर्विनाऽपि कर्म निमित्तकारणं कर्म विनाऽपि सुखदुःखभोगः सुषुप्त्यवस्थायामनुभवसिद्ध इत्यर्थ इति चेन्न। अत्र कर्मशब्देन क्रियापरपर्यायस्य देहेन्द्रियमानसान्यतमव्यापारस्यैव मूले टीकायां च विवक्षितत्वात्तदाशयस्य त्वयैवाज्ञातत्वाच्च । यदत्र कर्म॰

शब्दः प्रसिद्धप्रारब्धपरस्तदाशयगोचरः स्यात्तर्हि जीवानां सुखाद्यवाप्तिः कर्मफलत्वाभावेऽप्यविद्यागुणक्षोभद्वारेश्वरेच्छया भवतीति तेनाङ्गीकृतं स्यात् । तत्तु सूत्रादिविरुद्धम् । तथा हि—भगवान्सूत्रकारः श्रीमद्बादरायणाचार्यो द्वितीयाध्यायप्रथमपादे परमेश्वरस्य जगत्सृष्टौ नित्यपूर्णकामतया प्रयोजनाभावेऽपि 'लोकवत्तु लीलाकैवल्यम्' इतिसूत्रेण लीलया जगत्कर्तृत्वमुक्त्वा तत्रैवं तर्हि स किमिति कांश्चिज्जीवान्सुखिनः कांश्चिद्दुःखिनश्च करोतीत्याशङ्कापाकरणार्थमसूत्रयत्—'वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति' इति । तथा तत्रैव श्रीमद्भगवत्पादीयं भाष्यम्—अतः सृज्यमानप्राणिधर्माधर्मापेक्षा विषमा सृष्टिरिति नायमीश्वरस्यापराध इति । पुनश्च भाष्यं—तथा हि दर्शयति श्रुतिः—'एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषत एष उ एवासाधु कर्म कारयति तं यमधो निनीषते' इति 'पुण्यो वै पुण्येन कर्मणा भवति पापः पापेनेति च' इति । अत्र रामानन्दीयं व्याख्यानमपि—न च कंचिज्जनं साधु कंचिदसाधु कर्म कारयतो वैषम्यतादवस्थ्यमिति वाच्यम् । अनादिपूर्वार्जितसाध्वसाधुवासनया स्वभावेन जनस्य तत्तत्कर्मसु प्रवृत्तावीश्वरस्य साधारणहेतुत्वादतोऽनवद्य ईश्वर इति भाव इति । एतेन केवलकर्मवादः केवलेश्वरवादश्च व्याख्यातः । तथा तैत्तिरीयोपनिषदि ब्रह्मवल्लीप्रश्ने श्रीसुरेश्वराचार्यप्रणीतं 'सोऽकामयत बहु स्यां प्रजायेयेति' इतिश्रुतौ वार्तिकमपि—

आत्मस्थे ये नामरूपे देशकालाद्यपेक्षिणी ।
जगत्कर्मवशादीशाद्व्यज्येते बहुधाऽऽत्मनः ॥ इति ।

अत्राऽऽकाशादिसृष्टिरपि प्राण्यदृष्टसापेक्षेणैवेश्वरेण क्रियत इति वदद्भिः श्रीमत्सूत्रकारादिभिर्जीवस्य सुखादिभोगस्तु तत्कर्मैकसाध्य इति किमु वक्तव्यमिति द्योतितम् । तस्मात्तद्विरुद्धः सुप्तौ विनाऽपि कर्म सुखाद्यङ्गीकार इति नोक्तादर्शपद्यादौ कर्मशब्देन प्रारब्धं ग्राह्यं किंतु निरुक्तव्यापार एवेति सिद्धम् । किंच तट्टीकायामपि कर्म निमित्तकारणं कर्मेति व्याख्यातं तदपि कर्मशब्देन व्यापारे गृहीत एव संगतं स्यात् । यदि प्रारब्धस्य निमित्तकारणत्वं सुखादिभोगं प्रति स्यात्तदा प्रारब्धनाशेऽपि तदापत्तिः । न हि दण्डे नष्टे घटो नश्यतीति । न च पूर्वोक्तसिद्धान्तबिन्दुवाक्यस्य न्यायरत्नावल्याख्ये ब्रह्मानन्दसरस्वतीकृते व्याख्याने सुखादेरुपादानं तु सत्त्वादिकमेवोक्तम् । तथा हि—अथ वा सुखरूपेण परिणतसत्त्वगुणविषयिका सात्त्विकी । दुःखरूपेण परिणतरजोगुणविषयिका राजसी । मोहरूपेण परिणततमोगुणविषयिका तामसी । न च सत्त्वादिगुणपरिणामरूपा वृत्तिः सात्त्विक्यादिरूपाऽऽत्मसुखविषयिक्येव सुखाकारेत्यस्य सर्वत्रानुषङ्गादिति वाच्यम् । दुःखविषयकज्ञानं विना दुःखविषयकस्मृत्यसंभवात् । ज्ञानरूपाविद्यावृत्तेः सत्त्वान्यगुणपरिणामित्वासंभवात् । सत्त्वात्संजायते ज्ञानमिति स्मृतेः सुखादिरूपेण परिणामे तु धातुसाम्यादिकमेव निमित्तमिति । तेन प्रारब्धकर्मणः सर्वत्र निमित्तकारणत्वमेव सुखादाविति वाच्यम् । तत्र धातुसाम्यादिक-

मेव निमित्तमिति सावधारणं धातुसाम्यादेरेव निमित्तत्वोक्तेः प्रारब्धस्य घटं प्रति कपालद्वयसंयोगवद्यावत्कार्यस्थायित्वरूपासमवायिकारणत्वस्यैव द्योतितत्वात् । न च धातुसाम्यादेरपि हेत्वन्वेषणे प्रारब्ध एव पर्यवसानान्निमित्तकारणत्वमपि तस्य वक्तव्यमेव । तथात्व एकस्यासमवायिकारणत्वं निमित्तकारणत्वं च विरुद्धमेव । अतो निमित्तत्वमेवोक्तटीकासंमतं तन्नाशेऽपि भोगापत्तिस्त्वस्मदिष्टैवात एवाऽऽदर्शे विनाऽपि कर्मेत्युक्तमिति वाच्यम् । धातुसाम्यादिकार्यं प्रति प्रारब्धस्य निमित्तत्वेऽसमवायित्वे वा तज्जन्यसुखाद्याकारेण सत्त्वादिपरिणामं प्रति प्रारब्धान्तर्गतकर्मविशेषस्यासमवायिकारणत्वसंभवात्कर्मणां नानात्वस्य सर्वसंमतत्वाच्च । नन्वेवमपि ज्ञानरूपाविद्यावृत्तेरित्युदाहृतन्यायरत्नावलीवचनात्सुषुप्तौ मनोवृत्त्यनङ्गीकारात्प्रमात्रभावात्कथं तत्र प्रारब्धभोगाङ्गीकार इति चेन्न । इदंकारात्मकमनोवृत्तेः स्थूलाहंकारस्य चाभावेऽप्युक्तसुप्तौ सूक्ष्माहंकारात्मकान्तःकरणसत्त्वाङ्गीकारेण स्थूलप्रमात्रसत्त्वेऽपि सूक्ष्मस्य तस्य सत्त्वात्तस्य सुखानुभूतेस्त्वविद्यावृत्त्यात्मकताया एव संभवात्तत्र प्रारब्धभोगस्योक्तरीत्या सुवचत्वाच्च । अत एव श्रीमत्सर्वज्ञात्ममुनीश्वरचरणैः संक्षेपशारीरकतृतीयाध्याये—'साक्षित्वमात्मतमसा मतिकञ्चुकेन मातृत्वमेतदपि नेह सुषुप्तिकाले' इत्यत्र मतिकञ्चुकेन बुद्धिकवचेन यन्मातृत्वं प्रमातृत्वमेतदपीह सुषुप्तिकाले बुद्धिसंबन्धाभावान्नेति सुप्तौ प्रमातृरूपाहंकाराभावमुक्त्वा तत्रैवाग्रे—'त्वय्येव कल्पितमहंकरणं बिभर्ति तिस्रोऽपि ताः सहितमेव तु तच्च ताभिः' इत्यत्राहंकारस्वीकारः सुप्तावपि कृतः । ननु यद्यप्यत्र प्रमात्रभावोक्तिर्गाढसुषुप्तिविवक्षया तत्स्वीकारोक्तिरर्धसुषुप्तिविवक्षयेति त्वया स्वमतानुगुण्येन वाक्यद्वयलापनं कृतं तथाऽपि यदि गाढसुप्तिस्तिस्रोऽपीत्युक्तावस्थात्रयतो भिन्ना तर्हि तस्या अहंकारसंबन्धित्वाभावेन साक्षिसंबन्धित्वापत्तिः, यदि सा तत्रैवान्तर्भूता तर्हि तस्यामहंकाराभावप्रतिपादकपूर्ववाक्यासंगत्यापत्तिश्चेति चेन्न । तद्व्यवस्थासंभवात् । तथा हि—अविद्यायास्तावदावरणादिशक्तिभेदात्तदवच्छिन्नादिरूपस्य जीवस्याप्यावरणावस्था विक्षेपावस्था चेति साधारणव्यवस्थाद्वयम् । तत्राऽऽवरणावस्था तु केवलं मूलाज्ञानमेव । विक्षेपावस्था तावन्मूलाज्ञानभिन्नयावद्द्वैतरूपा । तदुक्तं संक्षेपशारीरके—

आच्छाद्य विक्षिपति संस्फुरदात्मतत्त्वं जीवेश्वरत्वजगदाकृतिभिर्मृषैव ।
अज्ञानमावरणविभ्रमशक्तियोगादात्मत्वमात्रविषयाश्रयताबलेन ॥ इति ।

विक्षेपावस्थायामप्यन्तःकरणलयनिरोधचाञ्चल्यभेदात्त्रैविध्यम् । तत्र लयावस्था तावत्सुप्तिमूर्छामृतिपुनःशरीरप्राप्तिदैनंदिनादिप्रलयस्थितिभेदात्पञ्चधा । तत्रापि सात्त्विकादिपूर्वोक्तभेदात्त्रेधा सुप्तिः । मूर्छाऽपि कफपित्तादिनिमित्तभेदाद्बहुधैव माधवनिदानादौ वर्णिता तथा विशिष्टशृङ्गाराद्युद्दीपनादिसामग्रीभेदादनेकधाऽसौ रसशास्त्रेऽप्युक्ताऽस्ति परं तु प्रकृतानुपयुक्तत्वान्नात्र प्रपञ्च्यते । मृत्यादित्रयस्य तु प्रत्येकमेकविधत्वमेव परं तु स्थूलशरीरान्निर्गमनं मृतिः, शरीरवियोगक्षणमारभ्य पुनः सुखाद्युपलब्धिपूर्वक्षणपर्यन्तमवस्थितिः पुनःशरीर-

प्राप्तिः, समष्टिलिङ्गशरीरलयादिदैनंदिनादिप्रलयस्थितिरिति लक्षणभेदादसांकर्यम् । तेन गर्भे कललाद्यवस्थायामपि दुःखादिसत्त्वेन प्रारब्धभोगसत्त्वान्न लयावस्थात्वम् । यदा तु तत्र तदभावस्तदा पाषाणादिवद्गाढसुप्तिरेव । कललावस्थायां दुःखोपलब्धिरुक्ता सूतसंहितायाम्—

गर्भं तु कललावस्थं कृमिभिर्भक्षितं भवेत् ।
दुःखमेव तदा सौख्यं न किंचिदपि विद्यते ॥ इति ।

अत्र टीका माधवी—मातुर्गर्भाशय एकरात्रोषितं शुक्रशोणितं कललमिति । 'गर्भो भ्रूण इमौ समौ' इत्यमरसिंहोक्तेर्गर्भमिति क्लीबत्वमार्षम् । ननु मोक्षधर्मेषु—

सुखदुःखयोश्च ग्रहणाच्छिन्नस्य च विरोहणात् ।
जीवं पश्यामि वृक्षाणामचैतन्यं न विद्यते ॥

इति वृक्षाणां सजीवतोक्तेस्तेषां सुखाद्युपलब्धौ न विवादः परं तु पाषाणादीनां किं निर्जीवत्वं वा सजीवत्वम् । आद्ये हिमवदादीनां पुराणादौ व्यवहारवर्णनबाधः । अन्त्ये—

चित्रस्थपर्वतादीनां वस्त्राभासो न लिख्यते ।
सृष्टिस्थमृत्तिकादीनां चिदाभासस्तथा न हि ॥

इति चित्रदीपस्थमूलकारोक्तिविरोधः । तस्माद्धिमवदादीनामधिकारिजीवत्वाद्देवतात्वाच्च तथात्वेऽपि सामान्यपाषाणादेर्निर्जीवत्वमेव वाच्यं नो चेदियमप्येका षष्ठी लयावस्था स्यादिति चेन्न । पाषाणादीनां सजीवत्वेऽपि यदा तेषां भेदनादिना दुःखोपलब्धिस्तदा जागरोऽन्यदा तु गाढसुप्तिरेवेति निरुक्तलयावस्थेतरावस्थाभावात् । पाषाणादीनां सजीवत्वं तु—

निद्रामयानां वृक्षाणां स्वसत्तामचलादयः ।
स्थिता अनुभवन्तोऽन्ये चिदाकाशमखण्डितम् ॥

इति निर्वाणप्रकरणे बृहद्वासिष्ठे निद्राप्रचुराणां सुषुप्तिस्थानां वृक्षाणां या गाढमूढतया स्वसत्ता तामचलपाषाणादयोऽनुभवन्तः स्थिताः । अन्ये हिमवन्मेर्वादयस्तत्त्वज्ञपर्वतास्त्वखण्डितं चिदाकाशमनुभवन्तः सदा समाधौ स्थिता इत्यर्थ इत्येतट्टीकायां च, तथोदाहृतमोक्षधर्मवचनप्रघट्टकेऽपि वृक्षानुपक्रम्य म्लायते शीर्यते चापीतिवचनव्याख्याने शीर्यत इत्यनेन वज्रमणेरपि मत्कुणशोणितस्पर्शाच्चेतनत्वं व्याख्यातमिति, तथा तत्रैव मूले पादैः पिबति पादप इति पदस्य व्याख्यान एतेन क्षीरादिपायिनः पारदादेरपि चेतनत्वं व्याख्यातमिति चोक्तेः सिद्धम् । ततो हेमादिधातूनामप्युत्कटाग्निसंयोगे द्रुतत्वात्तत्तत्रसरेण्वन्तं सजीवत्वं ज्ञेयम् । अत्र समष्टिव्यष्टिकल्पनात्सर्वोऽपि जीवव्यवस्था बोद्धव्या । सृष्टिस्थमृत्तिकेत्यादिवचस्तु केवलमृत्त्रसरेणुपरम् । आदिपदाद्गङ्गादिभिन्नसामान्यजलग्रह इत्य-

विरोधः। तथा निरोधावस्थाऽपि संप्रज्ञातासंप्रज्ञातसंज्ञकसमाधिभेदाद्द्विधा। एतयोरपि ज्ञानाज्ञानपूर्वकत्वेन पुनर्द्वैविध्यम्। एवं चाञ्चल्यावस्थाऽपि जाग्रत्स्वप्नभेदाद्द्विधा। एतयोरपि पूर्वोक्तजाग्रदादिभेदात्प्रत्येकं त्रैविध्यं ज्ञेयम्। तत्र प्रमाज्ञानरूपायां जाग्रज्जाग्रति तथा स्वप्नेऽपि मन्त्रादिप्राप्तिरूपायां स्वप्नजाग्रति च सति प्रमातरि बाध्यमानत्वाद्व्यावहारिकोऽहंकारः। उपलक्षणमिदं संशयधारावाहिककार्याहार्यस्मृतिरूपसाधारणजाग्रतोऽपि। तत्र संशयः प्रसिद्धः। घटो घट इत्याकारकः सततप्रत्ययो धारावाहिकं ज्ञानम्। शालग्रामे विधितो विष्णुत्वधीः कार्यं ज्ञानम्। माणवके प्रेम्णा चिन्तामणिबुद्धिर्बाधकालीनमिच्छाजन्यमाहार्यं ज्ञानम्। स्मृतिस्तु संस्कारजन्या स्फुटैवेति ज्ञेयम्। शुक्तिरजतादिविभ्रमरूपे जाग्रत्स्वप्ने तथा स्वप्नेऽपि स्वप्नो मया दृष्ट इति बुद्धिरूपे स्वप्नस्वप्ने साधारणस्वप्ने च सति प्रमातर्यबाध्यमानत्वात्प्रातिभासिकोऽहंकारः। तथा ज्ञानाज्ञानकालिकसंप्रज्ञातसमाधौ श्रवणाद्युत्तरमहं ब्रह्मास्मीतिवृत्तिसातत्यरूपे निदिध्यासने तथा श्रवणाद्यभावेऽपि तादृग्रूपे निर्गुणोपासने च स्थूलाभासो व्यावहारिकोऽहंकारः। ज्ञानादिकालिकसगुणादिध्यानधारणाप्रतीकाद्युपास्तिषु तु धारावाहिकाभः स्थूल एव सः। श्रमादिना स्तब्धीभावरूपायां जाग्रत्सुप्तौ सूक्ष्माभासो व्यावहारिकोऽहंकारः। एतेन—

समाधौ क्रियमाणे तु विघ्ना आयान्ति वै बलात्।
अनुसंधानराहित्यमालस्यं भोगलालसम्॥
लयस्तमश्च विक्षेपो रसास्वादश्च शून्यता।

इत्यपरोक्षानुभूतौ ये समाधिविघ्ना उक्ताः, तथा—

लये संबोधयेच्चित्तं विक्षिप्तं शमयेत्पुनः।
सकषायं विजानीयात्समप्राप्तं न चालयेत्॥

इति माण्डूक्यकारिकायां कषायोऽप्युक्तः। तत्र रागादिना स्तब्धीभावः कषायः, तथाऽनुसंधानराहित्यमालस्यं च व्याख्यातम्। तत्रापि तादृगहंकारस्यैव सत्त्वात्। एवं जाग्रद्दशायां कथयितुं न शक्यते स्वप्नावस्थायां यत्किंचिदनुभूयते तत्स्वप्नसुषुप्तिरिति स्वप्नसुषुप्तावपि सूक्ष्माभासः प्रातिभासिकोऽहंकारः। किंच सुप्तौ सुखाकाराविद्यावृत्तिरूपायां सुप्तिजाग्रत्संज्ञिकायां सात्त्विकसुप्तौ तथा ज्ञानाज्ञानकालिकासंप्रज्ञातसमाध्योश्च व्यावहारिकः सूक्ष्मोऽहंकारः। तदनन्तरं सुखमहमस्वाप्सं सुखं समाहितोऽभूवमिति परामर्शात्। ननु ज्ञानोत्तरमस्तु नाम निर्विकल्पापरपर्यायोऽसंप्रज्ञातसमाधिस्तत्पूर्वं तु 'निर्विकल्पमनन्तं च हेतुदृष्टान्तवर्जितम्' इत्यादिश्रुतेर्ब्रह्मणो निर्विकल्पत्वात्तत्प्राप्तेस्तदानीमभावात्कथं तत्संभवः, तथा ज्ञानोत्तरमपि निर्विकल्पसमाधौ समुदाहृतश्रुतेरेव कथं सूक्ष्माहंकारसंभव इति चेन्न। अज्ञानदशायां सुप्तौ यथा सत्त्वाकारपरिणताविद्यावृत्त्या निर्विकल्पब्रह्मसुखप्राप्तिरेवं सत्त्वाकारपरिण-

तान्तःकरणवृत्त्या मूलाज्ञानावृतनिर्विकल्पब्रह्मसुखावाप्तिसंभवेनोक्तसमाधिसिद्धेः । तदुक्तं न्यायरत्नावल्यां ब्रह्मानन्दसरस्वतीभिः—समाधेस्त्वसंप्रज्ञातरूपस्याप्यविद्यानिवृत्तेः पूर्वमपि त्वंपदार्थसाक्षात्कारहेतुतयाऽनुष्ठेयत्वेन तदानीं जीवत्वसत्त्वेन त्वंपदवाच्यत्वानपायादिति । ज्ञानदशायामपि निर्विकल्पसमाधौ

' समाधिनिर्धूतमलस्य चेतसो निवेशितस्याऽऽत्मनि यत्सुखं भवेत् ।
न शक्यते वर्णयितुं गिरा तदा स्वयं तदन्तःकरणेन गृह्यते ' ॥ इतिश्रुतेः,

प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम् ।
उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥

इति स्मृतेः, शीतलनिर्मलनिश्चलजलनिलीनविमलस्फटिकशिलाशकलवत्तत्राप्रतिभासमानस्याप्यहंकारस्योक्तव्युत्थितपरामर्शान्यथानुपपत्त्यैवावश्यकल्प्यतारूपयुक्तेश्च सूक्ष्माहंकारसंभवात् । एतेनाज्ञानकालिकनिर्विकल्पकसमाधावपि तत्संभवप्रश्नः प्रत्युक्तः । तथा सुप्तावेव दुःखाकारपरिणताविद्यावृत्तिरूपायां सुप्तिस्वप्नाख्यायां राजससुप्तौ सूक्ष्मतरः प्रातिभासिकोऽहंकारः । तदानीं दुःखतत्कारणाभावाद्रजःपरिणामेनैव तथा भानात्तदनन्तरं दुःखमहमस्वाप्समिति परामर्शस्यापि सुखपरामर्शवत्स्फुटत्वाभावात्साति प्रमातर्यबाध्यमानत्वाच्च । एवं मोहमात्राकारपरिणताविद्यावृत्त्यात्मके सुप्तिसुप्तिसंज्ञके तामसस्वापे तथा मृतिमूर्छाप्रलयपुनर्देहप्राप्तिषु च सूक्ष्मतमो व्यावहारिकोऽहंकारः । तस्माद्गाढसुप्तिसमये सूक्ष्मतमाहंकारसत्त्वेऽपि तत्र तदभावप्रतिपादनं तु चन्द्रकान्तमणौ जलं नास्तीतिवत्प्रतीत्यभावाभिप्रायमेवेति गाढसुप्तेरपि सुप्तित्वादेव सूक्ष्मतमाहंकारसत्त्वात्साहंकारता स्फुटाहंकाराभावान्निरहंकारता च न विरुध्यत इति दिक् ।

पूर्वं सुखातिशयरूपत्वेन जीवन्मुक्तिसुखस्यापि प्रारब्धफल एवान्तर्भावमङ्गीकृत्य प्रारब्धफलत्वेन तत्रौदासीन्यं प्राप्तं तन्निरस्य प्रारब्धत्वावच्छिन्नयावत्प्रारब्धस्य यत्नं विना फलदानाशक्तत्वाच्छास्त्रीययत्नसार्थक्यादिकमुपपादितम् । सांप्रतं तु तृप्तिदीप एव प्रारब्धत्रैविध्यविवरणे यदुक्तं तदनुसारेण यत्ने तत्सापेक्षत्वमेव प्रायाति न तु यत्नस्य ततः प्राबल्यम् । तथा हीच्छानिच्छेतिप्रारब्धत्रैविध्यमुपक्रम्याऽऽहुः श्रीमद्भारतीतीर्थाः—

अपथ्यसेविनश्चोरा राजदाररता अपि ।
जानन्त एव स्वानर्थमिच्छन्त्यारब्धकर्मतः ॥
न चात्रैतद्वारयितुमीश्वरेणापि शक्यते ।
यत ईश्वर एवाऽऽह गीतायामर्जुनं प्रति ॥
सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ।
प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥
अवश्यंभाविभावानां प्रतीकारो भवेद्यदि ।
तदा दुःखैर्न लिप्येरन्नलरामयुधिष्ठिराः ॥

न चेश्वरत्वमीशस्य हीयते तावता यतः ।
अवश्यंभाविताऽप्येषामीश्वरेणैव निर्मिता ॥
प्रश्नोत्तराभ्यामेवैतद्गम्यतेऽर्जुनकृष्णयोः ।
अनिच्छापूर्वकं चास्ति प्रारब्धमिति तच्छृणु ॥
अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः ।
अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः ॥
काम एष क्रोध एष रजोगुणसमुद्भवः ।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥
स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा ।
कर्तुं नेच्छसि यन्मोहात्करिष्यस्यवशोऽपि तत् ॥
नानिच्छन्तो न चेच्छन्तः परदाक्षिण्यसंयुताः ।
सुःखदुःखे भजन्त्येतत्परेच्छापूर्वकं हि तत् ॥ इति ।

अत्र तु यदि जीवन्मुक्तिसुखप्रदं प्रारब्धकर्म स्यात्तर्हि तद्विद्वत्संन्यासादियत्नमपि संपाद्य तत्सुखं दास्यत्येव यदि न स्यात्तर्हि तत्र यत्नोदय एव न स्यादिति सदृशं चेष्टतेऽवश्यंभाविभावानां स्वभावजेन कौन्तेयेति वचनस्वारस्यादवगम्यते । एवं च पूर्वोक्तप्रारब्धचातुर्विध्यवादिमूलकारोक्तिरप्यनुभूतिप्रकाशस्था संगता स्यात् । तस्माद्व्यर्थमिदं विद्वत्संन्यासादियत्नविधानं जीवन्मुक्तिसुखार्थमिति प्रथमपक्षेऽस्वरसात्पक्षान्तरं प्रतिजानीते—

**अथ वा प्रारब्धं कर्म यथा तत्त्वज्ञानात्प्रबलं तथा तस्मादपि कर्मणो योगाभ्यासः प्रबलोऽस्तु ।**

**अथ वेति ।** अथेति पक्षान्तरारम्भार्थम् । वेत्युक्तास्वारस्यद्योतनार्थम् । तत्र दृष्टान्तं स्पष्टयति—**यथेति ।** यथा प्रारब्धं कर्म तत्त्वज्ञानात्प्रबलमस्तीत्यध्याहृत्य योजनीयम् । तथा च भगवद्बादरायणीयं सूत्रम्—'भोगेन त्वितरे क्षपयित्वा संपद्यते' इति । दार्ष्टान्तिके योजयति—**तथेति ।** तस्मादपि, प्रारब्धकर्मणोऽपीत्यर्थः । योगाभ्यास इत्युपलक्षणं सद्यःफलदातॄणां सर्वेषामपि वेदैकोक्तानां कारीर्यादीनां कर्मणाम् । ननु न योगाभ्यासः प्रारब्धतः प्रबलः, तदधीनत्वात् । यद्यस्य समाधिसुखदातृप्रारब्धं स्यात्तर्ह्येवायं योगाभ्यासे प्रवृत्तः स्यात्तदभावे तु नैव तत्र प्रवर्ततोपदेशशततोऽपि, दृष्टं चैवमेव लोके शास्त्रे च । तथा हि विदुरेणानेकधोपदिष्टोऽपि धृतराष्ट्रो नैव स्वहितं बुद्ध्वा तत्साधने प्रवृत्त इति श्रीमहाभारते प्रसिद्धम् । किंच मूलकारैरेवानुभूतिप्रकाशे सुप्तप्रारब्धाङ्गीकारेण योगसुखस्यापि प्रारब्धफलत्वमेव सिद्धान्तितमिति चेन्न । योगाभ्यासस्य क्रियमाणत्वेन प्रारब्धाधीनत्वाभावात् । क्रियमाणस्यापि प्रारब्धाधीनत्वाङ्गीकारे तद्बोधकविधिशास्त्रानर्थक्यापत्तेः । यत्तु तादृक्प्रारब्धाभावेनाप

ततोऽपि हितसाधने प्रवृत्त्यभावोपपादनं लोकशास्त्रनिदर्शनेन कृतं तदप्यापातरमणीयमेव। तथा हि लोके तावद्या या प्रवृत्तिः सा सेष्टसाधनताज्ञानाधीनेति सर्वत्रोत्सर्गः । तत्रोपदेशेऽपि यत्र प्रवृत्त्यभावो दृष्टस्तत्र बलवत्तरसंशयादिप्रतिबन्धवशादिष्टसाधनताज्ञानानुदयादेव प्रवृत्त्यभावो न तु तादृक्प्रारब्धाभावादिति नियम्यते । संभवत्यामिष्टसाधनताज्ञानरूपायां दृष्टसामग्र्यां प्रवृत्तिं प्रति प्रारब्धाख्यादृष्टसामग्रीकल्पनानौचित्यात् । एतेन शास्त्रीयं धृतराष्ट्रोदाहरणमपि प्रत्याख्यातम् । तस्याश्रद्धादिदोषवशाद्वा पुत्रादिममतारूपप्रतिबन्धाद्वा विदुरोपदिष्टे बलवदनिष्टाननुबन्धीष्टसाधनेऽपि तत्ताबुद्धेरेवानुदयात् । यदा तु ते प्रतिबन्धाः क्षीणास्तदा पुनर्विदुरकृतस्वल्पोपदेशमात्रादेव धृतराष्ट्रस्य सद्यस्तादृग्बुद्ध्युदयपूर्वकं स्वीययथार्थहितसाधनार्थं प्रवृत्तेः श्रीमद्भागवतप्रथमस्कन्धस्थत्रयोदशाध्याये समुपाख्यातत्वात् । तद्यथा—' विदुरस्तदभिप्रेत्य धृतराष्ट्रमभाषत ' इत्युपक्रम्य—

एवं राजा विदुरेणानुजेन प्रज्ञाचक्षुर्बोधित आजमीढः ।
छित्वा स्वेषु स्नेहपाशान्द्रढिम्नो निश्चक्राम भ्रातृसंदर्शिताध्वा ॥

इति तदुपदेशानुसारेण धृतराष्ट्रनिर्गमनमुक्त्वा—

ध्वस्तमायागुणोदर्को निरुद्धकरणाशयः ।
निवर्तिताखिलाहार आस्ते स्थाणुरिवाचलः ॥

इत्यन्तेन तस्य योगाभ्यासपुरःसरं ब्रह्मविद्याद्वारा सप्तमीभूमिकान्तं जीवन्मुक्तिर्वर्णिता । यत्तु मूलकारवचनमनुभूतिप्रकाशस्थं जीवन्मुक्तिसुखस्य प्रारब्धकर्मफलत्ववादीति त्वया स्वमतानुग्राहकमेवेत्युपपादितं तन्न । तद्वचनतात्पर्यस्य भिन्नत्वात् । तथा हि तत्र—

जीवन्मुक्तो रतिक्रीडामिथुनानन्दलक्षणान् ।
व्यवहारान्क्रमेणैति प्रारब्धस्यानुसारतः ॥

इत्यत्र प्रारब्धशब्देन ' तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च ' इति बार्हदारण्यकषष्ठाध्यायश्रुत्युक्तं यज्जीवस्य देहान्तरारम्भकं विद्यादित्रयं तद्विवक्षयोत्तरश्लोके सुखदुःखप्रदेत्यादिना तद्वेगचातुर्विध्यं विधाय ततस्तीव्रवेगेत्यादिश्लोकचतुष्टयेन तद्व्यवस्थया जीवन्मुक्तिसुखस्य विद्यादित्रयात्मकप्रारब्धफलत्वमुक्तम् । तदिदं विद्यादित्रयं श्रीमत्सुरेश्वराचार्यचरणनलिनरेणुभिरेतच्छ्रुतिव्याख्यानावसरे वार्तिकामृते विवृतम् । तद्यथा—

इतो जिगमिषुं विद्याकर्मणी ये पुराऽर्जिते ।
तं समन्वारभेते ते या चाभूत्पूर्ववासना ॥
विज्ञानं संशयज्ञानं मिथ्याज्ञानमथापि वा ।
प्रमाणतोऽप्रमाणाद्वा सर्वं विद्येति भण्यते ॥
संसारकारणध्वंसि यत्तु ज्ञानं परात्मगम् ।
तदत्र न परिग्राह्यं सर्वापत्कारणापनुत् ॥

संसारकारणं तस्मादात्मज्ञानविरोधि यत्।
अप्राप्तपरमार्थार्थं ज्ञानमात्रं जिवृक्षितम्॥
वाङ्मनःकायसाध्यं यच्छास्त्रतो यदि वाऽन्यतः।
दृष्टादृष्टार्थरूपं यत्तच्च कर्मेति गृह्यते॥
अन्वारभेते गच्छन्तं यथोक्ते ज्ञानकर्मणी।
गच्छन्तं पुरुषं यस्मादन्वेते स्वस्वभावतः॥
गच्छतोऽतोऽनुशब्दोऽत्र पश्चादर्थे प्रयुज्यते।
गमनादिविधौ पुंसः साधनत्वं निगच्छति॥
कर्मणः क्रियमाणस्य संस्कारो यो हृदि श्रितः।
तत्फलस्य प्रभुक्तस्य पूर्वप्रज्ञेति सोच्यते॥
पूर्वोपचितसंस्कारहेतुभ्यः साऽभिजायते।
षण्मासशेषप्रोद्भूता वासना याऽस्य देहिनः॥
मरिष्यतोऽन्यदेहार्थं पूर्वप्रज्ञेति तां विदुः।
समर्था सैव ते यस्मादुद्बोढुं ज्ञानकर्मणी॥
नरस्यातः प्रधानत्वात्पृथक्तस्माद्ग्रहः कृतः।

अत्र शास्त्रप्रकाशिकाख्या व्याख्याऽप्यानन्दज्ञानकृता—समर्थेति। न हि मृतस्य विद्याकर्मणी स्वरूपेण स्थातुमर्हतः कारकभेदाभावादतो वासनात्मनैव स्थितेस्तत्प्राधान्यात्तस्या युक्ता पृथगुक्तिरित्यर्थ इति।

समासेन च निर्दिष्टे कारणत्वाविशेषतः।
अन्योन्यकारणत्वाच्च श्रुत्येह ज्ञानकर्मणी॥
पूर्वप्रज्ञात उद्भूतिर्विद्यायाः कर्मणो यतः।
ताभ्यां च भावनोद्भूतिर्निर्देशोऽतो यथोदितः॥
कर्मणो भुज्यमानस्य परिशेषो हि भावना।
मूलं च जायमानस्य प्रधानं तेन भण्यते॥

अत्रापि सैव टीका—तस्यास्तयोश्च मिथो हेतुहेतुमत्त्वे त्रयाणामविशेषात्कथं पूर्वप्रज्ञाप्राधान्यमित्याशङ्क्याऽऽह—कर्मण इति। परिशेषो नाम फलवासनेति।

परिच्छेत्री विनिर्मात्री विद्या लोकान्तरस्य हि।
विकर्तृकर्मवोढ्री च पूर्वप्रज्ञेह पूर्वयोः॥ इति।

तथैतेषां विद्यादीनां प्रत्येकं चातुर्विध्यमुक्तं संक्षेपशारीरकतृतीयाध्याये श्रीमत्सर्वज्ञात्ममुनीश्वरगुरुचरणैः—'विद्या चात्र चतुर्विधाऽप्यभिमतैवाऽऽरम्भिका कर्मवत्संस्कारोऽपि

तथा चतुर्विध इति ज्ञेयस्तथा संभवात् ' इति । व्याख्यातं चेदं मधुसूदनसरस्वतीभिः—ननु पुण्यः पुण्येन कर्मणा भवति पापः पापेनेति शुभाशुभकर्मण एव संसारहेतुत्वप्रतिपत्तेः कथं विद्यापूर्वप्रज्ञयोस्तद्धेतुत्वमित्याशङ्क्य तत्र कर्मैव तद्धेतुरित्यश्रवणादेतद्वचनबलत्रयाणामपि संसारहेतुत्वमविशिष्टमिति वदंस्तेषु चातुर्विध्यमाह—विद्या चेत्यादिना। काचन विद्या शास्त्रविहिता देवताद्युपासनरूपा । परा तन्निषिद्धाऽसच्छास्त्रविषया । अन्या विहितसमा विधिं विनाऽपि यदृच्छयोपपन्ना गङ्गादिदर्शनरूपा श्रेयस्करी । काचिन्निषिद्धसमा बीभत्सितशवादिविषया सद्योदुःखकरीति विद्यायाश्चातुर्विध्यम्। एवं कर्मणां यागवधाहारविहारादिरूपाणामपि विहितप्रतिषिद्धाविहिताप्रतिषिद्धभेदेन चातुर्विध्यं द्रष्टव्यम् । एवं पूर्वप्रज्ञाख्यसंस्कारोऽपि मूलानुभवाद्यनुरोधेन चतुर्विधो बन्धहेतुरित्यर्थ इति । अत्र वार्तिके तावद्वासनाद्यपरपर्यायस्य पूर्वप्रज्ञाख्यस्योक्तरीत्या चतुर्विधसंस्कारस्य कर्मणो भुज्यमानस्येत्यत्र मूलं(ले) च जायमानस्येत्यनेन भाविनः क्रियमाणात्मकस्य कर्मणस्तथा पूर्वश्लोके पूर्वप्रज्ञात उद्भूतिर्विद्याया इत्युक्तेरुक्तचतुर्विधविभागस्य ब्रह्मज्ञानेतरयावद्वृत्त्यात्मकज्ञानस्य च कारणत्वं स्पष्टमेवोक्तम्। तथा परिच्छेत्रीत्यनेन विद्याया भाविदेहमात्रदातृत्वं कर्मणः सुखादिविकारकारित्वं च निर्णीतम् । तदुक्तमनुभूतिप्रकाशे मूलकारैरेवैतच्छ्रुतिविवृतिसमये—' देहं विद्या परिच्छिद्यादीदृशो देह इत्यथ ' इति । तेन वासनाख्यपूर्वप्रज्ञायाः क्रियमाणहेतुत्वात्पूर्वोक्तानुभूतिप्रकाशगतप्रारब्धचतुर्विधतावादेन यज्जीवन्मुक्तिसुखस्यापि प्रारब्धफलत्वमुक्तं मूलकारैस्तत्क्रियमाणफलत्वमेव । नोचेदुक्तवार्तिके पूर्वप्रज्ञायाः क्रियमाणत्वावच्छिन्नयावत्क्रियमाणकारणत्वोक्तिर्बाध्येत । जीवन्मुक्तिसुखसाधनस्य मनोनाशादेः क्रियमाणत्वं तु न विवादास्पदम्। यत्र कृतोपास्तित्वेनानिच्छयैव मनोनाशादिना जीवन्मुक्तिसुखं तत्रापि देहेन्द्रियादिव्यापारोपरमस्य पूर्वोक्तसंस्कारद्वारा जायमानस्येश्वरयत्नसाध्यस्यापि लोकदृष्ट्या पारमेश्वरयत्नसाध्यत्वेऽपि शास्त्रदृष्ट्या क्रियमाणत्वानपायात् । एतेन परेच्छाजन्यजीवन्मुक्तिसुखस्य क्रियमाणफलत्वं व्याख्यातम्। तत्रापि परयत्नजनकोपास्त्यादिपुण्यस्य देहाद्युपरमस्य च क्रियमाणस्य सत्त्वात् । नोचेज्जीवन्मुक्तानामृषभादीनां परमेश्वरप्रेरितसंस्कारमात्रद्वारा चेष्टमानशरीराणां कदाचित्पादतले पिपीलिकादिमरणजनितपातकस्य तथा कदाचिद्गङ्गादिवातसंस्पर्शजनितसुकृतस्यापि प्रारब्धत्वापातात् । इष्टापत्तिश्चेत्क्वचिदपि क्रियमाणोदयाभावात् ' तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ' इतिसूत्रादौ क्रियमाणाश्लेषोपपादनभङ्गापत्तिः । प्रारब्धफलत्वोक्तिस्तु मूलकाराणामनुभूतिप्रकाशे विद्याकर्मसाहचर्येण श्रुत्या पूर्वप्रज्ञाया अपि गृहीतत्वात्तात्रितयस्यापि देहाद्यारम्भकतावशात्तन्मध्यगतपूर्वप्रज्ञाख्यसंस्कारस्यापि तत्साहचर्यात्प्रारब्धत्वविवक्षयैव । किंच तत्र—

सुखदुःखप्रदारब्धकर्मवेगश्चतुर्विधः ।
तीव्रो मध्यो मन्दसुप्ताविति तस्य विधा मताः ॥

इति प्रारब्धकर्मवेगस्य चातुर्विध्यमुक्त्वा क्रमात्—

तीव्रवेगे स पश्वादितुल्यो नाऽऽत्मानमीक्षते।
आत्मनि प्रीतिरस्तीति भवेदात्मरतिस्तदा॥
मध्यवेगे तु भोगानां प्राधान्यं स यदा कदा।
कृत्वाऽवकाशमात्मानं वदन्क्रीडति बालवत्॥
मन्दवेगे तिरस्कृत्य भोगान्प्रायेण चिन्तयन्।
धियाऽऽत्मानं द्वन्दसुखं प्राप्नोति मिथुनं यथा॥
सुप्तवेगेऽतिनिर्विघ्नो निर्विकल्पसमाधिभाक्।
आत्मानन्दावशेषः सन्नास्ते मुक्तवदद्वयः॥

इत्यन्तेन तीव्रादिवेगानां स्वरूपं फलं च विवृतम्। तत्र तीव्रवेगे तु न जीवन्मुक्तिसुखलेशोऽपीत्यविवाद एव। परं तु तत्रापि गोकामा एव वयमिति याज्ञवल्क्योक्तेर्गोपदोच्चारणात्तत्स्मरणाच्च संजातसुकृतरूपं क्रियमाणमस्त्येव। मध्यवेगेऽप्येवमेवाऽऽत्मस्मरणादिजन्यं क्रियमाणं तदनुसंधानजन्यं सुखमपि तत्फलमेवेत्यूह्यम्। भोगानां प्राधान्येन तत्सुखादिकं तु प्रारब्धफलमेव। यत्तु तत्र सद्यःफलदातृकारीर्यादिजातवृष्ट्यादिद्वारा सुखादिकं तत्तु क्रियमाणफलमेव। तथा मन्दवेगेऽपि द्वन्द्वसुखस्य क्रियमाणफलत्वं स्फुटमेव। तथा सुप्तवेगेऽपि क्रियमाणफलत्वमेव निर्विकल्पसमाधिसुखस्य। तद्ग्राहकस्य सूक्ष्माहंकारस्य शीतलामलनिश्चलजलस्थशुद्धस्फटिकाशिलावत्तत्र सत्त्वात्, 'स्वयं तदन्तःकरणेन गृह्यते' इति श्रुतेश्च। न च यस्येह जन्मनि कृतोपास्तित्वेन ज्ञानोत्तरं यत्नं विनैव यज्जीवन्मुक्तिसुखमुत्पन्नं तस्यास्तु नाम पूर्वोक्तरीत्योपासनादिक्रियमाणफलत्वं परं तु यस्य वामदेवादिवद्योगभ्रष्टस्य जन्मान्तरीयोपासनादिमहिम्ना ज्ञानोत्तरं यत्नं विनैव संस्कारस्वाभाव्याज्जीवन्मुक्तिसुखं यदुत्पद्यते तस्य तु प्रारब्धकर्मफलत्वमेवावश्यं वक्तव्यं, नो चेदनिच्छया जीवन्मुक्तिसुखोत्पत्तौ परमेश्वरयत्नजन्यत्वेन प्रारब्धफलत्वाभावात्परेच्छया जीवन्मुक्तिसुखोत्पत्तौ च परयत्नजन्यत्वेन तथात्वात्क्वचिदप्यनेन न्यायेन प्रारब्धकर्मफलत्वं विषयसुखादेरपि नैव स्यादिति वाच्यम्। इष्टापत्तेः। इममेवाधिकारिशिरोमणिं मनसि निधाय मूलकारैरनुभूतिप्रकाशे जीवन्मुक्तिसुखस्य प्रारब्धफलत्वसाधारण्यमुक्तम्। अत्र तु तादृगधिकारित्वाभावेनेदानींतना येऽकृतोपास्तित्वेऽपि साधनचतुष्टयपूर्वकश्रवणादिपुष्ट्या ब्रह्मविदस्तेषां यज्जीवन्मुक्तिसुखं तत्क्रियमाणसंज्ञकमनोनाशादिसाधनफलमेवेति द्योतनार्थं पक्षान्तरोपन्यासपूर्वकं योगाभ्यासस्य जीवन्मुक्तिसुखसाधनस्य क्रियमाणात्मकस्य प्रारब्धकर्मतोऽपि प्राबल्यप्रतिपादनं विस्तारितमिति ज्ञेयम्। ननु यद्युदाहृतवार्तिकरीत्या विद्याकर्मभ्यामपि पूर्वप्रज्ञाख्यायाः संस्कारापरपर्यायाया वासनाया एव प्राधान्यं तर्हि पुनरपि दोषतादवस्थ्यमेव। तथा हि—यद्यस्याधिकारिणः पूर्ववासना योगादिविषयिणी स्यात्तर्हि सैवेमं तत्र बलात्प्रवर्तयित्वा योगादिकं साधयिष्यति नो चेद्विधिशतमप्यकिंचित्करमेव तस्मात्किं विद्वत्संन्या-

सादिविधिना किं वाऽनेन तद्विवेकप्रथनेनेति चेन्न । वासनाया विद्याकर्मोभयनिर्वाहकत्वादिना प्राधान्येऽपि विवेकेन पुरुषप्रयत्नात्तदभिभवस्य शक्यत्वात् । यथा चैतत्तथाऽग्रे मूल एव—'श्रीरामः—प्राक्तनं वासनाजालं नियोजयति मां यथा' इत्यादिना ग्रन्थेन सप्रमाणं सोदाहरणं सपरिवारं सविस्तरं चोपपादयिषितत्वाच्च । अत्रेयं व्यवस्था—यः कश्चिज्जन्मान्तर एव कृतोपास्तिस्तस्येह जन्मनि जायमानं ज्ञानात्प्राक्समाधिसुखं तदुत्तरं जीवन्मुक्तिसुखं च पूर्वप्रज्ञाख्यसंस्कारद्वारा प्रारब्धफलमेव । परं तु तादृक्समाध्यादेः क्रियमाणं पुण्यमुत्पद्यत एव, यथा गङ्गास्नानजन्यं प्रातः शीतदुःखं प्रारब्धफलं पुण्यं तु क्रियमाणं तद्वत् । यस्त्विह जन्मन्येव कृतोपास्तिरकृतोपास्तिर्वा तस्य तु तादृक्सुखादिकं क्रियमाणफलमेवेति न कोऽपि दोषः । नन्वस्त्वेवं प्रारब्धक्रियमाणयोः फलव्यवस्था तथाऽपि प्रारब्धकर्मापेक्षयाऽपि योगस्य प्राबल्यं तु नैव सिध्यति । तत्रेदं वक्तव्यम्—किं प्रारब्धकर्मणा दीयमानं सुखादिकं तिरस्कृत्य क्रियमाणमेव योगाभ्यासाख्यं स्वजन्यसुखादिकं ददातीति ततस्तत्प्राबल्यं, किंवा सुखादिदातृप्रारब्धमेवं ध्वंसयति योग इति तत्प्राबल्यम् । आद्ये न हि समुद्भूतफलस्याऽऽम्रस्यातिपक्वफलानि रुद्ध्वाऽधुना रोपिता द्राक्षा स्वफलानि दातुमुत्सहत इति न्यायविरोधः । द्वितीये तु नाभुक्तं क्षीयते कर्मेतिस्मृतेर्भोगं विना तद्ध्वंसाभावः । न च 'धर्मेण पापमपनुदति' इति श्रुतिः । तस्या धर्मप्रशंसामात्रपरत्वात् । यद्वा पापमात्रनाशकत्वपरत्वात् । न चेष्टापत्तिः । पुण्यात्मकप्रारब्धस्य योगसुखविरुद्धविषयसुखदस्यानपायात् । न च यद्यत्प्रारब्धं तत्तत्स्वफलदाने क्रियमाणापेक्षमेवेति नियतम् । जन्मान्तरकृतोपास्तित्वादिसकलजीवन्मुक्तिसामग्र्यन्तरसंपन्ने वामदेवे गर्भे जायमानज्ञानोत्तरक्षण एव संजातजीवन्मुक्तिसुखदप्रारब्धे क्रियमाणापेक्षणादर्शनात् । तस्मात्प्रौढिवादमात्रमेव प्रारब्धतोऽपि योगाभ्यासप्राबल्याङ्गीकरणमिति चेन्न । शुक्लेतराष्टम्यादौ प्राग्बहुकालमुदितस्यापीन्दोस्तेजस्तिरस्कृत्य नवम्यादौ प्रातः सद्यः समुदितेनापि दिनमणिना स्वतेजसा कुमुद्वतीमुकुलीकरणपूर्वकपद्मिनीविकासनदर्शनात्प्राबल्यस्य सामर्थ्यैकतन्त्रत्वाद(दा)म्रादिन्यायाभावात् 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' इति श्रुत्योपासनविशिष्टस्यैव कर्मणो वीर्यवत्तरत्वात्केवलोपासनात्मकस्याहं ब्रह्मास्मीतिनिर्गुणोपासनापरपर्यायसंप्रज्ञातसमाधिपूर्वकनिर्विकल्परूपासंप्रज्ञातसमाधिसंज्ञस्य 'योगश्चित्तवृत्तिनिरोधः' इति पातञ्जलसूत्रात्सकलचित्तवृत्तिनिरोधद्वाराऽद्वैतात्माकारैकान्तःकरणस्थितिलक्षणस्य योगस्य 'कर्माशुक्लाकृष्णं योगिनस्त्रिविधमितरेषाम्' इत्यपि पातञ्जलसूत्राच्छुक्लाधिककृष्णकृष्णाधिकशुक्लसमशुक्लकृष्णाख्यस्येतरशब्दवाच्ययोगिभिन्नजीवत्वशालिजीवप्रारब्धस्यापेक्षयाऽशुक्लाकृष्णशब्दाभिधेयस्योक्तयोगाख्यस्य योगिशब्दवाच्यब्रह्मवित्कर्मणः प्राबल्यस्य वीर्यवत्तमत्वेन कैमुतिकन्यायसिद्धत्वाच्छ्रुतिस्मृत्योर्विरोधे तु श्रुतिरेव बलीयसीति न्यायेन नाभुक्तं क्षीयते कर्मेति स्मृतेः, किंच प्रायश्चित्तादिरूपेण धर्मेण पापं नाशयतीति श्रीमाधवाचार्यैर्वेदभाष्ये व्याख्या-

तत्तया ' धर्मेण पापमपनुदति ' इति श्रुत्या बाधितत्वाद्यदा प्रायश्चित्तादिरूपधर्मस्यापि पापनाशकत्वं तदा

मनसश्चेन्द्रियाणां च ऐकाग्र्यं परमं तपः ।
तज्ज्यायः सर्वधर्मेभ्यः स धर्मः पर उच्यते ॥

इति स्मृत्या चित्तैकाग्र्यलक्षणस्य योगस्य परमधर्मत्वबोधनात्पापात्मकप्रारब्धनाशकस्यापि कैमुतिकन्यायसिद्धत्वात्पुण्यात्मकतन्नाशकत्वस्य त्वशुक्लाकृष्णकर्मत्वेन प्राबल्यैकासिद्धत्वाच्च । उक्तं हि मूलकारैरेव तत्त्वविवेके योगस्य साधारण्येन कर्मनाशकत्वं निरुक्तयोगं प्रकृत्य—

अनादाविह संसारे संचिताः कर्मकोटयः ।
अनेन विलयं यान्ति शुद्धो धर्मो विवर्धते ॥
धर्ममेघमिमं प्राहुः समाधिं योगवित्तमाः ।
वर्षत्येष यतो धर्मामृतधाराः सहस्रशः ॥
अमुना वासनाजाले निःशेषं प्रविलापिते ।
समूलोन्मूलिते पुण्यपापाख्ये कर्मसंचये ॥
वाक्यमप्रतिबद्धं सत्प्राक्परोक्षावभासिते ।
करामलकवद्बोधमपरोक्षं प्रसूयते ॥ इति ।

अत्र ज्ञानात्पूर्वं यदा योगस्य संचितपुण्यपापकर्मणां समूलनाशकत्वं निःशेषवासनानाशकत्वं चोक्तं तदा ज्ञानोत्तरं ' तस्मान्न्यासमेषां तपसामतिरिक्तमाहुः ' इति नारायणीये सत्यादिमानसान्तसकलमोक्षसाधनतपसां मध्ये संन्यासाख्यतपस एवोत्कृष्टत्वोक्तेः ।

यद्दुष्करं दुराराध्यं दुर्जयं दुरतिक्रमम् ।
तत्सर्वं तपसा साध्यं तपो हि दुरतिक्रमम् ॥

इतिस्मृतेस्तपसोऽचिन्त्यशक्तित्वात्परमहंसविद्वत्संन्यासस्य परमतपस्त्वात्तत्समुचितस्य निरुक्तयोगस्य जीवन्मुक्तिप्रतिबन्धकप्रारब्धध्वंसकत्वं तु सुतरां सिद्धम् । अहो येन धनुर्मात्रसहायेनार्जुनेन श्रीपरमेश्वरोऽपि युद्धे परितोषितः पाशुपतं च संपादितं तेनैव श्रीभगवत्सहायेन भारतयुद्धे भीष्मादयः पराजिताः स्युर्न वेति कः संदिह्यात् । यत्तु प्रारब्धस्य स्वफलदानाय क्रियमाणसापेक्षत्वनियमभङ्गोदाहरणं वामदेवजीवन्मुक्तिसुखमानीतं तत्रेश्वरयत्नसापेक्षत्वं तु वर्तत एव, तथा पूर्वसंस्कारजन्यदेहेन्द्रियादिव्यापारोपरमरूपं क्रियमाणमपि स्फुटमेवेति कुतो व्यभिचारः । तत्र सत्यपि क्रियमाणे तस्य द्वारतामात्रत्वं न तूक्तफलकारणत्वमित्येतावानेव विशेषः । द्वारीभूतादपि क्रियमाणात्तादृशस्थलेऽपि पुण्यापूर्वाख्यं सुकृतमुत्पद्यत एव पूर्वोदाहृतगङ्गादिवातस्पर्शादृषभादीनामिव । तथाऽपि तत्फलं वामदेवादीनां नास्त्येव । कुतः, तत्त्ववित्त्वेन कर्माश्लेषात् । ये तु तत्सुहृदः शिष्यादयस्तेष्वेव ' तस्य

पुत्रा दायमुपयन्ति सुहृदः पुण्यकृत्यां द्विषन्तः पापकृत्यां गृह्णन्ति ' इतिश्रुतेस्तत्कृतसुकृतसजातीयं सेवादिसुकृतभिन्नमेव सुकृतमुत्पद्य तेभ्यो यथायथं फलं ददातीति भाष्यरत्नप्रभायां स्पष्टमित्यन्यदेतत् । तस्माद्युक्तमेव योगस्य प्रारब्धात्प्राबल्याङ्गीकरणमिति नैवात्र शङ्कावकाशः।

बोधश्रीहरिणाऽर्जुनान्तरतमःस्तोमैकविध्वंसिना
कृत्वा योगधनंजयस्य सततं सारथ्यमेतत्करात् ॥
प्रारब्धातुलकौरवादिबलमप्युच्छिद्य संस्थापितो
जीवन्मुक्तिसुखस्वराज्यनिलये विद्वान्यतिर्धर्मराट् ॥

उक्तेऽर्थेऽन्यथानुपपत्तिं प्रमाणयति—

**तथा च योगिनामुद्दालकवीतहव्यप्रभृतीनां स्वेच्छया देहपरित्याग उपपद्यते।**

**तथा चेति।** यद्युक्तरीत्या प्रारब्धापेक्षयाऽपि योगाभ्यासादिशास्त्रीययत्नस्य प्राबल्यं नाङ्गी क्रियेत तर्ह्युद्दालकवीतहव्यादीनां योगिनां स्वेच्छया देहपरित्यागवादिवासिष्ठादिशास्त्रं बाध्येतेत्यर्थापत्तिः प्रमाणम् । तस्मादुक्तयुक्त्या तदङ्गीकारे तु यतो योगिनां सप्तमभूम्यन्तपरिपक्वयोगवतामुद्दालकवीतहव्यप्रभृतीनां ब्रह्मविदां तादृग्योगवैशिष्ट्यादेव प्रारब्धं विध्वंस्य स्वेच्छया न तु पारतन्त्र्येण देहपरित्यागः शरीराभासोपसंहार उपपद्यते युक्तो भवति । तद्वादिशास्त्रं संगतं भवतीत्यर्थः । तदुक्तं योगवासिष्ठ उपशमप्रकरणे पञ्चपञ्चाशे सर्गे । तत्र हि सत्तासामान्यादिदृष्टिमुपवर्ण्य—

एतामालम्ब्य पदवीं समस्तभयनाशिनीम् ।
उद्दालकोऽसाववसद्यावदिच्छं जगद्गृहे ॥
अथ कालेन बहुना बुद्धिस्तस्य बभूव ह ।
विदेहमुक्तस्तिष्ठामि देहं त्यक्त्वेति निश्चला ॥
एवं चिन्तितवानद्रेर्गुहायां पल्लवासने ।
बद्धपद्मासनस्तस्थावर्धोन्मीलितलोचनम्(नः) ॥

टीका–चिन्तितवान्, चिन्तितार्थदृढनिश्चयवान्सन् ।

संयम्य गुदसंरोधाद्द्वाराणि नव चेतसः ।
मात्रास्पर्शान्विचिन्वानो भावितस्वाङ्गचिद्घनः ।

टीका—मात्रास्पर्शान्, शब्दादिगोचरवृत्तीः । विचिन्वानः, विचारेण चैकैकश उपसंहृत्य हृदि निवेशयन् । हृदि निविष्टानां च तेषां परमार्थरूपो भावितः स्वाङ्गमिव स्वात्मनैकीकृतश्चिद्रूपो घनः सैन्धवघनवदेकरसो येन ।

संरुद्धप्राणपवनः समसंस्थानकन्धरः ।
तालुमूलतलालग्नजिह्वामूलोल्लसन्मुखः ॥

टीका—समसंस्थाना कन्धरा कण्ठो यस्य । तालुमूलतल आलग्नेन कण्ठाच्छिद्रे कपाटवन्निवेशितेन जिह्वामूलेनोन्नतमिव लसन्मुखं यस्य ।

न बहिर्नान्तरे नाधो नोर्ध्वं नार्थे न शून्यके ।
संयोजितमनोदृष्टिर्दन्तैर्दन्तानसंस्पृशन् ॥

टीका—अर्थे रूपादिविषये न संयोजिते मनोदृष्टी येन ।

प्राणप्रवाहसंरोधसमः स्वच्छाननच्छविः ॥
अङ्ग चित्संविदुत्तानरोमकण्टकिताङ्गभूः ।

टीका—प्राणादिप्रवाहाणां संरोधेन समस्ततत्क्रियाकृतदेहमनःकरणचाञ्चल्यशून्यः । स्वच्छाननच्छविः, प्रसन्नवदनः । अङ्गेति संबोधने । चित्संविदा चिद्रूपब्रह्मानन्दानुभवेनोत्तानैरूर्ध्वजृम्भी रोमभिः कण्टकिता संजातकण्टकाऽङ्गभूर्यस्य ।

अङ्गचित्संविदभ्यासाच्चित्सामान्यमुपाददे ।
तदभ्यासादवापान्तरानन्दस्पन्दमुत्तमम् ॥

टीका—तस्याऽऽनन्दाविर्भावे पूर्वोक्तमेव हेतुमाह—अङ्गेति । अङ्गेष्वन्तःकरणैकदेशभूतवृत्तिभेदेषु प्रतिबिम्बिता चित् । अवच्छिन्नसंविदां च स्वोपाधिभूतवृत्तिभेदानां विलयाभ्यासाद्बिम्बभूताचित्सामान्यमुपाददे प्रविवेश । बिम्बभूताचिन्मात्रानुसंधानाभ्यासाच्चान्तर्हृद्युत्तमं सर्वोत्कृष्टमानन्दस्पन्दमवापान्वभूदित्यर्थः ।

तदास्वादनतो लीनचित्सामान्यदशाक्रमम् ।
विश्वंभरमनन्तात्मसत्तासामान्यमाययौ ॥

टीका—तस्य पूर्ववत्सत्तासामान्यानुप्रवेशमाह—तदास्वादनत इति । यावन्न निरतिशयानन्दास्वादनं तावदेव चित्तं निरोधक्लेशासहिष्णुतया बहिः प्रवर्तते, आस्वादिते त्वानन्दे तत्रैव गुडपिपीलिकान्यायेनाऽऽसक्तं स्वरूपमपि विस्मृत्य स्वानुगतं चित्सामान्यं निरतिशयस्वप्रकाशसत्तासामान्यभावं नयति, स एव चित्सामान्यदशाक्रमस्य लयस्तस्य सत्तासामान्यप्राप्तिश्चेति भावः ।

तस्थौ समसमाभोगः परां विश्रान्तिमागतः ।
अनानन्दसमानन्दमुग्धमुग्धमुखद्युतिः ॥

टीका—तथैव तस्यापुनरावर्तिनीं स्थितिमाह—तस्थाविति । समेभ्योऽपि सम आत्यन्तिकविक्षेपवैषम्यशून्य आभोगः स्वरूपं यस्य । न विद्यन्त आनन्दाः समा यस्य तथाविधानन्देन प्रसन्नतमत्वान्मुग्धेभ्यः सुन्दरेभ्योऽपि मुग्धा मुखद्युतिर्यस्य तथाविधः सन् ।

संशान्तानन्दपुलकः पदं प्राप्यामलं गतः ।
चिरकालपरिक्षीणमननादिभवभ्रमः ॥

टीका—आनन्दाविर्भावलिङ्गरोमाञ्चादीनामपि क्रमादुपरममाह—संशान्तेति । जीवन्नेव पदं प्राप्य प्रारब्धभोगहेतुमलशेषक्षयादमलं गतः सन् ।

बभूव स महासत्त्वो लिपिकर्मार्पितोपमः ।
समः कलावपूर्णेन शरदच्छाम्बरेन्दुना ॥

टीका—कलाभिरवपूर्णेन ।

उपशशाम शनैर्दिवसैरसौ कतिपयैः स्वपदे विमलात्मनि ।
तरुरसः शरदन्त इवामले रविकरौजसि जन्मजरातिगः ॥

टीका—'न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते ' इति श्रुत्युक्तरीत्याऽत्रैव तत्प्राणानां तत्सोदकौष्ण्यवत्क्रमादुपशममभिप्रेत्याऽऽह—उपशशामेति । शरदन्ते हेमन्ते तरूणां रसो रविकरौजसीव विमले स्वपद उपशशामेत्यादिना । एवं वीतहव्यस्यापि देहत्यागप्रकारस्तत्रैव षडशीतितमे सर्गे ' इदानीं स्वां दिशं यान्तु भवन्तो याम्यहं प्रियाः ' इत्यन्तग्रन्थेनेन्द्रियादीनां प्रार्थनपूर्वकं स्वेच्छया देहत्यागं प्रतिज्ञातवतो वीतहव्यस्य वैराग्यौत्कट्यपूर्वकं चाक्षुषालोकादिकलानामादित्यमण्डलादिप्रकृतिषु लयप्रार्थनं समुपवर्ण्यान्ते—

व्यपगताखिलकार्यपरम्परः सकलदृश्यदशातिगतास्थितिः ।
प्रणवशान्त्यनुसंसृतिशान्तधीर्विगतमोहमलोऽयमहं स्थितः ॥

टीका—दीर्घोच्चारितस्य प्रणवस्य ब्रह्मरन्ध्रे शान्तिमनुसृत्य शान्ता ब्रह्माकारतामात्रप्राप्त्योपरता धीर्यस्य । तत एव विगतप्रारब्धप्रतिबद्धशिष्टाविद्यालेशमलः । इत्यसंप्रज्ञातसमाधिमुपवर्ण्याग्रिमसर्गे—

अजमजरमनाद्यनेकमेकं पदममलं सकलं च निष्कलं च ।
स्थित इति स तदा नभःस्वरूपादपि विमलस्थितिरीश्वरः क्षणेन ॥

टीका—स वीतहव्य इत्युक्तक्रमेण मुक्तदशा नभःस्वरूपादपि निर्मलस्थितिः सन्नजमजरमनाद्येकममलं निष्कलं पदं भूत्वा स्थितः । बद्धदशा तु क्षणेनेश्वरः सन्स्वकार्यभेदैरनेकं सकलं च भूत्वा स्थित इत्यर्थः । इत्यन्तेन तस्य सप्तमभूमिकादार्ढ्यमुपाख्यायाग्रिमसर्गे श्रीवसिष्ठ उवाच—

प्राप्य संसृतिसीमान्तं दुःखाब्धेः पारमागतः ।
वीतहव्यः शशामैवमपुनर्मनने मुनिः ॥

टीका—एवमुक्तरीत्याऽपुनर्मनन आत्यन्तिकमनोनाशे सति ।

तस्मिंस्तथोपशान्ते हि परां निर्वृतिमागते ।
पयःकण इवाम्भोधौ स्वे पदेऽपरिणामिनि ॥
तथैव तिष्ठन्निःस्पन्दः स कायो म्लानिमाययौ ।
अन्तर्विरसतां प्राप्य मार्गशीर्षान्तपद्मवत् ॥ इत्यादिना ।

ननु नेदमुदाहरणद्वयमपि योगादिप्राबल्येन प्रारब्धध्वंसबोधकम् । उद्दालकविषये तु संशान्तानन्दपुलक इति त्वदुदाहृतश्लोकटीकायामेव जीवन्नेव पदं प्राप्य प्रारब्धभोगहेतुमलशेषक्षयादमलं गतः सन्निति व्याख्यात्रा टीकाकर्त्रा प्रारब्धस्य स्वतः क्षयोत्तरमेव विदेहकैवल्याप्तेर्द्योतितत्वाद्योगादिबलेन तत्क्षयस्य काप्यसूचितत्वाच्च । एवं वीतहव्यविषयेऽपि व्यपगताखिलकार्येतिश्लोकटीकायां तत एव विगतप्रारब्धप्रतिबद्धशिष्टाविद्यालेशमल इति व्याख्यानेन तथात्वध्वननात् । न च महानुभावभगवद्विद्यारण्यगुरुचरणवचनविरोधे समुदाहृतवासिष्टटीकाकारवचनमेव त्याज्यमस्त्विति शङ्कयम् । श्रीमद्विद्यारण्यगुरुविरुद्धमाधुनिकेनोक्तटीकाकारेण वक्तुमशक्यत्वात् , श्रीमद्विद्यारण्यगुरुचरणाशयस्यैव तथात्वादापातिकार्थसमर्थेन त्वयैव तत्तात्पर्यस्याज्ञातत्वाच्च । न चोपक्रमादिवशाद्यथोक्तमेव तद्रहस्यं नो चेत्तदक्षरस्वारस्यमपरित्यज्योक्तटीकाक्षररीत्या त्वयैव वर्ण्यतां तदाशय इति वाच्यम् । एवं तर्हि वासिष्टटीकाकारवचोऽपि तद्विरुद्धमुदाहरतस्तवैव प्रमादित्वादीति चेन्न । वासिष्टटीकाशयस्यैव त्वयाऽनभिज्ञातत्वात्तत्तात्पर्यस्य प्रत्युत मदनुकूलतरत्वाच्च । तथा ह्युद्दालकविषये तावत्—

एवं चिन्तितवानद्रेर्गुहायां पल्लवासने ।
बद्धपद्मासनस्तस्थावर्धोन्मीलितलोचनम्( नः ) ॥

इति योगाभ्यासमुपक्रम्य सपरिकरं सप्तमभूमिकान्तं तमुपवर्ण्य तदुत्तरं वासिष्ठे संशान्तानन्दपुलक इति श्लोको निबद्धः । तत्र जीवन्नेव पदं प्राप्य प्रारब्धभोगहेतुमलशेषक्षयादमलं गतः सन्निति वदता टीकाकृता जीवन्मुक्तिप्राप्तिपूर्वकप्रारब्धभोगकारणीभूतमलशब्दिताविद्यालेशैकदेशध्वंसस्य प्रागुक्तयोगैकफलत्वं स्फुटमेव द्योतितम् । नो चेद्विदेहमुक्तस्तिष्ठामीति विदेहमुक्तिवाञ्छापूर्वकं योगविधानोपपादकतन्मूलविरोधित्वस्य दुर्वारतापत्तिः । किंच संशान्तानन्दपुलक इति श्लोकवर्णितावस्थायामेव यदि निःशेषप्रारब्धक्षयः स्वभावेन भोगं दत्त्वैव जातो न तु योगमहिम्नेति संमतं स्यात्तदा ' उपशशाम शनैर्दिवसैरसौ कतिपयैः स्वपदे विमलात्मनि ' इत्युत्तरश्लोके शनैः शनैः कतिपयैर्दिवसैरसावुद्दालको विमलात्मनि स्वपद उपशशामेति तदनन्तरमपि बहुतरैरेव दिनैर्विदेहकैवल्यं कथमुक्तं स्यात् । मध्ये देहाद्यवस्थापकप्रारब्धकर्मण एवाभावात्सद्य एव तदुक्तं स्यात् । तस्मात्पूर्वोत्तरतात्पर्यपर्यालोचनया वासिष्ठटीकाकारस्यापि प्रारब्धकर्मापेक्षया योगाभ्यासादेर्बलवत्तरत्वेन तस्य तन्नाश्यत्वस्य सुतरां संमतत्वाद्यथा यथा योगाभ्यासपरिपाकस्तथा तथा प्रारब्धक्षयस्तदात्यान्तिकत्वे तदात्यन्ति-

कत्वमिति स्वीकृतेर्न कोऽपि विरोधगन्धः । एतेन वीतहव्यविषयकप्रश्नोऽपि प्रत्युक्तः । तत्र तु दीर्घोच्चारितस्य प्रणवस्य ब्रह्मरन्ध्रे शान्तिमनुसृत्य शान्ता ब्रह्माकारतामात्रप्राप्त्योपरता धीर्यस्येत्युक्त्वा तत एव विगतप्रारब्धप्रतिबद्धशिष्टाविद्यालेशमलं इति वदता टीकाकृता तत एव पूर्वोक्तोपरतधीत्वादेवेति हेतुतद्भावबोधनात्कण्ठत एवोपरतिशाब्दितयोगस्य प्रारब्धध्वंसकत्वोक्तेरुद्दालकोदाहरणोक्तसमाधानरीत्याऽत्रापि सकलव्यवस्थासंभवाच्च न कोऽपि शङ्कावकाशः । मूल उद्दालकवीतहव्यप्रभृतीनामित्यादिशब्दपर्यायीभूतप्रभृतिशब्देन भगवाञ्शुको ग्राह्यः । उक्तं हि मोक्षधर्मेषु भगवद्व्यासपुत्रस्य शुकस्यापि योगमहिम्ना स्वेच्छयैव देहपरित्यजनम् । तत्र हि पञ्चपञ्चाशत्तमाधिकैकशताध्याये—

नारदस्य वचः श्रुत्वा शुकः परमबुद्धिमान् ।
संचिन्त्य मनसा धीरो निश्चयं नाध्यगच्छत ॥
पुत्रदारैर्महान्क्लेशो विद्याम्नाये महाञ्श्रमः ।
किं नु स्याच्छाश्वतं स्थानमल्पक्लेशं महोदयम् ॥
ततो मुहूर्तं संचिन्त्य निश्चितां गतिमात्मनः ।
परावरज्ञो धर्मस्य परां नैःश्रेयसीं गतिम् ॥
कथं न्वहमसंश्लिष्टो गच्छेयं गतिमुत्तमाम् ।
नाऽऽवर्तेयं यथा भूयो योनिसंकरसागरे ॥

टीका चातुर्धरी—असंश्लिष्टः सर्वोपाधिनिर्मुक्तः । इत्यादिना शुकस्य नारदोपदेशेन वैराग्यमनने समुपाख्याय ततः ‘ न तु योगमृते शक्या प्राप्तुं सा परमा गतिः ’ इति योगैकसाध्यत्वं ज्ञानसिद्धस्यापि कैवल्यस्य प्रारब्धेन द्वैतावभासावशेषणाल्लोकदृष्ट्या प्रतिबद्धस्येव तादृशयोगस्यैव सद्यः प्रारब्धध्वंसकत्वेन तद्द्वारा तत्साधनत्वाद्योगैकलभ्यत्वमित्यर्थकग्रन्थेनोपवर्ण्य—

तस्माद्योगं समास्थाय त्यक्त्वा गृहकलेवरम् ।
वायुभूतः प्रवेक्ष्यामि तेजोराशिं दिवाकरम् ॥

टीका—दिवाकरमिति । अर्कमण्डलवर्ती भर्गःपदवाच्यः संसारबीजसर्जनकर्ता सर्वेषां प्राणिनां बुद्धेः प्रवर्तको गायत्रीप्रतिपाद्यो ग्राह्यः, न त्वर्चिरादिमार्गपर्वभूतं मण्डलाभिमानिनमादित्यम् । कुत एतत् । कार्यब्रह्मलोकं प्रति तद्गमनस्यादर्शनात् ।

शुकस्तु मारुतादूर्ध्वं गतिं कृत्वाऽन्तरिक्षगाम् ।
दर्शयित्वा प्रभावं स्वं ब्रह्मभूतोऽभवत्तदा ॥

इति वाक्यशेषे शुद्धब्रह्मभावदर्शनाच्च । सूर्यमण्डलपर्यन्तं गमनं तु स्वस्य योगप्रभावदर्शनमात्रमिति तत्रैव स्पष्टमस्ति । इत्यादिना योगाभ्यासबलेन प्रारब्धसंस्थापितमपि देहाद्यव-

भासं तद्ध्वंसद्वारा विध्वंस्य योगमाहात्म्यख्यापनाय सूर्यमण्डलपर्यन्तमाकाशगामितया देहादिकं नीत्वा लोकदृष्ट्याऽन्तर्यामित्वशालिनि मुक्तदृष्ट्याऽद्वैते ब्रह्मण्येव घटभङ्गे घटाकाशवदुपाधिनाशमात्रेणैव केवलीभावं गच्छामीवेति शुकनिश्चयमभिधाय धूमादिमार्गं विनिन्द्य पर्वतादीन्सकलस्थावरजङ्गमान्नारदं च पृष्ट्वा पितरं गत्वा तद्वचनं श्रुतवता पित्रा मन्नेत्रतोषणार्थं तावत्स्थीयतामित्युक्तोऽपि—

निरपेक्षः शुको भूत्वा निःस्नेहो मुक्तसंशयः ।
मोक्षमेवानुसंचिन्त्य गमनाय मनो दधे ॥
पितरं स परित्यज्य जगाम मुनिसत्तमः ।
कैलासपृष्ठं विपुलं सिद्धसंघनिषेवितम् ॥

इति तस्य कैलासपृष्ठगमनोक्त्याऽध्यायः समापितः । ततोऽग्रिमाध्याये भीष्म उवाच—

गिरिशृङ्गं समारुह्य सुतो व्यासस्य भारत ।
समदेशे विविक्ते स निःशलाक उपाविशत् ।
धारयामास चाऽऽत्मानं यथाशास्त्रं यथाविधि ॥
पादप्रभृतिगात्रेषु क्रमेण क्रमयोगवित् ।

इत्यादिना तस्य तत्र योगधारणां ब्रह्मानन्दमाकाशगमनं नारदाख्यगुरोः प्रदक्षिणीकरणपूर्वकमनुज्ञाग्रहणं देवकृतपुष्पवर्षणमप्सरोगणदर्शनं मलयाचलगमनं तत्रोर्वश्यादिदर्शनं वत्सलेनापि पित्राऽयं कथं त्यक्त इत्यादिसविस्मयोर्वशीवचःश्रवणं सकलदिगाद्यवलोकनं तत्तद्दिगाद्यधिष्ठातृदेवतादर्शनम् ।

पिता यद्यनुगच्छेन्मां क्रोशमानः शुकेति वै ।
ततः प्रतिवचो देयं सर्वैरेव समाहितैः ॥

इत्यादिना दिगादिदेवताप्रार्थनं ततस्तत्प्रार्थितस्य देवतादिभिः स्वीकरणं चोपवर्ण्याध्यायः समापितः । ततोऽग्रिमाध्याये भीष्म उवाच—

इत्येवमुक्त्वा वचनं ब्रह्मर्षिः स महातपाः ।
प्रातिष्ठत शुकः सिद्धिं हित्वा दोषांश्चतुर्विधान् ॥

टीका—इत्येवमिति । दोषान्, सात्त्विकान्मोक्षप्रतिबन्धकान्धर्मज्ञानवैराग्यैश्वर्यमदानेनःकिल्बिषसंसर्गानैश्वर्याख्यान् । यदाह मनुः—

प्राणायामैर्दहेदेनो धारणाभिश्च किल्बिषम् ।
प्रत्याहारेण संसर्गान्ध्यानेनानैश्वरान्गुणान् ॥

इति वा । योगानिति पाठे वितर्कविचारानन्दास्मिताख्यांस्तत्फलानीत्यर्थः । इत्यादिना तस्य सत्त्वादिगुणतत्कार्यादिसर्वाभिमानत्यागमुपवर्ण्य—

ततस्तस्मिन्पदे नित्ये निर्गुणे लिङ्गवर्जिते ।
ब्रह्मणि प्रत्यतिष्ठत्स विधूमोऽग्निरिव ज्वलन् ॥

टीका—तस्मिन्नादित्यान्तर्यामिणि परब्रह्मणि नित्ये पुनरावृत्तिवर्जिते यतो निर्गुणे प्रत्यतिष्ठत् । इत्यन्तर्यामित्वोपलक्षिताद्वैतात्ममात्रप्रतिष्ठत्वेन स्वप्रकाशत्वं महापुरुषस्य देहलयेन दर्शनराहित्याल्लोकानामभाग्यसूचकोत्पातजातं तस्य शुभशकुनसूचकं शुभवृष्ट्यादिकं मेरुहिमवत्स्वर्णरजतशृङ्गाभ्यां मार्गरोधनं योगमहिम्ना तद्भेदनं देवादिसाधुवादं मन्दाकिन्यां क्रीडन्नग्नाप्सरोगणदर्शनं व्यासानुगमनं चोपाख्याय—

शुकस्तु मारुतादूर्ध्वं गतिं कृत्वाऽन्तरिक्षगाम् ।
दर्शयित्वा प्रभावं स्वं ब्रह्मभूतोऽभवत्तदा ॥

टीका—शुकस्त्विति । मारुतात्सूत्रात्मन ऊर्ध्वम् । ‘ वायुर्वै गौतम तत्सूत्रम् ’ इति श्रुतेः । इति तस्य विदेहकैवल्यं व्यासकृताह्वानं दिगादिसर्वदेवताकृतप्रतिवचनं व्यासं प्रति शिवागमनं शुकस्य पञ्चमहाभूतस्वभावकथनं छायाशुकप्रदानं चोपाख्यायाध्यायः शतोपरि सप्तपञ्चाशत्तमाख्यः समापित इति । न चैतेषां प्रारब्धमेव तथेति । तथा च योगिनामित्यादेः पूर्वव्याख्याने मयैव दत्तोत्तरत्वात् । तस्माद्युक्तमेवोक्तोदाहरणजातमिति सिद्धं योगप्राबल्यम् । कल्पभेदात्कथाभेद इति न्यायेन श्रीभागवतवासिष्ठादिगतशुकोपाख्यानव्यवस्था ज्ञेयेति दिक् ।

ननु किमेतावता प्राचीनानां शुकादिमहानुभावानां योगीन्द्राणां योगाभ्यासस्य प्रारब्धविध्वंसनशक्तत्वेऽपीदानींतनानां ज्ञानिनां तु तादृशैश्वर्याभावाद्दुर्लभैव जीवन्मुक्तिरिति चेत्सत्यम् । यद्यप्याधुनिकानां प्रारब्धावस्थापितदेहादिद्वैतावभासस्य प्रबलतमयोगाद्यभ्यासेन समूलोन्मूलनेऽल्पायुष्ट्वाद्युपाधिना सामर्थ्याभावेऽपि प्रतिक्षणविक्षोभप्रदविषयाभिलाषलक्षणकामादिवृत्तिरूपविक्षेपक्षपणे जीवन्मुमुक्षूणां न काऽपि क्षतिरित्याह **यद्यपी**त्यादिना—

**यद्यप्यल्पायुषामस्माकं तादृशो योगो न संभवति, तथाऽपि कामा[१]दिधीवृत्तिनिरोधमात्रे[२] को नाम प्रयासः । यदि शास्त्रीयप्रयत्नस्य प्राबल्यं नाङ्गी क्रियते तदा चिकित्सामारभ्य मोक्षशास्त्रपर्यन्तानां सर्वेषामानर्थक्यं प्रसज्येत ।**

अल्पं ‘ शतायुर्वै पुरुषः ’ इति श्रुत्या शतवर्षनियमेऽपि कलिकालादिवशात्क्षणिकमायुर्येषां तथाविधानामस्माकमित्युक्त्या स्वस्यापि जीवन्मुमुक्षुत्वं द्योतितम् । अस्माकम्, अस्मदादीनां जीवन्मुमुक्षूणाम् । ‘ सोमोऽस्माकं ब्राह्मणानां राजा ’ इत्यादिवदन्येषामपि

१ क. ख. ग. ङ. च. °दिचित्तवृ° । २ क. ख. ग. ङ. च. °मात्रे योगे को । घ. °मात्रयोगे को ।

विदुषां लक्षणया ग्रहणमिति भावः । **तादृशेति** । स इव दृश्यत इति तादृशः । शुकादियोग इवैश्वर्यशालीत्यर्थः । स चासौ योगश्चेति । तथाऽपि तादृग्योगानुष्ठाने सामर्थ्याभावेऽपि । कामादिधीवृत्तिनिरोधमात्रे । कामो विषयाभिलाषः । ‘ इदं मे स्यादिदं मे स्यादितीच्छाः कामशब्दिताः ’ इति तृप्तिदीपोक्तेरिष्टावाप्तिः कदा मे स्यादित्युत्कण्ठापूर्वकतत्तद्विषयाभिलाषः स आदिर्मुख्यो यासां ताः कामादयः ।

अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः ।
अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः ॥

इत्यर्जुनप्रश्ने श्रीभगवानुवाच—

काम एष क्रोध एष रजोगुणसमुद्भवः ।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥
धूमेनाऽऽव्रियते वह्निर्यथाऽऽदर्शो मलेन च ।
यथोल्बेनाऽऽवृतो गर्भस्तथा तेनेदमावृतम् ।
आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ॥
कामरूपेण कौन्तेय दुष्पूरेणानलेन च ।
इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते ॥
एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ।
तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ ॥
पाप्मानं प्रजहिह्येनं ज्ञानविज्ञाननाशनम् ।
इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः ॥
मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः ।
एवं बुद्धेः परं बुद्ध्वा संस्तभ्याऽऽत्मानमात्मना ॥
जहि शत्रुं महाबाहो कामरूपं दुरासदम् ।

इति श्रीमद्भगवद्गीतासु स्मृतिषु ‘ कामान्यः कामयते मन्यमानः स कामभिर्जायते तत्र तत्र ’ इत्यादिश्रुतिषु च महता प्रबन्धेन वासनापरपर्यायस्य निरुक्तलक्षणस्य कामस्यैव मुक्तिद्वारार्गलत्वोक्तेरत्रापि तस्यैव मुख्यत्वेन ग्रहः । ताश्च ता धीवृत्तयो बुद्धिवृत्तयस्तासां नितरां रोधः सप्तमभूम्यन्तमद्वैतानन्दात्मनि स्थिरीकरणं तादृङ्निरोध एव निरोधमात्रं तस्मिन् । अत्र मात्रग्रहणेन स्वेच्छया देहत्यागादिमहदैश्वर्यसामर्थ्यव्युदासः । एतादृशवृत्तिनिरोधमात्रे को नाम प्रयासः । किंशब्द आक्षेपे नामेति प्रसिद्धौ । न हि कोऽपि श्रमलेशोऽपीह संभवतीत्यर्थः । कामादिचित्तवृत्तीति पाठेऽप्ययमेवार्थः । क्वचित्पुस्तके ‘ कामादिधीवृत्तिनिरोधमात्रे योगे ’ इति योगपदं, तदैतादृशे योग इति विशेषणविशेष्यभावः । कामादिधीवृत्तिनिरोधमात्रं यस्मिन्निति समासः । उक्तमेवार्थं प्रतिबन्द्या द्रढयति—**यदी**त्यादिना ।

य
शास्त्रीयप्रत्नस्य प्राबल्यानङ्गीकारे चिकित्सापदवाच्यस्थूलदेहैकदोषनाशकायुर्वेदमूलकसुश्रुतचरकादिवैद्यशास्त्रमारभ्य मोक्षशास्त्रपर्यन्तानां वेदान्तान्तानां सर्वेषां शास्त्राणामिति शेषः। आनर्थक्यं प्रसज्येत, निष्प्रयोजनत्वं स्यादिति प्रतिबन्दी। मोक्षसाधनेति पाठे तु चिकित्सापदेन हरीतक्यादिभेषजं ग्राह्यम्। तदारभ्य मोक्षसाधनं यत्तत्त्वज्ञानं तदन्तानां सर्वेषां हितसाधनानामिति शेषः। शेषं प्राग्वत्। तस्माच्छास्ति हितमुपदिशतीति शास्त्रं वेदादि तत्रोपदिष्टत्वेन जातः शास्त्रीयो न तु लौकिकः। ईदृग्यः प्रकृष्टः सद्यः परमानन्दप्रदः पुनर्दृश्यमानध्वंसको यो यत्न उद्योगो न तु यागादिवज्जन्मान्तरे क्षयिष्णुसुखदः परिणामदुःखदश्च। तस्य प्राबल्यं प्रारब्धध्वंसकत्वेन प्रकृष्टबलवत्तरत्वमङ्गीकार्यमेव योगस्येत्याशयः।

ननु कृतेऽपि कारीरीष्ट्यादिरूपे शास्त्रीयप्रयत्ने तत्फलस्य वृष्ट्यादेः कदाचिदभावोऽपि दृष्ट इति प्रारब्धकर्मैव दुरन्तं, ततस्तत्रैव शास्त्रीयस्यापि प्रयत्नस्य कुण्ठीभाव एव। न हि तावन्मात्रेण सकलशास्त्रतत्रत्येष्टसाधनान्यतरानर्थक्यप्रसक्तिरूपा प्रतिबन्दी प्रारब्धेतरत्र शास्त्रीयप्रयत्नसार्थक्याङ्गीकारादिति चेत्। बाढम्। नैतावता प्रतिबन्दीमोचनम्। तथा हि—यदि प्रारब्धाग्रे शास्त्रीयस्यापि प्रयत्नस्य सर्वथा कुण्ठीभाव एव सिद्धस्तर्हि तस्य सर्वत्र स्वकार्यकारित्वलक्षणं प्राबल्यं तु क्षतमेव तथात्वेऽद्य शास्त्रीयप्रयत्नात्मकं कर्मादिकमिष्टसाधनमनुष्ठेयं तज्जन्मान्तरे यदा प्रारब्धत्वेनापूर्वद्वारा परिणमेत्तदैव फलदं स्यान्न सद्य इति सद्यःफलदातृचिकित्साद्यखिलशास्त्रवैयर्थ्यलक्षणप्रतिबन्दीतादवस्थ्यमेव। न हि कश्चिद्रुग्णो जन्मान्तरे ममाऽऽरोग्यं भूयादिति धियाऽधुनौषधमधिसेवते, न वा कश्चिन्मुमुक्षुरपि जन्मान्तरे मम मोक्षो भवत्विति धियाऽधुनैव बोधं साधयति। तस्मात्सर्वत्र शास्त्रीयप्रयत्नप्राबल्यस्य प्रारब्धे संकोचः प्रारब्धस्य ततः प्राबल्यं तादृशस्थले सद्यः फलदातृकारीर्यादिव्यापाराणां नैष्फल्यं जन्मान्तरे फलदातृत्वं वा तद्बोधकशास्त्रस्याप्रामाण्यं चेति त्वन्मतस्यानेकगौरवदुष्टत्वाच्छ्रुतस्य सद्यःफलदातृत्वस्य हानिस्तथाऽश्रुतस्य जन्मान्तरफलदातृत्वस्य कल्पनं चेत्याद्यनेकदोषग्रस्तत्वाद्वरं लाघवात्तादृशस्थले कारीर्यादिशास्त्रीयप्रयत्नव्यङ्गत्वकल्पनमेवेत्याशयेनाऽऽह—

**नहि कादाचित्ककर्मफलविसंवादमात्रेण दौर्बल्यमापादयितुं शक्यम्। अन्यथा कादाचित्कं पराजयं दृष्ट्वा सर्वैर्भूपैर्गजाश्वादिसेनोपेक्ष्येत।**

**नहीति।** कदाचिद्भवः कादाचित्कः स चासौ कर्मणां सद्यःफलदकारीर्यादीनां फलस्य वृष्ट्यादेर्विसंवादो विपरीतः कृतेऽपि शास्त्रीये प्रयत्ने फलं तु नैव जातं तस्माद्व्यर्थ एव यत्नस्तद्बोधिशास्त्रमपि वञ्चकमेवेत्यादिरूपः संवादः परस्परं जनानां सम्यङ्निर्णयपूर्वकं वादो भाषणं येनाभावेन स एव कर्मफलविसंवादमात्रं तेन। मात्रचा शास्त्रीयप्रयत्ने प्राबल्याभावोऽपास्तः। तेनानुष्ठानवैगुण्यादेव फलाभाव इति ध्वनितम्। कदाचित्कर्मव्यङ्गत्ववशाज्जातकारीर्यादिकर्मफलस्योक्तविपरीतसंवादहेतोरभावादेव दौर्बल्यं सामर्थ्यराहित्यमापादयितुं दोषत-

याऽऽनेतुं न हि शक्यम् । हिरवधारणे नैव शक्यमित्यर्थः । शास्त्रीयप्रयत्नस्येति शेषः । तस्माद्यथा यथा शास्त्रीयप्रयत्नपुष्टिस्तथा तथेष्टफलदृष्टिरिति सर्वव्यवस्थासंभवाच्छास्त्रीयप्रयत्नप्राबल्यं सर्वथा स्वीकरणीयमेवेति भावः । किंच शास्त्रीयप्रतिबन्दीं मोक्तुमुद्युक्तस्य तव तन्मोचनं तु दूरे प्रत्युत सर्पभिया पलायन्वृश्चिकेन दष्ट इति न्यायेन लौकिक्यपि द्वितीया प्रतिबन्दी गले पततीत्यभिप्रायेणाऽऽह—**अन्यथेति** । कादाचित्कसद्यःफलदकर्मफलाभावमात्रेण प्रारब्धाग्रे शास्त्रीयप्रयत्नदौर्बल्याङ्गीकारे सति पराजयमपजयं दृष्ट्वा विलोक्य सर्वैः प्राचीनैरर्वाचीनैश्च भूपैः पृथ्वीपालनेच्छुभिर्न तृदासीनैर्गजाश्वादिसेना चातुरङ्गं बलमुपेक्ष्येत त्यज्येत । कादाचित्कपराजयादेव प्रारब्धैकप्राबल्ये नृपैः स्वबलं त्यक्तं स्यादिति द्वितीया लौकिकी प्रतिबन्दी । तस्मान्न त्वन्मतं साध्विति ध्वनिः ।

न च लौकिकप्रतिबन्द्या न शास्त्रार्थनिर्णयः समुचित इति शङ्क्यम् । पूर्वाचार्यैरपि तथा कृतत्वादित्याह—

**अत एवाऽऽनन्दबोधाचार्या आहुः—"नह्यजीर्णभयादाहारपरित्यागो भिक्षुकभयाद्वा स्थाल्यनधिश्रयणं, यूकाभयाद्वा प्रावरणपरित्यागः" इति । शास्त्रीयस्य प्रयत्नस्य प्राबल्यं वसिष्ठरामसंवादे विस्पष्टमवगम्यते—सर्वमेवेह हि सदेत्यारभ्य तदनु तद्व्यवमुच्य साधु तिष्ठेत्यन्तेन ग्रन्थेन ।**

**अत एवेति** । कादाचित्कफलादर्शनेऽपि शास्त्रीयप्रयत्नस्य प्राबल्याङ्गीकारादेव । आनन्दबोधाचार्याः । आनन्दव्यञ्जकोऽद्वैतसुखद्योतको बोधो ज्ञानं येषां ते तथा यथार्थनामान इत्यर्थः । ते च त आचार्याश्च । मन्त्रव्याख्याकृदाचार्य इतिकोशाद्वेदतदर्थदर्शित्वेन परमप्रामाणिका इत्यर्थः । तद्वचः पठति—न **हीति** । अजीर्णभयात्, न जीर्णं परिपक्वमजीर्णं तस्य ( तस्मात् ) भयं तस्मात् । धातुवैषम्यद्वारा रोगापादकमजीर्णं मेऽन्नभक्षणेन भविष्यतीति भीत्येत्यर्थः । आहारपरित्यागः । आह्रियते भक्षणार्थं गृह्यत इत्याहारो योग्यमन्नं तस्य परितः सर्वतस्त्यागः । न हि नैव लोकैः कादाचित्काजीर्णदर्शनेन सर्वथाऽन्नभक्षणं त्यज्यत इति भावः । अत्र परीत्युपसर्गाद्धितमितसितपूतान्नभिन्नमन्नं तु त्यज्यत एव सद्भिरिति व्यज्यते । बाधाग्रहहननार्थमुदाहरणबाहुल्यम् । भिक्षुकभयात् । भिक्षतीति भिक्षुकः । ग्रासमात्रं भवेद्भिक्षेति वचनात् ।

यतिश्च ब्रह्मचारी च विद्यार्थी गुरुपोषकः ।
अध्वगः क्षीणवृत्तिश्च षडेते भिक्षवः स्मृताः ॥

इति षण्णां भिक्षुकत्वोक्तेश्च यत्तद्यन्यतमः स्वल्पयाचकस्तस्य ( तस्मात् ) भयात् । पाके कृते प्रायेण भिक्षुका भिक्षार्थमायान्त्येव । आगतेषु च तेष्वतिथिवैमुख्यभीत्या स्वल्पमप्यन्नं दातव्यं स्यादेव तेन च धनव्ययस्ततो दारिद्र्यदुःखमिति भीत्येत्यर्थः । स्थाल्यनधि-

श्रयणम् । स्थाली पाकपात्रविशेषस्तस्या अनधिश्रयणम् । अधिश्रयणं पचनार्थं तण्डुलादिपूरणपूर्वकं महानसे स्थापनं तदभावः । न हीति सर्वत्रानुषङ्गः । यूका जन्तुविशेषस्तद्भयात्तत्कृतदंशभयादित्यर्थः । प्रकर्षेण शीतलज्जादिनिवारणक्षमत्वेनाऽऽवृणोत्याच्छादयति देहमिति प्रावरणं वस्त्रं कम्बलादि च । शेषं प्राग्वत् । एवं च लौकिकशास्त्रीयप्रतिबन्ध्यन्तयुक्तिसहस्रवशात्प्रारब्धदौर्बल्यपूर्वकं शास्त्रीयप्रयत्नस्य प्राबल्ये सिद्धे तत्र द्वात्रिंशत्साहस्र्याख्यबृहद्योगवासिष्ठापरनामकमोक्षोपायसंज्ञकश्रीमद्वाल्मीकिविरचितदेवदूतोक्तमहारामायणसंमतिं प्रतिजानीते—**शास्त्रीयस्येति** । पदत्रयमिदं तु विवृतमेवाधस्तान्निकट एव । कस्मिन्स्थल इत्यत आह—**वसिष्ठेति** । वसिष्ठरामयोः संवादः परमार्थप्रश्नप्रतिवचनं तस्मिन् । कियता ग्रन्थेनेत्यत्राऽऽह—**सर्वमिति** । अत्रोक्तग्रन्थस्थानि यावदुपयुक्तान्येव कानिचित्पद्यान्युदाह्रियन्ते न तु सर्वाणि ग्रन्थगौरवभियेति ज्ञेयम् ।

तं ग्रन्थं बृहद्वासिष्ठीयमुमुक्षुव्यवहाराख्यद्वितीयप्रकरणगतनवमसर्गस्थमपि मध्यवासिष्ठीयतत्प्रकरणगतप्रथमसर्गस्थमेव पठति **वसिष्ठ** इत्यादिना—

**वसिष्ठः—" सर्वमेवेह हि सदा संसारे रघुनन्दन ।**
**सम्यक्प्रयुक्तात्सर्वेण पौरुषात्समवाप्यते ॥ "**[1]

**सर्वं पुत्रवित्तस्वर्गलोकब्रह्मलोकादिफलं, पौरुषं पुत्रकामेष्टिकृषिवाणिज्यज्योतिष्टोमब्रह्मोपासनानुष्ठानलक्षणः पुरुषप्रयत्नः ।**[2]

उवाचेति शेषः । अत्र मूलकारैर्यानि पदानि न विवृतानि तान्येव मया विव्रियन्ते । **सर्वमेवेहेति** । हे रघुनन्दन । इह संसारे । सदा निरन्तरम् । सर्वेण निखिलेनाधिकारिणा । **सम्यगिति** । ईदृशात्पौरुषात्समवाप्यते हीत्यन्वयः । रलयोः सावर्ण्याल्लघूनलपानप्यधिकारिणः स्वमहिम्ना नन्दयति ब्रह्मानन्दं प्रापयति स तथा तत्संबुद्धौ । अस्मिन्संसारे हि द्विविधा जनाः सदसदत्पदवाच्याः क्रमान्महान्तो लघवश्च । तत्राऽऽद्यानां ब्रह्मात्मैक्यानुभवान्न कश्चिदप्यानन्दाय परापेक्षेत्यवशिष्टानामेव तदपेक्षेति भवानद्वैतात्मरूपोऽपि भक्तदृशा दीनानुकम्पित्वस्वाभाव्यात्प्रकृतलीलाविग्रहं मायया धृत्वा लोकानामैहिकादिमुक्तिपर्यन्तं हितं कथं स्यादिति पृच्छसीति संबोधनतात्पर्यम् । इह, इदंतयाऽनुभूयमानेऽहमादिदृश्यलक्षणे । संसारे, सम्यग्घटीयन्त्रन्यायेनोर्ध्वाधोभागे सरन्ति स्वर्गनरकादौ गच्छन्ति जीवा अस्मिन्निति तथा तत्र । यद्वा सम्यगेव स्वप्रकाशानन्तानन्दत्वेनातिरम्यः परमात्मैवाविनाशित्वेन 'तमेव भान्तमनुभाति सर्वम्' इतिश्रुतेर्यावद्दृश्यसत्ताभानप्रयोजकत्वेन च 'सारो बले स्थिरांशे च' इति विश्वात्सारः सकलद्वैतबाधावधित्वेन स्थिरांशो यस्मिन्स तथा तत्रेत्यर्थः । एतेन 'परमात्मावशेषोऽपि तत्सत्यत्वविनिश्चयः' इत्यादिचित्रदीपोक्तेर्यावद्दृश्यबाधेनाबाधितब्र-

---

१ क. ख. ग. घ ङ. च. 'त्प्रयत्नात्स°' । । २ क. ख. ङ. च. °नाल° ।

ज्ञात्मैक्यनिश्चयस्यापि विचारिततत्त्वमस्यादिमहावाक्यैककरणकचरमप्रमारूपान्तःकरणवृत्ति-रूपत्वेन संसारान्तःपातित्वमेवेति सूचितम्। सदा कालत्रये। एवकारोऽप्यर्थे। सर्वमपि हितम्। सम्यक्प्रयुक्तात्। अनुपरम एव सम्यक्प्रयोग इत्येतट्टीकाकाराः। सम्यग्यथाविधि प्रकर्षेण तदेकपरत्वरूपोत्कर्षेण युक्ताद्योजितादित्यर्थः। पौरुषात्, व्याख्येयलक्षणात्। समवाप्यते हि। सम्यग्विज्ञानाहतत्वेनैवावाप्यते। हिरवधारणे। प्राप्यत एवेति यावत्। एतेन सम्यक्प्रकर्षेण च न योजितं चेत्पौरुषं तदा फलानुदये तु नैव शास्त्रवैयर्थ्यमिति द्योतितम्। आचार्यः श्लोकगतं सर्वमिति पदं विवृणोति—**सर्वं पुत्रे**त्यादिना। पुत्रः संभावितनरकात्पित्रादित्रातृत्वविशिष्ट आत्मजो न तु केवलः। वित्तं धनम्। स्वर्गलोको धूमादिमार्गगम्यः पितृलोकः। ब्रह्मलोकोऽर्चिरादिमार्गगम्यः सत्यलोकः। आदिना मोक्षः। एतेषां समाहारस्तद्रूपं यत्फलं तत्तथेत्यर्थः। तथा श्लोकगतपौरुषपदार्थमप्याह—**पौरुषमि**त्यादिना। पूर्वतन्त्र एव प्रसिद्धा पुत्रकामेष्टिः। कृषिर्वाणिज्यं चापि वैश्यकर्म प्रसिद्धमेव। तथा 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति ज्योतिष्टोमनामा स्वर्गसाधनीभूतो यागोऽपि। ब्रह्मोपासनं निरन्तरसगुणनिर्गुणान्यतरब्रह्मध्यानम्। एतेषामनुष्ठानं निरुक्तसम्यक्प्रयुक्तत्वपूर्वकं विधानं तल्लक्षणं स्वरूपं यस्य सः। एतादृशो यः पुरुषस्य जीवस्याधिकारिणः प्रयत्नस्तत्पौरुषमित्यर्थः।

पौरुषं द्विधा विभज्य तत्फलभेदमप्याह—

**उच्छास्त्रं शास्त्रितं चेति पौरुषं द्विविधं स्मृतम्।**
**तत्रोच्छास्त्रमनर्थाय परमार्थाय शास्त्रितम्॥**

**उच्छास्त्रं परस्त्रीगमनपरद्रव्यापहरणादि। शास्त्रितं नित्यनैमित्तिकानुष्ठानादि। अनर्थो नरकः। अर्थेषु स्वर्गादिषु परमो मोक्षः परमार्थः।**

**आबाल्यादलमभ्यस्तैः शास्त्रसत्संगमादिभिः।**
**गुणैः पुरुषयत्नेन सोऽर्थः संपद्यते हितः॥**

**अलं संपूर्णं सम्यगित्यर्थः। गुणैर्युक्तेनेत्यध्याहारः। हितः श्रेयोरूपः।**

**उच्छास्त्रमिति**। इदमपि मध्यवासिष्ठ एव पञ्चमसर्गे। उल्लङ्घितं शास्त्रं येनेत्युच्छास्त्रं व्याख्येयलक्षणम्। शास्त्रेण विहितं शास्त्रितम्, एतदपि व्याख्येयलक्षणम्। इति भेदाद्द्विविधं द्विप्रकारकं पौरुषं स्मृतम्। एतद्द्वयमपि क्रमेणानर्थपरमार्थयोर्व्याख्येययोः कारणे इत्यर्थः। उच्छास्त्रं विवृणोति—**उच्छास्त्रं परस्त्रीति**। परस्त्रियां स्वान्यरमण्यां गमनं परद्रव्यस्य स्वेतरधनस्यापहरणं प्रसिद्धमेव। आदिपदादभक्ष्यभक्षणाद्यपि। तथा शास्त्रितमपि स्पष्टयति—**शास्त्रितं नित्येति**। नित्यं संध्यावन्दनादि नैमित्तिकं जातेष्ट्यादि तयोरनुष्ठानं यथाविधि विधानम्। आदिना ज्ञानसाधनशमादिसंपादनपुरःसरं

तत्संपादनं ज्ञेयम् । अनर्थपदार्थं कथयति—**अनर्थ इति** । नरकः कुम्भीपाकादिः । परमार्थं लक्षयति—**अर्थेष्विति** । अर्थ्यन्तेऽधिकारिभिरभिलष्यन्त इत्यर्थः, तेषु स्वर्गादिषु । आदिना ब्रह्मलोकः । तेषु सत्यलोकान्तेषु सर्वेषु सुकृतसमधिगम्यपदार्थेषु मध्ये परमः स्वात्माभिन्नत्वान्नित्यसिद्धतया विध्यसाध्यत्वादज्ञानावृतत्वेन ज्ञानैकव्यङ्ग्यत्वादात्मत्वेनाविनाशित्वाच्चिद्रूपत्वेन नित्यप्रत्यक्षत्वात्स्वतःप्रियत्वेनाऽऽनन्दरूपत्वादद्वैतत्वेनाभयत्वाच्च सर्वोत्कृष्टः पराऽनुपमा मा स्वप्रकाशानन्दाद्वैतचिद्रूपा शोभा यस्येति वा । तत्र शास्त्रितमपि प्रतिज्ञातसम्यक्प्रयुक्तत्वादिगुणकदम्बविशिष्टमेव पौरुषं परमार्थसाधकं नान्यदित्याह—**आबाल्यादिति** । इदमपि पद्यं मध्यवासिष्ठ एव पञ्चमे सर्गे तथा सप्तमे च । बालः पञ्चवर्षवयाः कुमारः, तत एवोपनयनादिसंभवेन शास्त्राधिकारात् । यद्यप्येतदधुना दुर्लभं तथाऽपि यौवने तु यतनीयमेवेति रहस्यम् । यद्वा बालोऽत्र ग्रहणधारणासमर्थस्तस्य भावो बाल्यं तदा मर्यादीकृत्येति तथा तदारभ्येत्यर्थः । अलं मनःपूर्वकम् । अभ्यस्तैः परिचितरूपैः । **शास्त्रेति** । शास्तीति शास्त्रं हितोपदेष्टृ वेदादि । तथा सतां साधूनां जीवन्मुक्तानामिति यावत् । संगमः समागमस्तच्च स चेति तथा तावादी येषां शमादीनां ते तथा तैरित्यर्थः । एतादृशैश्च गुणैः । युक्तेनेत्यार्थिकम् । एतादृशेन । **पुरुषेति** । पुरुषार्थेच्छुकृतसंध्यावन्दनादिनिदिध्यासनान्तोद्योगेनेति यावत् । सः, प्रसिद्धो मोक्षाख्यः । स्वार्थ इति पाठे त्वात्मरूपोऽर्थः । हितः परमानन्दाद्वैतात्मरूपत्वेनाभिलषितोऽर्थः पुमर्थः संपद्यते संपन्नो भवति न त्वन्यथेत्यर्थः । अत्र हितपदं त्रिवर्गवारणार्थम् । बाल्यपदस्य मत्कृतद्वितीयार्थेऽनुग्रहोऽपि तत्रैव पञ्चमसर्गे—

बाल्ये गतेऽविरतकल्पितकेलिलोले दोर्दण्डमण्डनवयःप्रभृतिप्रयत्नात् ।
सत्संगमैःपदपदार्थविशुद्धबुद्धिः कुर्यान्नरः स्वगुणदोषविचारणानि ॥ इति ।

तत्र मूलकृदेवालंपदविवक्षितार्थं कथयति—**अलं संपूर्णमिति** । शास्त्राभ्यासादिगुणानां पुरुषप्रयत्नाङ्गत्वार्थमध्याहारमाह—**गुणैर्युक्तेनेतीति** । हितपदार्थमाह—**श्रेयोरूप इति** । ‘ मोक्षः कैवल्यनिर्वाणश्रेयोनिःश्रेयसामृतम् ’ इत्यमरान्मोक्ष एवेत्यर्थः ।

ननु सत्यं कर्तव्य एव पुरुषप्रयत्नः शास्त्रीयः परमार्थार्थं तथाऽपि वासनापारवश्येन स्वातन्त्र्याभावात्कथं तत्सिद्धिरित्यज्ञातशास्त्ररहस्यानामाशङ्कामप्यनुकम्पया श्रीरामः शङ्कते—

**श्रीरामः—प्राक्तनं वासनाजालं नियोजयति मां यथा ।**
**मुने तथैव तिष्ठामि कृपणः किं करोम्यहम् ॥**

**वासना धर्माधर्मरूपा जीवगताः संस्काराः ।**

**वसिष्ठः—अत एव हि हे राम श्रेयः प्राप्नोषि शाश्वतम् ।**
**स्वप्रयत्नोपनीतेन पौरुषेणैव नान्यथा ॥**

**यतो वासनापरतन्त्रो भवानत एव हि पारतन्त्र्यनिवारणाय स्वोत्साहसंपादितो मनोवाक्कायजन्यः पुरुषव्यापारोऽपेक्षितः ।**

**श्रीराम इति ।** उवाचेति शेषः । हे मुने प्राक्तनं वासनाजालं मां यथा नियोजयति तथैवाहं तिष्ठामि यतः कृपणः किं करोमीत्यन्वयः । हे मुने मननशीलत्वादिना मत्संशयोच्छेददक्ष श्रीवसिष्ठ । प्राक्तनं प्राग्भवं जन्मान्तरीयमित्यर्थः । वासनाजालं कर्मतत्फलसंस्कारसमूहः । माम्, अस्मच्छब्दोपलक्षितमहंकारविशिष्टं सर्वमप्यधिकारिणमिति यावत् । यथा येन प्रकारेण तीव्रादिमध्ये यया कयाऽपि रीत्या नियोजयति नितरां राजादिवद्बलाद्योजयति सदसदन्यतरवर्त्मनि प्रेरयति तथैव तयैव रीत्या न त्वीषदपि विपरीतया तिष्ठामि तत्र तत्र मार्गे स्थिरी भवामि । एवं तर्हि पौरुषं कुतो न करोषीत्यत्राऽऽह—**कृपण इति ।** वासनापिशाचिकापारतन्त्र्याद्दीन इत्यर्थः । अत एतादृशोऽहम्

एवं पुरुषकारेण सर्वमेव रघूद्वह ।
प्राप्यते नेतरेणेह तस्मात्स शुभदोऽस्तु ते ॥

इत्यन्तप्राक्तनग्रन्थेन यन्मम पुरुषप्रयत्नावश्यावलम्बनमुपदिष्टं तत्र किं करोमि । किंशब्द आक्षेपे । न किमपि हितसाधनं कर्तुं शक्नोमीत्याशयः । तत्र वासनाशब्दार्थमाहुर्मूलकाराः—**वासना इति ।** धर्माधर्मौ निरूप्येते यैस्ते धर्माधर्मरूपाः पुण्यपापसूचका जीवगताश्चिदाभासोपलक्षितान्तःकरणस्थाः संस्कारा भावनापूर्वप्रज्ञापरपर्यायाः कर्मतत्फलोपभोगगन्धा इत्यर्थः । तथा चोक्तं बृहदारण्यवार्तिके—

कर्मणः क्रियमाणस्य संस्कारो यो हृदि श्रितः ।
तत्फलस्य च भुक्तस्य पूर्वप्रज्ञेति सोच्यते ॥ इति ।

एवं तर्हि समीचीनमेव यदि त्वया 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्' इति परमेश्वरस्य जीवकर्मानुसारेण फलदातृत्वेन विषमत्वनिर्दयत्वाभावबोधकं न्यायमननुसंधायैवेश्वरपारतन्त्र्यमेव स्वस्याङ्गीकृतं स्यात्तर्हि पाशुपतभागवतादिवत्त्वन्मतखण्डने प्रसक्तत्वेन प्रकृताद्वैतविचारविरामात्काठिन्यमेवाभविष्यत्तत्तु नास्तीति तुष्टो वसिष्ठ उवाचेति । क्वचिद्वासिष्ठपुस्तकादौ श्रीशब्दोऽप्यादौ दृष्टः, तदा श्रीमांश्चासौ वसिष्ठश्चेति विग्रहः । श्रीरत्राणिमाद्यैश्वर्यपूर्वकजीवन्मुक्तिसंपत्तिरेव । अत एव, शास्त्रीयपौरुषनाश्यवासनापारतन्त्र्यादेव । हीति प्रसिद्धम् । हे राम, रमयत्युत्तमतमाधिकारित्वेन गुर्वादीनिति रामस्तत्संबुद्धौ । शाश्वतं श्रेयः प्राप्नोषि । अविनाशि निर्वाणमद्वैतकैवल्यं प्राप्स्यसीत्यर्थः । वर्तमानसामीप्ये वर्तमानवद्व्यपदेशः । केनेत्यत्राऽऽह—**स्वप्रयत्नेति ।** स्वस्य पुरुषस्य प्रकृष्टस्तीव्रसंवेगादिरूपो यो यत्न उत्साहस्तेनोपनीतं समुचितं तेन । एतादृशेन शास्त्रीयपुरुषप्रयत्नेनैवेत्यर्थः । उपायान्तरशङ्कां प्रत्याह—**नान्यथेति ।** तत्र तात्पर्यमाहुर्मूलकाराः—**यत** इत्यादिना । यतः, हेतोः ।

वासनापरतन्त्रः । वासनैव परमुत्कृष्टं तन्त्रमिव तन्त्रं शास्त्रवन्नियामकं यस्य सः । वासनैकपराधीन इत्यर्थः । भवांस्त्वमसि । अत एव, अस्मादेव कारणादीश्वरवदपरिहार्यत्वाभावात् ।

प्राक्तनं चैहिकं चेति द्विविधं विद्धि + + ।
प्राक्तनोऽद्यतनेनाऽऽशु पुरुषार्थेन जीयते ॥

इत्यत्रै [ हिक ] वासनायाः शास्त्रीयपौरुषनाश्यत्वाच्च । हीति निश्चयेन । पारतन्त्र्यनिवारणाय । अ[धीन]त्वध्वंसार्थम् । स्वोत्साहसंपादितः, निजोत्कण्ठा [ प्रापितः ] । मनोवाक्कायजन्यः, देहद्वयोद्भवः । पुरुषव्यापारः जीव[ स्य ] शास्त्रीययत्नोऽपेक्षितः । अवश्यमभिलषित इत्यर्थः ।

उक्तार्थोपपादनार्थं वासनानां शुभाशुभत्वभेदेन द्विविधां सिद्धवत्कृत्य तत्सद्भावं विकल्पेन पृच्छति—

**द्विविधो वासनाव्यूहः शुभश्चैवाशुभश्च ते ।**
**प्राक्तनो विद्यते राम द्वयोरेकतरोऽथ वा ॥**

**किं धर्माधर्मावुभावपि त्वां नियोजयत उतैकतर इति विकल्पः । एकतरपक्षेऽपि शुभोऽशुभो वेत्यर्थसिद्धो विकल्पः ।**

**वासनौघेन शुद्धेन तत्र चेदृपनीयसे ।**
**तत्क्रमेणाऽऽशु तेनैव पदं प्राप्स्यसि शाश्वतम् ॥**

**द्विविध इति ।** हे राम ते प्राक्तनो वासनाव्यूहः शुभोऽशुभश्चेति द्विविधोऽपि विद्यतेऽथ वा द्वयोर्मध्य एकतरो वेति वदेत्यध्याहृत्य योज्यम् । उक्तार्थं संबोधनम् । प्राक्तनः पूर्वजन्मभवः । वासनाव्यूहः, निरुक्तवासनानिचयः । शुभः, सुखदः । इतिभेदेन द्विविधो द्विप्रकारोऽपि विद्यते वर्तते । अथ वा यद्वा । द्वयोर्मध्य उभयोरन्तरा । एकतरो वेति वद ब्रूहीत्यर्थः । तत्र तात्पर्यमाहुर्मूलकाराः—**किं धर्माधर्मावि**त्यादिना । धर्माधर्मावित्युपलक्षणं यावच्छुभाशुभवासनयोः ।

इत्थं हि शुभाशुभे वासने । ‘ तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च ’ इति श्रुत्या देहाद्यारम्भकत्वं विद्याकर्मपूर्वप्रज्ञासंज्ञकानां त्रयाणामपि पदार्थानामुक्तं तत्र न हि मृतस्य विद्याकर्मणी स्वरूपेण स्थातुमर्हतः कारकभेदाभावादतो वासनात्मनैव स्थितेस्तत्प्राधान्यात्तस्या युक्ता पृथगुक्तिरिति पूर्वोदाहृतायां शास्त्रप्रकाशिकाख्यायां वार्तिकामृतव्याख्यायामानन्दज्ञानविरचितायां विद्याकर्मणोर्वासनात्मनैव स्थित्युपपादनात्प्रत्येकं तच्चातुर्विध्यस्य पूर्वोक्तसंक्षेपशारीरकादावुक्तत्वाच्च विहितविहितसमविद्याकर्मतत्संस्कारतत्फलसंस्काररूपा शुभवासना तथा निषिद्धनिषिद्धसमविद्याकर्मतत्संस्कारतत्फलसंस्काररूपाऽशुभवासना चेति ।

---

१ क. ख. ङ. च. °त्यर्थासिद्धौ । २ ङ. °मेण शुभेन° ।

अत्रोदाहरणानि क्रमेण स्फुटं लिख्यन्ते—तत्र विहिता विद्या देवतोपासनादिरूपा। विहितसमा, आकस्मिकदेवतामूर्तिदर्शनादिरूपा। विहितं कर्म संध्यावन्दनादि। विहितसमं पिपीलिकादिभ्यो बुद्ध्या विपिने गत्वाऽन्नदानादि। एतेषां चतुर्णां संस्कारास्तथैतेषां ततोऽपि पूर्वजन्मकृतानां यानि जन्मान्तरे फलानि देवलोकाद्याप्तिरूपाणि तेषां च संस्कारा इति शुभवासनोदाहरणानि। तथा निषिद्धा विद्या स्त्रीचिन्तनादिरूपा। निषिद्धसमा यदृच्छया काकविडाद्यवेक्षणात्मिका। निषिद्धं कर्म पलाण्डुभक्षणादि। निषिद्धसमं तृणच्छेदनादि। एतेषामपि चतुर्णां प्राग्वत्तत्फलानां च नरकादीनां संस्कारा इत्यशुभवासनोदाहरणानि च ज्ञेयानि। तस्मादुक्तलक्षणौ धर्माधर्मशब्दाभिधेयौ शुभाशुभवासनाराशी उभावपि त्वां नियोजयतः, नितरां सदसन्मार्गयोः प्रेरयतः। स्पष्टमेवावशिष्टम्। तत्र श्रीरामस्य व्यवहारदशाऽप्युत्तमतमाधिकारित्वादुभयवासनाप्रेर्यत्वपक्षोऽशुभवासनामात्रप्रेर्यत्वपक्षश्च नैव युज्यत इति परिशेषाच्छुभवासनामात्रप्रेर्यत्वपक्षमेवाङ्गीकृत्य पृच्छति—**वासनौघेनेति**। शुद्धेन निरुक्तलक्षणेन शुभेनेत्यर्थः। अपनीयसे चेत्सन्मार्ग एव प्रवर्त्यसे चेत्। आशु शीघ्रमेव। शाश्वतं पदं प्राप्स्यसि मुक्तिमद्वैतात्मतया लप्स्यसीवेत्यर्थः। शेषं व्याख्येयार्थं मूलकारैः।

तत्रेति पदार्थमाह—

**तत्र[1] तस्मिन्पक्षे तर्हि तेनैव क्रमेण शुभवासनया प्रापितेनैवाऽऽचरणेन प्रयत्नान्तरनिरपेक्षेण शाश्वतं पदं मोक्षम्।**

**अथ चेदशुभो भावस्त्वां योजयति संकटे।**
**प्राक्तनस्तदसौ यत्नाज्जेतव्यो भवता स्वयम्॥**

**भावो भावना। तर्हि यत्नोऽशुभविरोधिशास्त्रीयधर्मानुष्ठानं तेन स्वयं जेतव्यः, न तु युद्धे मृत्युमुखेनेव पुरुषान्तरमुखेन(ण) जेतुं शक्यः।**

**तत्र तस्मिन्निति**। शुभवासनैकपारवश्यपक्ष इत्यर्थः। तेनेति पदं विशदयति—**शुभवासनयेति**। निरुक्तलक्षणशुभवासनया। प्रापितेनैव संपादितेनैव तत्क्रमेण शुभेनैवेति पाठे क्रमशब्दवाच्याचरणस्यैव विशेषणं शुभेनेति। क्रमते जीवः स्वायुरतिक्रामति प्रतिक्षणमुल्लङ्घयति येनेति व्युत्पत्त्या विवक्षितं क्रमपदार्थमाह—**आचरणेनेति**। आचरणेन; कायिकादिसर्वव्यापारेण। एवकाराशयं दर्शयति—**प्रयत्नान्तरेति**। अन्यः प्रयत्न इति प्रयत्नान्तरं तस्मिन्निर्गताऽपेक्षा यस्य तेन। स्वत एव फलदानदक्षेणेत्यर्थः। शाश्वतपदद्योत्यमाह—**मोक्षमिति**। यदि पूर्वोक्तरीत्या दीनजनावनैकपरायणतयाऽशुभवासनामात्रपार-

---

१ क. ख. ग. ङ. च. °त्र तेषु पक्षेषु ततस्तर्हि। २ क. ख. ग. ङ. च. वासना।

तन्त्र्यमवलम्बसे तर्हि तदपि वक्ष्यमाणशास्त्रीयप्रयत्नेन जय्यमेवेत्याह वसिष्ठः—**अथ चेदिति**। पक्षान्तरारम्भार्थोऽथशब्दः। उक्तरीत्या संभावनार्थं चेत्पदम्। संकटे दुःखदातर्यशास्त्रमार्गे इत्यर्थः। भवता बलादिति पाठे योगबलेनेति यावत्। उक्तं हि—'नास्ति सांख्यसमं ज्ञानं नास्ति योगसमं बलम्' इति। शिष्टं तु मूल एव स्पष्टी भविष्यति। तत्र भावपदं विशदयति—**भावो भावनेति**। वासनेत्यर्थः। यत्नपदार्थं कथयति—**यत्नोऽशुभेति**। अशुभेनोक्तलक्षणाशुभवासनाव्यूहेन सह विरुध्यते तमसा सह तेज इव तच्छक्तिरोधपूर्वकं तत्तिरस्कारं करोत्येतादृशं यच्छास्त्रीयाणां वेदादौ शास्त्रे प्रतिपाद्यत्वेन भवानां धर्माणां वक्ष्यमाण· शमादिधर्माणां यदनुष्ठानं सतताभ्यासः। भवता स्वयमिति भवच्छब्दवाच्यात्मपदार्थवाचित्वमेव स्वयंशब्दस्य संमतं सर्वत्रेति पुनरुक्तिं परिहरन्स्वयंशब्दव्यावर्त्यमाह—**न त्वित्यादिना**। मुखशब्दोऽत्रोभयत्रापि द्वारवाची शेषं स्फुटमेव। अथ चेदिति श्लोके वासिष्ठटीकाकारस्त्वेवं तात्पर्यमाह—अथचेदिति। न स्वातन्त्र्येण वासनाद्युद्बोधः किंतूद्बोधकानुसारेण। यद्यसत्समागमादिना दैवादेकाऽशुभवासनोद्भवेत्साऽपि तद्विरोधिसाधुसंगमसच्छास्त्रसेवनेन विरोधिवासनामुद्भाव्योत्पाद्य वा झटिति तिरस्कार्येत्यर्थ इति। साऽप्यशुभवासनोक्तसाधनेन विरोधिवासनामुद्भाव्य तिरस्कार्या यद्वा झटिति तदङ्कुरदशायामेवोत्पाद्योन्मूल्य तिरस्कार्येति योजनीयम्। न चात्र पूर्वोक्तवार्तिकादिरीत्या दैववासनयोः पर्यायाद्दैवादेकाऽशुभवासनोद्भवेदिति कार्यकारणभावः कथमुक्तः कथं वा वासनोच्छेदेऽपि तन्मूलस्योच्छेदसाधनं नोक्तमिति शङ्क्यम्। मृद्घटन्यायेन सांगत्यात्। तथा हि कुलालादिसामग्रीसत्त्व एव यथा मृदो घटो भवति तद्वदसत्सङ्गादौ सत्येव दैवाद्दुर्वासना जायते तथा घटे दलिते मृत्सत्त्वेऽप्युदकाहरणादिकार्याभाव एव यथा तद्वद्दुर्वासनाध्वंसे दैवसत्त्वेऽपि दुःखादिकार्याभाव एव। तस्माद्युक्तैव सा टीकेति न दोषः।

एवं शुभाशुभवासनापारतन्त्र्यमध्येऽन्यतरपारतन्त्र्यपक्षयोः समाधानं विधायोभयपारतन्त्र्याख्यतृतीयं पक्षमुपक्षिप्य समाधत्ते वसिष्ठः—

**शुभाशुभाभ्यां मार्गाभ्यां वहन्ती वासनासरित्।**
**पौरुषेण प्रयत्नेन योजनीया शुभे पथि॥**

**उभयपक्षे तु शुभमार्गस्य प्रयत्ननैरपेक्ष्येऽप्यशुभमार्गं शास्त्रीयप्रयत्नेन निवार्य शुभमेव तस्य स्थाने समाचरेदिति।**

**अशुभेषु समाविष्टं शुभेष्वेवावतारय।**
**स्वं मनः पुरुषार्थेन बलेन बलिनां वर॥**

**अशुभेषु परस्त्रीद्रव्यादिषु। शुभेषु शास्त्रार्थदेवताध्यानादिषु। पुरुषार्थेन पुरुषप्रयत्नेन बलेन प्रबलेन।**

**अशुभाच्चालितं याति शुभं तस्मादपीतरत् ।**
**जन्तोश्चित्तं तु शिशुवत्तस्मात्तच्चालयेद्बलात् ॥**

**यथा शिशुर्मृद्भक्षणान्निवार्य फलभक्षणे योज्यते, मणिमुक्ताद्याकर्षणान्निवार्य कन्दुकाद्याकर्षणे योज्यते तथा चित्तमपि सत्सङ्गेन तत्तद्विपरीतविषयान्निवारयितुं शक्यम् ।**

**शुभाशुभाभ्यामिति** । भो राम यदि तव वासनासरिच्छुभाशुभाभ्यामुभाभ्यामपि मार्गाभ्यां वहन्त्यस्ति तर्हि पूर्वोक्तलक्षणेन पौरुषेण प्रयत्नेन शुभे पथि योजनीयेति योजना । वाहनीयेत्यपि पाठः । विचारवैराग्यादिप्रयत्नैः सन्मार्ग एव सा नियोजनीयेत्यर्थः । अत्र सरिच्छब्दितनदीरूपकेण वासनानिरोधस्य प्रबलतमयत्नसाध्यत्वं तस्याः स्वनिमज्जनहेतुत्वेनानुपेक्ष्यत्वं च ध्वन्यते । तत्तात्पर्यमाहुर्मूलकाराः—**उभयपक्षे त्विति** । तुशब्दस्तावद्यद्यपि शुभाशुभवासनयोरन्यतरैकपारतन्त्र्ये सत्युक्तरीत्या तन्निरासः स्यात्तथाऽप्युभयपारतन्त्र्ये कः प्रतीकार इति प्रश्नव्यावृत्त्यर्थः । एवं तर्ह्यशुभवासनैकपारतन्त्र्यापेक्षयाऽत्राल्प एव शास्त्रीयः प्रयत्नोऽपेक्षित इत्याह—**शुभभागस्ये**त्यादिना । शुभभागस्य शुभवासनांशस्य । **प्रयत्नेति** । उक्तरीत्या तस्य शनैर्मोक्षफलैकहेतुत्वात्तन्निरासाय प्रयत्नानपेक्षत्वेऽपीत्यर्थः । अशुभभागम्, अशुभवासनांशम् । शास्त्रीयप्रयत्नेन, ‘ तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ’ । ‘ नानुध्यायाद्बहूञ्छब्दान्वाचो विग्लापनं हि तत् ’ इत्यादिश्रुत्याद्युक्तविवेकवैराग्ययोगाभ्यासैकनिष्ठत्वलक्षणप्रयत्नेनेत्यर्थः । निवार्य पुनरनुदयपर्यन्तं विध्वंस्य । ननु निरुक्तशास्त्रीयप्रयत्नेन तत्कालं निवारितेऽप्यशुभवासनांशे पुनरनुदयस्तु तस्य दुःशक एव सौभर्यादियोगीन्द्राणामपि मत्स्यमैथुनदर्शनरूपोद्दीपनविभावाख्यसामग्रीसत्त्वेन कान्तोपभोगवासनोदयदर्शनादित्याशङ्कां मनसि निधाय निरुक्तप्रयत्नसातत्यमेव स्थापनीयं न तु संजाते कार्ये स समुपेक्ष्य इत्याशयेनाऽऽह—**शुभमेवेति** । तस्य, अशुभवासनांशस्य । स्थाने, निरुक्तरीत्या सामग्रीसत्त्वेनोदयस्थाने । समाचरेत्, सम्यग्दृढतमत्वेनानुतिष्ठेन्न त्वेतावत्कालमुक्तयत्नाभ्यासशालिनो मम किमनेन कोकिलकलादिरूपसामग्र्याभासेनेति सगर्वौदासीन्येनेत्यर्थः । अत्र शुभमेवेत्यवधारणं त्वन्ययोगव्यवच्छेदार्थं तेन शुभाशुभविलक्षणस्य ताटस्थ्यादेर्व्युदासः । इतिशब्दस्तु रहस्योपदेशसमाप्त्यर्थः। निरुक्तश्लोकार्थमेव वसिष्ठः स्पष्टी करोति—**अशुभेष्विति** । हे बलिनां वर नास्ति योगसमं बलमिति वचनाद्योगिनां मध्ये श्रेष्ठ रघुवीर त्वं स्वं मनोऽशुभेषु समाविष्टं चेद्बलेन पुरुषार्थेन शुभेष्वेवावतारयेति संबन्धः । एतेन वासनायाः संस्काररूपत्वेन कार्यैकगम्यत्वात्कथमुक्तशुभभागनाशादिकं स्यादिति निरस्तम् । मनःप्रचाररूपतत्कार्यध्वंसेन तत्संभवादिति । तत्राशुभादिपदानि व्याकुर्वन्ति मूलकाराः—**अशुभेष्वि**

त्यादिना । परस्त्रीद्रव्यादिषु, अन्यस्य कान्तासु कनकादिषु चेत्यर्थः । अत्राऽऽदिशब्देन क्षेत्रादि । **शास्त्रेति** । शास्त्रमुत्तरमीमांसैवात्र तदर्थोऽद्वैतं ब्रह्मैव देवता शिवविष्ण्वन्यतरः परमेश्वरलीलाविग्रहस्तद्ध्यानं तदेकाकारवृत्तिसातत्यम् । आदिपदेन योगत्यागयोर्ग्रहः । शेषं स्पष्टम् । एवं वासनानाशस्य महत्तमकष्टसाध्यत्वेनोदासीनं शिष्यं प्रति तत्सौलभ्यमाह वसिष्ठः—**अशुभादिति** । न त्वेतावता तद्विश्वसनीयमित्याह—**तस्मादपीति** । इतरत्, अशुभम् । **चालयेद्बलादिति** । उक्तवैराग्यादिबलात्कारेण निवारयेदित्यर्थः । अशुभादिति शेषः । शिशुदृष्टान्तं स्पष्टयन्ति मूलकृतः—**यथे**त्यादिना । दार्ष्टान्तिके योजयति—**तथेति** । सत्सङ्गेन, साधुसमागमवता मुमुक्षुणा । यद्वा 'महत्सेवां द्वारमाहुर्विमुक्तेः' इति श्रीमद्भागवतोक्तेः सत्सङ्गलक्षणमुख्यसाधनाख्यकरणेनेत्यर्थः । शेषं तूक्तार्थम् ।

ननु दृष्टान्तीकृतशिशोरसद्विषयान्निवारणं ताडनादिनाऽपि संभवतीति प्रकृते बलशब्दितप्राणायामाद्यभ्यासलक्षणेन योगेन दुर्विषयेभ्यो मनसो निवारणं कर्तव्यं किंवोपायान्तरेणेत्याशङ्क्य तत्र मृदुस्तीव्रश्चेति बालवशीकरण इव मनोवशीकरणेऽप्युपायद्वयं वर्तते क्रमेण शीघ्रदीर्घकालाभ्यां सिद्धिकारकमतोऽत्र

द्विविधो वासनाव्यूहः शुभश्चैवाशुभश्च ते ।
प्राक्तनो विद्यते राम द्वयोरेकतरोऽथ वा ॥

इत्यादिपूर्वप्रश्नध्वनितः प्रथमोपाय एवोत्तमाधिकारिणाऽऽश्रयणीय इति वक्ति वासिष्ठः—

**समतासान्त्वनेनाऽऽशु न द्रागिति शनैः शनैः ।**
**पौरुषेण प्रयत्नेन लालयेच्चित्तबालकम् ॥**

**चपलस्य पशोर्बन्धनस्थाने प्रवेशनाय द्वावुपायौ भवतः, हरिततृणप्रदर्शनकण्डूयनादिकं वाक्पारुष्यदण्डादिभर्त्सनं चेति । तत्राऽऽद्येन सहसा प्रवेश्यते द्वितीयेनेतस्ततो धावञ्शनैः शनैः प्रवेश्यते । तथा शत्रुमित्रादिसमत्वबोधनं प्राणायामप्रत्याहारादिपुरुषप्रयत्नश्चेत्येतौ द्वौ चित्तशान्त्युपायौ । तत्राऽऽद्येन मृदुयोगेन शीघ्रं लालयेत् । द्वितीयेन हठयोगेन द्रागिति न लालयेत्किंतु शनैः शनैः ।**

**समतेति** । तदुक्तमपरोक्षानुभूतौ—

एभिरङ्गैः समायुक्तो राजयोग उदाहृतः ।
किंचित्पक्वकषायाणां हठयोगेन संयुतः ॥ इति ।

---

१ क. ख. ग. घ. ङ. च. °मत्वं सुखबो° ।

तदर्थं सदृष्टान्तं स्पष्टयन्ति मूलकाराः—**चपलस्ये**त्यादिना। 'अपशवो अन्ये गोअश्वेभ्यः' इत्यादिश्रुतेर्गवादेः पशोरित्यर्थः। चपलस्येति विशेषणात्सरलस्य तस्य व्युदासः। तस्य बन्धनस्थाने प्रवेशनाय यत्नानपेक्षत्वादित्यर्थः। अत्र पशुदृष्टान्तेन वसिष्ठोक्तबालकदृष्टान्ते स्वल्पयत्नसाध्यत्वरूपमस्वारस्यं सूचितम्। तस्माच्चित्तबालकस्त्वयं चपलपशुतुल्यत्वेन महत्तरयत्नसाध्य इति नैवोपेक्षणीय इति तत्त्वम्। किं तदुपायद्वयमित्यत आह—**हरिततृणेति।** आद्य आदिशब्देन मृदुभाषणादि द्वितीये च रज्ज्वादि। तैर्भर्त्सनं भीतिजननमित्यर्थः। नन्वस्तु नामैतदुपायद्वयं किमेतावतेत्यत आह—**तत्रेति।** उक्तोपायद्वयमध्य इत्यर्थः। आद्येन हरिततृणादीत्युक्तप्रथमोपायेनेत्यर्थः। सहसा झटिति। द्वितीयेन वाक्पारुष्येत्याद्युक्तेनेत्यर्थः। दार्ष्टान्तिके योजयति—**तथेति।**

सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु।
साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते॥

इति श्रीभगवद्गीतोक्तदिशा सर्वस्य सुहृदादेः परमार्थतोऽद्वैतब्रह्मरूपत्वात्तदनुसंधानस्य वारंवारं समुद्दीपनमित्यर्थः। **प्राणायामेति।** आदिपदाद्धारणादि। अत्रापि कालविभेदं साधनविभेदेनाऽऽह—**तत्रे**त्यादिना। अस्य मृदुत्वं तु स्थूलायासराहित्यादेव। योगत्वं च चित्तस्याद्वैते ब्रह्मणि समाधायकत्वेन। लालयेत्पुमान्वशी कुर्यादित्यर्थः। **द्वितीयेनेति।** हठत्वं स्थूलोपायत्वादाग्रहरूपत्वाच्चास्य। द्राक्, 'स्राक् झटित्यञ्जसाह्नायद्राङ्मक्षुसपदि द्रुते' इतिकोशाच्छीघ्रमित्यर्थः। इतिशब्दः पूर्वोक्तमृदुयोगपरामर्शार्थः। एवं च यथा मृदुयोगेनाधिकारी शीघ्रं चित्तं वशी कुर्यान्न तथा हठयोगेन किंतु शनैः शनैरिति संबन्धः। तस्मादुक्तमृदुयोग एव श्रेयानिति भावः।

ननु 'बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते' इति 'अनेकजन्मसंसिद्धस्ततो याति परां गतिम्' इति च श्रीमद्भगवद्गीतोक्तेः कथं निरुक्तमृदुयोगेन शीघ्रं चित्तवशीकरणसंभावनाऽपि। न चोक्तदृष्टान्तवशात्काऽत्रानुपपत्तिरिति वाच्यम्। न हि दृष्टान्तमात्रेणार्थसिद्धिरिति न्यायेन तस्याकिंचित्करत्वात्। नो चेज्जगत्सत्यं सत्यब्रह्मकार्यत्वाच्छुक्लतन्तुकार्यीभूतशुक्लपटवदित्यनुमानेन जगत्सत्यत्वापत्तिः। तस्मात्प्राणायामादिलक्षणो हठयोग एव चित्तशान्त्युपायो न तु योगान्तरमपीत्यत आह भगवान्वसिष्ठः—

**द्रागभ्यासवशाद्याति यदा ते वासनोदयम्।**
**तदाऽभ्यासस्य साफल्यं विद्धि त्वमरिमर्दन॥**

**मृदुयोगाभ्यासाच्छीघ्रमेव सद्वासनोदये सति साफल्यमभ्यासस्य मन्तव्यं न त्वल्पकालेनासंभावना शङ्कनीया।**

**द्रागिति** । हेऽरिमर्दन, अरीन् ‘ जहि शत्रुं महाबाहो कामरूपं दुरासदम् ’ इति स्मृतेः कामादिशत्रून्मर्दयति विवेकवैराग्यादिशस्त्रैर्नाशयतीति तथा तत्संबुद्धौ । भो मुमुक्षुश्रेष्ठ रघुवीरेत्यर्थः । त्वं तदा तस्मिन्कालेऽभ्यासस्य तव तूत्तमाधिकारित्वस्योक्तसंबोधनेनैव सूचितत्वान्मृदुयोगाभ्यासस्य साफल्यं सार्थक्यं विद्धयेव जानीह्येव न त्वल्पकालेनेयं कथं ममेष्टसिद्धिर्जाता बहूनामित्याद्युदाहृतशास्त्रे तु परमार्थसिद्धेर्भूरिकालसाधनसाध्यतोक्तेरतो नैवेयं सा किंतु विरहिणः कामिनीसंनिधानाभावेऽपि तत्साक्षात्कारवद्भ्रान्तिरेवेयं काचिदित्यसंभावनादिकं कर्तव्यमित्याशयः । अत्रैवकाराध्याहारस्तु मूलकारैर्विवृताशयवशादेव । ननु कोऽसौ काल इत्यत आह पूर्वार्धेन—**द्रागभ्यासवशादिति** । यदा यस्मिन्काले ते तवाभ्यासवशान्निरुक्तमृदुयोगाभ्यासप्रभावाद्द्राक्शीघ्रमपि । अत्राप्यपिशब्दाध्याहारो निरुक्तप्रयोजन एव । वासना, शत्रुमित्रादिषु समस्वरूपब्रह्मभावनाननुसंधानं विनैवाकस्माद्‌र्धसुप्तप्रबुद्धबालकस्य स्वमातृनामग्रहणवत्सर्वत्र ब्रह्मात्मत्ववृत्त्युद्दीपकश्चित्ते संस्कारविशेष इत्यर्थः । उदयं निरुक्तवृत्त्युत्पत्त्यनुमितप्रादुर्भावं याति प्राप्नोतीत्यर्थः । तस्माद्बहूनामित्याद्युक्तशास्त्रं तु मन्दाधिकारिविषयमतो नैव कुतर्कसंपर्कान्नद्यां मृतो यो दशमः सोऽहं कथं स्यामित्यादिवन्निरुक्तफलप्राप्तावसंभावनादिविधेयमिति तात्पर्यम् । अत्र मध्यवासिष्ठटीकाकारेण तु प्रागभ्यासेत्येव पाठो मुख्यत्वेनोररीकृतः । तद्यथा—प्रागिति । अस्मिञ्जन्मन्यभ्यासं कुर्वतस्ते प्रागभ्यासवशात्प्राग्जन्मनोऽभ्यासवशात् । अथ वा प्राक्पूर्ववयसि ‘ आबाल्यादलमभ्यस्तैः ’ इत्युक्तमिति । तच्चिन्त्यम् । अरिमर्दनेति संबोधनेनोत्तमाधिकारिण एव विवक्षितत्वात्तथात्वे जन्मान्तरीयाभ्यासस्य पूर्ववयोभ्यासस्य वाऽनुपयुक्तत्वाच्छीघ्रफलदं मृदुयोगाभ्याससूचकद्राक्शब्दस्यैव युक्तत्वाच्च । न च योगभ्रष्टन्यायेन जन्मान्तराद्यभ्यासवत एवोत्तमाधिकारित्वं संभवतीति वाच्यम् । तथाऽपि सद्यःफलजनकमृदुयोगानभ्यासित्वेन तस्यानुत्तमत्वस्यैव सिद्धत्वात् । तस्मान्मूलकारादृतो द्रागित्येव पाठः साधीयानिति । अत एव मूलकारास्तदाशयं स्फुटयन्ति—**मृद्वि**त्यादिना । अर्थस्तु स्पष्ट एव ।

नन्वस्त्वेवं शुभवासनापारतन्त्र्यपक्षेऽशुभवासनापारतन्त्र्यपक्ष उभयपारतन्त्र्यपक्षेऽप्युत्तमाद्यधिकारिभेदेन पूर्वोक्तमृदुयोगादिसाधनेनेष्टसिद्धिस्तथाऽपि फले संदिग्धमेव तत्पारतन्त्र्यादि तदा कस्तत्रोपाय इति चेच्छुभवासनाशब्दितः पुण्यसंस्कारोत्कर्ष एव संध्यावन्दनाद्यसंप्रज्ञातसमाध्यन्तश्रौतस्मार्तकाम्यनिषिद्धशून्यनित्यादिकर्माद्यनुष्ठानादन्तर्यामिप्रसादेन संपादनीयस्तेनैव निखिलेष्टसिद्धिः स्यादित्याह भगवान्वसिष्ठः—

**संदिग्धायामपि भृशं शुभामेव समाहर ।**
**शुभायां वासनावृद्धौ तात दोषो न कश्चन ॥**

**शुभवासनाऽभ्यस्यमाना संपूर्णा न वेति यदा संदेहस्तदाऽपि शुभामभ्यसेदेव । तद्यथा सहस्रजपे प्रवृत्तस्य दशमी शतसंख्या यदा संदिग्धा**

**तदा पुनरपि शतं जपेत्। असंपूर्तौ संपूर्तिः संफलिष्यति। संपूर्तौ तु तद्वृद्धौ न सहस्रजपो दुष्यति तद्वत्।**

**संदिग्धायामपीति**। नन्वेवमुत्तमाधिकारिणो निरुक्तमृदुयोगाभ्यासेन शीघ्रमेवोक्तलक्षणवासनोदये निरुक्ताभ्याससाफल्यज्ञानेन संतोषो भविष्यत्येव परंतु मध्यमाद्यधिकारिणो यदा पुरुषप्रयत्नशब्दितप्राणायामादिलक्षणहठयोगमभ्यस( स्य )तः शास्त्रीयतादृग्विचाराभावान्निरुक्तलक्षणवासनोदयज्ञानस्यैव दौर्लभ्यं तदा तेन किं कार्यमित्याशङ्कायां समवलम्बितसाधनानुष्ठानमेवेत्याह स एव—**संदिग्धायामपीति**। अपिशब्देन तव तु पूर्वोक्तसंबुध्योत्तमाधिकारित्वान्नैवं संदिग्धत्वशङ्कालेशोऽपि तथाऽप्यन्यमुमुक्षुकरुणया त्वन्मनसि प्रतिपित्सा चेत्तत्रेदं समाधानमिति ध्वनितम्। तातेति निरुक्तोत्तमाधिकारित्वाद्दीनदयालुत्वाच्च श्रीरामस्य सप्रेमसंबोधनम्। अयि रघुनन्दन। संदिग्धायां निरुक्तोदयप्राप्त्या फलिता वा न वा मदभ्यस्यमाननिरुक्तहठयोगाभ्यासद्वारा शुभवासनेति संशयग्रस्तायां फलीभूतपूर्वोक्तशुभवासनायां सत्यामित्यर्थः। त्वं भृशं दीर्घकालादिनाऽत्यन्तम्। शुभामेव निरुक्तयोगरूपसाधनीभूतशुभवासनामेव। अवधारणं तु संदेहवशात्साधनत्यागादिव्यावृत्त्यै। समाहर, यावत्फलोदयं सम्यक्संपादयेत्यर्थः। ननु तर्हि 'पुण्यो वै पुण्येन कर्मणा भवति' इति श्रुतेः शुभवासना तावत्साधस्कफलानुदये जन्मापादिकैवेति चेन्नेत्याह शेषेण। **शुभायामिति**। तदाशयं विवृण्वते मूलकाराः—**शुभवासनेति**। अपिशब्देन संदेहाभावे तदभ्यसनं तु कैमुत्यसिद्धमेवेति सूचितम्। तत्र दृष्टान्तं प्रतिजानीते—**तद्यथेति**। तं विशदयति—**सहस्रे**त्यादिना। दार्ष्टान्तिके योजयति—**तद्वदिति**।

नन्वेवं कियत्कालं साधनक्लेशाः सोढव्या इति खिद्यन्तं प्रति तदवधिं कथयन्समाधत्ते भगवान्वसिष्ठोऽव्युत्पन्नेत्यादिभिस्त्रिभिः—

**अव्युत्पन्नमना यावद्भवानज्ञाततत्पदः।**
**गुरुशास्त्रप्रमाणैस्तु निर्णीतं तावदाचर॥**
**ततः पक्वकषायेण नूनं विज्ञातवस्तुना।**
**शुभोऽप्यसौ त्वया त्याज्यो वासनौघो निराधिना॥**

भो राम भवांस्त्वं यावदव्युत्पन्नमनाः, न व्युत्पन्नमव्युत्पन्नं तादृशं मनो यस्य स तथा ब्रह्मात्मैक्यविचारादावप्रवीणचेता इत्यर्थः। एतेन तत्त्वज्ञानसाधनपौष्कल्यपरिपाकपर्यन्तत्वं सूचितम्। अत एवाज्ञाततत्पदः, अज्ञातमननुभूतं तत्पदमद्वैतात्मस्वरूपं येन स तथा। अनपरोक्षीकृतात्मतत्त्व इत्यर्थः। तावदेव गुरुशास्त्रप्रमाणैः। आचार्य एवात्र गुरुशब्दाभिधेयः। गृणाति हितमुपदिशतीति गुरुरिति व्युत्पत्त्याऽपि मुख्यहितोपदेष्टृत्वस्य तत्रैव संभवात्। तथा शास्त्रयोनित्वादिति पारमर्षसूत्राच्छास्त्रशब्देनात्र वेद एव परमशास्तृत्वस्य तत्रैव संभवात्। ताभ्यामुक्तानि यानि प्रमाणानि यथार्थानुभवासाधारणकारणानि व्यवहारे भङ्गन्य

इति रीत्या भट्टसंमतानि प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्ध्याख्यानि । एतेषां लक्षणादि तूक्तं वेदान्तपरिभाषायाम् । मयाऽत्र विस्तरभिया प्रकृतानुपयोगाच्च नैव तदुदाह्रियते । तैर्गुरुशास्त्रप्रमाणैः सद्गुरुवेदाभ्यामुपदिष्टप्रत्यक्षादिभिः प्रमाकरणैरित्यर्थः । निर्णीतं निश्चितम् । आचर लौकिकाद्यखिलमोक्षसाधनं कुर्वित्यर्थः । ननु वेदस्य तथा निरुक्तगुरुवाक्यस्यापि शब्दप्रमाणत्वाच्छब्दस्य प्रामाण्यसिद्धौ वेदादेस्तत्सिद्धिस्तत्र तत्सिद्धौ तद्बोधितप्रमाणान्तर्गतशब्दे प्रामाण्यमित्यन्योन्याश्रय इति चेन्न । संसारस्यानादित्वेन तद्गतवेदतन्निष्ठप्रामाण्ययोरप्यनादित्वात् । ननु तथाऽपि वेदे कोपदिष्टानि प्रत्यक्षादीनि प्रमाणानीति चेन्न । तद्व्यञ्जकवाक्योपलम्भात् । तथा हि चक्षुर्वै सत्यमिति प्रत्यक्षस्य । तत्त्वेव भयं विदुषोऽमन्वानस्येत्यनुमानस्य । आकाशवत्सर्वगतश्च नित्य इत्युपमानस्य । नावेदविन्मनुते तं बृहन्तमिति शब्दस्य । अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्ण इत्यर्थापत्तेः । अत्र वाव किल सोम्य न निभालयस इत्यनुपलब्धेरिति । तस्माद्यावद्दृढापरोक्षसाक्षात्कारमुक्तसाधनं कार्यमेवेति भावः । तुशब्दोऽवधारणे । तुः स्याद्भेदेऽवधारण इत्यमरः । अस्त्वेवं तत्रापि निरुक्तज्ञानोर्ध्वं किं कार्यमित्यत आह—**तत इति** । ततः, दृढापरोक्षसाक्षात्कारोत्तरम् । पक्वकषायेण क्षीणप्रतिबन्धेनेत्यर्थः । अत एव नूनं निश्चितं विज्ञातवस्तुना दृढापरोक्षानुभूताद्वैततत्त्वेनेत्यर्थः । तथा च स्मृतिः—'कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते' इति । एतादृशेन भो रघुवीर त्वयाऽसौ प्रागभ्यस्तत्वेन प्रकृतः शुभोऽपि वासनौघः शान्त्यादिसंस्कारसमुदायोऽपि त्याज्योऽनादरणीयः । तत्र हेतुं वदंस्तं विशिनष्टि—**निराधिनेति** । कर्तव्यतारूपाधिहीनेनेत्यर्थः ।

ननु 'द्विविधो वासनाव्यूहः शुभश्चैवाशुभश्च ते' इत्यादौ शुभवासनाकदम्बस्य संपादनीयत्वमुक्तं तत्र किं तल्लक्षणमित्याकाङ्क्षायां तत्सूचयन्नुक्तमेवार्थं पिण्डीकृत्योपदिशति—

**यदतिसुभगमार्यसेवितं तच्छुभमनुसृत्य मनो ज्ञ भावशुद्ध्या[1] ।**
**अधिगमय पदं[2] सदाऽविशोकं तदनु तदप्यवमुच्य साधु तिष्ठ ॥**

**स्पष्टार्थः[3] । तस्माद्योगाभ्यासेन[4] कर्माद्यभिभवसंभवाज्जीवन्मुक्तौ न विवदितव्यमिति ।**

**इति जीवन्मुक्तिस्वरूपम् ।**

**यदिति** । हे ज्ञ जानातीति ज्ञस्तत्संबुद्धौ भो तत्त्वज्ञ रघुवीरेत्यर्थः । न च श्रीरामस्य वसिष्ठं प्रति तत्त्वं प्रष्टुमुद्युक्ततया जिज्ञासुत्वोपलम्भात्कथमुक्तसंबोधनमिति शङ्क्यम् । ज्ञान-

---

१ क. ख ग. घ. ङ. च °वबुद्ध्या । २ क. ख. ग. घ. ङ. च. °दं यदद्वितीयं त° । ३ क. ख. ग. घ. ङ. च. स्पष्टोऽर्थः । ४ क. ख. ग घ. ङ. च. °न कामाद्य° ।

रक्षाप्रकरणे वासिष्ठवाक्येनैव तत्र तथात्वस्य मूल एव वक्ष्यमाणत्वात् । त्वं यदतिसुभगं तथाऽऽर्यसेवितं तच्छुभमनुसृत्य भावशुद्धया मनः सदाऽविशोकं पदमधिगमयेति योजना। अतिसुभगम् । अति, अत्यन्तम् । अविनाशीति यावत् । तत्रापि सुष्ठु शोभनो भग ऐश्वर्यादिषड्गुणलक्षणो भगवत्स्वभावो येन तत्तथा । नन्वेतदेव कथं ज्ञायेतेति चेत्तत्राऽऽह— **आर्येति** । आर्याः साधवस्तैः सेवितं सर्वदाऽनुष्ठितमित्यर्थः । अत एव तैत्तिरीयाणां संहित्योपनिषद्याम्नायते—'अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात् । ये तत्र ब्राह्मणाः संमर्शिनः । युक्ता आयुक्ताः । अलूक्षा धर्मकामाः स्युः । यथा ते तत्र वर्तेरन् । तथा तत्र वर्तेथाः' इति । व्याख्यातं चेदं मूलकारैरेव पूर्वाश्रमे माधवाचार्यदशायाम्—कर्म श्रौतमग्निहोत्रादिकं स्मार्तं संध्यावन्दनादिकं च । उदिते जुहोति, अनुदिते जुहोतीतिवाक्यद्वयं श्रुतवतः श्रौते कर्मणि संदेहः स्यात् । स्मार्तेऽपि संध्यादेवता पुरुषमूर्तिः स्त्रीमूर्तिर्वेति वचनद्वयेन संदेहः । वृत्तं कुलपरम्परागतो लौकिक आचारः । तत्रापि मातुलसुताविवाहमांसभक्षणादिविप्रतिपत्तिदर्शिनः संदेहो भवति । तदानीं यस्मिन्देशे यस्मिन्काले यस्मिन्कुले स्वयं वर्तते तत्र तेषु देशकालकुलविशेषेषु वर्तमानाः संमर्शादिविशेषणविशिष्टा ब्राह्मणास्तत्र तस्मिन्संदिग्धे विषये यथा वर्तेरंस्तथा त्वमपि वर्तस्व । रागद्वेषौत्सुक्यादिदोषराहित्येन सम्यक्शास्त्रार्थनिर्णयकुशलाः संमर्शिनः । नित्यनैमित्तिकानुष्ठाने स्वयं प्रवृत्ता युक्ताः । तत्राप्या समन्ताद्युक्ता आयुक्ताः । अवैकल्येन सम्यगनुष्ठास्याम इत्येवमभियुक्ता इत्यर्थः । रूक्षेण क्रोधेनाऽऽग्रहेण वा रहिता अलूक्षाः । धर्ममेव कामयन्ते न तु लाभपूजादिकमिति धर्मकामा इति । एतेन 'श्रुतिः स्मृतिः सदाचारः' इत्यादिवचनमपि व्याख्यातम् । तच्छुभं पुण्यमित्यर्थः । एवं चाविनाश्यैश्वर्यप्रदत्वे सति साधुसेवितत्वं शुभत्वमिति तल्लक्षणं सिद्धम् । निमेषोन्मेषादावतिव्याप्तिवारणाय पूर्वदलम् । न च तावतैवालं संदिग्धत्वापत्तेः । तस्माद्युक्तमेवोक्तलक्षणमिति भावः । एतादृशं शुभमनुसृत्यावलम्ब्य भावशुद्ध्या भाव आशयस्तस्य शुद्धिर्निर्मलता तया शुद्धसत्त्वमात्रप्रधानचित्ततयेत्यर्थः । मनः, अन्तःकरणम् । सदाऽविशोकं, 'तरति शोकमात्मवित्' इति श्रुतेर्निरन्तरं विगतशोकं नित्यानन्दरूपमिति यावत् । पदम्, अद्वैतात्मतत्त्वं मुमुक्षुप्राप्यं स्वरूपमित्यर्थः । अधिगमय प्रापय । अद्वैते ब्रह्मणि चित्तं स्थिरी कुर्वित्यर्थः ।

त्यज धर्ममधर्मं च उभे सत्यानृते त्यज ।
उभे सत्यानृते त्यक्त्वा येन त्यजसि तत्त्यज ॥

इतिस्मृतेर्निरुक्तज्ञानदार्ढ्योत्तरं ब्रह्माद्वैताकारं मनोऽपि त्वया हेयमेवेत्याह—**तदन्विति** । तदनु निरुक्तज्ञानादूर्ध्वम् । तदपि विचारितमहावाक्यजन्यं ब्रह्मात्मैक्याकारमनोरूपं तत्त्वज्ञानमपि । अपिशब्दोऽत्र निरुक्तशुभवासनामूलीभूतक्तलक्षणपुण्यपुञ्जत्यागस्य कैमुतिकन्यायसिद्धत्वसूचनार्थः । अवमुच्य, अहं ज्ञानीत्यभिनिवेशत्यागेनैव त्यक्त्वेत्यर्थः । साधु, अद्वैतं

ब्रह्मैव । तिष्ठ, निर्विकल्पकसमाधिस्थत्वेन सप्तमभूम्यारोहणवशाच्चिदेकरसो भवेत्यर्थः । तस्माद्यावत्तत्त्वावबोधं पूर्वोक्तशुभवासनाबीजीभूतोक्तलक्षणशुभशब्दवाच्यपुण्यानुसरणं कर्तव्यं ततस्तं बोधमपि हित्वाऽसंप्रज्ञातसमाधिनिष्ठैनैव भाव्यं कैव कथा पुनः शुभादिकर्मतद्वासनादित्यागस्येति तात्पर्यम् । नन्वस्य श्लोकत्रयस्य मूलकारैः किमित्यर्थो न विवृत इत्यत आहुर्मूलकाराः—**स्पष्टार्थ इति** । उदाहृतश्लोकानामव्युत्पन्नेत्यादीनां समूह इति शेषः । निगमयति—**तस्मादिति** । उक्तरीत्या शास्त्रीयप्रयत्नप्राबल्यादित्यर्थः । योगाभ्यासेन निरुक्तमुद्रादियोगाभ्यासेन । **कर्मेति** । कर्मात्र देहारम्भकं प्रारब्धाख्यम् । आदिशब्देन वासनापरपर्यायाश्चित्तनिष्ठाः सकलसंस्काराः । तेषामभिभवः, दीपानयनेन तमस इव मण्यादिना वह्निगतदाहशक्तेरिव पराभवस्तस्य संभवः प्रतिपादितशास्त्रादिना वैमल्याभावस्तस्माद्धेतोरित्यर्थः । जीवन्मुक्तौ प्रागुक्तलक्षणायां न विविदितव्यं शिष्यादिभिर्विपरीतो वादस्तावन्नैव कर्तव्य इत्यर्थः । उपसंहरति—**इतीति** । इत्युक्तप्रकारेण । अथ केयं जीवन्मुक्तिरितिप्रश्नोत्तरीभूतं जीवन्मुक्तिस्वरूपं निरूपितमिति शेषः ।

पूर्णानन्देन्दुकौमुद्यां प्रकाशे षोडशे गुरोः ।
जीवन्मुक्तिस्वरूपस्योल्लासः पादप्रसादतः ॥

इति जीवन्मुक्तिस्वरूपोल्लासस्तृतीयः ॥ ३ ॥

एवमथ केयं जीवन्मुक्तिरिति प्रथमप्रश्नोत्तरमभिधाय किंवा तत्र प्रमाणमिति द्वितीयप्रश्नोत्तरमवसरसंगत्याऽभिदधन्प्रतिजानीते **श्रुती**त्यादिना—

**श्रुतिस्मृतिवाक्यानि जीवन्मुक्तिसद्भावे प्रमाणानि । तानि च कठवल्ल्यादिषु पठन्ति—' विमुक्तश्च विमुच्यते ' इति । जीवन्नेव दृढबन्धनात्कामादेर्विशेषेण मुक्तः सन्देहपाते भाविबन्धाद्विशेषेण मुच्यते ।**

जीवन्मुक्तिसद्भावे, जीवन्मुक्तेर्विद्यमानत्व इत्यर्थः । ननु कुत्रत्यानि श्रुतिवाक्यानि जीवन्मुक्तिसद्भावे प्रमाणानीत्यत आह—**तानि चेति** । चः प्रसिद्धौ । आदिना बृहदारण्यकादि । पठन्ति, अध्येतार इति शेषः । तत्र प्रथमोद्दिष्टं कठवल्लीवाक्यमुदाहरति—**विमुक्तश्चेति** । इतिशब्दो वाक्यसमाप्त्यर्थः सर्वत्र । तद्व्याचष्टे—**जीवन्नेवे**त्यादिना । जीवन्नेव, प्राणधारणं कुर्वन्नेव । अवधारणं तु—

अन्तकाले च मामेव स्मरन्मुक्त्वा कलेवरम् ।
यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥

---

१ क. ख. ग. घ. ङ. च. पठ्यन्ते ।

इति श्रीमद्भगवद्गीतोक्तदेहपातव्यावृत्त्यै। दृढबन्धनात् 'दृढं कामान्यः कामयते मन्यमानः स कामभिर्जायते तत्र तत्र। पर्याप्तकामस्य कृतात्मनस्त्विहैव सर्वे प्रविलीयन्ति कामाः' इति श्रुतेर्ज्ञानं विना कोट्युपायैरप्यनिरस्यमेतादृशं यद्बन्धनं बन्धनीभूतरज्ज्वादिरिव पारतन्त्र्यापादकं तस्मात्। एतादृशात्कामादेः। कामो दृश्यवस्तुविशेषाभिलाषः। आदिशब्दात्क्रोधादिः। तदुक्तं श्रीमद्भगवद्गीतासु—

त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत्। इति॥

सुषुप्त्यादौ तु सर्वोऽपि निरुक्तकामादिबन्धनान्मुच्यत एव परं तु जाग्रदादावपि 'पुनर्ग्रन्थेरनुदयो बोधस्यैते त्रयो मताः' इति चित्रदीपोक्तमूलकारवचनानुरोधेन तत्त्वबोधफलीभूतपुनर्ग्रन्थ्युदयाभावशब्दितात्स्वदृशा स्वस्मिन्नध्यासाप्रतिभासात्तथात्वविवक्षया विशेषग्रहणम्। मुक्तः सन्, बन्धहीनः सन्। देहपाते प्रारब्धकर्मसमाप्तौ शरीरपतनोपलक्षितलिङ्गशरीरध्वंसे सतीत्यर्थः। तथा च श्रुतिः—'न तस्य प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते' इति। विवृता चेयं श्रीमत्सुरेश्वराचार्यचरणारुणनलिनरेणुभिर्वार्तिकामृते—

जिघृक्षत्यायसं तप्तं शास्त्राचार्यात्मनिश्चयात्।
तस्योत्क्रामन्ति न प्राणा आसते नापि तत्र ते॥
स्थित्युत्क्रान्त्योर्हि यो हेतुरात्माविद्यादिलक्षणः।
ध्वस्तत्वात्तस्य सर्वस्य प्रत्यग्याथात्म्यदर्शनात्॥
यत एवमतः प्राणाः सम्यग्ज्ञानस्य जन्मनि।
नोत्क्रामन्ति न तिष्ठन्ति न च नश्यन्त्यहेतुतः॥
रज्जुसर्पो यथा लोके ज्ञातरज्जुसतत्त्वकः।
नोत्क्रामति न चाप्यास्ते न च नश्यति रज्जुतः॥
स्थित्युत्क्रान्तिविनाशानां रज्जुस्तत्त्वं यतस्ततः।
रज्जुज्ञानसमुत्पत्तौ रज्ज्वा नान्योऽवशिष्यते। इति॥

भाविबन्धात्, उत्तरक्षणादौ द्वैतानुभवादित्यर्थः। विशेषेण, कालत्रयेऽपि दृश्यावभासाभावरूपोत्कर्षेण। मुच्यते, जाग्रदवाप्तौ स्वप्नदृष्टव्याघ्रादिभयादिव निर्मुक्त इव भवतीत्यर्थः।

ननु किं तद्विशेषद्वयमित्यत आह—**वेदनादि**त्यादिना **भाविदेहबन्धान्मुच्यत** इत्यन्तेन—

**वेदनात्प्रागपि शमदमादिसंपादनेन कामादिभ्यो मुच्यत एव, तथाऽप्युत्पन्नानां कामादीनां तत्र प्रयत्नेन निरोधः। अत्र तु धीवृत्त्यनुदय[1]मात्रादनुत्पत्तिरेव ततो विशेषेणेत्युच्यते। तथा प्रलये देहपाते च सति[2] किंचित्कालं माविदेहबन्धान्मुच्यते। अत्र त्वात्यन्तिको मोक्ष इत्यभिप्रेत्य विशेषेणेत्युक्तम्।**

वेदनात्, दृढतमाद्वैतात्मतत्त्वसाक्षात्कारात्। प्रागपि पूर्वमपि। ननु तत्त्वज्ञानात्प्राक्कामादिभ्यो मुक्तेः का सामग्रीत्याशङ्क्य 'शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्यति'

'नाविरतो दुश्चरितान्नाशान्तो नासमाहितः।
नाशान्तमानसो वाऽपि प्रज्ञानेनैनमाप्नुयात्'॥

इत्याद्यन्वयव्यतिरेकश्रुतिवशेन शमादिसंपत्तिरेवेत्याह—**शमदमादीति**। शमादिना संन्यासे सत्यग्निहोत्रादिकर्मणः सकाशादेव निर्मुक्तिः स्यान्न तु कामादेरित्यत आह—**कामादिभ्य इति**। अवधारणं तु यत्र संन्यासे सत्यपि कामाद्युपलम्भस्तत्र तत्साधनीभूतशमादिपरिपाकाभाव एवेति नियमनार्थम्। तर्हि को विशेषो जीवन्मुक्ताविति चेत्तमाह—**तथाऽपीति**। उत्पन्नानां संस्कारादिनाऽऽविर्भूतानाम्। कामादीनां विषयाभिलाषतत्प्रतिघातजक्षोभादीनामित्यर्थः। तत्र मुमुक्षुदशायाम्। प्रयत्नेन

अर्थानामर्जने दुःखं तथैव परिपालने।
नाशे दुःखं व्यये दुःखं धिगर्थान्क्लेशकारिणः॥ इति।
मांसपाञ्चालिकायास्तु यन्त्रलोलेऽङ्गपञ्जरे।
स्नाय्वस्थिग्रन्थिशालिन्याः स्त्रियाः किमिव शोभनम्॥

इति च विवेकपूर्वकत्वलक्षणप्रकृष्टेन यत्नेनेत्यर्थः। अत्र जीवन्मुक्तिदशायाम्। तुशब्दो वैलक्षण्यार्थः। तदेवाऽऽह—**धीवृत्तीति**। धियः बुद्धेर्या वृत्तयः कामः संकल्पेत्यादिश्रुत्यादौ प्रसिद्धास्तासामनुदयः प्राकट्यप्रागभावस्तावन्मात्रात्तदेकहेतोरित्यर्थः। **अनुत्पत्तिरेवेति**। न तु मुमुक्ष्ववस्थायामिवोत्पन्नानां तेषां शमादिना नाशनमिति भावः। उक्तमर्थं हेतुत्वेन योजयति—**तत इति**। ततस्तस्मान्निरुक्तवैलक्षण्यलक्षणाद्धेतोरित्यर्थः। उच्यते विमुक्तश्चेत्युदाहृतकठवल्लीवाक्येऽस्माभिर्व्याख्यायत इत्यर्थः। एवं प्रथमपदगतविशेषस्वरूपं निरूप्य द्वितीयगतं निरूपयति—**तथेति**। प्रलये मायावच्छिन्नब्रह्ममात्रावशेषलक्षणे

१ क. ख. ङ. च. 'त्त्यभावादनु°'। २ क. ख. ङ. च. °ति कंचि°।

प्राकृतिके हिरण्यगर्भविशिष्टतन्मात्रावशेषलक्षणे दैनंदिनापरनाम्नि वैकृतिके कारणमात्रोपलम्भलक्षणे सुषुप्त्याख्ये नित्ये च प्रलय इत्यर्थः । देहपाते प्रारब्धकर्मसमाप्त्या स्थूलशरीरविरह इत्यर्थः । चः समुच्चये । किं तत्राऽऽत्यन्तिकी देहबन्धान्मुक्तिर्नेत्याह—**किंचित्कालमिति** । क्रियाविशेषणमिदम् । यावत्प्रारब्धकर्मानुदयमित्यर्थः । **भावीति** । नित्यप्रलयपक्षे भावी यो देहलक्षणो बन्धस्तस्मादिति समासः । अन्यत्र तु भावी यो देहः स चासौ बन्धश्चेति व्याख्येयम् । अत्रापि तुशब्दार्थः प्राग्वदेव । अत्र विदेहकैवल्ये । आत्यन्तिकः पुनःप्रतीतिहीनः । मोक्षः कामादिसकाशान्निर्मुक्तिः । किं तत इत्यत आह—**इतीति** । इति निरुक्तमर्थम् । अभिप्रेत्य, मनसि निधाय । उक्तं विमुच्यत इतिपदव्याख्यानेऽस्माभिः कथितमित्यर्थः । एवं च विमुक्तश्चेति जीवन्मुक्तिर्विमुच्यत इति विदेहमुक्तिश्चोक्तेति भावः ।

कठवल्ल्यादिष्वित्यत्राऽऽदिपदद्योतितमुद्दिशति—

**बृहदारण्यके पठ्यते—**

**‘ यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ।**
**अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥ ’ इति ।**

**श्रुत्यन्तरेऽपि ‘ सचक्षुरचक्षुरिव सकर्णोऽकर्ण इव समना अमना इव सप्राणोऽप्राण इव ’ इति ।**

**बृहदारण्यक इति** । पठ्यते, अध्येतृभिर्गुरुपरम्परयेति शेषः । तदाह—**यदेति** । अस्योपदेशाधिकारित्वेन प्रकृतस्य मुमुक्षोर्हृदि चित्ते श्रिताः संस्कारद्वाराऽऽश्रिता ये कामाः समीहिताभिलाषरूपवृत्तिविशेषाः । उपलक्षणमिदं क्रोधादेरपि । विषयाणामनेकत्वाद्बहुवचनम् । ते सर्वेऽपि संपूर्णा अपि न तु केचिदेव तथात्वे तु पुनः संसारापत्तेः, यदा यस्मिन्नविद्याध्वंसकाले प्रमुच्यन्ते प्रकर्षेण सुषुप्त्यादिविलक्षणपुनरुदयाभावलक्षणोत्कर्षेण मुच्यन्ते चिज्जडैक्यग्रन्थिभेदात्तत्त्वसाक्षात्कारदार्ढ्येन शिथिला भवन्तीत्यर्थः । किं ततस्तदाह—**अथे**त्युत्तरार्धेन । अथ निरुक्तकाममोक्षलक्षणग्रन्थिभिदादिफलोत्तरक्षणमेव । मर्त्यः, मनुष्याधिकारत्वाच्छास्त्रस्येति न्यायेन मनुष्यत्वाद्यध्यासोपलक्षितो मुमुक्षुरित्यर्थः । ‘मनुष्या मानुषा मर्त्या मनुजा मानवा नराः’ इत्यमरः । अमृतो भवति, ‘मोक्षः कैवल्यनिर्वाणश्रेयोनिःश्रेयसामृतम्’ इत्यमरोक्तेः कैवल्याभिन्नब्रह्मात्मरूप एव जायत इत्यर्थः । किं देहपातोत्तरं नेत्याह—**अत्रेति** । अत्र वर्तमानशरीर एव ब्रह्माद्वैतात्मतत्त्वं समश्नुते सम्यग्जीवन्मुक्त्यवस्थावशात्सर्वदा भासमानत्वेनाश्नुते प्राप्नोतीत्यर्थः । तत्त्वज्ञानदार्ढ्योत्तरक्षण एवामृतत्वप्राप्तिर्न तु क्रममुक्त्यवाप्तिफलकदहराद्युपासन

इव देहपातापेक्षाऽस्तीति भावः । कठश्रुतौ तु जीवन्मुक्तिर्विदेहमुक्तिश्चोक्ता । अत्र तु जीवन्मुक्तिरेवेति प्रथमवाक्येऽस्वरसादिदं वाक्यान्तरमुदाहृतमिति ध्येयम् । उक्तेऽर्थे श्रुत्यन्तरसंमतिरप्यस्तीत्याह—**श्रुत्यन्तरेऽपीति** । अन्यशाखीयश्रुतावपीत्यर्थः । जीवन्मुक्तोक्त्या तदवस्थोक्तिरस्तीति शेषः । तद्वाक्यं पठति—**सचक्षुरचक्षु**रिवेत्यादिना । व्याख्याता चेयं श्रुतिः श्रीमदानन्दज्ञानैः श्रीमच्छारीरभाष्यव्याख्याने समन्वयसूत्रे—वस्तुतोऽचक्षुरपि बाधितानुवृत्त्या सचक्षुरिवेत्यादि योज्यमिति । तस्मात्स्वदृशा स्वस्मिन्नध्यासाप्रतिभासादद्वैतब्रह्मरूपत्वेन वस्तुतोऽचक्षुस्तथाऽपि यावत्प्रारब्धं लोकदृष्ट्या तस्य चित्ताद्यवस्थितिरस्तीति कृत्वा सचक्षुरिव जीवन्मुक्तो भवतीति पूर्वोक्तलक्षणसंगतिरपि समनुसंधेयेति भावः । शेषं स्पष्टमेव ।

न केवलमस्मिन्नंशे समुदाहृतमिदं श्रुतित्रयमेव किंतु दिक्प्रदर्शनार्थमेवेदमतस्त्वयैवंजातीयकं शाखान्तरोपनिषत्स्वप्यन्विष्य वाक्यजातमुदाहरणीयमित्याह—

**एवमन्यत्राप्युदाहार्यम् । स्मृतिषु जीवन्मुक्त[1]स्थितप्रज्ञभगवद्भक्तगुणातीतब्राह्मणातिवर्णा[2]श्रम्यादिनामभिस्तत्र तत्र व्यवह्रियन्ते । वसिष्ठरामसंवादे 'नृणां ज्ञानैकनिष्ठानाम्' इत्यारभ्य ' सत्किंचिदवशिष्यते' इत्यन्तेन ग्रन्थेन जीवन्मुक्तः पठ्यते ।**

**एवमन्यत्रापीति** । तथा हि—'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् । न बिभेति कुतश्चनेति ' इति तैत्तिरीयोपनिषदि । ' यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः । तत्र को मोहः कः शोक एकत्वमनुपश्यतः' इति काण्वानामीशाख्यमन्त्रोपनिषदि । 'एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड्भवति' इति च्छान्दोग्योपनिषद्यपि । एवं प्रतिज्ञानुरोधेन जीवन्मुक्तिसद्भावे श्रुतिवचांसि प्रमाणत्वेनोदाहृत्य क्रमप्राप्तानि स्मृतिवचांस्यप्युदाहर्तुं तानि सर्वाण्यपि निरुक्तश्रुतिवचनवदवस्थावतां कथनेनैव निरुक्तावस्थां बोधयन्तीति वदंस्तत्र तत्र तेऽपि पृथक्पृथक्संज्ञान्तरेणैव व्यवह्रियन्त इति तन्नामभेदकथनपूर्वकमभिधत्ते—**स्मृतिष्विति** । जीवज्जनदृष्ट्या प्राणधारणं कुर्वन्सन्मुक्तः स्वदृशा बन्धहीनो जीवन्मुक्तः । स्थिता प्रतिबन्धराहित्येनाचला प्रज्ञा ब्रह्मविद्याफलीभूतसार्वदिकस्वस्वरूपस्फूर्तिर्यस्य स स्थितप्रज्ञः । भगो लोकदृष्ट्या षड्गुणैश्वर्यसमूहो विद्यते यस्य स भगवानद्वैतः परमात्मा तं भजते सार्वदिकस्फूर्त्या स्वात्मरूपत्वेन सेवत इति भगवद्भक्तः । गुणेभ्यः सत्त्वाद्युपलक्षितयावद्दृश्यपदार्थेभ्योऽतीतस्तानतिक्रम्य निरुक्तस्फूर्त्या स्वाभिन्नत्वेनैते परमार्थतो नैव सन्तीति तिरस्कृत्य वर्तमानो गुणातीतः । 'पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्' 'पाण्डित्यं च बाल्यं च निर्विद्याथ मुनिरमौनं च मौनं च निर्विद्याथ ब्राह्मणः' इतिश्रुतेः पाण्डित्यादिशब्दवाच्यानां क्रमेण श्रवणमननानि-

---

१ ङ. °क्तविदेहमुक्तस्थि° । २ ग. घ. च. °श्रमादि° ।

दिध्यासानां परिपाकजनितनिष्प्रतिबद्धब्रह्मसाक्षात्कारफलशाली ब्रह्म निरुक्तरीत्याऽद्वैतात्मतत्त्वं जानातीति ब्राह्मणः । वर्णा ब्राह्मणादय आश्रमा ब्रह्मचर्यादयस्तदुपलक्षितान्यावद्वैतविषयानतिक्रम्य निरुक्तात्मविद्याफलावस्थयाऽनादृत्य वर्तत इत्यतिवर्णाश्रमी । आदिपदेन

ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः ।
युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः ॥

इति श्रीभगवद्गीतोक्तेर्युक्ताख्यसंज्ञान्तरसंग्रहः । उपलक्षणमिदं मुन्यादिसंज्ञानां तत्र तत्र प्रसिद्धानामपि । अत्रोक्तसंज्ञाभिर्ज्ञानिनो व्यवह्रियन्त इत्यध्याहृत्यान्वयः । तत्रोद्देशानुसारेण प्राथमिकत्वाज्जीवन्मुक्तस्तावत्कोक्त इत्याकाङ्क्षायां मध्यवासिष्ठे बृहद्वासिष्ठसारीभूतेऽप्यसावियता प्रबन्धेनाभिवर्णित इत्याह—**वसिष्ठे**त्यादिना । तमेवग्रन्थं पठति—**वसिष्ठ** इत्यादिना—

**वसिष्ठः—**

**नृणां ज्ञानैकनिष्ठानामात्मज्ञानविचारिणाम् ।**
***सा जीवन्मुक्ततोदे[1]ति विदेहमुक्ततेव या ॥**

**ज्ञानैकनिष्ठत्वं लौकिकवैदिककर्मत्यागः । देहेन्द्रियसदसद्भावमात्रेण मुक्तिद्वयस्य विशेषो न त्वनुभवतः । द्वैतप्रतीतेरुभयत्राभावात् ।**

**श्रीरामः—**

**ब्रह्मन्विदेहमुक्तस्य जीवन्मुक्तस्य लक्षणम् ।**
**ब्रूहि येन तथैवाहं यते शास्त्रजया दृशा ॥**

उवाचेति शेषः । तत्र तावच्छ्रोतृप्रवृत्त्यर्थं जीवन्मुक्तिं स्तौति—**नृणामिति** । तत्र बृहद्वासिष्ठे तु श्रीवसिष्ठ उवाच—

तच्चित्तास्तद्गतप्राणा बोधयन्तः परस्परम् ।
कथयन्तश्च तन्नित्यं तुष्यन्ति च रमन्ति च ॥

इति सर्गारम्भश्लोकमुक्त्वा तेषां ज्ञानैकनिष्ठानामित्येव पाठोऽस्ति प्रकृतपाठस्तु मध्यवासिष्ठीय एव । स हि काश्मीरदेशवासिना केनचित्पण्डितवरेण तत्रत्यानेव संक्षेपकथाद्युपयोगिनः कांश्चिच्छ्लोकानुद्धृत्य संक्षिप्तार्थजिज्ञास्वर्थं संग्रथित इति प्रथितमेव । **सेति ।** यतस्तेषां वक्ष्यमाणं ज्ञानैकनिष्ठत्वं यतश्चाऽऽत्मतत्त्वसाक्षात्कारार्थं श्रवणादिलक्षणतद्विचारप-

* घ. पुस्तके—‘ जीवन्मुक्तिस्ततो देहाद्विदेहान्मुक्त एव यौ ’ इतिपाठः ।

१ ग. घ. ङ. च. °देहोन्मुक्त° ।

रायणत्वमतः सा वक्ष्यमाणगुणा जीवन्मुक्ततोदेतीति संबन्धः । अद्वैतब्रह्मसाक्षात्कारद्वारा लोकदशाऽनुवृत्तदेहेन्द्रियादिबाधितद्वैतावभाससत्त्वेऽपि कैवल्यावस्थाऽऽविर्भवतीति भावः । सा केत्यत आह—**विदेहेति** । छन्दोभङ्गस्त्वार्षः । या विदेहकैवल्यसदृशीत्यर्थः । सादृश्यमत्र दृश्यावभासराहित्यमेव । तस्योभयत्राप्यन्यूनानतिरेकात् । नन्वत्र किं ज्ञानैकनिष्ठत्वं संमतं किं ज्ञानपदलक्ष्यस्वप्रकाशाद्वैतब्रह्ममात्रनिष्ठत्वमुत ज्ञानशब्दिततत्साक्षात्कारतत्साधनादितत्परत्वम् । नाऽऽद्यः । ' निःशेषवाङ्मनःकायप्रवृत्त्युपरमात्मिका । ब्रह्मनिष्ठा ' इति वार्तिकसारे मूलकारैरेव लक्षितब्रह्मनिष्ठापरनामकस्वसाध्यभविष्यज्जीवन्मुक्तिसिद्ध्याऽग्रिमग्रन्थविरोधात् । नाप्यन्त्यः । आत्मेति द्वितीयविशेषणानर्थक्यादित्याशङ्क्य तत्स्वयमेव लक्षयति—**ज्ञानेति** । विधिवत्ससाधनः संन्यास इति यावत् । नन्वेवं यदि मुक्तिद्वयसाम्यं तर्हि कोऽनयोर्विशेष इत्यत्राऽऽह—**देहेन्द्रियेति** । यथासंख्यं सद्भावादि । विशेषान्तरराहित्येऽनुभवतस्तदैक्ये च हेतुमाह—**द्वैतेति** । अथ प्रकृतजीवन्मुक्तलक्षणप्रपञ्चार्थं श्रीरामप्रश्नं तत्रत्यमेवाग्रिमं लिखति—**श्रीराम इति** । उवाचेति प्राग्वत् । **ब्रह्मन्निति** । वसिष्ठसंबोधनमिदम् । विदेहमुक्तस्योक्तश्लोक उपमानत्वादत्र प्राथम्यम् । उक्तप्रश्ने प्रयोजनमाह—**येनेति** । दृशा ज्ञानेनेत्यर्थः ।

अथ वासिष्ठः श्रीरामप्रश्नाशयमवधार्य जीवन्मुक्तौ विदेहमुक्तेरुपमानीकृतत्वेनात्र तद्वतो लक्षणप्रश्नस्य प्राथम्येऽपि जीवन्मुक्तीयलक्षणज्ञानोत्तरमेव तादृक्शमादिसंपादनार्थं मुमुक्षुयत्नसंभवेन तल्लक्षणस्यैव प्रपञ्चनं प्रथमतश्चकारेत्याह मूलकारः—

**वसिष्ठः—यथास्थितमिदं यस्य व्यवहारवतोऽपि च ।**
**अस्तं गतं स्थितं व्योम स जीवन्मुक्त उच्यते ॥**

**इदं प्रतीयमानं गिरिनदीसमुद्रादिकं जगत्प्रतिपत्तुर्देहेन्द्रियव्यवहारेण सह महाप्रलये परमेश्वरेणोपसंहृतं सत्स्वरूपोपमर्दनास्तं गतं भवति ।**

**वसिष्ठ इति** । उवाचेति शेषः । यथास्थितमित्यादिभिः प्रकृतमध्ययोगवासिष्ठस्थैः सप्तभिः श्लोकैः । एतेन केन ग्रन्थेनोवाचेति शङ्कोपशमः सूचितः । इदं चिद्भास्यत्वेन प्रत्यक्षमखिलदृश्यम् । **यथेति** । व्यावहारादिकादिसत्तया यथावद्वर्तमानमपीत्यत्राप्यपिशब्दश्चकाराद्बोध्यः । न तु सुप्त्यादाविव विलीनमित्यर्थः । **व्यवहारेति** । लोकदृष्ट्या जाग्रदादिषु स्वस्ववर्णाश्रमाद्युचितव्यापारविशिष्टस्यापीत्यर्थः । एतादृशस्य यस्यास्तं गतं ध्वस्तमिव भासते तथा व्योम चिदाकाशमेव बाधावधित्वेनाद्वैतात्मरूपं स्थितमबाधितत्वेन विद्यमानं भवति स जीवन्मुक्त उच्यत इत्यन्वयः । नन्विदमस्तु संनिकृष्टमितिवचनाच्चक्षुरादिसंनिकृष्टं प्रत्यक्षप्रमाणैकगम्यं जगद्ग्राह्यं तथा च क्व सर्वदृश्यसंग्रह इत्याशङ्क्य तदाशयं स्वयमेव विशदयति—**इदमिति** । प्रतीयमानं साक्षात्परम्परया वा

प्रत्यक्प्रतीतिविषयमित्यर्थः। एवमस्तशब्देन प्रकृते बाधमेव वक्तुं ध्वंसग्रहे तत्प्रतिपत्तुरस्य जीवन्मुक्तस्य देहाद्यभावेन व्यवहारित्वाभावात्पूर्वग्रन्थविरोधं द्योतयन्प्रलये देहाद्यभावं स्फुटयति—**प्रतिपत्तुरिति**। प्रमातुः प्रकृतजीवन्मुक्तस्येत्यर्थः।

प्रकृतजीवन्मुक्तौ तु प्रलयवैलक्षण्यमुपक्षिपति—

**अत्र तु न तथा, किंतु विद्यत एव देहेन्द्रिय[1]व्यवहारो गिरिनद्यादिकं च परमेश्वरेणानुपसंहृतत्वाद्यथापूर्वमवतिष्ठमानं सत्सर्वैरन्यैः प्राणिभिर्विस्पष्टमवलोक्यते। जीवन्मुक्तस्य तत्प्रत्यायकधीवृत्त्यभावात्सुषुप्ताविव सर्वमस्तं गतं भवति। स्वयंप्रकाशमानचिद्व्योम केवलमवशिष्यते बुद्धस्य[2]। सुषुप्तौ तात्कालिकधीवृत्त्यभावसाम्येऽपि भाविधीवृत्तिबीजस्य सद्भावान्न जीवन्मुक्तत्वम्।**

**नोदेति नास्तमायाति सुखे दुःखे मुखप्रभा।**
**यथाप्राप्ते स्थितिर्यस्य स जीवन्मुक्त उच्यते॥**

**अत्र त्विति**। तुशब्दः प्रलयवैपरीत्यार्थः। तर्हि किमत्रास्तीत्यत आह—**किंत्विति**। तत्र हेतुः—**परमेश्वरेणेति**। अत एव—**यथेत्यादि**। अन्यपदव्यावर्त्यमाह व्युत्थितसमाहितत्वाभ्यां पूर्वोक्तबाधितद्वैतप्रतीत्यवस्थावैलक्षण्येन—**जीवन्मुक्तस्ये**त्यादिना। ननु सर्वास्तगमने किंचिदधिष्ठानावशेषोऽवश्यं वाच्यः। अन्यथा शून्यवादापत्तेरित्यत आह—**स्वयमिति**। स्वयंप्रकाशमानचिद्व्योमैव केवलं बुद्धस्योक्तजीवन्मुक्तस्यावशिष्यत इति। **भावीति**। बीजमात्रकर्माज्ञानसंस्काराः। **सुषुप्तावित्यादि**। न जीवन्मुक्तत्वमिति संबन्धः। यद्यपि सुप्तौ समाधौ च तात्कालिकबुद्धिवृत्तिराहित्यं समानमेव तथाऽपि जाग्रतः पुरुषस्य भविष्यद्घटादिविषयकमनोवृत्तिकारणीभूताविद्याकामकर्मणां सुप्त्याकारपरिणतगाढतमोरूपत्वेन सत्त्वात्समाधावेतदभावाच्च नैव तत्र जीवन्मुक्तलक्षणस्याद्वैतस्वप्रकाशसच्चिदानन्दमात्रतयाऽवस्थितत्वलक्षणस्यातिव्याप्तिरस्तीत्याकूतम्। अत एव—**नोदेतीति**। समाहितस्य ज्ञानिन इत्यार्थिकम्। अत एव—**यथेत्यादि**। प्रारब्धापादित ऋषभदेवहूत्यादिवत्सुखादिभोग इत्यर्थः। अत्र सुखादिपदेन तत्प्रयोजकविषयसंनिकर्ष एव बाह्यश्चन्द्रकिरणादीनां तच्छरीरेण सह संयोगलक्षणो ग्राह्यश्चित्तवृत्त्यभावादित्याशयः।

तत्र मुखप्रभापदार्थं कथयति—

**मुखप्रभा हर्ष[3]ः। चन्दनसत्कारादिसुखे प्राप्तेऽपि संसारिण इव हर्षो**

---

१ क. ख. ग. घ. ङ. °न्द्रियादिव्य°। २ क. ख. ग. घ. ङ. °ते बद्ध°। ३ क. ख. ग. घ. ङ. च. °र्षः। स्रक्चन्द°।

**नोदेति[1] । अस्तमयो दैन्यम् । धनहानिधिक्काराद्दिुःखे प्राप्तेऽपि न दीनो भवति । इदानींतनस्वप्रयत्नविशेषमन्तरेण प्रारब्धकर्मोपादितपूर्वप्रवाहागतभिक्षान्नादिकं यथाप्राप्तं तस्मिन्स्थितिर्देहरक्षा । समाधिदार्ढ्येन स्रक्चन्दनादिप्रतीत्यभावात्कदाचिद्व्युत्थानदशायामापाततः प्रतीतावपि विवेकदार्ढ्येन[2] हेयोपादेय[3]बुद्ध्यभावाद्धर्षादिराहित्य[4]मुपपद्यते ।**

**सुखप्रभेति** । एवं सुखपदार्थमपि विशदयति—**चन्दने**त्यादिना । चन्दनालेपनेन यः सत्कारः पूजाविशेषः । आदिनोशीरव्यजनपवनादि । इत्यादिलक्षणे सुखे सुखप्रयोजके जनकर्तृक उपचारे प्राप्ते सत्यपीत्यर्थः । तत्र वैधर्म्येण दृष्टान्तं स्पष्टयति—**संसारिण इवे**-त्यादिना । अथ सुखप्रभाप्रतियोगिकास्तमयपदार्थं स्वविवक्षितमाह—**अस्तमय** इत्यादिना । एवं दुःखपदमपि तत्प्रयोजकपरतयैव व्याकरोति—**धने**त्यादिना । एवं यथाप्राप्तपदमपि विशदयति—**इदानींतने**त्यादिना । अत्रेदानींतनेति स्वप्रयत्नविशेषणेन प्राक्तनस्य स्वप्रयत्नस्यैव प्रारब्धकर्मत्वात्तत्संग्रहः । तत्रापि विशेषपदेन हस्तोदकप्राशनग्रासगिलनादिसंग्रहः । एवं च

स्नानं शौचं तथा भिक्षा नित्यमेकान्तशीलता ।
भिक्षोश्चत्वारि कर्माणि पञ्चमं नोपपद्यते ॥

इतिवचनात् ।

स्नानं मनोमलत्यागः शौचमिन्द्रियनिग्रहः ।
ब्रह्मामृतं पिबेद्भैक्षमेकान्तो द्वैतवर्जनम् ॥

इति तद्व्याख्यानाच्च व्युत्थानसमाधानोभयावच्छेदेन क्रमादुभयसंभवेन

माधूकरमसंक्लृप्तं वाक्प्रणीतमयाचितम् ।
तात्कालिकं चोपपन्नं भैक्षं पञ्चविधं स्मृतम् ॥

इतिस्मृत्युक्तपञ्चविधभैक्षेषु माधूकरादिषु स्वस्थानं प्रति भक्तजनानीतमुपपन्नाख्यभैक्षमेव प्रकृते पर्यवस्यति तस्यैवोक्तरूपत्वसंभवादित्यभिप्रायः । एवं स्थितिपदार्थं कथयति—**स्थितिरि**ति । नन्वेवं भैक्षान्नवद्भक्तैरर्पितस्रक्चन्दनादिना हर्षादिरपि स्यादित्यत्राऽऽह—**समाधी**त्यादिना । **प्रतीतावपी**ति । स्रगादेरित्यार्थिकम् ।

ननु कथं हेयोपादेयबुद्ध्यभावस्तर्क्य इत्यतः पुनर्वासिष्ठपद्यमेवोदाहरति—

---

१ क. ख. ग. घ. ङ. च. 'ति । मुखप्रभास्त' । २ क. ख. ग. घ. ङ. च. °र्ढ्येनैव हे° । ३ क. क. ग. घ. ङ. च. °यत्वबु' । ४ ग. घ. °मुत्पद्य° ।

**यो जागर्ति सुषुप्तिस्थो यस्य जाग्रन्न विद्यते।**
**यस्य निर्वासनो बोधः स जीवन्मुक्त उच्यते॥**

**चक्षुरादीन्द्रियाणां स्वस्वगोलकेष्ववस्थानेनोपरत्यभावाज्जागर्ति। मनोवृत्तिरहितत्वात्सुषुप्तिस्थः। अत एवेन्द्रियैरर्थोपलब्धिरित्येतस्य[1] जाग्रतो लक्षणस्याभावाज्जाग्रन्न विद्यते। सत्यपि बोधे जायमानो ब्रह्मवित्त्वाभिमानादिभिर्[2]भोगार्थापादितकामादिभिश्च[3] धीदोषो वासना। वृत्तिराहित्येन तद्दोषाभावान्निर्वासनत्वम्।**

**य इति।** तद्व्याकरोति—**चक्षुरादीति।** आदिना श्रोत्रत्वगाद्यनुक्तेन्द्रियसंग्रहः। एवमुक्तजागरे हेतुमुक्त्वोक्तसुषुप्तिस्थत्वे हेतुमाह—**मनोवृत्तीति।** व्युत्थितस्य हि योगिनो यथाऽभ्यासपाटवं किंचित्कालं गाढनिद्राया व्युत्थितस्य देवदत्तस्य क्षणं वासनानन्द इव स्वस्वरूपानन्दनिर्विकल्पसमाधिरनुवर्तत एव यथा तत्संस्कारदार्ढ्यम्, तेन तद्दशायां प्रारब्धापादितप्राथमिकबुद्धिसंकल्पोत्तरक्षण एव श्रोत्रादीनि सकलकरणानि स्वस्वगोलकस्थानि बुद्धेर्निःसृत्य भवन्ति, तृतीयक्षणे पुनर्बुद्धिः प्राक्तनसंस्कारपरिपाकादद्वैतात्माकारैव संपद्यत इति तत्कालावच्छेदेन मनःशब्दवाच्यसंकल्पविकल्पात्मकान्तःकरणवृत्त्यभावादुक्तं सुषुप्तिस्थत्वं तथा प्रतिपादितरीत्येन्द्रियाणां स्वस्वगोलकावस्थित्योक्तं जागरणमप्युपपद्यत एवेति भावः। अथ द्वितीयपादेनास्य हेतुहेतुमद्भावसंगतिमभिधत्ते—**अत एवे**त्यादिना। तत्र प्राचीनाचार्योक्तजाग्रदवस्थालक्षणाभावं हेतुमाह—**इन्द्रियैरि**त्यादिना। एवमुत्तरार्धतात्पर्यमप्याह—**सत्यपी**त्यादिना **निर्वासनत्वमि**त्यन्तेन। अत्राद्वैतब्रह्मात्मैक्यविषयकस्य बोधस्याऽऽर्थिकद्वैतमिथ्यात्वावेदकत्वाद्ब्रह्मवित्त्वाभिमानादिवक्ष्यमाणदोषासंभवेऽपि प्राचीनसंस्कारप्राबल्यावद्योतको ह्यत्रापिशब्दः। **ब्रह्मवित्त्वेति।** अयं हि याज्ञवल्क्यस्य प्राग्विद्वत्संन्यासप्रस्तावे प्रतिपादित एव। आदिना तदीयमेव गोकामत्वं शापमूलकक्रोधशालित्वं च। **भोगेति।** अत्रोदाहरणं सौभरिरुक्त एव।

नन्वेवं सर्वथा व्युत्थानदशायामपि वृत्तिराहित्यमेव चेत्प्राग्ध्वनितहस्तोदकप्राशनस्य करपात्रे भक्तजनैर्दत्तस्य ग्रासादेर्मुखनिक्षेपद्वारा गिलनस्य च कथं संभव इत्यत आह—

**रागद्वेषभयादीनामनुरूपं चरन्नपि।**
**योऽन्तर्व्योमवदत्यच्छः स जीवन्मुक्त उच्यते॥**

---

१ क. ख. ग. ध. ङ. जागरणल°। २ क. ख. ग. घ. ङ. च. °दि भों°। ३ क. ख. ग. ङ. च. °दिश्च।

रागानुरूपं[1] भोजनादिप्रवृत्तिः । द्वेषानुरूपं[2] बौद्धकापालिकादिभ्यो विमुखत्वम् । भयानुरूपं सर्पव्याघ्रादिभ्योऽपसरणम् । आदिशब्देन[3] मात्सर्यानुरूपमितरयोगिभ्य आधिक्येन समाध्य[4]नुष्ठानम् । सत्यपि व्युत्थानदशायामीदृशाचरणे पूर्वाभ्यासेन प्रापिते विश्रान्तचित्तस्य कालुष्यरहितत्वाद[5]त्यच्छत्वम् । यथा व्योम्नि धूमधूलिमेघादियुक्तेऽपि निर्लेपस्वभावत्वादतिशयेन स्वच्छत्वं तद्वत् ।

**रागद्वेषेति** । तत्र रागानुरूपत्वं विवृणोति—**रागेति** । आदिना स्नानशौचशयनप्रवृत्तयः । अथ द्वेषानुरूपत्वमप्यभिमतमाह—**द्वेषानुरूपमिति** । आदिनाऽऽर्हतलोकायतशाक्तादयः । एवं भयानुरूपमपि तदभिधत्ते—**भयानुरूपमिति** । मूल आदिपदकृत्यमाह—**आदिशब्देनेति** । ननु प्रकृतब्रह्मनिष्ठस्य योगिन आदौ रागाद्यनुरूपाचरणमेवासंभवि यथाकथंचिद्व्युत्थानदशायां तत्संभवेऽप्युक्तरीत्याऽऽदिपदोक्तमात्सर्यानुरूपमाचरणमयुक्तमेवेत्याशङ्क्य तदपि स्वसंमतं कथयति—**इतरे**त्यादिना । एवं पूर्वार्धमभिविवृत्योत्तरार्धमपि व्याकर्तुं वृत्तमनूद्यापिशब्दस्वारस्यं सूचयन्संस्कारजन्यराजसादिवृत्तिकृताध्यासलक्षणान्तःकालुष्यराहित्ये निरतिशयत्यागयोगाभ्यां चिरतरास्वादिताद्वैतब्रह्मात्मैक्यामृतत्वमेव हेतुत्वेन व्यनक्ति—**सत्यपी**त्यादिना । इदं पदद्वयं प्रापित इत्यनन्तरं योज्यम् । तत्र व्योमदृष्टान्तं व्याचष्टे—**यथे**त्यादिना । मेघादीत्यादिपदेन नीहारम् ।

ननु कथमेतद्भवेदित्यत आह—

यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।
कुर्वतोऽकुर्वतो वाऽपि स जीवन्मुक्त उच्यते ॥

पूर्वार्धं विद्वत्संन्यासप्रस्तावे व्याख्यातम् । लोके बद्धस्य पुरुषस्य शास्त्रीयं कर्म कुर्वतोऽहं कर्तेति[6] चिदात्माऽहंकृतो भवति । भाविस्वर्गं प्राप्स्यामीति हर्षेण बुद्धिर्लिप्यते । अकुर्वतस्तु त्यक्तवानस्मीत्यहंकृतत्वम् । स्वर्गालाभविषादो[7] लेपः । एवं प्रतिषिद्धकर्मणि लौकिककर्मणि च यथासंभवं योजनीयम् । जीवन्मुक्तस्य तु तादात्म्याध्यासाभावाद्धर्षाद्यभावाच्च न दोषद्वयम् ।

यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।
हर्षामर्षभयान्मुक्तः स जीवन्मुक्त उच्यते ॥

---

१ क. ख. ग. घ. ङ. च. 'रूप्यं भो° । २ क. ख. ग. घ. ङ. च. °रूप्यं बौ° । ३ क. ख. ग. घ. ङ. च. 'न मात्सर्यादि, मा° । ४ क. ख. ग. घ. ङ. च. °माध्याद्यनु° । ५ क. ख. ग. घ. ङ. च. °दन्तःस्वच्छ° । ६ क. ख. ङ. 'ति तदा चि° ७ क. घ. च. °षादादिर्लेपः ।

**अधिक्षेपताडनादावप्रवृत्तत्वात्तस्माल्लोको नोद्विजते। अत एवैतस्मिँल्लोकस्याप्यधिक्षेपाद्यप्रवृत्तेः कस्यचिद्दुष्टस्य तत्प्रवृत्तावप्येतच्चित्ते तादृग्विकल्पानुदयाच्चायमपि नोद्विजते।**

**यस्येति**। एतद्विवरितुं पूर्वार्धं तु प्रागेव विद्वत्संन्यासोपन्यासे विवृतमिति स्मारयति—**पूर्वार्धमिति**। तद्यथा भगवद्गीतावाक्यम्

यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते।
हत्वाऽपि स इमाँल्लोकान्न हन्ति न निबध्यते॥

इत्युदाहृत्य यस्य ब्रह्मविदो भावः सत्तास्वभाव आत्मा नाहंकृतो नाहंकारेण तादात्म्याध्यासातिशयादन्तर्भावितः। बुद्धिलेपः संशय इति। अथैतेन सह प्रकृतमपि पुनर्विवृणोति सोत्तरार्धं—**लोक** इत्यादिना। अहंकृतः, अहंकारतादात्म्याध्यासमापादित इत्यर्थः। एवं लोकेऽहंकृतत्वं कर्तुर्भावशब्दितसच्चिदात्मन्यहंकृतत्वं वक्ष्यमाणजीवन्मुक्ते तद्व्यतिरेकप्रदर्शनायाभिधाय बुद्धिलेपमप्यभिधत्ते—**भावी**त्यादिना। एवं कुर्वत आत्माहंकृतबुद्धिलेपावुपपाद्याकुर्वतस्तावाह—**अकुर्वतस्त्वि**त्यादिना। अकुर्वत आलस्यादिना शास्त्रीयमेव संध्यावन्दनजातेष्ट्यादिलक्षणनित्यादिकर्माण्यकुर्वाणस्य बद्धस्य पुरुषस्यैवेत्यर्थः। तुशब्दः प्राक्तनवैलक्षण्यार्थः। एवमुक्ताहंकृतबुद्धिलेपावन्यत्राप्यतिदिशति—**एवमित्यादि**। प्रतिषिद्धकर्मण्यगम्यागमनादावहमनेन पापेन नरकमेष्यामीत्यहंकृतत्वाध्यासस्तथा धिङ्मां मूढाधममिति विषादेन बुद्धिलेपश्च सुप्रसिद्ध एव। तद्वल्लौकिककर्मणि बद्धपुरुषस्यैव रजकक्षालितत्वेनातिशुक्लस्यैवोष्णीषादेर्धारणेऽहमद्य रम्य इत्यात्माऽहंकृतो भवति तेन जना मां सत्करिष्यन्तीति सुखाशयाद्बुद्धिलेपश्च भवति। तद्विपरीते मलिनोष्णीषादिधारणे त्वहमद्यारम्यस्तेन जनास्त्वसत्करिष्यन्तीति दुःखचिन्तया च तावपि प्रसिद्धतरावेवेति भावः। अस्त्वेवं ततः किं प्रकृत इत्यत आह—**जीवन्मुक्तस्य त्वि**त्यादिना। अत्रापि तुशब्दो वैलक्षण्यार्थक एव। तत्र क्रमाद्धेतुद्वयमाह—**तादात्म्येति**। एतेनाऽऽत्माहंकृतत्वाभावः सूचितः। **हर्षादीति**। एतेन बुद्धिलेपाभावो बोध्यः। अत एव यस्मादिति। एतद्व्याचष्टे—**अधिक्षेपे**त्यादिना। अधिक्षेपो दुर्वाक्यम्। आदिना निष्ठीवनम्।

ननु प्राक्तनश्लोकपूर्वार्धोक्तेऽर्थे तृतीयपादेन हर्षेत्यादिना यो हेतुरुक्तः स मूलकारैरपि न विवृतो नापि त्वयाऽपि। तत्र यथाश्रुत एव सारल्यमिति चेत्तदेव हर्षादिराहित्यं तत्र कुतः सिद्धमित्यत्राग्रिमश्लोकं संगृह्णाति—

**शान्तसंसारकलनः कलावानपि निष्कलः।**
**यः सचित्तोऽपि निश्चित्तः स जीवन्मुक्त उच्यते॥**

---

१ क. ख. ग. घ. ङ. च. °वृत्तादेतस्मा°।

शत्रुमित्रमानावमानादिविकल्पाः, संसारकलनाः शान्ता यस्य सः। चतुःषष्टिविधाः कलाः। तत्सद्भावेऽपि तदभिमानव्यवहारयोरभावान्निष्कलत्वम्। चित्तस्य स्वरूपेण सद्भावेऽपि वृत्त्यनुदयान्निश्चितत्वम्। चिन्तेति पाठे वासनावशादात्मध्यानवृत्तिसद्भावेऽपि लौकिकवृत्त्यभावान्निश्चिन्तत्वम्।[1]

यः समस्तार्थजातेषु व्यवहार्यपि शीतलः।
परार्थेष्विव पूर्णात्मा स जीवन्मुक्त उच्यते ॥

परगृहे विवाहोत्सवादौ स्वयं गत्वा तत्प्रीत्यै तदीयकार्येषु व्यवहरन्नपि लाभालाभयोर्हर्षविषादरूपं बुद्धिसंतापं न प्राप्नोति यथैवमयं मुक्तः स्वकार्येऽपि शीतलः। न केवलं संतापाभावाच्छीतलत्वं किंतु पूर्णस्वरूपानुसंधानादपि।

इति जीवन्मुक्तिलक्षणम्।

**शान्तेति**। एतद्व्याकरोति—**शत्रुमित्रे**त्यादिना। आदिना रागद्वेषादयः। एवं द्वितीयपादमपि व्याचष्टे—**चतुःषष्टी**त्यादिना। चतुःषष्टिकलास्तु दशमस्कन्धटीकायां प्रसिद्धा एवाथाप्यनतिप्रयोजकत्वान्नेह प्रपञ्च्यन्ते। तद्वत्तृतीयचरणमपि विवृणोति—**चित्तस्ये**त्यादिना। एवं चास्मिन्पाठे ह्यसंप्रज्ञातसमाधिशीलत्वं पाठान्तरे तु संप्रज्ञातसमाधिशीलत्वमिति ध्येयम्। एवं पुनरेतेन समाहितजीवन्मुक्तलक्षणं प्रपञ्च्य पुनर्व्युत्थिततल्लक्ष्मापि साधकावबोधदार्ढ्यार्थं संक्षिपति—**यः समस्ते**त्यादिवासिष्ठवचसैव। तद्विशदयति—**परगृह** इत्यादिना। एवं परार्थेष्विवेति मूलोक्तं दृष्टान्तं स्पष्टीकृत्य दार्ष्टान्तिकं प्रकटयति—**एवमयमि**त्यादिना। एवं पूर्णेतिपदमपि प्रागुदीरितानुवादेन विवृणोति—**न केवलमि**त्यादिशेषेण। नन्वेतावता समाहितव्युत्थितजीवन्मुक्तसाधारणलक्षणं किं संपन्नमिति चेन्न। पूर्णस्वरूपेत्याद्यन्त्यग्रन्थस्यैव तत्प्रथकत्वात्। तथा हि पूर्णस्वरूपानुसंधानवत्त्वं हि जीवन्मुक्तत्वम्। तच्च समाहितव्युत्थितयोरुभयोरपि तयोः समानमेव। तद्यथा—पूर्णं वस्तुपरिच्छेदाभावः पूर्णत्वमित्यद्वैतसिद्ध्युक्तेर्यावद्धर्माभावोपलक्षितं तदात्मकं सच्चिदानन्दाद्वैतं ब्रह्म तच्च तदात्मस्वरूपं शोधितत्वंपदार्थीभूतं प्रत्यक्चिन्मात्रं तस्य यदनुसंधानं तत्त्वमस्यादिवाक्यविवेकजन्याबाधितापरोक्षप्रमामनु यत्सम्यग्यथावद्धानं स्वबुद्धौ तदाकारवृत्त्या संस्थापनमिव।

---

१ क. ङ. °पि लौकिकभाववृत्त्यभा°।

वृत्तयस्तु तदानीमज्ञाता अप्यात्मगोचराः ।
स्मरणादनुमीयन्ते व्युत्थितस्य समुत्थितात् ॥

इति तत्त्वविवेकोक्तेः सूक्ष्मवृत्त्या व्युत्थाने ज्ञातत्वेन स्थूलवृत्त्यात्मकं च विद्यते यस्य तस्य भावस्तत्त्वमित्यर्थः । एवं चेदं जीवन्मुक्त्याख्यधर्मस्यैव सविशेषणविध्यादिन्यायेन लक्षणमित्युपसंहरति—**इती**त्यादिना ।

एवं जीवन्मुक्तलक्षणं संक्षिप्याथ विदेहमुक्तेर्लक्षणमपि संक्षिपति सप्रतिज्ञ**मथे**त्यादिना—

**अथ विदेहमुक्तलक्षणम्—**

**जीवन्मुक्तपदं त्यक्त्वा स्वदेहे कालसात्कृते ।**
**विशत्यदेहमुक्तत्वं पवनोऽस्पन्दतामिव ॥**

**यथा वायुः कदाचिच्चलत्वं त्यक्त्वा निश्चलरूपेणावतिष्ठते तथा मुक्तात्माऽप्युपाधिकृतं संसारं त्यक्त्वा स्वरूपेणावतिष्ठते ।**

**विदेहमुक्तो नोदेति नास्तमेति न शाम्यति ।**
**न सन्नासन्न दूरस्थो न चाहं न च नेतरः ॥**

**उदयास्तमयौ हर्षविषादौ । न शाम्यति न च तत्परित्यागी लिङ्गदेहस्यात्रैव लीनत्वात् । सद्वाच्यो जगद्धेतुरविद्यामायोपाधिर्न प्राज्ञेश्वरः । नासद्वाच्योऽपि भूतभौतिकः । न दूरस्थ इत्युक्त्या न मायातीतः । न चेत्युक्त्या स्थूलभुक्समी[1]पस्थोऽपि निषिध्यते । अहं न चेति न समष्टिश्च । नेतर इति न व्यष्टिश्च । व्यवहारयोग्यो विकल्पः कोऽपि नास्तीत्यर्थः ।**

तत्प्रतिपादकं निरुक्तवासिष्ठग्रन्थाग्रिमश्लोकानेवोदाहरति—**जीवन्मुक्तपद**मित्यादिना । तत्राऽऽद्यं पद्यं व्याकरोति—**यथे**त्यादिना । नन्वेवं चेत्पुनः संसारापत्तिः । दृष्टान्तीकृतस्य वायोः कालान्तरे चलनवन्मुक्तात्मनोऽपि कालान्तरे संसारापत्तेः स्वाभाविकत्वापातेन दुर्निरसत्वादित्याशङ्क्य हेत्वभावादुक्तदृष्टान्तस्य तु किंचित्कालं सव्यापारस्यापि कालान्तरे निर्व्यापारतानुभावनमात्रार्थकत्वाच्चेत्याशयेन तत्रैव श्लोकान्तरमप्युदाहरति—**विदेहमुक्त इति** । तं विवृणोति—**उदये**त्यादिना । नन्वेवं सूर्याद्युदयास्तमयव्युदासेऽपि वीतरागेऽतिव्याप्तिस्तस्य हर्षविषादशून्यत्वादित्यत आह—**न च तत्परित्यागीति** । तत्र हेतुः—**लिङ्गे**त्यादिना । अत्रैव, 'न तस्य प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते' इति श्रुतेः प्रारब्धक्षयक्षण एव

'गताः कलाः पञ्चदशप्रतिष्ठा देवाश्च सर्वे प्रतिदेवतासु ।
कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकी भवन्ति ॥

---

१ क. ख. ग. घ. ङ. च. पस्थत्वं नि° ।

इति श्रुत्यन्तरोक्तरीत्या सत्यसंकल्पेश्वरलीलावशेन प्रतिभासमानापञ्चीकृतपञ्चभूतात्मकतत्तदुपादानावच्छिन्नपरमात्माभिधसोपाधिकब्रह्मण्येवेति यावत्। एवं पूर्वार्धं व्याख्यायोत्तरार्धं व्याकरोति—**सद्वाच्य** इत्यादिना। सच्छब्दवाच्य इत्यर्थः। एतादृशोऽविद्यामायोपाधिः। क्रमादित्यार्थिकम्। प्राज्ञेश्वरः। एवं चाविद्योपाधिः प्राज्ञः, मायोपाधिरीश्वरोऽपि। जगद्धेतुः, यथाक्रमं प्रातिभासिकव्यावहारिकजन्यजगतोरभिन्ननिमित्तोपादानकारणमिति यावत्। न, तदा नैवास्तीत्यर्थः। एवं नासन्नित्यपि स्फुटयति—**नासदि**त्यादिना। पूर्वस्य कारणत्वेनैव सत्त्वमस्य तु कार्यत्वेनासत्त्वमित्याशयः। अथ न दूरेत्याद्याशयं विशदयति—**न दूरस्थ इत्युक्त्ये**त्यादिना। फलितमाह—**व्यवहारेति**।

एवं यदि व्यवहारयोग्यतावच्छेदकावच्छिन्नयावद्धर्मानवच्छिन्नमद्वैतं ब्रह्मैव तदा चेत्तर्हि शून्यवादव्युदासेऽपि निरुक्तधर्माभावरूपधर्मेणैव तस्य सधर्मकत्वमित्यत आह—

**ततः स्तिमितगम्भीरं न तेजो न तमस्ततम्।**
**अनाख्यमनभिव्यक्तं सत्किंचिदवशिष्यते ॥**

**एवं[1] विदेहमुक्त्यां[2] सादृश्योक्तेर्जीवतोऽपि याव[3]न्निर्विकल्पकातिशयस्ताव[4]दुत्तमत्वं द्रष्टव्यम्।**

**तत इति**। वासिष्ठपद्यत एव। ततः, लोकदृष्टिकल्पितप्रारब्धपरिसमाप्तिप्रयुक्तजीवन्मुक्तदेहपातानन्तरमित्यर्थः। **स्तिमितेति**। स्तिमितं कूटस्थं निर्विकारमेव सद्गम्भीरमतलस्पर्शजलमिवानन्तमिति यावत्। एवं तर्हि किं तमस्तेजो वा नेत्याह—**न तेज** इत्यादिना। एतेन कार्यकारणभाववैलक्षण्यं व्यज्यते। अत एव ततं व्याप्तम्। एवं च गम्भीरपदध्वनितप्रागुक्तदैशिकपरिच्छेदविधुरत्ववद्वास्तविकपरिच्छेदशून्यत्वमपि तत्र व्यक्तं भवति। अत एव—**अनाख्यमित्यादि**। नामरूपात्मकद्वैतातीतमित्यर्थः। एतादृशं किंचिदवाङ्मनसगम्यं सदेव सर्वबाधावधिभूतमात्मतत्त्वमवशिष्यते स्वप्रकाशसुखत्वेन वर्तत इति। एतेन कालिकपरिच्छेदराहित्यमपि तत्र द्योत्यते। एवं चाखिलस्य द्वैतस्य सन्मात्रात्मनि बाधावधित्वेनावशिष्यमाणे शुक्तिरजतादिवत्कल्पितत्वेन कल्पितप्रतियोगिकभावाभावयोरधिष्ठानैकायत्तसत्ताकत्वनियमात्कल्पितद्वैताभावोऽपि निरुक्ताद्वैतसन्मात्ररूपाधिष्ठानस्वरूप एवेति भावः। नन्वेवमपि जीवन्मुक्तलक्षणकथनोत्तरं विदेहमुक्तलक्षणकथनमिदमप्रयोजकमिति चेत्सत्यम्। निरुक्तजीवन्मुक्तवर्णने समाहितत्वेनापि तस्य तत्र तत्र भूरितरं वर्णितत्वात्किं

---

१ क. ख. ग. घ. ङ. च. °वंविधया वि°। २ क. ख. ग. ङ. च. °क्त्या सदृशत्वोत्कर्षत्वोक्ते°। ३ क. ख. ग. च. °वद्यावन्नि°। ४ क. ख. ग. घ. ङ. च. °वत्तावदु।

समाहित एवासावुत्तम उत व्युत्थित एव वा किंवोभावपीति संशयशामकत्वेनैतदुपन्याससाफल्यमित्यभिप्रायं विशदयति—**एवमि**त्यादिना । एवं, पूर्वोक्तसकलजीवन्मुक्तविदेहमुक्तलक्षणवटकवासिष्ठवाक्यसंदर्भेणेत्यर्थः । **विदेहेति** । विदेहकैवल्येन सहेति यावत् । **सादृश्येति ।** तौल्यकथनात् । समाहितजीवन्मुक्तलक्षणवाक्योक्ततदवस्थाविशेषस्येति शेषः । जीवतोऽपि मुक्तस्येत्यार्थिकम् । **निर्विकल्पकेति** । असंप्रज्ञातसमाध्युत्कर्ष इत्यर्थः । एवं चेदमपि जीवन्मुक्तस्यैवासंप्रज्ञाताभिधनिर्विकल्पसमाधिनिष्ठाधिरूढस्य देवहूत्यृषभादेरिव लक्षणमवगन्तव्यम् । तेन नेह विदेहमुक्तलक्षणत्वेनाऽऽचार्यैः पृथगुपसंहारः कृतः । उपक्रमस्त्वथ विदेहमुक्तलक्षणमितिकथितनिर्विकल्पातिशयसादृश्यादेवेति ध्येयं धीरैः । ननु श्रुतिस्मृतिवाक्यानि जीवन्मुक्तिसद्भावे प्रमाणानीति प्रमाणप्रतिपादनमुपन्यस्याऽऽदौ लक्षणकथनमेव कथमिति चेन्न । सत्यं ज्ञानमित्यादिवाक्यवल्लक्षणवाक्यत्वेऽपि प्रमाणत्वानपायात् । न चैवं तर्हि स्थितप्रज्ञादिवाक्यानामपि प्रमाणवाक्यत्वेऽपि लक्षणवाक्यतापत्तिरिति सांप्रतम् । तत्र यतो वेत्यादिलक्षणवाक्येषु ब्रह्मपदस्येव जीवन्मुक्तपदस्याभावाल्लक्षणवाक्येषु तु सर्वत्र तत्सत्त्वाच्चेति सहृदया एवाऽऽचार्यहृदयं विदांकुर्वन्तु ।

इति जीवन्मुक्तिलक्षणोल्लासश्चतुर्थः ॥ ४ ॥

अथ प्रागुद्दिष्टक्रमानुसारेण प्राप्तः स्थितप्रज्ञः कोक्त इत्यपेक्षायामाह **भगवद्गीतास्वि**त्यादिना—

**भगवद्गीतासु द्वितीयाध्याये स्थितप्रज्ञः पठ्यते—**

**अर्जुन उवाच—**

**स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ।**
**स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ॥**

तत्र हि—

श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला ।
समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥

इति पूर्वश्लोकः । अत्र टीका गूढार्थदीपिका सर्वत्र—अन्तःकरणशुद्ध्यैवंजातनिर्वेदस्य कदा ज्ञानप्राप्तिरित्यपेक्षायामाह—ते तव बुद्धिः श्रुतिभिर्नानाविधफलश्रवणैरविचारिततात्पर्यैर्विप्रतिपन्नाऽनेकविधसंशयविपर्यासवत्त्वेन विक्षिप्ता प्राक् । यदा यस्मिन्काले शुद्धिजविवेकजनितेन दोषदर्शनेन तं विक्षेपं परित्यज्य । समाधौ परमात्मनि । निश्चला जाग्रत्स्वप्नदर्शनलक्षणविक्षेपरहिता । अचला सुषुप्तिमूर्छास्तब्धीभावादिरूपलयलक्षणचलनरहिता सती स्थास्यति । लयविक्षेपलक्षणौ दोषौ परित्यज्य समाहिता भविष्यतीति यावत् । अथ वा निश्चला, असंभावनाविपरीतभावनारहिता । अचला, दीर्घकालादरनैरन्तर्यसत्कारसेवनैर्वि-

जातीयप्रत्ययादूषिता सती निर्वातप्रदीपवदात्मनि स्थास्यतीति योजना । तदा तस्मिन्काले योगं जीवपरमात्मैक्यलक्षणं तत्त्वमस्यादिवाक्यजन्यमखण्डसाक्षात्कारं सर्वयोगफलमवाप्स्यसि । तदा पुनः साध्यान्तराभावात्कृतकृत्यः स्थितप्रज्ञो भविष्यसीत्यभिप्रायः । एवं लब्धावसरः स्थितप्रज्ञलक्षणं ज्ञातुम्—**अर्जुन उवाच** यान्येव हि जीवन्मुक्तानां लक्षणानि तान्येव मुमुक्षूणां मोक्षोपायभूतानीति मन्वानः । स्थिता निश्चलाऽहं ब्रह्मास्मीति प्रज्ञा यस्य स स्थितप्रज्ञोऽवस्थाद्वयवान्समाहितो व्युत्थितचित्तश्चेति । अतो विशिनष्टि—समाधिस्थस्य स्थितप्रज्ञस्य का भाषा । कर्मणि षष्ठी । भाष्यतेऽनयेति भाषा लक्षणम् । समाधिस्थः स्थितप्रज्ञः केन लक्षणेनान्यैर्व्यवह्रियत इत्यर्थः । स च व्युत्थितचित्तः स्थितप्रज्ञः स्वयं किं भाषेत स्तुतिनिन्दादावभिनन्दद्वेषादिलक्षणं किं कथं प्रभाषेत । सर्वत्र संभावनायां लिङ् । तथा—**किमासीतेति** । व्युत्थितचित्तनिग्रहाय कथं बहिरिन्द्रियाणां निग्रहं करोति । तन्निग्रहाभावकाले च किं व्रजेत कथं विषयान्प्राप्नोति । तत्कर्तृकभाषणासनव्रजनानि मूढजनविलक्षणानि कीदृशानीत्यर्थः । तदेवं चत्वारः प्रश्नाः । समाहितस्थितप्रज्ञ एकः । व्युत्थितस्थितप्रज्ञे त्रय इति । केशवेतिसंबोधनात्सर्वान्तर्यामितया त्वमेवैतादृशं रहस्यं वक्तुं समर्थोऽसीति सूचयति । एतेषां चतुर्णां प्रश्नानां क्रमेणोत्तरं भगवानुवाच यावदध्यायसमाप्ति ।

एवं निरुक्तभगवद्गीताश्लोकीयं मधुसूदनं व्याख्यानमुदाहृत्याथ मूलकारनिरूपिततत्तात्पर्यं मया विव्रियते । तत्राऽऽदौ स्थिप्रज्ञस्येत्यत्र प्रज्ञापदार्थं प्रकर्षेणाद्वैतात्मत्वेन ज्ञायते ब्रह्मानयेति विग्रहसिद्धं प्रज्ञापदार्थं द्वैविध्येन प्रतिजानीते प्रज्ञेत्यादिना—

**प्रज्ञा तत्त्वज्ञानम् । तद्द्विविधं स्थितमस्थितं चेति । यथा जारेऽनुरक्ताया नार्याः सर्वेष्वपि व्यवहारेषु बुद्धिर्जारमेव ध्यायति, प्रमाणप्रमितानि[1] क्रियमाणान्यपि गृहकर्माणि सद्य एव विस्मर्यन्ते, तथा परवैराग्योपेतस्य योगाभ्यासपाटवेनात्यन्तवशीकृतचित्तस्योत्पन्ने तत्त्वज्ञाने[2] बुद्धिर्जारमिव नैरन्तर्येण तत्त्वं ध्यायति तदिदं स्थितं[3] ज्ञानम् । उक्तगुणरहितस्य केनापि पुण्यविशेषेण कदाचिदुत्पन्नेऽपि तत्त्वज्ञाने गृहकर्मवत्तत्रैव तत्त्वं विस्मर्यते तदिदमस्थितं ज्ञानम् । एतदेवाभिप्रेत्य वसिष्ठ आह—**

---

१ क. ख. ग. ङ. च °प्रतीता° । २ क. ख. ग. घ. ङ. च. °ने तद्बुद्धि° । ३ क. ख. ङ. च. स्थितप्रज्ञा° ।

परव्यसनिनी नारी व्यग्राऽपि गृहकर्मणि।
तदेवाऽऽस्वादयत्यन्तः परसङ्गरसायनम्॥
एवं तत्त्वे परे शुद्धे धीरो विश्रान्तिमागतः।
तदेवाऽऽस्वादयत्यन्तर्बहिर्व्यवहरन्नपि॥

**तत्र स्थितप्रज्ञः कालभेदाद्द्विविधः समाहितो व्युत्थितश्च। तयोरुभयोर्लक्षणं पूर्वोत्तराभ्यामर्धाभ्यां पृच्छति समाधिस्थस्य स्थितप्रज्ञस्य का भाषा कीदृशैर्लक्षणवाचकैः शब्दैरयं भाष्यते, व्युत्थितस्थितप्रज्ञः कीदृग्व्यवहारं करोति, तस्योपवेशनगमने मन्देभ्यो विलक्षणे कीदृशे।**

**श्रीभगवानुवाच—**

**प्रजहाति यदा कामान्सर्वान्पार्थ मनोगतान्।**
**आत्मन्येवाऽऽत्मना तुष्टः स्थितप्रज्ञस्तदोच्यते॥**

तत्र वासिष्ठसंमतिं तात्पर्यत आह सदृष्टान्तं **यथे**त्यादिना। दार्ष्टान्तिकं स्पष्टयति—**तथे**त्यादिना। परत्वमत्र यावद्दृश्ये दुःखप्रमितिजन्यसार्वदिकानादरत्वमेव। एवं स्थितज्ञानं निर्णीयास्थितं तदाह—**उक्ते**त्यादिना। तत्रैवोत्पत्त्यग्रिमक्षण एव। तत्र वसिष्ठवाक्यमवतारयति—**एतदेवे**त्यादिना। तदेव संगृह्णाति—परेत्यादिद्वाभ्याम्। अथ स्थितप्रज्ञस्यापि द्वैविध्यमाह—**तत्रे**त्यादिना। तत्र गीतावाक्यं योजयति—**तयो**रित्यादिना। समाधानवचनमाह—**श्री**त्यादिना। अत्र टीका माधुसूदनी—कामान्कामसंकल्पादीन्मनोवृत्तिविशेषान्प्रमाणविपर्ययविकल्पनिद्रास्मृतिभेदेन तन्त्रान्तरे पञ्चधा प्रपञ्चितान्। सर्वान्निरवशेषान्प्रकर्षेण कारणबाधेन यदा जहाति परित्यजति। सर्ववृत्तिशून्य एव यदा भवति स्थितप्रज्ञस्तदोच्यते। समाधिस्थ इति शेषः। कामानामनात्मधर्मत्वेन परित्यागयोग्यतामाह—**मनोगतानिति**। यदि ह्यात्मधर्माः स्युस्तदा न त्यक्तुं शक्येरन् वह्न्यौष्ण्यवत्स्वाभाविकत्वात्। मनसस्तु धर्मा एतेऽतस्तत्परित्यागेन परित्यक्तुं शक्या एवेत्यर्थः। ननु स्थितप्रज्ञस्य मुखप्रसादलिङ्गगम्यः संतोषविशेषः प्रतीयते स कथं कामपरित्यागे स्यादित्यत आह—आत्मन्येव परमानन्दरूपे न त्वनात्मनि तुच्छे। आत्मना स्वप्रकाशचिद्रूपेण भासमाने तुष्टो न तु वृत्त्या तुष्टः परितृप्तः परमपुरुषार्थलाभात्। तथा च श्रुतिः—'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते' इति। तथा च समाधिस्थः स्थितप्रज्ञ एवंविधैर्लक्षणवाचिभिः शब्दैर्भाष्यत इति प्रथमप्रश्नस्योत्तरम्।

अथमूलकाराः समुदाहृतगीतावाक्यं व्याचिख्यातुमिच्छवः प्रथमं कामत्रैविध्यं विदधति **कामा** इत्यादिना—

---

१ क. ख. ग. घ. ङ. च. शब्दैः सर्वैर°। २ क. ख. ग. घ. ङ. च. °दृशं वाग्व्य°।

**कामास्त्रिविधा बाह्या आन्तरा वासनामात्ररूपाश्चेति । उपार्जितमोदकादयो बाह्याः । आशामोदकादय आन्तराः । पथि पतिततृणादिवदापाततः प्रतीता वासनारूपाश्च । समाहितोऽशेषधीवृत्तिसंक्षयात्सर्वान्परित्यजति । अस्ति चास्य मुखप्रसादलिङ्गगम्यः संतोषः । स च न कामे किंत्वात्मन्येव । कामानां त्यक्तत्वात्, बुद्धेः परमानन्दरूपेणा[1]ऽऽत्मतत्त्वाभिमुखत्वाच्च । न चात्र संप्रज्ञातसमाधाविवाऽऽत्मानन्दो मनोवृत्त्योल्लिख्यते किंतु स्वप्रकाशचिद्रूपेणाऽऽत्मना । संतोषश्च न वृत्तिरूपः किंतु तत्संस्काररूपः । एवंविधैर्लक्षणवाचकैः शब्दैः समाहितो भाष्यते ।**

अत्र काम्यन्त इति कामा इतिविग्रहात्सर्वेऽपि स्रक्सुन्दरीसुवर्णादीष्टविषयाः, तथा कामोऽभिलाष इति कोशाच्च विषयतदभिलाषोपलक्षिताखिलवृत्तिविशेषा इत्यर्थः । तान्व्युत्पादयति—**उपार्जित**त्यादिना । आपाततः । पातं चक्षुरादिनिपातरूपं संनिकर्षं तद्विषयाज्ञानमात्रनाशं वा मर्यादीकृत्येत्यापातं तेनेति सार्वविभक्तिकस्तसिः । प्रतीताः सामान्यतो ज्ञाताः । अत एव—**वासनेति** । संस्कारात्मना मनःस्था इत्यर्थः । कामे, निरुक्तान्यतमविषयविषयक इत्यर्थः । **परमानन्देति** । अद्वैतानन्दाकारत्वेनेति यावत् । उल्लिख्यते, विषयी क्रियते । शिष्टं तु सकलं स्पष्टमेव ।

**दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।**
**वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥**

**दुःखं[2] रोगादिनिमित्तजन्या रजोगुणविकाररूपा संतापात्मिका प्रतिकूला चित्तवृत्तिः । तादृशे दुःखे प्राप्ते सत्यहं पापो धिङ्मां दुरात्मानमित्यनुतापात्मिका तमोगुणवृ[3]त्तिविकारत्वेन भ्रान्तिरूपा चित्तवृत्तिरुद्वेगः । यद्यप्ययं विवेक इवाऽऽभाति तथाऽपि पूर्वस्मिञ्जन्मनि चेत्तत्पापवृत्तिप्रतिबन्धकत्वात्सप्रयोजनो भवति । इदानीं तु निष्प्रयोजन इति भ्रान्तित्वं द्रष्टव्यम् ।**

अत्रापि टीका माधुसूदन्येवेयं संगृह्यते—इदानीं व्युत्थितस्य स्थितप्रज्ञस्य भाषणोपवेशनगमनानि मूढजनविलक्षणानि व्याख्येयानि । तत्र किं प्रभाषेतेत्यस्योत्तरमाह द्वाभ्याम्—दुःखानि त्रिविधानि । शोकमोहज्वरशिरोरोगादिनिमित्तान्याध्यात्मिकानि । व्याघ्रसर्पादिप्रयुक्तान्याधिभौतिकानि । अतिवातादिवृष्ट्यादिहेतुकान्याधिदैविकानि । तेषु दुःखेषु

१ क. ख. ग. ङ. च. °णाऽऽत्माभि° । २ क. ख. ग. घ. ङ. च. °खं रागा° । ३ क. ख. ङ. च. °णवि° ।

रजःपरिणामसंतापात्मकचित्तवृत्तिविशेषेषु प्रारब्धपापकर्मप्रापितेषु नोद्विग्नं दुःखपरिहाराक्षमतया व्याकुलं न भवति मनो यस्य सोऽनुद्विग्नमनाः। अविवेकिनो हि दुःखप्राप्तौ सत्यामहो पापोऽहं धिङ्मां दुरात्मानमेतादृशं दुःखभागिनं को मे दुःखमीदृशं निराकुर्यादित्यनुतापात्मको भ्रान्तिरूपस्तामसश्चित्तवृत्तिविशेष उद्वेगाख्यो जायते। यद्ययं पापानुष्ठानसमये स्यात्तदा तत्प्रवृत्तिप्रतिबन्धकत्वेन सफलः स्यात्। भोगकाले तु भवन्कारणे सति कार्यस्योच्छेत्तुमशक्यत्वान्निष्प्रयोजनः। दुःखकारणे सत्यपि किमिति मम दुःखं जायत इत्यविवेकभ्रमरूपत्वान्न विवेकिनः स्थितप्रज्ञस्य स भवति। दुःखमात्रं हि प्रारब्धकर्मणा प्राप्यते नतु तदुत्तरकालीनो भ्रमोऽपि। ननु दुःखान्तरकारणत्वात्सोऽपि प्रारब्धकर्मान्तरेण प्राप्यतामिति चेन्न। स्थितप्रज्ञस्य भ्रमोपादानाज्ञाननाशेन भ्रमासंभवात्तज्जन्यदुःखप्रापकप्रारब्धाभावात्। यथाकथंचिद्देहयात्रामात्रनिर्वाहकप्रारब्धकर्मफलस्य भ्रमाभावेऽपि बाधितानुवृत्त्योपपत्तेरिति विस्तरेणाग्रे वक्ष्यते। तथा सुखेषु सत्त्वपरिणामरूपप्रीत्यात्मकचित्तवृत्तिविशेषेषु त्रिविधेषु प्रारब्धपुण्यप्रापितेषु। विगतस्पृहः, आगामितज्जातीयसुखेषु स्पृहारहितः। स्पृहा हि नाम सुखानुभववृत्तिकाले तज्जातीयसुखस्य कारणं धर्ममननुष्ठाय वृथैव तदाकाङ्क्षारूपा तामसी चित्तवृत्तिर्भ्रान्तिरेव सा चाविवेकिन एव जायते। न हि कारणाभावे कार्यं भवितुमर्हति। अतो यथा सति कारणे कार्यं मा भूदिति वृथाकाङ्क्षारूप उद्वेगो विवेकिनो न संभवति तथैवासति कारणे कार्यं भूयादिति वृथाकाङ्क्षारूपा तृष्णात्मिका स्पृहाऽपि नोपपद्यते। प्रारब्धकर्मणः सुखमात्रप्रापकत्वाद्धर्षात्मिका वा चित्तवृत्तिः स्पृहाशब्देनोक्ता साऽपि भ्रान्तिरेव। अहो धन्योऽहं यस्य ममेदृशं सुखमुपस्थितं को वा मया तुल्यस्त्रिभुवने केन चोपायेन ममेदृशं सुखं न विच्छिद्येतेत्येवमात्मिकोत्फुल्लरूपा तामसी चित्तवृत्तिः। अत एवोक्तं भाष्ये—‘नाग्निरिवेन्धनाद्याधाने यः सुखान्यनुविवर्धते स विगतस्पृहः’ इति। वक्ष्यति च—‘न प्रहृष्येत्प्रियं प्राप्य नोद्विजेत्प्राप्य चाप्रियम्’ इति। साऽपि न विवेकिनः संभवति भ्रान्तिरूपत्वात्। तथा वीतरागभयक्रोधः। रागः शोभनाध्यासनिबन्धनो विषयेषु रञ्जनात्मकश्चित्तवृत्तिविशेषोऽत्यन्ताभिनिवेशरूपः। रागविषयस्य नाशके समुपस्थिते तन्निवारणासामर्थ्यमात्मनो मन्यमानस्य दैन्यात्मकश्चित्तवृत्तिविशेषो भयम्। एवं रागविषयविनाशके समुपस्थिते तन्निवारणसामर्थ्यमात्मनो मन्यमानस्याभिज्वलनात्मकश्चित्तवृत्तिविशेषः क्रोधः। ते सर्वेऽपि विपर्ययरूपत्वाद्विगता यस्मात्स तथा। एतादृशो मुनिर्मननशीलः संन्यासी स्थितप्रज्ञ उच्यते। एवंलक्षणः स्थितधीः स्वानुभवप्रकटनेन शिष्यशिक्षार्थमनुद्वेगनिःस्पृहत्वादिवाचः प्रभाषत इत्यन्वय उक्तः। एवं चान्योऽपि मुमुक्षुर्दुःखे नोद्विजेत्, सुखे न प्रहृष्येत्, रागभयक्रोधरहितश्च भवेदित्यभिप्रायः। अथात्र मूलकृतां व्याख्यानं विव्रियते—तत्राऽऽदौ दुःखपदार्थं प्रथयति—**दुःखमि**त्यादिना। रोगादीति। आदिनाऽऽधिजन्याऽप्यसौ। तदुपादानमाह—**रजो**-

**गुणेति** । तत्स्वरूपमाह—**संतापेति** । तत्कार्यमाह—**प्रतिकूलेति** । अविद्यावृत्तिव्यावृत्तये चित्तेति । फलितं प्रकृत आह—**तादृश इति** । ततः किं तदाह—**अहं पाप** इत्यादिना । एवं चेदं दुःखादनुजायमानत्वसम्यक्तापजनकत्वाभ्यामनुतापरूपमेवेत्याह—**इती**त्यादिना । तत्र वक्ष्यमाणभ्रान्तिरूपतां साधयितुमादौ हेतुमाह—**तम इति** । 'प्रमादमोहौ तमसः' इति भगवद्वचनात्तमोगुणप्रधाना येयमावरणविक्षेपरूपा चित्तवृत्तिस्तल्लक्षणो यो विकारः परिणामस्तत्त्वेनेत्यर्थः । फलितमाह—**भ्रान्ती**त्यादिना । ननु भ्रान्तिर्ह्यविवेकः प्रकृतानुतापस्तु तत्परिपन्थी प्रतीयत इत्यत आह—**यद्यपीत्यादि** । तत्र हेतुमाह—**तथाऽपी**त्यादिना । **तत्पापेति** । निरुक्तानुतापकारणीभूतदुरितवर्तनपरिरोधकत्वादित्यर्थः ।

एवमाचार्यः श्रीमद्भगवद्वाक्यस्य प्रथमचरणं व्याख्यायाथ द्वितीयं तं व्याकुर्वाणः सुखपदार्थं कथयति **सुखमि**त्यादिना—

**सुखं राज्यपुत्रलाभादि[1]निमित्तजन्या सात्त्विकी प्रीतिरूपाऽनुकूला चित्तवृत्तिः । तस्मिन्सुखे सत्यागामिनस्तादृशस्य सुखस्य कारणं पुण्यमननुष्ठाय वृथैव तदपेक्षा तामसी चित्तवृत्तिः स्पृहा । तत्र च सुखदुःखयोः प्रारब्धकर्मप्रापितत्वाद्व्युत्थितचित्तस्य वृत्तिसंभवाच्च तदुभ[2]यमुपपद्यते । उद्वेगस्पृहे न विवेकिनः संभवतः । तथा रागभयक्रोधाश्च तामसत्वेन कर्मणा प्रापितत्वाभावान्नास्य विद्यन्ते । एवंलक्ष[3]णलक्षितः स्थितधीः स्वानुभवप्रकटनेन शिष्यशिक्षार्थमनुद्वेगनिःस्पृहत्वादिगमकं वचो भाषत इत्यर्थः ।**

**यः सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम् ।**
**नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥**

तदुपादानं वदंस्तां विशिनष्टि—**सात्त्विकीति** । यत्स्वरूपमाह—**प्रीतीति** । तत्कार्यमाह—**अनुकूलेति** । ननु भवत्वेवं ततः किं प्रकृत इत्यत्राऽऽह—**तस्मिन्नि**त्यादिना । **तदिति** । सुखापेक्षा लक्षणेति यावत् । तामसी तमःप्रधाना । नन्वेवमपि किं तत्राऽऽह—**तत्र** चेत्यादिना । दुःखसुखोद्वेगस्पृहासु मध्य इत्यर्थः । चस्त्वर्थे । उपलक्षणमिदं रागभयक्रोधानामपीत्याह—**तथे**ति । रागादयः कुतो नास्य विद्यन्त इत्यत आह—**तामसत्वेने**त्यादिना । कर्मणा, प्रारब्धकर्मणा । रागादीनां स्वरूपाणि तु श्रीमधुसूदनाचार्यैरुक्तान्येव । फलितमाह—**एवमि**त्यादिशेषेणैव ।

---

१ क. ख. ङ. च. °दिज° । २ क. ख. ङ. च. °भयं समुत्पद्य° । ३ घ. °क्षणः स्थिरधीः ।

अत्र टीका माधुसूदनी संगृह्यते सर्वदेहेषु जीवनादिष्वपि यो मुनिरनभिस्नेहः। यस्मिन्सत्यन्यदीये हानिवृद्धी स्वस्मिन्नारोप्येते स तादृशोऽन्यविषयः प्रेमापरपर्यायस्तामसो वृत्तिविशेषः स्नेहः। सर्वप्रकारेण तद्रहितोऽनभिस्नेहः। भगवति परमात्मनि तु सर्वथाऽभिस्नेहवान्भवेदेव। अनात्मस्नेहाभावस्य तदर्थत्वादिति द्रष्टव्यम्। तत्तत्, प्रारब्धकर्मपरिप्रापितम्। शुभं सुखहेतुं विषयं प्राप्य नाभिनन्दति हर्षविशेषपुरःसरं न प्रशंसति। अशुभं दुःखहेतुं विषयं प्राप्य न द्वेष्टि, अन्तरसूयापूर्वकं न निन्दति। अज्ञस्य सुखहेतुर्यः स्वकलत्रादिः स शुभो विषयः। तद्गुणकथनादिप्रवर्तिका धीवृत्तिर्भ्रान्तिरूपाऽभिनन्दः स च तामसः। तद्गुणकथनादेः परप्ररोचनार्थत्वाभावेन व्यर्थत्वात्। एवमसूयोत्पादनेन दुःखहेतुः परकीयविद्याप्रकर्षादिरेनं प्रत्यशुभो विषयः। तन्निन्दाप्रवर्तिका भ्रान्तिरूपा धीवृत्तिर्द्वेषः सोऽपि तामसः। तन्निन्दाया निवारणार्थत्वाभावेन व्यर्थत्वात्। तावभिनन्दद्वेषौ भ्रान्तिरूपौ तामसौ कथमभ्रान्ते शुद्धसत्त्वे स्थितप्रज्ञे संभवतः। तस्माद्विचालकाभावादनभिस्नेहस्य हर्षविषादराहितस्य मुनेः प्रज्ञा परमात्मतत्त्वविषया प्रतिष्ठिता फलपर्यवसायिनी स स्थितप्रज्ञ इत्यर्थः। एवमन्योऽपि मुमुक्षुः सर्वत्रानभिस्नेहो भवेत्, शुभं प्राप्य न प्रशंसेत्, अशुभं प्राप्य न निन्देदित्यभिप्रायः। अत्र च निन्दाप्रशंसादिरूपा वाचो न प्रभाषत इति व्यतिरेकः।

अथ मूलकाराः प्रकृतमुदाहृतं गीतावाक्यं व्याकुर्वन्तः प्रथमं स्नेहपदार्थं विवृण्वन्ति **यस्मिन्नि**त्यादिना—

**यस्मिन्सत्यन्यदीये हानिवृद्धी[1] स्वस्मिन्नारोप्येते तादृशोऽन्यविषयस्तामसवृत्तिविशेषः स्नेहः। सुखहेतुर्यः स्वकलत्रा[2]दिः शुभ[3](मः।) तद्गुणकथनादिप्रवर्तिका धीवृत्तिरभिनन्दः। अत्र गुणकथनस्य परप्ररोचनार्थत्वाभावेन व्यर्थत्वात्तद्धेतुरभिनन्दस्तामसः। असूयोत्पादनेन दुःखहेतुः परकीयविद्यादिरेनं प्रत्यशुभो विषयः। तन्निन्दाप्रवर्तिका धीवृत्तिर्द्वेषः। सोऽपि तामसः। तन्निन्दाया निवारणार्थत्वाभावेन व्यर्थत्वात्। त एते तामसा धर्माः कथं विवेकिनि संभवेयुः।**

**यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः।**
**इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता॥**

**व्युत्थितस्य समस्ततामसवृत्त्यभावः पूर्वश्लोकाभ्यामभिहितः। समाहितस्य तु न वृत्तय एव सन्ति। कुतस्तामसत्वशङ्केत्यभिप्रायः।**

---

१ क. ख. ग. घ. ङ. च. °हेतुः स्व°। २ छ. °त्रादिशु°। ३ क. ख. ग. घ. ङ. च. भवस्तु गु°।

विषया विनिवर्तन्ते निराहारस्य देहिनः ।
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥

प्रारब्धकर्म सुखदुःखहेतून्कांश्चिद्विषयांश्चन्द्रोदयान्धकारादिरूपान्स्वयमेव संपादयति । अन्यांस्तु गृहक्षेत्रादीन्पुरुषोद्योगद्वारेण । तत्र चन्द्रोदयादयः पूर्वेणेन्द्रियादिसंहारलक्षणेन समाधिनैव निवर्तन्ते नान्यथा । गृहादयस्तु समाधिमन्तरेणापि निवर्तन्ते । आहरणमाहार उद्योगः । निरुद्योगस्य गृहादिविषया निवर्तन्ते । रसस्तु न निवर्तते । रसो मानसी तृष्णा । साऽपि परमानन्दरूपस्य परस्य ब्रह्मणो दर्शने सति स्वल्पानन्दहेतुभ्यो निवर्तते । 'किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोकः' इति श्रुतेः ।

एवं शुभपदार्थमपि व्युत्पादयन्ति—**सुखे**त्यादिना । तद्वदाभिनन्दपदवाच्यमपि विवेचयति—**तद्गुणकथनादी**ति । एतस्य वक्ष्यमाणतामसत्त्वे हेतुं प्रथयति—**अत्रे**त्यादिना । एवमशुभपदार्थमपि प्रकृतोपयुक्तं कथयति—**असूये**त्यादिना । ततः किं तत्राऽऽह—**तन्नि**न्देत्यादिना । एवं द्वेषं व्युत्पाद्य तस्य तामसत्वं विधत्ते—**सोऽपी**ति । तत्र हेतुमाह—**तन्निन्दाया** इतिप्रभृतिना । फलितं कथयन्नुपसंहरति—**त एत**इत्यादिना । न हि श्रुतियुक्त्यनुभूतिशतैरन्वयव्यतिरेकतः सकलसाध्यसाधनविवेकशरदर्कसमुदये सति भ्रमतमः संभवतीति भावः । इदानीमुक्तानुवादपूर्वकं यदा संहरत इत्यादिश्लोकतात्पर्यमाह—**व्युत्थितस्ये**त्यादिनेत्य**भिप्राय** इत्यन्तेन । ननु रोगिणः काष्ठतपस्विनो वा विषयनिवृत्तिर्मूढस्यापि दृश्यते कथमसौ प्रकृतजीवन्मुक्तलक्षणमित्याशङ्क्य प्रवृत्तस्य विषया विनिवर्तन्त इत्यादिपद्यस्य स्वारस्यं विशदयति—**प्रारब्धे**त्यादिना । यद्यप्येते सर्वसाधारणाः [परमे]श्वरकृतत्वादथापि तत्र तत्तज्जीवानां सुखादिहेतुत्वाभिमान[जनकेन्द्रिय]संनिकर्षतस्तत्तत्प्रारब्धकृतमिति बोध्यम् । अथासाधारणान्विषयान्विशदयति—**अन्यांस्त्वि**त्यादिना । किं ततस्तदाह—**तत्रे**त्यादिना । पूर्वेण, यदा संहरते चायमित्यत्रोक्तेन । एवकारव्यावर्त्यं द्योतयंस्तन्निराचष्टे—**नान्यथे**ति । अन्यथा कर्मादिव्यापारेण । असाधारणविषयनिवृत्तौ विशेषमाह—**गृहादयस्त्वि**त्यादिना । कथमिति चेत्तत्राऽऽह—**आहरणमि**त्यादिना । ततः सम्यगेवेत्यत आह—**रसस्त्वि**ति । तं लक्षयति—**रस इ**ति । स्वामिकाविद्यापरिणामरूपेष्टविषयविशेषविषयकाभिलाषलक्षणतृष्णादिवारणाय—**मानसी**ति । एवं तर्हि कथमसौ रसो निवर्तेतेत्यत आह—**साऽपी**त्यादिना । तत्र श्रुतिं प्रमाणयति—**किमि**त्यादिना ।

यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः ।
इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥

तत्र प्रज्ञास्थैर्ये बाह्येन्द्रियनिग्रहो मनोनाशश्चासाधारणं कारणं तदुभयाभावे प्रज्ञानाशदर्शनादिति वक्तुं बाह्येन्द्रियनिग्रहाभावे प्रथमं दोषमाह—

**यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः।**
**इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः॥**
**तानि सर्वाणि संयम्य युक्त आसीत मत्परः।**
**वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता॥**

**उद्योगत्यागब्रह्मदर्शनप्रयत्नं कुर्वतोऽपि कादाचित्कप्रमादपरिहाराय समाध्यभ्यासः। तदेतत्किमासीतेतिप्रश्नोत्तरम्।**

हे कौन्तेय। यततः, भूयो भूयो विषयदोषदर्शनात्मकं यत्नं कुर्वतोऽपि। चक्षिङो ङित्वकरणादनुदात्तेतोऽनावश्यकमात्मनेपदमिति ज्ञापनात्परस्मैपदमविरुद्धम्। विपश्चितः, अत्यन्तविवेकिनोऽपि पुरुषस्य मनः क्षणमात्रं निर्विकारं कृतमपीन्द्रियाणि हरन्ति विकारं प्रापयन्ति। ननु विरोधिनि विवेके सति कुतो विकारप्राप्तिस्तत्राऽऽह—**प्रमाथीनि।** प्रमथनशीलान्यतिबलीयस्त्वाद्विवेकोपमर्दनक्षमाणि। अतः प्रसभं प्रसह्य बलात्कारेण पश्यत्येव विपश्चिति स्वामिनि विवेके च रक्षके सति सर्वप्रमाथित्वादेवेन्द्रियाणि विवेकलक्षणप्रज्ञायां प्रविष्टं मनस्ततः प्रच्याव्य स्वविषयाविष्टत्वेन हरन्तीत्यर्थः। हिशब्दः प्रसिद्धिं द्योतयति। प्रसिद्धो ह्ययमर्थो लोके। यथा प्रमाथिनो दस्यवः प्रसभमेव धनिनं धनरक्षकं चाभिभूय तयोः पश्यतोरेव धनं हरन्ति तथेन्द्रियाण्यपि विषयसंनिधाने मनो हरन्तीति। एवं तर्हि तत्र कः प्रतीकार इत्यत आह—तानीन्द्रियाणि सर्वाणि ज्ञानकर्मसाधनभूतानि संयम्य वशीकृत्य युक्तः समाहितो निगृहीतमनाः सन्नासीत निर्व्यापारस्तिष्ठेत्। प्रमाथिनां कथं स्ववशीकरणमिति चेत्तत्राऽऽह—**मत्पर** इति। अहं सर्वात्मा वासुदेव एव पर उत्कृष्ट उपादेयो यस्य स मत्परः। एकान्तमद्भक्त इत्यर्थः। तथा चोक्तम् ‘न वासुदेवभक्तानामशुभं विद्यते क्वचित्’। यथा हि लोके बलवन्तं राजानमाश्रित्य दस्यवो निगृह्यन्ते, राजाश्रितोऽयमिति ज्ञात्वा च ते स्वयमेव तद्वश्या भवन्ति तथैव भगवन्तं सर्वान्तर्यामिणमाश्रित्य तत्प्रभावेणैव दुष्टानीन्द्रियाणि निग्राह्याणि। पुनश्च भगवदाश्रितोऽयमिति मत्वा तानि तद्वश्यान्येव भवन्तीति भावः। यथा च भगवद्भक्तेर्महाप्रभावत्वं तथा विस्तरेणाग्रे व्याख्यास्यामः। इन्द्रियवशीकारे फलमाह—**वशे हीति।** स्पष्टम्। तदेतद्वशीकृतेन्द्रियः सन्नासीतेति किमासीतेति प्रश्नस्योत्तरमुक्तं भवति। समुदाहृतश्लोकद्वयतात्पर्यमाह—**उद्योगे**त्यादिना। उद्योगो व्यापारस्तत्त्यागपूर्वकं ब्रह्मदर्शने तदापरोक्ष्ये यः प्रयत्नो निदिध्यासनं तदित्यर्थः। अपिना तदभाववतः श्रवणमेव कुर्वाणस्य तदपेक्षा कैमुत्यं द्योत्यते। तत्प्रयोजनमाह—**कादाचित्केति। समाधीति।** भगवता विहित इति

शेषः । फलितमाह--**तदेतदित्यादि** । एवं च मुमुक्षुवन्मुक्तेनापि समाध्यभ्यासः कार्य इति ।

ननूक्तसमाध्यभ्यासाभावे किं स्यादित्याशङ्क्य जीवन्मुक्तिरूपपुरुषार्थायोग्यत्वलक्षणः प्रणाश एवेति वक्तुं भगवद्वाक्यद्वयमेवाऽऽचार्यः समुदाहरति—**ध्यायत** इत्यादिना—

**ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते ।**
**सङ्गात्संजायते कामः कामात्क्रोधोऽभिजायते ॥**
**क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः ।**
**स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥**

**असति समाध्यभ्यासे प्रमादप्रकार उपन्यस्तः । सङ्गो ध्येयविषयसंनिधिः, संमोहो विवेकपराङ्मुखत्वम्, स्मृतिविभ्रमस्तत्त्वानुसंधानाभावः । बुद्धिनाशो विपरीतभावनोपचयदोषेण प्रतिबद्धस्य ज्ञानस्य मोक्षप्रदत्वसामर्थ्याभावः ।**

तदिदं संक्षेपतो विवृणोत्यसतीत्यादिना । **उपेति** । प्रकृतश्लोकद्वयेन भगवतेति शेषः । तत्र सङ्गपदार्थं कथयति—**सङ्ग** इत्यादिना । मानस इत्यार्थिकम् । एवं संमोहमप्याह—**संमोह** इत्यादिना । मनस इति शेषः । तद्वत्स्मृतिविभ्रममपि विशदयति—**स्मृती**त्यादिना । तथा बुद्धिनाशमपि प्रबोधयति—**बुद्धी**त्यादिना । इदं हि भगवतां सर्वज्ञात्ममुनीश्वराणां मतरीत्यैव । तत्र हि ब्रह्मचारिणः साङ्गस्वाध्यायाध्ययनं गुरुकुले कुर्वतः सद्य एव व्याकरणादिनाऽवगतापातिकपदतदर्थज्ञानवतः स्वशाखोक्तमहावाक्याद्ब्रह्मात्मैक्यविषयकमार्थिकद्वैतमिथ्यात्वफलकं तत्त्वज्ञानमपरोक्षप्रमारूपमेव जायते तथाऽपि तद्विषयवासनाप्रमाणासंभावनाप्रमेयासंभावनासाधनविपरीतभावनाफलविपरीतभावनाभिधपञ्चविधप्रतिबन्धैः प्रतिबद्धत्वेनाविद्याध्वस्तिलक्षणमुक्त्यपर्यवसाय्येव भवति । तेषां च प्रतिबन्धानां नित्यानित्यवस्तुविवेकादिसाधनेद्धमुमुक्षया शब्दपरोभयब्रह्मविदाचार्यचरणविचारितचतुर्लक्षण्या च क्रमाद्विध्वंसे सति निरुक्ताद्वैतात्मतत्त्वज्ञानमेव संस्कारात्मना चित्तस्थं सन्मण्याद्यपसरणे वह्निस्तृणदाहमिव मूलाज्ञानतद्व्याप्यतत्कार्यरूपनिखिलद्वैतबाधमद्धैव विधत्ते । ततः स्वप्रकाशाद्वैतात्मानन्दलक्षणा मुक्तिः स्वतःसिद्धैवेति प्रक्रिया स्थिता । तदुक्तं तदीय एव संक्षेपशारीरके—

पुरुषापराधमलिना धिषणा निरवद्यचक्षुरुदयाऽपि यथा ।
न फलाय भर्जुविषया भवति श्रुतिसंभवाऽपि तु तथाऽऽत्मनि धीः ॥
पुरुषापराधविगमे तु पुनः प्रतिबन्धकव्युदसनात्सफला ।
मणिमन्त्रयोरपगमे तु यथा सति पावकाद्भवति धूमलता । इति ॥

विस्तरस्तु तत्र तट्टीकायां माधुसूदन्यामेव च द्रष्टव्यः। एवं चात्र निदिध्यासनाभिधसमाध्यभ्यासविरहे सति मोक्षसाधनं कर्माद्येव सोऽपि सन्विषयसुखविशेष एव सकलदुःखानास्कन्दित इति साधनफलयोर्विपरीतभावनाया उपचयः पुष्टिस्तल्लक्षणेन दोषेणेत्यर्थः। अत्र मधुसूदनाचार्यैस्तु बुद्धिनाश एवं व्याख्यातः—बुद्धेरैकात्म्याकारमनोवृत्तेर्नाशो विपरीतभावनोपचयदोषेण प्रतिबन्धादनुत्पत्तिरुत्पन्नायाश्च फलायोग्यत्वेन विलय इति। इदं तु विवरणमतरीत्यैवेति दिक्। विस्तरेण चैतदग्रे जीवन्मुक्तिप्रयोजनप्रकरणे ज्ञानरक्षानिरूपणे प्रदर्शयिष्याम इतीहोपरम्यते। मूलकारैर्हि वार्तिकविवरणसारौ कुर्वाद्भिरिह वक्ष्ये विविदिषान्यासमित्याद्युपक्रम्य वार्तिकमतरीत्या भाविदेहाभावलक्षणविदेहमुक्तेर्ज्ञानसमकालायाः कारणत्वं विविदिषासंन्यास एवोक्तम्। विवरणमतरीत्या तु यौगिकपञ्चम्यादित्रिभूमिकात्मकजीवद्विदेहकैवल्यात्मकजीवन्मुक्तेः कारणत्वं विद्वत्संन्यास एवोक्तं प्रारब्धक्षयसमकालान्तावृत्ताद्वयमितेरेव ससंस्कारसर्वद्वैतबाधकत्वस्य तन्मतेष्टत्वादिति तत्त्वम्।

ननु भवत्येवं समाध्यभ्यासाभावे परमानर्थस्तथाऽपि यावत्समाधिसत्त्वं तावत्कालं द्वैतानुभवदुःखाभावेऽपि प्रारब्धफलोपभोगार्थं व्युत्थानावश्यंभावेन पुनस्तद्दशायां दुःखतादवस्थ्यमेवेत्याशङ्क्याग्रिमश्लोकं संगृह्णाति—

**रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन्।**
**आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥**

**विधेयात्मत्वं वशीकृतमनस्त्वं, प्रसादो नैर्मल्यं बन्धराहित्यम्। समाध्यभ्यासयुक्तस्तद्वासनाबलाद्व्युत्थानदशायामिन्द्रियैर्व्यवहरन्नपि प्रसादं सम्यक्प्राप्नोति। तदेतत्किं व्रजेतेतिप्रश्नस्योत्तरम्। उपरितनेनापि बहुना ग्रन्थेन स्थितप्रज्ञः प्रपञ्चितः। ननु प्रज्ञायाः स्थित्युत्पत्तिभ्यां प्रागपि साधनत्वेन रागद्वेषादिराहित्यमपेक्षितम्। बाढम्। तथाऽप्यस्ति विशेषः। स च श्रेयोमार्गकारैर्दर्शितः—**

**विद्यास्थितये प्राग्ये साधनभूताः प्रयत्ननिष्पाद्याः।**
**लक्षणभूतास्तु पुनः स्वभावतस्ते स्थिताः स्थितप्रज्ञे ॥**
**जीवन्मुक्तिमितीमां वदन्त्यवस्थां स्थितात्मसंबोधाम्।**
**बाधितभेदप्रतिभामबाधितात्मावबोधसामर्थ्यात्। इति ॥**

**रागेति।** समाध्यभ्यासबलेन व्युत्थानदशायामपीन्द्रियाणि तस्यार्धसुप्तप्रबुद्धबालवदिष्टानिष्टविषयेषु रागद्वेषशून्यतयैव व्यवहरन्तीत्याशयेन तद्गतविधेयात्मपदं विशदयत्यभिम-

---

१ क. ख. ग. ङ. च. °क्तिरिती°। २ क. ख. ग. घ. ङ. च. °संबन्धा°।

तार्थकथनेन—**विधेयेति**। एवं प्रसादपदार्थं कथयति—**प्रसाद** इत्यादिना । अप्रतिबद्धाद्वैतब्रह्मात्मैक्यविषयकबोधेनेत्यार्थिकम्। फलितमाह—**समाध्यभ्यासे**तिप्रभृतिना। अथैतस्य प्राक्तनप्रश्नसंगतिमाह—**तदेतदि**त्यादिना । एवं यावदध्यायसमाप्त्यग्रिमग्रन्थस्यापि सारस्यं स्थितप्रज्ञप्रतिपादन एवेत्याह—**उपरी**त्यादिना। एवं भगवद्गीतागतस्थितप्रज्ञप्रकरणे समुपसंहृते सति तत्र स्थूणानिखननन्यायेन तद्दृढीकरणार्थं शङ्कते—**नन्वि**त्यादिना । तदङ्गी करोति—**बाढमिति** । तत्र विशेषमभिधत्ते—**तथाऽपी**त्यादिना। कोऽसौ विशेष इत्यपेक्षायां तत्र प्राचीनाचार्यवचनत एव स्पष्टीकरणं प्रतिजानीते—**स चे**त्यादिना। श्रेयोमार्गः 'मुक्तिः कैवल्यनिर्वाणश्रेयोनिःश्रेयसामृतम्' इत्यमरादन्वर्थनामा कश्चिन्मोक्षमार्गप्रतिपादको ग्रन्थस्तं कुर्वन्तीति ते तथा तैरित्यर्थः। आदरार्थं बहुवचनम्। तदुक्तार्याद्वयमप्युदाहरति—**विद्यास्थितय** इत्यादिना । विद्याया अद्वैतब्रह्मात्मैक्यविषयकापरोक्षप्रमाया या स्थितिः सततस्मृतिप्रयोजकसंस्कारात्मना मनस्यवस्थितिस्तस्या इत्यर्थः। ये नित्यानित्यवस्तुविवेकादयो मुमुक्षान्ता यावन्तो निवृत्तिधर्मा इत्यार्थिकम्। शिष्टं तु स्पष्टमेव।

एवमुद्दिष्टक्रमानुसारेण स्थितप्रज्ञनिरूपणानन्तरमवसरप्राप्तं भगवद्भक्तं निरूपयितुमुपक्रमते—

**भगवद्भक्तो द्वादशाध्याये भगवता वर्णितः—**

**अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च।**
**निर्ममो निरहंकारः समदुःखसुखः क्षमी ॥**
**संतुष्टः सततं योगी यतात्मा दृढनिश्चयः।**
**मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः ॥ [इति]।**

**ईश्वरार्पितमनस्त्वेन समाहितस्यान्यानुसंधानाभावात्, व्युत्थितस्याप्युदासीनानुसंधानेन हर्षविषादाभावाच्च सुखदुःखसाम्यम्। एवं वक्ष्यमाणेष्वपि द्वंद्वेषु द्रष्टव्यम्।**

**यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः।**
**हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥**
**अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः।**
**सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः ॥**
**यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति।**
**शुभाशुभपरित्यागी भक्तिमान्यः स मे प्रियः ॥**
**समः शत्रौ च मित्रे च तथा मानापमानयोः।**
**शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः ॥**

तुल्यनिन्दास्तुतिर्मौनी संतुष्टो येन केनचित्।
अनिकेतः स्थिरमतिर्भक्तिमान्मे प्रियो नरः॥ इति।

अत्रापि पूर्ववद्विशेषो वार्तिककारैर्दर्शितः—

उत्पन्नात्मप्रबोधस्य ह्यद्वेष्टृत्वादयो गुणाः।
अयत्नतो भवन्त्यस्य न तु साधनरूपिणः॥ इति।

गुणातीतश्चतुर्दशाध्याये वर्णितः—

अर्जुन उवाच—कैर्लिङ्गैस्त्रीन्गुणानेतानतीतो भवति प्रभो।
किमाचारः कथं चैतांस्त्रीन्गुणानतिवर्तते॥

त्रयो गुणाः सत्त्वरजस्तमांसि तेषां परिणामविशेषात्सर्वसंसारः प्रवर्तते। ततो गुणातीतत्वमसंसारित्वं, जीवन्मुक्तत्वमिति यावत्। लिङ्गानि परेषामेतदीयगुणातीतत्वबोधकानि। आचारस्तदीयमनःसंचारप्रकारः[1]। कथमिति साधनप्रश्नः[2]।

**भगवद्भक्त इति**। भगवद्गीताया एवेति शेषः। तत्रत्यं श्लोकयुग्मं संगृह्णाति—**अद्वेष्टेत्यादि**। तत्तात्पर्यमाह—**ईश्वरार्पित**त्यादिना। अद्वैतं ब्रह्मैवाज्ञानोपहितचैतन्यलक्षणजीवदृष्ट्याऽस्तीश्वर इतिपक्षाभिप्रायेणैवेदम्। तत्रैकशरीरैकजीववादाभिधदृष्टिसृष्टेरेव संमतत्वेन तद्दशायां तदेकोपयोगात् ‘ दृष्टिसृष्टिमिमां ब्रह्मानुभवी बहु मन्यते ’ इत्यनुभूतिप्रकाशे मूलकारैरेव तथैवोक्तत्वाच्च। उक्ततात्पर्यसूचनप्रकारमन्यत्राप्यतिदिशति—**एवमिति**। अत्र सर्वत्र पदव्याख्यानं तु माधुसूदन्यां गूढार्थदीपिकायामेव द्रष्टव्यम्। अथ निरुक्तातिदेशस्थलादिश्लोकानपि समुदाहरति—**यस्मादि**त्यादिना। ‘ कोपक्रोधामर्षरोषप्रतिघाः ’ इति ‘ सद्मनिकेतनम् ’ इति चामरः। इहापि प्राग्वदेव जिज्ञासुजीवन्मुक्तयोः साधनलक्षणभेदेन व्यवस्था श्रीमद्वार्तिककृदुक्ताऽस्तीत्याह—**अत्रापीति**। तत्र नैष्कर्म्यसिद्धिस्थं तद्वाक्यमेव पठति—**उत्पन्नेति**। अथोक्तक्रमागतं गुणातीतं प्रस्तौति—**गुणातीत इति**। भगवद्गीताया इत्यार्थिकम्। तत्राऽऽदावर्जुनप्रश्नमाह—**अर्जुन उवाचे**त्यादिना। तं संक्षेपतो व्याचष्टे—**त्रय** इत्यादिना। तत्र लिङ्गाद्यर्थं कथयति—**लिङ्गानी**त्यादिना।

नन्वेवमर्जुनप्रश्नेऽपि प्रश्नस्यास्य रहस्यविषयकत्वात्किं भगवांस्तूष्णीमेवाऽऽसेत्यत आह—

श्रीभगवानुवाच—प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव।
न द्वेष्टि संप्रवृत्तानि न निवृत्तानि काङ्क्षति॥

---

१ क. ख. ङ. च. °र आचरणं तदी°। २ क. ख. ङ. °प्रकारप्रश्नः।

उदासीनवदासीनो गुणैर्यो न विचाल्यते ।
गुणा वर्तन्त इत्येव योऽवतिष्ठति नेङ्गते ॥
समदुःखसुखः स्वस्थः समलोष्टाश्मकाञ्चनः ।
तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ॥
मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ।
सर्वारम्भपरित्यागी गुणातीतः स उच्यते ॥
मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।
स गुणान्समतीत्यैतान्ब्रह्मभूयाय कल्पते ॥

प्रकाशप्रवृत्तिमोहाः सत्त्वरजस्तमोगुणाः । ते च जाग्रत्स्वप्नयोः प्रवर्तन्ते । सुषुप्तिसमाधिशून्य[1]वृत्तित्वावस्थासु निवर्तन्ते । प्रवृत्तिश्च द्विविधा-अनुकूला प्रतिकूला चेति । तत्र मूढो जागरणे प्रतिकूलप्रवृत्तिं द्वेष्टि । अनुकूलप्रवृत्तिं काङ्क्षति । गुणातीतस्य त्वनुकूलप्रतिकूलाध्यासाभावाद्द्वेषाकाङ्क्षे न स्तः । यथा द्वयोः कलहं कुर्वतोरवलोकयिता कश्चित्तटस्थः स्वयं केवलमुदास्ते न तु जयपराजयाभ्यामितस्ततश्चाल्यते तथा गुणातीतो विवेकी स्वयमुदास्ते । गुणा गुणेषु वर्तन्ते न त्वहमिति विवेकादौदासीन्यम् । अहमेव करोमीत्यध्[2]यासो विचलनम् । न चास्य तदस्ति । तदिदं किमाचार इति प्रश्नस्योत्तरम् । समदुःखसुखादीनि लिङ्गानि, अव्यभिचारिभक्तिसहितज्ञानध्यानाभ्यासेन परमात्मसेवेति गुणात्ययसाध[3]नंप्रश्नस्योत्तरम् ।

**श्रीति** । किमुवाचेत्यपेक्षायां तद्वाक्यान्येव संलिखति—**प्रकाशं चे**त्यादिना । तानि संक्षेपतो विवृणोति—**प्रकाशे**त्यादिना । **शून्येति** । शून्यवृत्तिरौदासीन्यम् । मूर्छामरणादीनां निद्रायामेवान्तर्भावः । तत्र प्रवृत्तिं भिनत्ति—**प्रवृत्तिश्चेति** । मूढः, अविचारवान् । एवमनुकूलाद्यध्यासाभावादनुकूलप्रवृत्त्यादौ रागाद्यभावे दृष्टान्तं स्पष्टयति—**यथे**त्यादिना । दार्ष्टान्तिके योजयति—**तथे**त्यादिना । औदासीन्ये हेतुमाह—**गुणा** इत्यादिना । गुणाः, वादिप्रतिवादिनोरिव परस्परविरोधिनोऽन्तःकरणादिवृत्तित्वेन परिणताः सत्त्वादिगुणा इत्यर्थः । गुणेषु स्वोपमर्द्योक्तगुणेषु । वर्तन्ते, उपमर्दकत्वेन तिष्ठन्तीति यावत् । अथ विचलनमपि गुणैर्यो न विचाल्यत इतिवाक्यगं व्याचष्टे—**अहमेवे**त्यादिना । फलितमाह—**तदिदमिति** । अथ पृष्टानि लिङ्गशब्दितासाधारणधर्मरूपलक्षणानि संक्षिपति—**समे**त्यादिना ।

१ क. ख. ग. घ. ङ. च. °न्यचित्तवृ° । २ क. ख. ङ. °ध्यासश्चातत्त्वम् । ३ क. ज. ग. व. ङ. च. °नम् ।

आदिना स्वस्थपदेष्टाद्वैतात्मानुसंधानशालित्वादि। एवं चरमश्लोकस्यापि रहस्यभूतं गुणात्यय-साधनं ध्वनयति—**अव्यभिचारी**त्यादिना। स एवाहमित्यनुसंधानाभिधनिदिध्यासनवि-शिष्टाप्रतिबद्धात्मसाक्षात्कारपूर्वकजीवन्मुक्तिसुखैकफलकतदेकाकारवृत्तिसातत्यसंपादनेनेत्यर्थः। शिष्टस्तु स्पष्ट एवात्रत्यसमूलसर्वपदत इत्यर्थः। **परेति**। इयमैक्याद्वैणी सेवाऽपि गुणाति-क्रमणकरणमस्तीत्यध्याहारः। अत एव—**इतीति**।

अथोद्देशक्रमप्राप्तं तं लिलक्षयिषुराचार्यः कैः कुत्र वा स वर्णित इत्यपेक्षायामाह **ब्राह्मण** इत्यादिना—

**ब्राह्मणो व्यासादिभिर्वर्णितः—**

**अनुत्तरीयवसनमनुपस्तीर्य[1]शायिनम्।**
**बाहूपधायिनं शान्तं तं देवा ब्राह्मणं विदुः॥**

**ब्राह्मणशब्दो ब्रह्मविद्वाची 'अथ ब्राह्मणः' इतिश्रुत्या वर्णितः। ब्रह्म-विदश्च विद्वत्संन्यासाधिकारात्। 'यथाजातरूपधरो नाऽऽच्छादनं चरति परमहंसः' इत्यादिश्रुत्या परिग्रहराहित्यस्य मुख्यत्वाभिधानाद-नुत्तरीयत्वादिकं तस्य युक्तम्।**

आदिः श्रुत्यादिः। मोक्षधर्मादाविति शेषः। तद्वाक्यमेवाऽऽह—**अनुत्तरीयेति**। बाहूपधायिनं, बाहुमेवोप भूमौ निद्राकालावच्छेदेन शिरोधःप्रदेशलक्षणेऽतिसमीपदेशे दधाति स्थापयति तच्छीलस्तमित्यर्थः। शिष्टं तु स्पष्टमेव। उक्तवाक्यतात्पर्यमाह—**ब्राह्मण-शब्द** इत्यादिना। किमत्र मानमित्यतस्तद्दिशंस्तं विशिनष्टि—**अथे**त्यादिना। बृहदारण्यके हि काण्वैः समाम्नायत एवम्। एतस्याऽऽदिपूरणम्—'पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्पा-ण्डित्यं च बाल्यं च निर्विद्याथ मुनिरमौनं च मौनं च निर्विद्य' इति। अस्यार्थस्तु मूलकृद्भिरे-वानुभूतिप्रकाशे प्रदर्शितः—

पाण्डित्यबाल्यमौनानि श्रवणादीनि तैरयम्।
भवति ब्राह्मणस्तत्र ब्राह्मण्यं ब्रह्मरूपता॥ इत्यादिना।

ततः किं तदाह—**ब्रह्मविदश्चे**त्यादिना। चोऽवधारणे। नन्वेवमप्यनुत्तरीयत्वादिके प्रकृते किमागतमित्यत आह—**यथे**त्यादिसप्रमाणोपन्यासम्। नन्वेतावताऽपि किं तत्राऽऽ-ह—**परिग्रहे**त्यादिना। एवं च यतो ब्रह्मविद एव विद्वत्संन्यासाधिकारोऽतः पाण्डित्यादि-पदवाच्यश्रवणादित्रयोर्ध्वसंजाततत्त्वसाक्षात्कारेण कृतविद्वत्संन्यासत्वाद्ब्राह्मणपदवाच्यत्वं तस्य,

---

१ क. ख. ग. ङ. च. 'स्तीर्णशा°'।

अनुत्तरीयत्वादिकं तु तस्य यथाजातेत्यारम्य मुख्यत्वाभिधानाद्धेतोर्युक्तमिति संबन्धः । अनुत्तरीयत्वादिकमित्यत्राऽऽदिपदेनानुपस्तीर्यशायित्वादिकं ग्राह्यम् । एवं यथाजातरूपेत्यादिश्रुत्यर्थस्त्वन्ते परमहंसोपनिषव्द्याख्याने यद्यपि मूलकारैरेव स्पष्टीकृतोऽस्त्यथापि सुखावबोधार्थं मया दिङ्मात्रेण प्रकाश्यते—यथाजातस्य मातुः शरीराद्विनिष्क्रान्तस्यान्यूनानतिरिक्तावयवात्मकस्यैव रूपस्याऽऽकारस्य धरो धारक इत्यर्थः । एतेन दिगम्बरत्वं विधिमुखेनैव श्रुत्याऽस्य संदर्शितम् । एवं निषेधमुखेनापि तस्य तद्दर्शयितुं नाऽऽच्छादनमित्यादिश्रुतिः स्फुटतरैव । अत्राप्यादिपदादुक्तार्थोपपादकस्तत्रत्यवाक्यशेष एव ग्राह्यः । तद्वद्यथाजातरूपेत्यत्र जान्मिकशरीरेतराशिखासूत्राम्बरादिधारणस्यैव व्युदासः । न तु तात्कालिकसूक्ष्मावयवेतरस्थूलावयवानामसावसंभवादिति भावः । एतेन दण्डमन्तरा वसनग्राहिणां गौणमपि न पारमहंस्यं किंतु ध्यानमात्रनिष्ठयथाजातरूपधरत्व(त्वं)तन्मुख्यं दण्डकन्थादिमत्त्वेन तद्गौणमेवेति फलितम् ।

ननु भवत्वेवं परमहंसस्याऽऽशावसनत्वमथापि व्युत्थितस्य तस्य शीतादिवारणं कथं स्यात्कथं वा निष्परिग्रहस्य पात्राभावेऽशनपानादिव्यवहारः,स्थानावलम्बाभावे शयनादिव्यवस्थेत्याशङ्कां शमयंस्तत्रत्यमेव श्लोकान्तरं समुदाहरति—

येन केनचिदाच्छन्नो येन केनचिदाशितः ।
यत्र क्वचनशायी स्यात्तं देवा ब्राह्मणं विदुः ॥

देहनिर्वाहायाशनाच्छादनशयनस्थानापेक्षायामप्यशनादिगतौ गुणदोषौ नान्विष्येते[1] । उदरपूरणपुष्ट्यादिरूपस्य निर्वाहस्य समत्वान्निष्प्रयोजनस्य गुणदोषविचारस्य चित्तदोषत्वात् । अत एव भागवते पठ्यते—

किं वर्णितेन बहुना लक्षणं गुणदोषयोः ।
गुणदोषदृशिर्दोषो गुणस्तुभयवर्जितः ॥ इति ।
कन्थाकौपीनवासास्तु दण्डधृग्ध्यानतत्परः ।
एकाकी रमते नित्यं तं देवा ब्राह्मणं विदुः ॥

ब्रह्मोपदेशादिना प्राण्यनुजिघृक्षायामुत्तमत्वज्ञापनेन[2] श्रद्धामुत्पादयितुं दण्डकौपीनादिलिङ्गं धारयेत् । 'कौपीनं दण्डमाच्छादनं च स्वशरीरोपभोगार्थाय लोकस्योपकारार्थाय च परिग्रहेत्' इति श्रुतेः । अनुजिघृक्षयाऽपि तदीयां[3] स्वयं गृहकृत्यादिवार्तां न कुर्यात्किंतु ध्यानपरो भवेत् । 'तमेवैकं[4] जानथाऽऽत्मानमन्या वाचो विमुञ्चथ' इति श्रुतेः ।

---

१ ङ. च. नोत्पद्येते । २ क. °घृक्षयोत्त° । ३ क. ख. ग. ङ. च. °दीयगृ° । ४ क. ख. ग. घ. च. कं विजान° ।

तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ।
नानुध्यायाद्बहूञ्शब्दान्वाचो विग्लापनं हि तत् ॥ '

इति श्रुतेश्च ।

ब्रह्मोपदेशस्त्वन्या वाङ्न भवतीति न ध्यानविरोधी । तच्च ध्यानमेकाकित्वे निर्विघ्नं संभवति । अत एव स्मृत्यन्तरेऽभिहितम्—

एको भिक्षुर्यथोक्तः स्याद्द्वावेव मिथुनं स्मृतम् ।
त्रयो ग्रामः समाख्यात ऊर्ध्वं तु नगरायते ॥
नगरं न हि कर्तव्यं ग्रामो वा मिथुनं तथा[1] ।
राजादिवार्ता तेषां स्याद्भिक्षावार्ता परस्परम् ॥ इति ।

**येन केनचिदिति** । तत्तात्पर्यमाह—**देहे**त्यादिना । अशनादिगतगुणाद्यनन्वेषणे हेतुमाह—**उद**रेत्यादिना । अर्धसुप्तप्रबुद्धबालस्याशनादिगतगुणदोषावनन्वेषयतोऽपि यादृश्युदरपूर्तिशरीरपुष्टिशीताद्यपाक्ृतिनिद्रासंपत्तिर्भवति तादृश्येवाशनवसनशयनस्थानेषु गुणादि(द्य) विवेचयतः पुरुषस्यासौ संपद्यत इति देहनिर्वाहसाम्यादित्यर्थः । ततः किं तदाह—**निष्प्रयोजनस्ये**त्यादिना । तत्र भागवतमपि प्रमाणयति—**अत एवेति** । तत्पद्यमेव संलिखति—**किं वर्णितेनेति** । एवं मुख्यपरमहंसाख्यब्राह्मणं व्युत्थितं संलक्ष्य गौणं तं लक्षयितुं तद्ग्रन्थस्थमेव श्लोकान्तरं पठति—**कन्थेति** । तं संक्षेपतो व्याचष्टे—**ब्रह्मोपदेशे**त्यादिना । **कौपीनादीति** । कूपपतनं नरकनिपतनं येन जीवोऽर्हति तत्कौपीनं पापं तत्साधनाच्छिश्नं तदेकाच्छादकं वस्त्रमपि कौपीनम् । आदिना कन्थादिकमाच्छादनमित्यर्थः । तत्र श्रुतिं प्रमाणयति—**कौपीनमित्यादि** । नन्वेवं लोकानुग्रहेच्छायां सत्यां तत्सङ्गेनातिप्रसङ्गस्तत्राऽऽह—**अनुजिघृक्षयाऽपीत्यादिना** । ननु कुत इदमत आह—**तमेवे**त्यादिना । ननु ब्रह्मोपदेशकरणप्रवृत्तौ कथं ध्यानं तत्राऽऽह—**ब्रह्मोपदेशस्त्विति** । तुशब्दोऽत्राऽऽशङ्काशान्त्यै । नन्वेवं तर्ह्यन्यस्य जिज्ञासोर्यत्यादेः सङ्गः स्यात्तत्राऽऽह—**तच्चे**त्यादिना । स्पष्टमेवापरम् ।

अथैतेन विद्वत्संन्यासिना प्रणमद्भ्यो मनुष्येभ्यस्तावदाशीर्वादोऽपि यदा विशेषतो नैव प्रदातव्यस्तदा व्यापारान्तरस्य कैव कथेत्याशयेन तद्ग्रन्थस्थमेव श्लोकान्तरं संगृह्णाति—

निराशिषमनारम्भं निर्नमस्कारमस्तुतिम् ।
अक्षीणं क्षीणकर्माणं तं देवा ब्राह्मणं विदुः ॥

---

१ क. ख. ङ. च. °था ग्रामवार्ता हि ते° ।

**विशिष्टैः संसारिभिः प्रणमतां पुरुषाणामाशीर्वादः प्रयुज्यते । यस्य यदपेक्षितं तं प्रति तदभिवृद्धिप्रार्थनमाशीः । तथा च पुरुषाणां भिन्नरुचित्वात्तदभिमतान्वेषणे व्यग्रचित्तस्य लोकवासना वर्धते । सा च ज्ञानविरोधिनी । तथा च स्मृत्यन्तरे—**

**लोकवासनया जन्तोः शास्त्रवासनयाऽपि च ।**
**देहवासनया ज्ञानं यथावन्नैव जायते ॥**

**एतच्चाऽऽरम्भनमस्कारादिष्वपि द्रष्टव्यम् । आरम्भः स्वार्थं परोपकारार्थं वा गृहक्षेत्रादिसंपादनप्रयत्नः । तावेतावाशीर्वादारम्भौ मुक्तेन त्याज्यौ । न चाऽऽशीर्वादाभावे प्रणमतां नृणां खेदः शङ्कनीयः । लोकवासनाखेदयोरुभयोः परिहाराय निखिलाशीर्वादप्रतिनिधित्वेन नारायणशब्दप्रयोगात् । आरम्भस्तु सर्वोऽपि दुष्ट एव । तथा च स्मृतिः—**

**सर्वारम्भा हि दोषेण धूमेनाग्निरिवाऽऽवृताः ॥ इति ।**

**निराशिषमिति** । तं व्याकरोति—**विशिष्टैः संसारिभिरि**त्यादिना । लोके हि विशिष्टैर्विद्यातपोवयोधिकत्वादिनेति शेषः । एतादृशैः संसारिभिरज्ञैर्द्विजैरित्यार्थिकम् । तत्राऽऽशिषं लक्षयति—**यस्ये**त्यादिना । तं प्रतीति द्वितीयाऽत्रावच्छेदार्थिकैव । यथा स्वभार्यां प्रति सुपुत्रप्रार्थनमीश्वरचरणसरोजं प्रति चरति चैत्र इति प्रयोगे तद्वदत्रापि । एवं चेहेश्वरं प्रतीत्यर्थसमाजागतमेव । तथा च तदवच्छेदेनेश्वरं प्रति तदभिवृद्धिप्रार्थनमिति पर्यवसितम् । ननु भवत्वेवं लोकव्यवहारस्तथाऽपि किं प्रकृत इत्याशङ्क्य फलितमाह-**तथा** चेत्यादिना । उपलक्षणमिदं स्त्र्यादेरपि । तत्रेष्टापत्तिं प्रत्याह—**सा चेति** । नन्विदं लोकवासनाशब्दितगुणदोषप्रमादिसंस्कारसंतत्यां यदुक्तं ज्ञानेन सह विरोधित्वं तत्किं तदुत्पत्तिप्रतिबन्धकत्वं मथनजन्यवह्न्युत्पत्तावरणीमन्थकाष्ठनिष्ठार्द्रत्ववदुत तत्फलप्रतिबन्धकत्वं समुत्पन्नेऽपि वह्नौ कदाचिन्मण्यादिप्रतिबन्धकसंनिधानेन तस्य ततो दाहप्रतिबन्धकत्ववत् । नाऽऽद्यः । प्रकृतस्य ब्राह्मणपदेष्टस्य विद्वत्संन्यासिनः प्रागेव ज्ञानोत्पत्तेः । नान्त्यः । निरुक्तविरोधित्वापेक्षे प्रकृतप्रमाणत्वेनोदाहरिष्यमाणस्मृतिवाक्ये ज्ञानं यथावन्नैव जायत इति निरुक्तवासनया ज्ञानीयोत्पत्तिप्रतिबन्धस्यैव कण्ठत एवोक्तत्वेन फलप्रतिबन्धे प्रमाणाभावात् । तस्मात्कथमियं सा चेत्यादिप्रतिज्ञेति चेन्न । स्मृतेरुक्तोभयप्रतिबन्धकत्वपरत्वस्यापि संभवात् । तथा हि यथाश्रुते तावद्यथावच्छब्देनाप्रतिबद्धापरोक्षज्ञानग्रहात्तदुत्पत्तिप्रतिबन्धकत्वं जीवन्मुक्त्याख्यफलपर्यन्तत्वग्रहाच्च तत्फलप्रतिबन्धकत्वमपि संभवतीति । एवं च यथा विविदि-

---

१ घ. संन्यासिभिः । २ ब. °र्वादो न प्र° । ३ ग. घ. च. °णतानां नृ° ।

षोर्लोकवासनादिरासुरसंपज्ज्ञानोत्पत्तिप्रतिबन्धिका तथा विदुषस्तत्संस्काररूपाऽसौ तदीयफलीभूतसततात्द्वैतात्मतत्त्वानुसंधानलक्षणजीवन्मुक्तिप्रतिबन्धिकेति संक्षेपः । ननु लोकवासनाया ज्ञानोत्पत्तितत्फलोभयविरोधित्वे किं मानमित्यत आह—**तथा चेत्यादि** । अभिहितमिति शेषः । तदेव स्मृत्यन्तरं पठति—**लोकवासनयेत्यादि** । लोकवासनादिसंस्कारजनकत्वेन जीवन्मुक्ते ब्राह्मणाख्ये प्रतिपादितं प्रणमदुद्देशेनाऽऽशीर्वादप्रयोक्तृत्वाभावमन्येषामप्यारम्भाद्यभावानामुपलक्षकतयाऽभिधत्ते—**एतच्चे**त्यादिना । तत्राऽऽदावारम्भपदविवक्षितार्थं संक्षिपति—**आरम्भ** इत्यादिना । फलितमाह—**तावता**वित्यादिना । मुक्तेन जीवन्मुक्तेन । अथोक्ताशीर्वादप्रदानाभावे संन्याससर्वस्वीभूताहिंसाभङ्गप्रसङ्गमाशङ्क्य शमयति—**न चे**त्यादिना **प्रयोगा**दित्यन्तेन । **नारायणेति** । जीवन्मुक्तविद्वत्संन्यासिक्तादित्यार्थिकम् । आशीर्वादस्य ब्राह्मणे प्रकृते ह्यभावं प्रागारम्भादिष्वतिदिष्टं प्रपञ्चयितुमारम्भस्य सर्वस्यापि दौष्ट्यं प्रतिजानीते—**आरम्भास्त्वि**त्यादिना । तत्र मानं प्रतिजानीते—**तथा चेति** । तामेव पठति—**सर्वे**त्यर्धेन ।

एवं निर्नमस्कारपदं व्याकर्तुं नमस्कारनिषेधस्य प्राप्तिपूर्वकं वाच्यत्वात्तत्प्राप्तिमादौ विविदिषासंन्यासिनि दर्शयति—

**नमस्कारोऽपि विविदिषासंन्यासिनोऽभिहितः—**

**यो भवेत्पूर्वसंन्यासी तुल्यो वै धर्मतो यदि ।**
**तस्मै प्रणामः कर्तव्यो नेतराय कदाचन । इति ॥**

**तत्र पूर्वत्वधर्मतुल्यत्वविचारे चित्तं विक्षिप्यते । अत एव नमस्कारमात्रे बहवः कलहायमाना उपलभ्यन्ते । तत्र निमित्तं वार्तिककारैर्दर्शितम्—**

**प्रमादिनो बहिश्चित्ताः पिशुनाः कलहोत्सुकाः ।**
**संन्यासिनोऽपि दृश्यन्ते दैवसंदूषिताशयाः । इति ॥**

**मुक्तस्य नमस्काराभावो भगवत्पादैर्दर्शितः—**

**नामादिभ्यः परे भूम्नि स्वाराज्ये चेत्स्थितोऽद्वये ।**
**प्रणमेत्कं तदाऽऽत्मज्ञो न कार्यं कर्मणा तदा । इति ॥**

**चित्तकालुष्यहेतोर्नमस्कारस्य प्रतिषेधेऽपि सर्वसाम्यबुद्ध्या प्रसादहेतुर्नमस्कारोऽभ्युपेयते ।**

**नमस्कारोऽपीति** । अपिना संन्यासित्वावच्छेदकावच्छेदेन सर्वथा तत्प्राप्त्यभावव्युदासः सूच्यते । तदभिधायकवाक्यमेव पठति—**यो भवेदिति** । ननु किं तावता

१ क. ख. ङ. °ज्येऽवास्थितो यदा ।

कार्य एव विविदिषासंन्यासिना नमस्कारः पूर्वसंन्यासिने धर्मतस्तुल्यायेत्यत आह—**तत्रे**त्यादिना । तदीयविचारे चित्तविक्षेपजनकत्वे मानापेक्षायां तदाह—**अत एवे**त्यादिना । यतो विविदिषासंन्यासिनामपि पूर्वत्वादिविचारे चित्तविक्षेपजनकत्वमत एवेत्यर्थः । ननु किमत्र निमित्तमित्यपेक्षायां विचारविरह एवेति श्रीमद्विर्वार्तिककारचरणैरेव दर्शितमित्याह—**तत्रे**त्यादिना । तत्र तद्वार्तिकमेव पठति—**प्रमादिन इति ।** प्रमादे हेतुः—**बहिरिति ।** तत्र हेतुः—**पिशुना इति ।** तत्रापि हेतुः—**कलहेति ।** अपिना तदन्येषु तत्कैमुत्यं द्योत्यते । तत्रापि हेतुः—**दैवेति ।** दैवं दिष्टमित्यमरादिष्टदुष्टचित्ता इत्यर्थः । नन्वेवमपि किं प्रकृते जीवन्मुक्ते विद्वत्संन्यासिनि ब्राह्मण इत्यत आह—**मुक्तस्ये**त्यादिना । **भगवदिति ।** भगवन्तौ षड्गुणैश्वर्यशालिनौ पादौ येषां ते तथा । यद्वा भगवन्तः षड्गुणैश्वर्यशालिनो विष्णुविध्याद्यवताराः पद्मपादसुरेश्वराचार्यादयोऽन्तेवासिनः पादयोर्नित्यं नमनाद्यर्थं येषां ते तथा तैः श्रीमद्भाष्यकारैरित्यर्थः । तत्र तद्वाक्यमपि पठति—**नामादिभ्य इति ।** आदिना रूपं कर्म चेत्यर्थः । परे, अधिष्ठानत्वात्तदसंबद्ध इत्यर्थः । अत एव भूम्नि, अपरिच्छिन्ने । अत एव स्वाराज्ये, स्वप्रकाशसुखरूपे । अत एवाद्वये, ब्रह्मणि । स्थितस्तदेकतया वर्तमानो यदि चरमप्रमया स्याच्चेत्तदा जीवन्मुक्त्यवस्थायामात्मज्ञो ब्रह्मनिष्ठः कं प्रणमेत्पारमार्थिकस्य द्वितीयस्यैवाभावात्कंचिदपि नैव नमस्कुर्यादित्यर्थः । ननु व्युत्थानदशायां व्यावहारिकस्य प्रातिभासिकस्य वा द्वितीयस्य सत्त्वमस्तीत्यत्राऽऽह—**ने**त्यादिना । फलितमाह—**चित्ते**त्यादिना ।

ननु निराशिषमनारम्भं निर्नमस्कारमित्यादिप्रकृतोदाहृतव्याख्येयवाक्यविरुद्धमेवेदं जीवन्मुक्तस्यापि सर्वसाम्यबुद्ध्याऽपि नमस्काराङ्गीकरणमित्याशङ्क्य तत्र स्मृतिमेव प्रमाणयति—

**तथा च स्मृतिः—ईश्वरो जीवकलया प्रविष्टो भगवानिति ।**
**प्रणमेद्दण्डवद्भूमावाश्वचाण्डालगोखरम् । इति ॥**

**स्तुतिर्मनुष्यविषया प्रतिषिध्यते न त्वीश्वरविषया । तथा च[1] स्मृतिः—**

**आदरेण यथा स्तौति धनवन्तं धनेच्छया ।**
**तथा चेद्विश्वकर्तारं को न मुच्येत बन्धनात् ॥**

**अक्षीणत्वमदीनत्वम् । अत एव स्मृतिः—**

**अलब्ध्वा न विषादी स्यात्काले यद्यशनं क्वचित् ।**
**लब्ध्वा न हृष्येद्धृतिमानुभयं दैवतन्त्रितम् । इति ॥**

**क्षीणकर्मत्वं विधिनिषेधा[2]तीतत्वम् । ‘ निस्त्रैगुण्ये पथि विचरतां को विधिः को निषेधः ’ इति स्मरणात् । एतदेवाभिप्रेत्य भगवताऽप्युक्तम्—**

---

१ क. ख. ग. घ. ङ. च. च बृहस्पतिस्मृ° । २ ४ क. ख. ङ. °धानधीनत्व° ।

**त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन।**
**निर्द्वंद्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान्॥**

**नारदोऽपि—स्मर्तव्यः सततं विष्णुर्विस्मर्तव्यो न जातुचित्।**
**सर्वे विधिनिषेधाः स्युरेतयोरेव किंकराः। इति॥**

**तथाचेति**। तामेव पठति—**ईश्वर इति**। **आश्वेति**। मर्यादार्थकोऽयमाङ्। आङ्मर्यादाभिविध्योरिति स्मरणात्। तथा च पूर्वार्धोक्तनिमित्तादेव श्वादिखरपर्यन्तानपि जीवाञ्जीवन्मुक्तो भूमावपि दण्डवदपि प्रणमेदेवेत्यन्वयः। एवं चोक्तविक्षेपहेतुकनमस्कार-निषेधपरो निर्नमस्कारमिति निषेधः, प्रकृतविधिस्तु परमेश्वरबुद्धिकृतनमस्कारपर इति न कोऽपि विरोध इति भावः। अथास्तुतिमिति पदं विवरितुं तत्रापि निरुक्तव्यवस्थामेव कथयति—**स्तुतिर्मनुष्ये**त्यादिना। तत्रापि मानापेक्षायां प्राग्वत्स्मृतिमेव प्रमाणयति—**तथा चेति**। तामेवाऽऽह—**आदरेणेति**। अथाक्षीणमिति विवृणोति—**अक्षीण-त्वमिति**। दीनत्वाप्तिसंभूतिपूर्वकं तन्निषेधाद्यपि स्मृत्यैव प्रतिजानीते—**अत एवे**-त्यादिना। अक्षीणपदार्थीभूतादीनत्वस्य विवक्षितत्वादेवेत्यर्थः। तामेव स्मृतिमाह—**अलब्ध्वेति**। काले मध्याह्नकाले। क्वचित्, विप्रगृहे कस्मिंश्चिद्दिवसे वा। एवं क्षीण-कर्माणमित्यपि विवृणोति—**क्षीणेति**। तत्र मानमाह—**निस्त्रैगुण्य** इत्यादिना। इदं हि शुकाष्टकवाक्यम्। विवृतं चेदं रामानन्दैरित्युपरम्यते। अत्र भगवदुक्तिमपि प्रमाणयति—**त्रैगुण्येति**। एवमत्रापि माधुसूदन्येवानुसंधेया। अनतिप्रयोजकत्वाद्विस्तरभयाच्च नेह संगृह्यते। एवं विष्णुपुराणस्थं नारदवाक्यमपीह संवादयति—**नारदोऽपी**त्यादिना। वेवेष्टि दृश्यं व्याप्नोतीति विष्णुर्दृक्।

नन्वेवं ब्राह्मणशब्दवाच्यजीवन्मुक्तस्य विधिनिषेधातीतत्वेनान्तरात्मस्मृतिशालित्वेऽपि बहि-र्यथेष्टचेष्टापत्तिमपाकर्तुं[1] तद्ग्रन्थस्थमेव ब्राह्मणलक्षणश्लोकान्तरं संगृह्णाति—

**अहेरिव गणाद्भीतः सन्माना[2]न्मरणादिव।**
**कुणपादिव यः स्त्रीभ्यस्तं देवा ब्राह्मणं विदुः॥**

**राजादिवार्ता तेषां स्यादित्युक्तत्वात्सर्पवद्गणाद्भीतिरुपपद्यते। सन्मा-नस्याऽऽसक्तिकारणतया पुरुषार्थविरो[3]धितया मरणवद्धेयत्वम्[4]। नरका दिवेति पाठः। अत एव स्मृतिः—**

**असन्मानात्तपोवृद्धिः सन्मानात्तु तपःक्षयः।**
**अर्चितः पूजितो विप्रोऽदुग्धा गौरिव सीदति॥**

---

१ क. ख. ग. घ. ङ. च. 'ति योऽहे°'। २ क. ख. ग. घ. ङ. च. '°नान्नरकादि°'। ३ क. ख. ग. घ. ङ. च. 'धित्वान्नरकवद्धे°'। ४ क. ख. ङ. °म्। मरणवदिति वा पाठः। ५ घ. घ. च. गच्छाति।

**एतदेवाभिप्रेत्यावमानं आदेयतया[1] स्मर्यते—**

**तथा चरेत वै योगी सतां धर्ममनुस्मरन्[2] ।**
**जना यथाऽवमन्येरन्गच्छेयुर्नैव संगतिम्[3] ॥ इति ।**

**स्त्रीषु द्विविधो दोषः, प्रतिषिद्धत्वं जुगुप्सितत्वं चेति । तत्र प्रतिषिद्धत्वमात्रं कदाचिद्रागात्प्रारब्धबलादुल्लङ्घ्यते । तदभिप्रेत्याऽऽह स्मृतिः—**

**मात्रा स्वस्रा दुहित्रा वा[4] न विविक्तासनो भवेत् ।**
**बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ॥**

**तथा च स्मृतिभिर्जुगुप्सा वर्णिता—**

**स्त्रीणामवाच्यदेशस्य क्लिन्ननाडीव्रणस्य च ।**
**अभेदेऽपि मनोभेदाज्जनः प्रायेण वञ्च्यते ॥**
**चर्मखण्डं द्विधा भिन्नमपानोद्गारधूपितम् ।**
**ये रमन्ति नरास्तेभ्यः साहसं किमतः परम् ॥ इति ।**

**' ये रमन्ति नरास्तत्र क्रिमितुल्याः कथं न ते ' इति वा पाठः । अतः प्रतिषेधजुगुप्सयोरुभयोर्विवक्षया कुणपदृष्टान्तोऽत्राभिहितः ।**

**येन पूर्णमिवाऽऽकाशं भवत्येकेन सर्वदा ।**
**शून्यं यस्य जनाकीर्णं तं देवा ब्राह्मणं विदुः ॥**

**संसारिणामेकाकित्वेनावस्थानं भयालस्यादिहेतुत्वाद्वर्ज्यम् । जनसमूहस्त्वतथाविधत्वादभ्युपेयः । योगिनस्तु तद्विपरीतत्वम् । एकाकित्वे सत्यविघ्नेन ध्यानानुवृत्तौ परिपूर्णेन परमानन्दात्मना सर्वमाकाशं पूर्णमिवावभासते । अतो भयालस्यशोकमोहादयो न भवन्ति ।**

**अहेरिवेति** । एतत्तात्पर्यमाह—**राजादिवार्ते**त्यादिना । तत्र स्मृतिमपि प्रमाणयति—**अत एवेति** । तामेव पठति—**असन्मानादिति** । अदुग्धेति च्छेदः । सा यथा लोके शास्त्रे च निन्द्यैव तथाऽयमपीति भावः । अत एवोक्तविद्वानवमानमेव यत्नेनोपादद्यादित्यत्रापि स्मृतिं प्रतिजानीते—**एतदेवे**त्यादिना । तामेवाऽऽह—**तथा चरेते**त्यादिना । अथ स्त्रीदोषं विवृणोति—**स्त्रीष्वि**त्यादिना । तद्वैद्विध्यं विशदयति—**प्रतिषिद्धत्वमि**त्यादिना । तत्राऽऽद्यहेयत्वे स्मृतिमभिधातुमाह—**तत्रे**त्यादिना । तामेव

१ क. ख. ग. घ. ङ. च. °न उपादे° । २ क. ख. ङ. °मदूषयन् । ३ घ. ङ. °गतम् । ४ क. ख. ङ. वा नैकशय्यास° । ५ क. ख. ङ. °न संबन्धश्चात° । ग. घ. °न संबन्धस्त्व° । च. °नसंमर्दस्त्व° ।

पठति—**मात्रेति** । विविक्तविजनेत्यमरः । एवमेवान्यमपि प्रपञ्चयति—**तथा चे**त्यादिना । ताः स्मृतीरेवाऽऽह—**स्त्रीणामि**त्यादिना । बहुवचनं मूलेऽत्रोपलक्षणविधयैव फलितमाह—**अत इति** । लक्षणान्तरमप्यस्य—**येनेति** । तद्विवृणोति—**संसारिणामि**त्यादिना ।

नन्वेकान्ते जीवन्मुक्तस्य भयालस्यादयः कुतो न भवन्तीत्यत्र श्रुत्यैव हेतुं प्रतिबोधयति—

**यस्मिन्सर्वाणि भूतानि आत्मैवाभूद्विजानतः ।**
**तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥ इति श्रुतेः ।**

**जनाकीर्ण[1]स्थानं राजवार्तादिना ध्यानविरोधित्वादानन्दात्मप्रतीतिरहितं तच्छून्यमिव चित्तं क्लेशयति । जगतो मिथ्यात्वादात्मनः पूर्णत्वाच्चेत्यर्थः । अतिवर्णाश्रमी सूतसंहितायां मुक्तिखण्डे पञ्चमाध्याये विष्णुं प्रति परमेश्वरेण वर्णितः—**

**ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च भिक्षुकः ।**
**अतिवर्णाश्रमी तेऽपि क्रमाच्छ्रेष्ठा विचक्षणाः ॥**
**अतिवर्णाश्रमी प्रोक्तो गुरुः सर्वाधिकारिणाम् ।**
**न कस्यापि भवेच्छिष्यो यथाऽहं पुरुषोत्तमः[2] ॥**
**अतिवर्णाश्रमी साक्षाद्गुरूणां गुरुरुच्यते ।**
**तत्समो नाधिकश्चास्मिँल्लोकेऽस्त्येव न संशयः ॥**
**यः शरीरेन्द्रियादिभ्यो विभिन्नं सर्वसाक्षिणम् ।**
**पारमार्थिकविज्ञानं सुखात्मानं स्वयंप्रभम्[3] ॥**
**परं तत्त्वं विजानाति सोऽतिवर्णाश्रमी भवेत् ।**
**यो वेदान्तमहावाक्यश्रवणेनैव केशव ॥**
**आत्मानमीश्वरं वेद सोऽतिवर्णाश्रमी भवेत् ।**
**यो[4] वर्णाश्रमनिर्मुक्तमवस्थात्रयसाक्षिणम् ।**
**महादेवं विजानाति सोऽतिवर्णाश्रमी भवेत् ॥**
**वर्णाश्रमादयो देहे मायया परिकल्पिताः ॥**
**नाऽऽत्मनो बोधरूपस्य मम ते सन्ति सर्वदा ।**
**इति यो वेद वेदान्तैः सोऽतिवर्णाश्रमी भवेत् ॥**

---

१ क. ख. ङ. °र्णमिति जनसहितं स्था° । २ क. घ. च. °त्तम । अ° । ३ क. घ. °प्रभुम् । ४ क. ख. ग. ङ. च. योऽवस्थात्रयनिर्मुक्तमवस्थासाक्षिणं सदा । म° ।

आदित्यसंनिधौ लोकश्चेष्टते स्वयमेव तु ।
तथा मत्संनिधानेन[1] समस्तं चेष्टते जगत् ॥
इति यो वेद वेदान्तैः सोऽतिवर्णाश्रमी भवेत् ।
सुवर्णे हारकेयूरकटकस्वस्तिकादयः ॥
कल्पिता मायया तद्वज्जगन्मय्येव सर्वदा ।
इति यो वेद वेदान्तैः सोऽतिवर्णाश्रमी भवेत् ॥
शुक्तिकायां यथा तारं कल्पितं मायया तथा ।
महदादि जगन्मायामयं मय्येव कल्पितम् ॥
इति यो वेद वेदान्तैः सोऽतिवर्णाश्रमी भवेत् ।
चाण्डालदेहे पश्वादिशरीरे ब्रह्मविग्रहे ॥
अन्येषु तारतम्येन स्थितेषु पुरुषोत्तम ।
व्योमवत्सर्वदा व्याप्तः सर्वसंबन्धवर्जितः ॥
एकरूपो महादेवः स्थितः सोऽहं परामृतः ।
इति यो वेद वेदान्तैः सोऽतिवर्णाश्रमी भवेत् ॥
विनष्टदिग्भ्रमस्यापि यथा पूर्वा विभाति दिक् ।
तथा विज्ञानविध्वस्तं जगन्मे भाति तन्न हि ॥
इति यो वेद वेदान्तैः सोऽतिवर्णाश्रमी भवेत् ।
यथा स्वप्नप्रपञ्चोऽयं मयि मायाविजृम्भितः ।
तथा जाग्रत्प्रपञ्चोऽपि मयि मायाविजृम्भितः ॥
इति यो वेद वेदान्तैः सोऽतिवर्णाश्रमी भवेत् ।
यस्य वर्णाश्रमाचारो गलितः स्वात्मदर्शनात् ॥
स वर्णानाश्रमान्सर्वानतीत्य स्वात्मनि स्थितः ।
यस्त्यक्त्वा स्वाश्रमान्वर्णानात्मन्येव स्थितः पुमान् ॥
सोऽतिवर्णाश्रमी प्रोक्तः सर्ववेदान्तवेदिभिः ।
न देहो नेन्द्रियं प्राणो न मनोबुद्ध्यहंकृती ॥
न चित्तं नैव माया वै न च व्योमादिकं जगत् ।
न कर्ता न च भोक्ता च न च भोजयिता तथा ॥
केवलं चित्सदानन्दो ब्रह्मैवाऽऽत्मा यथार्थतः ।
जलस्य चलनादेव चञ्चलत्वं यथा रवेः ॥

---

१ क. ख. ग. घ. ङ. च. °धाव्वेव स° ।

तथाऽहंकारसंसर्गादेव[1] संसार आत्मनः ।
तस्मादन्यगता वर्णा आश्रमा अपि केशव ॥
आत्मन्यारोपिता एव भ्रान्त्या तेनाऽऽत्मवेदिनाम् ।
न विधिर्न निषेधश्च न वर्ज्यावर्ज्यकल्पना ॥
आत्मविज्ञानिनां[2] नास्ति तथा चान्यज्जनार्दन ।
स्वात्मविज्ञानिनां निष्ठामीदृशीमम्बुजेक्षण ॥
मायया मोहिता मर्त्या नैव जानन्ति सर्वदा ।
न मांसचक्षुषा निष्ठा ब्रह्मविज्ञानिनामियम् ॥
द्रष्टुं शक्या स्वतःसिद्धा विदुषां सैव केशव ।
यत्र सुप्ता जना नित्यं प्रबुद्धस्तत्र संयमी ॥
प्रबुद्धा यत्र ते विद्वान्सुषुप्तस्तत्र केशव ।
एवमात्मानमद्वंद्वं[3] निराकारं निरञ्जनम् ॥
नित्यशुद्धं निराभासं सच्चिन्मात्रं परामृतम् ।
यो विजानाति वेदान्तैः स्वानुभूत्या च निश्चितम् ॥
सोऽतिवर्णाश्रमी प्रोक्तः स एव गुरुत्तमः । इति ॥

**यस्मिन्निति** । जीवन्मुक्त्यवस्थाविशेष इत्यर्थः । विजानतः, विद्वत्संन्यासिनो जीवन्मुक्तस्य । सर्वाणि संपूर्णानि । भूतानि भवनधर्माणि स्वसत्तैकायत्तसत्ताकान्यखिलदृश्यानीति यावत् । यश्चोरः स स्थाणुरेवेतिन्यायेन बाधायां सामानाधिकरण्यादात्मैवाभूदद्वैतं ब्रह्मैवाऽऽसीदिति संबन्धः । अनुपश्यतः, अपरोक्षानुभवोत्तरमनुसंदधत इत्यर्थः । शिष्टं तु स्पष्टमेव । एवं शून्यं यस्य जनाकीर्णमिति यथाश्रुतं व्याख्याय व्यत्ययेनापि व्याकरोति—**जनाकीर्ण**मित्यादिना । तत्र हेतू आह—**जगत** इत्यादिना । अत्रायं प्रयोगः—जनाकीर्णस्थलं हेयं चित्तक्लेशदत्वाद्व्यतिरेके ब्रह्मवत् । एवं च जनाकीर्णस्थानस्य ज्ञानिदुःखदत्वमेवेति भावः । अथोद्देशक्रमप्राप्तातिवर्णाश्रमिणमाह—**अतीत्यादि** । तद्ग्रन्थमेवात्र संग्रथ्नाति—**ब्रह्मचारी**त्यादिना । सकलोऽप्ययं ग्रन्थः सरल एवेति नैव व्याख्यायत इति दिक् ।

एवं स्थितप्रज्ञभगवद्भक्तगुणातीतब्राह्मणातिवर्णाश्रम्यभिधानैर्भगवद्गीतादिस्मृतिवाक्यानि लक्षणप्रकरणे चतुर्थे प्राग्वासिष्ठवाक्यैर्लक्षितस्य जीवन्मुक्ताख्यधर्मिणो जीवन्मुक्त्यवस्थायां प्रमाणान्युपन्यस्याथ जीवन्मुक्तिप्रमाणप्रतिपादनं यथोद्दिष्टक्रमं विगमयति **तदेव**मित्यादिना—

**तदेवं 'विमुक्तश्च विमुच्यते' इत्यादिश्रुतयो जीवन्मुक्तस्थितप्रज्ञभ-**

---

१ क. ख. ग. ङ. च. °संसारादे° । २ क. ख. ङ. °निनामस्ति तथा नान्यज्जनार्दन । आत्मविज्ञानिनां निष्ठामहं वेदाम्बु° । ३ क. ख. ग. ङ. निर्विका° ।

**गवद्भक्तगुणातीतब्राह्मणातिवर्णाश्रमिप्रतिपादकस्मृतिवाक्यानि च जीवन्मुक्तिसद्भावे प्रमाणानीति स्थितम् ।**

**इति जीवन्मुक्तिप्रमाणप्रकरणम् ।**

श्रुतिवाक्यमिदं त्ववस्तादेव मूलकारैरेव विवृतम्, एवं स्मृतिवाक्यान्यप्यातिवर्णाश्रमीतरसंज्ञकविद्वत्संन्यासिचर्याप्रतिबोधकानि । तदत्रोपन्यासक्रमसा(स्वा)रस्यादतिवर्णाश्रमिवाक्यान्येवान्ते संगृहीतानीति तत्रैवाऽऽचार्यस्य तात्पर्यपर्यवसानं प्रतीयते । तत्र च तैः परमसारल्येन निगदव्याख्यातत्वं सुमन्वानैर्व्याख्यानमपि किमपि नैवालेखि यद्यप्यथापि वक्ष्यमाणे षष्ठे वासनाक्षयप्रकरणे स्वतात्पर्यस्याऽऽचार्यैः कण्ठत एव सोपन्यासाक्षेपं—तर्ह्याभासत्वानुसंधानानुवृत्तौ न कोऽपि बाध इतिचेच्चिरं जीवतु भवानियमेवास्मदभिमता जीवन्मुक्तिरित्युक्तत्वात्तस्य च दृढतरविचारैकसाध्यत्वात्तन्मात्रस्योक्तातिवर्णाश्रमिवाक्येष्वेव सत्त्वाज्जीवन्मुक्तादिब्राह्मणान्तवाक्येषु तु त्यागयोगयोरपि भूरितरं विराजमानत्वाच्च । तस्मान्नैव बम्भ्रमितव्यमस्मिन्कलिकालेऽद्याल्पायुषामल्पसत्त्वानां कदाऽपि शीतोष्णाद्यसहिष्णूनां च कथमियं जीवन्मुक्तिः सिध्येदिति शिवम् ।

इति जीवन्मुक्तिप्रमाणोल्लासः पञ्चमः संपूर्णः ।

---

**अथ द्वितीयं वासनाक्षयप्रकरणम् ।**

एवं प्रमाणविषयकप्रश्नोत्तरं सविस्तरं तत्प्रतिपादनेनाभिधायेदानीं जीवन्मुक्तेरेव साधनविषयकस्य तृतीयप्रश्नस्योत्तरमभिधास्यन्नादौ वासनाक्षयाख्यप्रथमतत्साधननिरुरूपयिषया भगवानाचार्यः प्रतिजानीतेऽथेत्यादिना—

**अथ जीवन्मुक्तिसाधनं निरूपयामः । तत्त्वज्ञानमनोनाशवासनाक्षयास्तत्साधनम् । अत एव वासिष्ठरामायणस्यावसाने[1] ‘ जीवन्मुक्तशरीराणाम् ’ एतस्मिन्प्रस्तावे वसिष्ठ आह—**

**वासनाक्षयविज्ञानमनोनाशा महामते ।**
**समकालं चिराभ्यस्ता भवन्ति फलदा[2]यिनः । इति ॥**

**अन्वयमुक्त्वा व्यतिरेकमाह—**

**त्रय एते समं यावन्न स्वभ्यस्ता मुहुर्मुहुः ।**
**तावन्न पदसंप्राप्तिर्भविष्यति समाशतैः । इति ॥**

**समकालाभ्यासाभावे बाधकमाह—**

**एकैकशो निषेव्यन्ते यद्येते चि[3]रयत्नतः ।**
**तन्न सिद्धिं प्रयच्छन्ति मन्त्राः संकलिता इव । इति ॥**

---

१ क. ङ. °ण उपशमप्रकरणस्या° । २ क. ख. ङ. °द्रा इमे । इ° । ३ क. ख. ग. ङ. °रमभ्यस्य° ।

यथा संध्यावन्दनमार्जने सहविनियुक्तानामापो हि ष्ठेत्यादीनां तिसृणामृचां मध्ये प्रतिदिनमेकैकस्या ऋचः पाठे शास्त्रीयानुष्ठानं न सिध्यति । यथा वा षडङ्गमन्त्राणामेकैकमन्त्रेण न सिद्धिः । यथा वा लोके शाकसूपौदनादीनामेकैकेन न भोजनसिद्धिस्तद्वत् । चिराभ्यासस्य प्रयोजनमाह—

त्रिभिरेतैश्चिराभ्यस्तैर्हृदयग्रन्थयो दृढाः ।
निःशङ्कमेव त्रुट्यन्ति बिसच्छेदाद्गुणा इव । इति ॥

तदभिधत्ते—**तत्त्वज्ञाने**त्यादिना सामान्यतः समुचितमेव । अत्राग्नीषोमीयं पशुमालभेतेत्यत्र मिलितयोर्देवतात्ववत्तत्त्वज्ञानादीनां समुच्चय एव जीवन्मुक्तिसाधनं न तु प्रत्येकं तत्साधनमित्येकवचनप्रयोगादन्यथा तत्त्वज्ञानस्य जीवन्मुक्तेः प्रागेव विद्वत्संन्यासाधिकारिविशेषणत्वेन सिद्धतया तत्सिद्ध्यापत्तेर्वासनाक्षयादेरग्रे तत्साधनतया विधानानापत्तेश्चेत्याकूतम् । तत्र सप्रपञ्चं प्रमाणत्वेन श्रीवसिष्ठवचनमाह—**अत एवे**त्यादिना सहेत्यवतरणम् । एवमत्राऽऽर्षवाक्येऽपि समकालमित्युक्त्या तदेव विद्यते । तदेव व्यतिरेकमुखेणापि तत्रैवोक्तमित्याह—**अन्वयमि**त्यादिना । **समेति** । हायनोऽस्त्री शरत्समेत्यमरः । न केवलं जीवन्मुक्तिरूपपदाप्राप्तिरेव तत्त्वज्ञानादीनामसमाभ्यासे किंतु विक्षेपविशेषद्वारा तत्प्रतिबन्ध एवेत्यत्र तदीयवचनान्तरमप्यवतारयति—**समकाले**त्यादिना । तद्वाक्यं संगृह्णाति—**एकैकश इति** । तत्र चरमचरणोक्तं दृष्टान्तं स्पष्टयति—**यथेति**प्रभृतिना । एवं शुद्धवैदिकानां संमतेनोदाहरणेन दृष्टान्तं विस्पष्टीकृत्य वेदप्रधानं तन्त्रोपसर्जनरीत्या संध्याद्यनुष्ठातॄणामधिकाधिकारिणामभिमतेनोदाहरणान्तरेणापि निरुक्तदृष्टान्तं स्पष्टयति—**यथा वे**त्यादिना । षडङ्गमन्त्रास्त्वाश्वलायनीयगृह्यपरिशिष्टे गायत्र्याश्चतुरक्षरशो विभागेन हृदयाद्यङ्गन्यासमन्त्राः प्रसिद्धा एव । परं तु तत्र तेनैवाग्रे न्यासस्यास्य 'इममप्येके नेच्छन्ति स हि विधिरवैदिकः' इत्यवैदिकापराभिधतान्त्रिकत्वाभिधानान्मध्यमाधिकारिविषयत्वं ज्ञेयम् । प्रथमव्याख्याने ह्यस्वरसस्तु शुद्धवैदिकाधिकारिदौर्लभ्यमेव । एवमत्र समुच्चयानुष्ठानरचनदार्ढ्यार्थं लोकदृष्टान्तमपि स्पष्टयति—**यथा वा लोक** इत्यादिना । ननु भवत्वेवं तत्त्वज्ञानादित्रयस्य समुच्चय एवाभीष्टजीवन्मुक्तिसाधकत्वमथापि किमिति तस्य चिरकालापेक्षेत्याशङ्क्य तत्समाधातुं तद्वाक्यमेवावतार्य पठति—**चिरे**त्यादिना । गुणा बिसतन्तवः ।

ननु भवत्वेवं तत्त्वज्ञानमनोनाशवासनाक्षयाख्यजीवन्मुक्तिसाधनत्रयसमुच्चयस्यैव चिराभ्यासे फलावश्यंभावः । परं तु सूर्योदयतमश्चयात्ययन्यायेन सकृदपि तदनुष्ठानमस्त्विष्टपुष्टिकरमित्याशङ्क्य तव्द्यतिरेके फलव्यतिरेकविधायकं तद्वाक्यमेवावतार्योदाहरति **तस्यैवे**त्यादिना—

**तस्यैव व्यतिरेकमाह—**

जन्मान्तरशताभ्यस्ता राम संसारसंस्थितिः।
सा चिराभ्यासयोगेन विना न क्षीयते क्वचित् ॥ इति।

न केवलमेकैकाभ्यासे फलाभावः किंतु तत्स्वरूपमपि न सिध्यतीत्याह—

तत्त्वज्ञानं मनोनाशो वासनाक्षय एव च।
मिथः कारणतां गत्वा दुःसाध्यानि स्थितानि हि ॥ इति।

त्रयाणामेतेषां मध्ये द्वयोर्द्वयोर्मेलने त्रीणि द्वंद्वानि भवन्ति। तत्र मनोनाशवासनाक्षयद्वंद्वस्यान्योन्यकारणत्वं व्यतिरेकमुखेणाऽऽह—

यावद्विलीनं न मनो न तावद्वासनाक्षयः।
न क्षीणा वासना यावत्तावच्चित्तं न शाम्यति ॥

प्रदीपज्वालासंतानवद्वृत्तिसंतानरूपेण परिणममानमन्तःकरणद्रव्यं मननात्मकत्वान्मन इत्युच्यते। तस्य नाशो नाम वृत्तिरूपपरिणामं परित्यज्य निरुद्धत्वाकारेण परिणामः। तथा च पतञ्जलिर्योगशास्त्रे सूत्रयामास—'व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधक्षणचित्तान्वयो निरोधपरिणामः' इति। व्युत्थानसंस्कारा अभिभूयन्ते, निरोधसंस्काराः प्रादुर्भवन्ति, निरोधयुक्तः क्षणश्चित्तेनान्वीयते, सोऽयं मनोनाश इत्यवगन्तव्यम्। पूर्वापरपरामर्शमन्तरेण सहसोत्पद्यमानस्य क्रोधादिवृत्तिविशेषस्य हेतुश्चित्तगतसंस्कारो वासना। पूर्वपूर्वाभ्यासेन चित्ते वास्यमानत्वात्। तस्याश्च वासनायाः क्षयो नाम विवेकजन्यायां शान्त्यादि[1]वासनायां दृढायां सत्यपि बाह्यनिमित्ते क्रोधाद्यनुत्पत्तिः।

**जन्मान्तरेति**। अत्रोत्तरार्धे तच्छब्दानुरोधात्समानलिङ्गवचनो यच्छब्दोऽध्याहार्यः। ननु माऽस्तु ततः फलमथापि प्रत्येकमेकैकं त्ववश्यं सिध्येदिति चेन्नेत्याशयेन तत्पद्यमेवावतार्याऽऽह—**न केवलमि**त्यादिना। दुःसाध्यानि। एकैकत्वेनेति शेषः। तत्र हेतुं द्योतयति—**त्रयाणामि**त्यादिना। ततः किं तत्राऽऽह—**तत्रे**त्यादिना। तदेव पद्यं पठति—**यावदिति**। तत्रोपपत्तिमाह—**प्रदीपज्वाले**त्यादिना। एतेन मननात्मकत्वादिति हेतौ हेतुर्द्योतितः। फलितमाह—**तस्य नाशो नामेति**। एवमुद्दिष्टं मनोनाशं लक्षयति—**वृत्तिरूपे**त्यादिना। यथा सामुद्रं जलं मेघमुखनिविष्टं कदाचित्तच्छैत्यातिशयवशात्प्राक्तनं समुद्रस्थितिदशापन्नवातविशेषाद्युपाधिसिद्धलहर्यादिपरिणामं परित्यज्य करकाकारेण परममधुरिम्णा च परिणमते तद्वदिदं मनोऽपि वृत्तिसातत्यरूपं परिणामं पारि-

[1] क. ख. ग. ङ. च. °शान्तिदान्तिशुद्धवा°।

त्यज्य घनीभूतत्वाकारेण यदभ्यासादिना परिणमतेऽयमेव मनोनाश इत्याशयः। ननु किमत्र मानमित्यतस्तदाह—**तथा चे**त्यादिना। सूत्रेत्यादिनैव चारितार्थ्ये चरकसूत्रस्थान-व्यावृत्तये योगेत्यादि। तदेव सूत्रं लिखति--**व्युत्थानेत्यादि**। तत्तात्पर्यं प्रकृते योजयति—**व्युत्थाने**त्यादिना। तथा च श्रूयते—

'यथा निरिन्धनो वह्निः स्वयोनावुपशाम्यति।
तथा वृत्तिक्षयाच्चित्तं स्वयोनावुपशाम्यति' इति।

एवं वासनाक्षयमपि लक्षयति—**पूर्वापरे**त्यादिना तत्स्वरूपं निरूप्य। तत्र हेतुमाह—**पूर्वपूर्वाभ्यासेने**त्यादिना। शिष्टं तु स्पष्टतममेव।

एवं दुर्गन्धितस्य पटस्य यथा रजकद्वारकधावनेन नैर्मल्येऽपि मृगमदपटवासकादिसुरभिद्रव्यसंनिकर्षपूर्वकसुनिबन्धनाभ्यासतः सुरभीकरणे सर्वथा दुर्गन्धादिध्वंसः संपद्यत इति सुप्रसिद्धमेव तथा मनोऽप्यनादिसंसारदुर्वासनादूषितं सदनेकजन्मसंपादितसुकृतशुद्धं विचारवैराग्याद्यखिलनिवृत्तिसाधनैः सकलदुःसंस्कारविधुरं भवतीति सिद्धमथापि प्रकृते मनोनाशवासनाक्षययोर्द्वये परस्परसाहाय्ये किमायातमित्यतस्तद्विशदयति **तत्र मनोनाशे**त्यादिना—

**तत्र मनोनाशाभावे वृत्तिषूत्पद्यमानासु कदाचिद्बाह्यनिमित्तेन क्रोधाद्युत्पत्तेर्नास्ति वासनाक्षयः। अक्षीणायां तु वासनायां तथैव वृत्त्युत्पादनान्नास्ति मनोनाशः। तत्त्वज्ञानमनोनाशयोः परस्परकारणत्वं व्यतिरेकमुखेणाऽऽह—**

**यावन्न तत्त्वविज्ञानं तावच्चित्तशमः कुतः।**
**यावन्न चित्तोपशमो न तावत्तत्त्ववेदनम्॥ इति।**

**इदं सर्वमात्मैव प्रतीयमानं तु रूपरसादिकं जगन्मायामयं न त्वेतद्वस्तुतोऽस्तीति निश्चयस्तत्त्वज्ञानम्। तस्यानुत्पत्तौ रूपरसादिविषयाणां सद्भावे सति तद्गोचराश्चित्तवृत्तयो न निवारयितुं शक्यन्ते। यथा प्रक्षिप्यमाणेष्विन्धनादिषु वह्निज्वाला न निवार्यते तद्वदसति चित्तोपशमे वृत्तिभिर्गृह्यमाणेषु रूपादिषु 'नेह नानाऽस्ति किंचन' इतिश्रुतेर्यजमानः प्रस्तर इत्यादेरिव प्रत्यक्षविरोधशङ्कया ब्रह्माद्वितीयमित्येतादृशस्तत्त्वनिश्चयो नोदियात्। वासनाक्षयतत्त्वज्ञानयोः परस्परकारणत्वं व्यतिरेकमुखेणाऽऽह—**

**यावन्न वासनानाशस्तावत्तत्त्वागमः कुतः।**
**यावन्न तत्त्वसंप्राप्तिर्न तावद्वासनाक्षयः॥ इति।**

**क्रोधादिवासनास्वनष्टासु शमदमादिसाधनाभावान्न तत्त्वज्ञानमुदेति। अज्ञाते चाद्वितीयब्रह्मतत्त्वे क्रोधादिनिमित्तस्य सत्यत्वभ्रमस्यानपायान्न वासना क्षीयते।**

एवं मनोनाशवासनाक्षयात्मकप्रथमद्वंद्वे परस्परसापेक्षत्वं प्रकटीकृत्येदानीं तत्त्वज्ञानमनोनाशद्वंद्वेऽपि तद्दिदर्शयिषुस्तत्रापि व्यतिरेकतस्तत्प्रतिपादकं वासिष्ठवाक्यमेवावतारयति—**तत्त्वज्ञाने**त्यादिना। तदेवाऽऽह—**यावदिति।** तद्विवृण्वन्प्रथमं तत्त्वज्ञानस्य मनोनाशं प्रत्यपेक्षामाह—**इदं सर्वमि**त्यादिना। इदं, कूटस्थदृग्विषयतावच्छिन्नम्। सर्वं, यावद्द्वैतमित्यर्थः। आत्मैव, बाधासामानाधिकरण्यपक्षेण चोरोऽयं स्थाणुरेवेत्यादिवत्साक्षित्वोपलक्षितं ब्रह्मैवेति यावत्। ननु तर्हि प्रतीयमानस्यास्य नामरूपात्मकस्य जगतः कथमपलाप इत्यत्राऽऽह—**प्रतीयमानं** त्वित्यादिना। उपलक्षणमिदं शब्दादेरपि। मायां तु प्रकृतिं विद्यादितिश्रुतेर्मायिकत्वेनेन्द्रजालादिवन्मिथ्यैवेत्यर्थः। ननु भवत्वेतत्तत्त्वज्ञानं ततः किं तत्राऽऽह—**तस्ये**त्यादिना। सद्भावे सत्यत्वे सतीत्येतत्। तत्र दृष्टान्तं स्पष्टयति—**यथे**त्यादिना। आदिना घृतादि। दार्ष्टान्तिके योजयति—**तद्वदि**त्यादिना। ननु नेह नानाऽस्ति किंचनेति श्रुत्या बाधितमेव द्वैतमत आह—**नेह नानाऽस्ती**त्यादिना। प्रस्तरो दर्भमुष्टिः। एवं वासनाक्षयतत्त्वज्ञानयोरपि परस्परकारणत्वमपि प्राग्वदेव भगवता वसिष्ठेनैवोक्तमित्याह—**वासने**त्यादिना। तद्वाक्यमेवोदाहृत्य विवृणोति—**यावदि**त्यादिना।

नन्वस्त्वेवं व्यतिरेकमुखेण निरुक्तरूपाणां त्रयाणां द्वंद्वानामन्योन्यसापेक्षत्वमथापि व्यतिरेकस्याप्यन्वयपूर्वकतायाः प्रायो दृष्टत्वात्तेनापि तेषां तथात्वं तस्य वाच्यमेवेत्यपेक्षायां स्वयमेव तत्कथनं प्रतिजानीते **यथोक्तानामि**त्यादिना[1]—

**यथोक्तानां त्रयाणां द्वंद्वानामन्योन्यकारणत्वमन्वयमुखेन वयमुदाहरामः। मनसि नष्टे सति संस्कारोद्बोधकस्य बाह्यनिमित्तस्याप्रतीतौ वासना क्षीयते। क्षीणायां च वासनायां हेत्वभावेन क्रोधादिवृत्त्यनुदयान्मनो नश्यति। तदिदं मनोनाशवासनाक्षयद्वंद्वम्। 'दृश्यते त्वग्र्यया बुद्ध्या' इति श्रुतेरात्मैकयाभिमुखवृत्तेर्दर्शनहेतुत्वादितरकृत्स्नवृत्तिनाशस्य तत्त्वज्ञानहेतुत्वमवगम्यते। सति च तत्त्वज्ञाने मिथ्याभूते जगति नरविषाणादाविव धीवृत्त्यनुदयादात्मनश्च दृष्टत्वेन पुनर्वृत्त्यनुपयोगान्निरिन्धनाग्निवन्मनो नश्यति। तदिदं मनोनाशतत्त्वज्ञानयोर्द्वंद्वम्। तत्त्वज्ञानस्य क्रोधादिवासनाक्षयहेतुतां वार्तिककार आह—**

---

१ क. ख. ग. घ. ङ. च. °ना—तथो°।

**रिपौ बन्धौ स्वदेहे च समैकात्म्यं प्रपश्यतः ।**
**विवेकिनः कुतः कोपः स्वदेहावयवेष्विव ॥ इति ।**

**क्रोधादिवासनाक्षयरूपस्य शमादेर्ज्ञानहेतुत्वं प्रसिद्धम् । वसिष्ठोऽपि—**

**गुणाः शमादयो ज्ञानाच्छमादिभ्यस्तथा ज्ञता ।**
**परस्परं विवर्धेते द्वे पद्मसरसी इव ॥ इति ।**
**तदिदं वासनाक्षयतत्वज्ञानयोर्द्वंद्वम् ।**

तत्र मनोनाशवासनाक्षयद्वंद्वस्याऽऽदावन्योन्यसापेक्षत्वमन्वयमुखेन प्रदर्शयति—**मनसि नष्ट** इत्यादिना । निगमयति—**तदिदमि**त्यादिना । अन्योन्यसापेक्षमन्वयेनापि सिद्धमिति शेषः । एवं प्रथमद्वंद्वे मनोनाशवासनाक्षयप्रतियोगिकेऽन्वयेन परस्परसापेक्षत्वं प्रदर्श्याथ मनोनाशतत्वज्ञानप्रतियोगिकद्वंद्वेऽपि तद्दर्शयति—**दृश्यते त्वग्र्यये**त्यादिना । अग्र्यया ब्रह्मात्म्यैक्याकारत्वेन परमपूज्ययेत्यर्थः । तत्रापि मननादिकालिकस्थूलत्वव्यावृत्तये—**सूक्ष्मेति ।** एतेन निदिध्यासनं ध्वन्यते । एवं तत्त्वज्ञानस्यापि मनोनाशहेतुत्वमाह—**सति चे**त्यादिना। ननु भवत्वेवं तत्त्वज्ञानेन दृश्यस्य मिथ्यात्वान्नरविषाणवत्तद्विषयकवृत्त्यनुदयस्तथाऽपि जीवन्मुक्तिसुखार्थमात्माकारवृत्तिसातत्यमपेक्षितमेवेत्यत आह—**आत्मनश्चे**त्यादिना । एवमुपपादितं मनोनाशतत्त्वज्ञानप्रतियोगिकं द्वितीयद्वंद्वमुपसंहरति—**तदिदमिति ।** अत्रापि शेषपूरणं तु प्राग्वदेव । अथ वासनाक्षयतत्त्वज्ञानयोर्द्वंद्वे परस्परसापेक्षत्वं विवक्षुराचार्यस्तत्त्वज्ञाने वासनाक्षयकारणतायां श्रीमत्सुरेश्वराचार्यचरणसंमतिमावेदयति—**तत्त्वज्ञानस्ये**त्यादिना । तद्वार्तिकमेव संगृह्णाति—**रिपाविति । समेति** । निर्दोषं हि समं ब्रह्मेति स्मृतेः समं च तदैकात्म्यं चेति कर्मधारयविग्रहः । एवं वासनाक्षयस्यापि ज्ञानहेतुत्वं प्रसिध्द्याऽभिधत्ते—**क्रोधादी**त्यादिना । तत्र वासिष्ठवाक्यमपि सावतरणं संवादयति—**वसिष्ठोऽपी**त्यादिना । **पद्मेति ।** अत्र पद्मसरसोः शोभावृद्धिरेव परस्परायत्तत्वेनातिप्रसङ्गभङ्गार्थं यथा विवक्षिता तद्वच्छमादिगुणज्ञानयोरपीत्याशयः । एवं च नेदमुक्तद्वंद्वत्रितयऽप्यन्वयेनान्योन्यकारणत्वं कपोलकल्पितमपि तु प्राचीनाचार्यसंमतमेवेति द्योत्यते । उपसंहरति—**तदि**त्यादिना ।

ननु भवत्वेवं तत्त्वज्ञानादीनां त्रयाणां परस्परमप्यन्वयव्यतिरेकाभ्यां कारणत्वमथापि त्रयाणां समुच्चयस्यैकमेव किंचित्कारणं वाच्यमेवेत्यपेक्षायां वासिष्ठवाक्येनैव तदाह—**तत्त्वज्ञाने**त्यादिना सावतरणम्— .

**तत्त्वज्ञानादीनां त्रयाणां संपादने साधनमाह—**

**तस्माद्राघव यत्नेन पौरुषेण विवेकिना ।**

भोगेच्छां दूरतस्त्यक्त्वा त्रयमेतत्समाश्रयेत् ॥ इति ।

**पौरुषो यत्नः केनाप्युपायेनावश्यं संपादयिष्यामीत्येवंविधोत्साहादिरूपो निर्बन्धः। विवेको नाम विभज्यनिश्चयः। तत्त्वज्ञानस्य श्रवणादिकं साधनं, मनोनाशस्य योगः, वासनाक्षयस्य प्रतिकूलवासनोत्पादनमिति। भोगेच्छायाः स्वल्पाया अप्यभ्युपगमे 'हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते' इति न्यायेनातिप्रसङ्गस्य दुर्वारत्वाद्दूरत इत्युक्तम्। ननु पूर्वत्र विविदिषासंन्यासस्य तत्त्वज्ञानं फलं विद्वत्संन्यासस्य जीवन्मुक्तिरिति व्यवस्था वर्णिता। तथा च सति प्रथमतस्तत्त्वज्ञानं संपाद्य पश्चाद्विद्वत्संन्यासं कृत्वा जीवतः स्वस्य बन्धरूपयोर्वासनामनोवृत्त्योर्विनाशः संपादनीय इति भाति। अत्र तु तत्त्वज्ञानादीनां सहैवाभ्यासो नियम्यते। अतः पूर्वोत्तरविरोध इति चेत्। नायं दोषः। प्रधानोपसर्जनभावेन व्यवस्थोपपत्तेः। विविदिषासंन्यासिनस्तत्त्वज्ञानं प्रधानं मनोनाशवासनाक्षयावुपसर्जनीभूतौ। विद्वत्संन्यासिन[1]स्तद्विपरीतम्। अतः सहाभ्यास उभयत्राप्यविरुद्धः। न च तत्त्वज्ञानोत्पत्तिमात्रेण कृतार्थस्य किमुत्तरकालीनेनाभ्यासप्रयासेनेति शङ्कनीयम्। जीवन्मुक्तिप्रयोजननिरूपणेन परिहरिष्यमाणत्वात्।**

तद्वाक्यमेव पठति—**तस्मादिति**। तद्व्याचष्टे—**पौरुष** इत्यादिना। पुरुषस्यायमिति। व्युत्पत्तेः पुरुषकार इत्यर्थः। तत्त्वमेव विवृणोति—**केनापी**त्यादिना। आदिना तत्तत्साध्यावश्यसाधकशास्त्रविहितो व्यापार एव। एवं वक्ष्यमाणे तत्त्वज्ञानादित्रयसमुदायस्याव्यभिचारिसाधने यावद्भोगेच्छात्यन्तिकत्यागलक्षणेऽपि कारणं निरुक्तलक्षणं पुरुषकारमभिहितं प्रति विशेषणीभूतं तत्त्वज्ञानादीनां त्रयाणां करणसंकरनिराकरणप्रयोजकं विवेकं विशदी करोति—**विवेको नाम**ेत्यादिना। अस्त्वेवं विवेकिनेति विशेषणोपयोगस्तथाऽपि दूरत इत्यस्याभिप्रायं तु न कलयाम इत्यत आह—**भोगेच्छाया** इत्यादिना। एवं तत्त्वज्ञानादिव्यवस्थासिद्धौ शिष्यादिः पूर्वोत्तरग्रन्थविरोधं शङ्कते—**ननु पूर्वत्रे**त्यारभ्ये**ति चे**दित्यन्तेन। तत्र सिद्धान्ती समाधातुं प्रतिजानीते—**नायं दोष इति**। तत्र हेतुमाह—**प्रधाने**त्यादिना। तं स्फुटयति—**विविदिषे**त्यादिना। तत्राप्याशङ्क्य समाधत्ते—**न चे**त्यादिना। कालस्येयं काली सर्वाधारत्वसर्वनियामकत्वप्रयोजिका या शक्तिः सेना 'इनः सूर्ये प्रभौ राज्ञि' इत्यभिधानात्प्रभुवदुत्पत्त्यादिनियामिका यस्य स तथेति कालीनपदप्रयोगः साधुः।

---

[1] ङ. ङ. °नस्तु तद्वैपरीत्यम्।

तत्रापि पुनः शङ्कते **ननु विद्वत्संन्यासिन** इत्यादिना—

**ननु विद्वत्संन्यासिनो वेदनसाधनश्रवणाद्यनुष्ठानवैफल्याद्वेदनस्य च स्वरूपेण कर्तुमकर्तुमन्यथा वा कर्तुमशक्यस्याननुष्ठेयत्वादुपसर्जनत्वेऽप्यु-त्तरकालीनोऽभ्यासः कीदृश इति चेत्। केनापि द्वारेण पुनः पुनस्तत्त्वा-नुस्मरणमिति ब्रूमः। तादृशश्चाभ्यासो लीलोपाख्याने दर्शितः—**

**तच्चिन्तनं तत्कथनमन्योन्यं तत्प्रबोधनम्।**
**एतदेकपरत्वं च ज्ञानाभ्यासं विदुर्बुधाः॥**
**सर्गादावेव नोत्पन्नं दृश्यं नास्त्येव तत्सदा।**
**इदं जगदहं चेति बोधाभ्यासं विदुः परम्॥ इति।**

**मनोनाशवासनाक्षयाभ्यासावपि तत्रैव दर्शितौ—**

**अत्यन्ताभावसंपत्तौ ज्ञातुर्ज्ञेयस्य वस्तुनः।**
**युक्त्या शास्त्रैर्यतन्ते ये तेऽप्यत्राभ्यासिनः स्थिताः॥ इति।**

**ज्ञातृज्ञेययोर्मिथ्यात्वधीरभावसंपत्तिः। स्वरूपेणाप्यप्रतीतिरत्यन्ता-भावसंपत्तिः। युक्तिर्योगः। सोऽयं मनोनाशाभ्यासः।**

**दृश्यासंभवबोधेन रागद्वेषादितानवे।**
**रतिर्घनोदिता[2] याऽसौ ब्रह्माभ्यासः स उच्यते॥ इति।**

**सोऽयं वासनाक्षयाभ्यासः।**

प्रमाणप्रमेयमात्रपरतन्त्रत्वात्कर्तुं, दुर्गन्धादिज्ञानदर्शनादकर्तुं, घटे पटत्वप्रकारकज्ञानस्य भ्रमत्वाच्चान्यथाकर्तुमशक्यत्वं बोध्यम्। प्रकृते हि ज्ञानशब्देन प्रकरणादद्वैतब्रह्मात्मैक्यमात्र-विषयकविचारितस्वशाखीयवेदान्तमहावाक्यकरणकप्रमाया एव विवक्षितत्वात्। समाधत्ते—**केनापी**त्यादिना। नन्वद्वैतसिद्धान्ते यद्यप्यध्यासलक्षणभाष्यीयभामत्यनुसारेण स्मृतेः सामान्यतो भ्रान्तित्वमेवास्त्यथापि न्यायरत्नावलीनिर्णीतेनानुमितयथार्थविषयकत्वेन क्वचिदप-रोक्षविषयिण्याः समानविषयकवक्ष्यमाणचिन्तनादिलक्षणानुसंधानोपयोगित्वमपि संभवति परं तु केनापीतिपदस्वारस्यात्तत्र द्वाराण्यनेकानि प्रतीयन्ते तानि कानीत्यतस्तानि सप्रमाणं प्रकटयति—**तादृशश्चे**त्यादिना। वासिष्ठीय एवेत्यार्थिकम्। तद्वाक्यमेव पठति—**तच्चिन्तनमिति**। एकान्ते गिरिगुहादौ ध्यै चिन्तायामिति स्मृतेः प्रत्यग्ब्रह्मैक्यविषयक-प्रत्ययैकतानतालक्षणं ध्यानमित्यर्थः। स्वापेक्षया न्यूने सतीर्थ्यादौ तत्कथनम्। स्वसमे

---

१ क. ख. च. °र्जनेनाप्यु°। २ क. ख. ग. घ. ङ. च. °तिर्निवोदि°।

तस्मिन्नन्योन्यं परस्परं प्रबोधनम् । फलितमाह—**एतदेके**त्यादिना । एतेषु द्वारेषु मध्ये केनाप्येकेन द्वारेण द्वैतमिथ्यात्वपूर्वकब्रह्मात्मैक्यानुसंधानमेवेत्यर्थः । अत एव—**सर्गादावेवेति** । दृश्यमुत्पत्तियोग्यमाकाशादिद्वैतं, स्पष्टमन्यत् । तथेदं जगत्, गच्छति तत्त्वविद्यया नश्यतीति व्युत्पत्तिसिद्धमिदमनाद्यविद्यादिदृश्यपञ्चकमिति यावत् । तथाऽहं साधनादिमिथ्यादृश्यरूपभास्यनिरूपितभासकताक्रान्तः साक्षीत्यर्थः । नास्त्येव, तद्वन्नैवास्मीति संबन्धः । अत एवेति बोधाभ्यासं बुधाः पण्डिताः परमुत्कटं विदुरित्यन्वयः । नन्वेवं मनोनाशवासनाक्षयाभ्यासावपि वाच्यावित्यत आह—**मनोनाशे**त्यादिना । तत्राऽऽद्यसूचकं वाक्यं पठति—**अत्यन्तेति** । तद्व्याचष्टे—**ज्ञातृज्ञेययो**रित्यादिना । अत्रेति मूलेऽस्मिन्मनोनाशाभ्यास इत्यर्थः । अत्र मनोनाशाभ्यासपदाभावान्निगमनेन तत्त्वमाह—**सोऽयमिति** । एवमन्त्यमप्याह—**दृश्येति** । **रतिरित्यादि** । अखण्डानन्दचिदित्यर्थः ।

ननूक्तवासिष्ठवाक्येषु तु तत्त्वज्ञानाद्यभ्यासत्रयं प्रधानोपसर्जनभावं विनैव शक्त्यादिवृत्त्या प्रतीयते, श्रीमद्भिस्तु विविदिषासंन्यासिनस्तत्त्वज्ञानाभ्यासः प्रधानं मनोनाशाद्यभ्यासद्वयमुपसर्जनं विद्वत्संन्यासिनस्तु तद्विपरीतमिति तत्समुच्चयानुष्ठानोपपादनोत्तरमुक्तं तत्सांगत्यं निरुक्तवाक्यैः सह कथमिति शिष्याद्याशङ्कां शमयिष्यन्स्वयमेव शङ्कते **तेष्वि**त्यादिना—

**तेष्वेतेषु त्रिष्वभ्यासेषु सामान्येन[1] प्रतीयमानेषु प्रधानोपसर्जनभावो न विवेक्तुं शक्यत इति चेन्मैवम् । प्रयोजनानुसारेण विवेक्तुं शक्यत्वात् । मुमुक्षोः पुरुषस्य जीवन्मुक्तिर्विदेहमुक्तिश्चेति प्रयोजनद्वयम् । अत एव 'विमुक्तश्च विमुच्यते' इति श्रूयते । तत्र जीवतः पुरुषस्य दैवसंपदा मोक्षः, आसुरसंपदा बन्धः । तच्च षोडशाध्याये भगवताऽभिहितम्—**

**दैवी संपद्विमोक्षाय निबन्धायाऽऽसुरी मता ॥ इति ।**

**ते च संपदौ तत्रैवाभिहिते—**

**अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ।**
**दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥**
**अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम् ।**
**दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम् ॥**
**तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता ।**
**भवन्ति संपदं दैवीमभिजातस्य भारत ॥**

---

१ क. ख. ङ. साम्येन ।

**दम्भो दर्पोऽतिमानश्च क्रोधः पारुष्यमेव च ।**
**अज्ञानं चाभिजातस्य पार्थ संपदमासुरीम् ॥ इति ।**

तत्र समाधातुं प्रतिजानीते—**नैवमिति** । तत्र हेतुमाह—**प्रयोजनेति** । तं विवृणोति—**मुमुक्षो**रित्यादिना । एवं प्रतिज्ञातप्रयोजनद्वये हेतुजिज्ञासायां तं प्रमाणत एव व्यनक्ति—**अत एवे**त्यादिना । ततः किं तदाह—**जीवत** इत्याद्यन्वयव्यतिरेकाभ्याम् । तत्र मानमाह—**तच्चे**त्यादिना । तद्वाक्यमेव पठति—**दैवीति** । ननु के ते दैव्यादिसंपदावित्यपेक्षायां ते अवतारयति—**ते चे**त्यादिना । चस्त्वर्थः । तान्येव वाक्यानि लिखति—**अभयमि**त्यादिचत्वारि । अत्र टीका माधुसूदन्येव संगृह्यते । शास्त्रोपदिष्टेऽर्थे संदेहं विनाऽनुष्ठाननिष्ठत्वम्, एकाकी सर्वपरिग्रहशून्यः कथं जीविष्यामीति भयराहित्यं चाभयम् । सत्त्वस्यान्तःकरणस्य शुद्धिर्निर्मलता तस्याः सम्यक्ता भगवत्तत्त्वस्फूर्तियोग्यता सत्त्वसंशुद्धिः । परवञ्चनमायानृतादिपरिवर्जनं वा । परस्य व्याजेन वशीकरणं परवञ्चनम् । हृदयेऽन्यथा कृत्वा बहिरन्यथा व्यवहरणं माया । अयथादृष्टकथनमनृतमित्यादि । ज्ञानं, शास्त्रादात्मतत्त्वस्यावगमः । चित्तैकाग्रतया तस्य स्वानुभवारूढत्वं योगः । तयोर्व्यवस्थितिः सर्वदा तन्निष्ठता ज्ञानयोगव्यवस्थितिः । यदा त्वभयं सर्वभूताभयदानसंकल्पपरिपालनम् । एतच्चान्येषामपि परमहंसधर्माणामुपलक्षणम् । सत्त्वसंशुद्धिः श्रवणादिपरिपाकेणान्तःकरणस्यासंभावनाविपरीतभावनादिमलराहित्यम् । ज्ञानमात्मसाक्षात्कारः । योगो मनोनाशवासनाक्षयानुकूलः पुरुषप्रयत्नः । ताभ्यां विशिष्टा संसारिविलक्षणाऽवस्थितिर्जीवन्मुक्तिर्ज्ञानयोगव्यवस्थितिरित्येवं व्याख्यायते तदा फलभूतैव दैवी संपदियं द्रष्टव्या भगवद्भक्तिं विनाऽन्तःकरणसंशुद्धेरयोगात्तया साऽपि कथिता ।

महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥

इति नवमे दैव्यां संपदि भगवद्भक्तेरुक्तत्वाच्च । भगवद्भक्तेरतिश्रेष्ठत्वाच्चाभयादिभिः सह पाठो न कृत इति द्रष्टव्यम् । महाभाग्यानां परमहंसानां फलभूतां दैवीसंपदमुक्त्वा ततो न्यूनां गृहस्थादीनां साधनभूतामाह—दानं, स्वसत्तास्पदानामन्नादीनां यथाशक्ति शास्त्रोक्तः संविभागः । दमो बाह्येन्द्रियसंयमः ऋतुकालाद्यतिरिक्तकाले मैथुनाद्यभावः । चकारोऽनुक्तानां निवृत्तिलक्षणधर्माणां समुच्चयार्थः । यज्ञश्च श्रौतोऽग्निहोत्रदर्शपूर्णमासादिः । स्मार्तो देवयज्ञः पितृयज्ञो भूतयज्ञो मनुष्ययज्ञ इति चतुर्विधः । ब्रह्मयज्ञस्य स्वाध्यायपदेन पृथगुक्तेः । चकारोऽनुक्तानां प्रवृत्तिलक्षणधर्माणां समुच्चयार्थः । एतत्त्रयं गृहस्थस्य । स्वाध्यायो ब्रह्मयज्ञः, अदृष्टार्थमृग्वेदाद्यध्ययनरूपो यज्ञशब्देन पञ्चविधमहायज्ञोक्तिसंभवेऽप्यसाधारणेन ब्रह्मचारिधर्मत्वकथनार्थं पृथगुक्तिः । तपस्त्रिविधं शारीरादि सप्तदशे वक्ष्यमाणं वानप्रस्थस्यासाधारणो धर्मः ।

एवं चतुर्णामाश्रमाणामसाधारणान्धर्मानुक्त्वा चतुर्णां वर्णानामाह—आर्जवमवक्रत्वं श्रद्दधानेषु श्रोतृषु स्वज्ञातार्थासंगोपनम् ॥ १ ॥

प्राणिवृत्तिच्छेदो हिंसा तदहेतुत्वमहिंसा। सत्यमनर्थाननुबन्धि यथाभूतार्थवचनम्। परैराक्रोशे ताडने वा कृते सति प्राप्तो यः क्रोधस्तस्य तत्कालमुपशमनमक्रोधः। दानस्य प्रागुक्तेस्त्यागः संन्यासः। दमस्य प्रागुक्तेः शान्तिरन्तःकरणस्योपशमः। परस्मै परोक्षे परदोषप्रकाशनं पैशुनं तदभावोऽपैशुनम्। दया भूतेषु दुःखितेष्वनुकम्पा। अलोलुप्त्वमिन्द्रियाणां विषयसंनिधानेऽप्याविक्रियत्वम्। मार्दवमक्रूरत्वं वृथापूर्वपक्षादिकारिष्वपि शिष्यादिष्वप्रियभाषणादिव्यतिरेकेण बोधयितृत्वं वा। ह्रीरकार्यप्रवृत्त्यारम्भे तत्प्रतिबन्धिका लोकलज्जा। अचापलं प्रयोजनं विनाऽपि वाक्पाण्यादिव्यापारयितृत्वं चापलं तदभावः। आर्जवादयोऽचापलान्ता ब्राह्मणस्यासाधारणा धर्माः ॥ २ ॥

तेजः प्रागल्भ्यं स्त्रीबालकादिभिर्मूढैरनभिभाव्यत्वम्। क्षमा सत्यपि सामर्थ्ये परिभवहेतुं प्रति क्रोधस्यानुत्पत्तिः। धृतिर्देहेन्द्रियेष्ववसादं प्राप्तेष्वपि तदुत्तम्भकः प्रयत्नविशेषः। येनोत्तम्भितानि करणानि शरीरं च नावसीदन्ति। एतत्त्रयं क्षत्रियस्यासाधारणम्। शौचमाभ्यन्तरमर्थप्रयोगादौ मायानृतादिराहित्यं न तु मृज्जलादिजनितं बाह्यमात्रं ग्राह्यम्। तस्य शरीरशुद्धिरूपतया बाह्यत्वेनान्तःकरणवासनात्वाभावात्। तद्वासनानामेव सात्त्विकादिभेदभिन्नानां दैव्यासुर्यादिसंपद्रूपत्वेनात्र प्रतिपिपादयिषितत्वात्। स्वाध्यायवत्केनचिद्रूपेण वासनारूपत्वे तदप्यादेयमेव। द्रोहः परजिघांसया शस्त्रग्रहणादि तदभावोऽद्रोहः। एतद्द्वयं वैश्यस्यासाधारणम्। अत्यर्थं मानिताऽऽत्मनि पूज्यत्वातिशयभावनाऽतिमानिता तदभावो नातिमानिता पूज्येषु नम्रता। अयं शूद्रस्यासाधारणो धर्मः। 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इत्यादिश्रुत्या विविदिषोपयोगिकतया विनियुक्ता असाधारणाः साधारणाश्च वर्णाश्रमधर्मा इहोपलक्ष्यन्ते। एते धर्मा भवन्ति निष्पद्यन्ते दैवीं शुद्धसत्त्वमयीं संपदं वासनासंततिं शरीरारम्भकाले पुण्यकर्मभिरभिव्यक्तामभिलक्ष्य जातस्य पुरुषस्य। 'तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च' 'पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन' इत्यादिश्रुतिभ्यः। हे भारतेति संबोधयञ्शुद्धवंशोद्भवत्वेन पूतत्वात्त्वमेतादृशधर्मयोग्योऽसीति सूचयति ॥ ३ ॥

आदेयत्वेन दैवीं संपदमुक्त्वेदानीं हेयत्वेनाऽऽसुरीं संपदमेकेन श्लोकेन संक्षिप्याऽऽह—दम्भो धार्मिकतयाऽऽत्मनः ख्यापनम्। तदेव धर्मध्वजित्वम्। दर्पो धनस्वजनादिनिमित्तो महदवधीरणाहेतुर्गर्वविशेषः। अतिमान आत्मन्यत्यन्तपूज्यत्वातिशयाध्यारोपः। 'देवाश्चासुराश्चोभये प्राजापत्याः पस्पृधिरे ततोऽसुरा अतिमानेनैव कस्मिन्नु वयं जुहुयामेति स्वेष्वेवाऽऽस्येषु जुह्वतश्चेरुस्तेऽतिमानेनैव पराबभूवुस्तस्मान्नातिमन्येत पराभवस्य ह्येतन्मुखं यद्-

तिमानः' इति शतपथ उक्तः। क्रोधः स्वपरापकारप्रवृत्तिहेतुरभिज्वलनात्मकोऽन्तःकरणवृत्तिविशेषः। पारुष्यं प्रत्यक्षररूक्षवदनशीलत्वम्। चकारोऽनुक्तानां भावभूतानां चापलादिदोषाणां समुच्चयार्थः। अज्ञानं कर्तव्याकर्तव्यादिविषयविवेकाभावः। चशब्दोऽनुक्तानामभावभूतानामधृत्यादिदोषाणां समुच्चयार्थः। आसुरीमसुरमरणहेतुभूतां रजस्तमोमयीं संपदमशुभवासनासंततिं शरीरारम्भकाले पापकर्मभिरभिव्यक्तामाभिलक्ष्य जातस्य कुपुरुषस्य दम्भाद्या अज्ञानान्ता दोषा एव भवन्ति न त्वभयाद्या गुणा इत्यर्थः। हे पार्थेति संबोधयन्विशुद्धमातृत्वेन तदयोग्यत्वं सूचयतीति ॥ ४ ॥

असुरमरणहेतुभूतामित्यासुरसंपद्विशेषणं त्वसुरं रजस्तमःप्रकृतिकत्वेनासुरधर्मीभूतदम्भाद्युक्तसंस्कारोदयविशिष्टं यन्मरणं तत्कारणीभूतामित्यर्थः। एवं च दम्भदर्पाद्यासुरसंपदन्वितस्य मरणेऽप्यवश्यं तत्संस्कारोद्रेकात् ' यं यं वाऽपि स्मरन्भावम् ' इत्याद्यष्टमोक्तनियमेनाग्रेऽपि तादृगेव शरीराद्याप्त्या दुर्निरस्य एव संसार इतीहैव तत्त्यागेन स निरस्य इति व्याख्येयम्।

ननु दैवी संपद्भगवता त्रिभिः श्लोकैः प्रपञ्चिताऽस्त्यासुरी त्वेकेनैवोक्तेति किमेतावत्येवासावित्याशङ्कां शमयितुं मूलविधातार एवाऽऽहुः **पुनरपी**त्यादिना—

**पुनरप्याऽध्यायपरिसमाप्तेरासुरसंपत्प्रपञ्चिता। तत्राशास्त्रीयायाः स्वभावसिद्धाया आसुरसंपदो दुर्वासनायाः शास्त्रीयया पुरुषप्रयत्नसाध्यया दैवसंपदा सद्वासनया क्षये सति जीवन्मुक्तिर्भवति। वासनाक्षयवन्मनोनाशस्यापि जीवन्मुक्तिहेतुत्वं श्रूयते—**

**मन एव मनुष्याणां कारणं बन्धमोक्षयोः।**
**बन्धाय विषयासक्तं मुक्त्यै निर्विषयं स्मृतम् ॥**
**यतो निर्विषयस्यास्य मनसो मुक्तिरिष्यते।**
**अतो निर्विषयं नित्यं मनः कार्यं मुमुक्षुणा ॥**
**निरस्तविषयासङ्गं संनिरुद्धं मनो हृदि।**
**यदा यात्युन्मनीभावं तदा तत्परमं पदम् ॥**
**तावदेव निरोद्धव्यं यावद्धृदि गतं क्षयम्।**
**एतज्ज्ञानं च ज्ञानं च शेषो न्यायस्य विस्तरः। इति ॥**

**बन्धो द्विविधः, तीव्रो मृदुश्च। तत्राऽऽसुरसंपत्साक्षादेव क्लेशहेतुत्वात्तीव्रो बन्धः। द्वैतमात्रप्रतीतिस्तु स्वयमक्लेशरूपत्वादासुरसंपदुत्पादकत्वाच्च मृदुबन्धः। तत्र वासनाक्षयेण तीव्रबन्ध एव निवर्तते, मनोनाशेन तूभयम्।**

अध्यायपरिसमाप्तिं मर्यादीकृत्याऽध्यायपरिसमाप्तेरध्यायपरिसमाप्तिपर्यन्तमित्यर्थः । फलितमाह—**तत्रे**त्यादिना । ननु भवत्वेवं वासनाक्षयस्य जीवन्मुक्तिहेतुत्वं मनोनाशस्य तु तत्कारणत्वे किं प्रमाणमित्यत आह—**वासने**त्यादिना । अथ तामेवाथर्ववेदीयामृतबिन्दूपनिषद्गतश्रुतिं पठति—**मन एवे**त्यादिना । यदा यात्यात्मनो भावमित्यपि पाठः । भावोऽत्र सत्त्वैव । आत्मन इति षष्ठी तु राहोः शिर इत्यादिवदभेदार्थिकैव । तथा चाऽऽत्मस्वरूपां सत्तामित्यर्थः । यदा यात्युन्मनीभावमिति पाठे तून्मनीभाव उक्तः श्रीमदभियुक्तैः—

अर्थादर्थान्तरं वृत्तिर्गन्तुं चलति चान्तरे ।
अनाधारा निर्विकारा यादृशी सोन्मनी स्मृता ॥ इति ।

एवं च विकारशब्दितविषयविधुरवृत्तित्वमुन्मनीत्वमिति फलितम् । तथा च बन्धाय विषयासक्तमित्यादीन्युपक्रमादिवाक्यान्यपि संगतानि । नन्वेवं निर्विषयत्वेन हृदि मनसो निरोधोऽपि कियत्कालं प्रत्यहमभ्यसनीय इत्यत्राऽऽह—**यावदिति** । हृदि स्वगोलकीभूतहृत्कमलावच्छेदेनेत्यर्थः । क्षयं संकल्पादिवृत्तिविलयं प्रतिगतं प्राप्तं भवतीति योजना । अथैतस्यैव मुख्यसाधनत्वं विधत्ते—**एतदि**त्यादिना । एतदुक्तमनोनिरोधनमेव ध्यानं सगुणादेर्ज्ञानं निर्गुणपरब्रह्मणः प्रत्यक्षप्रमासाधनमप्यस्तीति संबन्धः । नन्वेवं तर्ह्युर्वरितशब्दब्रह्मणः का गतिरित्यत आह—**शेष इति** । ततः किं तत्राऽऽह—**बन्ध** इत्यादिना । तत्राऽऽद्यस्वरूपमाह—**तत्रे**त्यादिना । अन्त्यस्यापि तदाह—**द्वैतमात्रेति** । एवमपि किं प्रकृत इत्यत्राऽऽह—**तत्रे**त्यादिना । नन्वेवं तर्हि मनोनाशेनापि मृदुबन्ध एव निवर्तेतेत्यत आह—**मनोनाशेन त्विति** । तुशब्दः पूर्ववैलक्षण्यार्थः । उभयं तीव्रादि ।

एवं मनोनाशेन तूभयमित्यत्राऽऽलोकेन तमोरक्षोवत्समानदेशावच्छेदेनैव नश्यतीति गूढाभिसंधिमजानानः शङ्कते **तर्ही**त्यादिना—

**तर्हि मनोनाशेनैवालं वासनाक्षयस्तु निरर्थक इति चेन्न । भोगहेतुना प्रबलेन प्रारब्धेन व्युत्थापिते मनसि वासनाक्षयस्य तीव्रबन्धनिवारणार्थत्वात् । भोगस्य मृदुबन्धेनाप्युपपत्तेः । तामसवृत्तयस्तीव्रबन्धः । सात्त्विकराजसवृत्तिद्वयं मृदुबन्धः । एतच्च दुःखेष्वनुद्विग्नमना इत्यत्र स्पष्टीकृतम् । एवं च सति मृदुबन्धस्याभ्युपेयत्वात्तीव्रबन्धस्य वासनाक्षयेणैव निवृत्तेरनर्थको मनोनाश इति चेन्न । दुर्बलप्रारब्धापादित[1]नामवश्यंभाविभोगानां प्रतीकारार्थत्वात् । तादृग्भोगस्य प्रतीकारनिवर्त्यत्वमभिप्रेत्येदमाहुः—**

---

१ क. ख. ग. घ. ङ. च. 'तानव' ।

**अवश्यंभाविभोगानां[1] प्रतीकारो भवेद्यदि ।**
**तदा दुःखैर्न लिप्येरन्नलरामयुधिष्ठिराः ॥ इति ।**

अथ सिद्धान्ती तावदुक्तशङ्कामितिशब्देनानूद्य समाधातुं प्रतिजानीते—**इति चेन्नेति ।** तत्र हेतुमाह—**भोगहेतुनेत्यादिना ।** इदं ह्यसाधारणकारणसंग्रहणार्थमेव । नोचेत्सर्वस्यापि प्रारब्धस्य भोगमात्रहेतुत्वप्रसिद्ध्या तद्वैयर्थ्यापत्तेः । नन्वनेनैव साधारणकारणीभूतानां जात्यायुर्जनकप्रारब्धांशविशेषाणां व्युदासेऽपि पुनः प्रबलविशेषणं व्यर्थमेवेति चेन्न । प्रबलपदेन तात्कालिकभोगदत्वस्य विवक्षितत्वादित्याशयः । नन्वेवं चेत्तर्ह्युक्तप्रारब्धेनापि जात्यायुषोरुक्तरीत्या व्युदासेन देहाभावे भोग एव न स्यात् । न च 'क्षीयन्ते चास्य कर्माणि ' ' ज्ञानाग्निः सर्व कर्माणि ' इत्यादिश्रुतिस्मृतिभ्यामिष्टापत्तिरिति सांप्रतम् । तयोः 'भोगेन त्वितरे क्षपयित्वा संपद्यते' इति सूत्रेणानारब्धफलककर्मविषयकत्वात् , 'प्रारब्धं त्विह भुज्यताम् ' इति सोपानपञ्चकादौ भाष्यकारादिभिरपि तथैवाभिहितत्वाच्च । तस्मात्किमत्र रहस्यमित्यत आचार्यस्तावद्यथाऽर्धसुप्तप्रबुद्धबालस्य भोजनादिभोगो मृदुजाग्रदवस्थयाऽपि जायते तथा तीव्रेतरमध्यमन्दसुप्तप्रारब्धेनास्तु भोग इति निगूढाशयत आह—**भोगस्येति ।** भोगो हि सुखाद्यन्यतरसाक्षात्कार एव तत्साक्षिप्रत्यक्षलक्षणः । स तु द्वैतप्रतीतिमात्रमपेक्षते । दृश्यते हि कस्तूरीकुणपधूमगन्धाभ्यां सुखाद्यनुभवः प्रोक्तदम्भाद्यासुरसंपदमन्तराऽपि । ननु भवत्वेवं द्वैतप्रतीतिमात्रं मृदुबन्धस्तेन प्रारब्धकर्मोपभोगोऽपि तथाऽपि यदुक्तमनुपदमेव ' बन्धो द्विविधः । तत्राऽऽसुरसंपत्साक्षादेव क्लेशहेतुत्वात्तीव्रो बन्धः । द्वैतमात्रप्रतीतिस्तु स्वयमक्लेशरूपत्वादासुरसंपदुत्पादकत्वाच्च मृदुबन्धः ' इति तत्र बन्धशब्दार्थस्य सामान्यतः क्लेशपर्यायीभूतदुःखरूपत्वमेव प्रतीयते तस्याव्यवहितकारणीभूतत्वेन दम्भाद्यासुरसंपदस्तीव्रबन्धत्वं द्वैतमात्रप्रतीतेस्तु दम्भाद्यासुरसंपत्कारणत्वेन तत्कार्यीभूतक्लेशरूपत्वाभावेन च मृदुबन्धत्वं प्रतिपादितं तत्कथमुपपद्यते । मृदुबन्धेनापि भोगमुपपादयताऽनेनोत्तरग्रन्थेन कस्तूरीकुणपधूमगन्धाभ्यां सुखदुःखजन्मनिदर्शनतः प्रारब्धभोगजननसंभावनया भवद्व्याख्यातेन सह विरोधात् । पूर्वत्र मृदुबन्धस्य क्लेशजनकासुरसंपज्जनकत्वमुक्तमिह तु मृदुबन्धस्याप्यासुरसंपद्वत्साक्षादेव दुःखजनकत्वं भोगोपपत्त्योपपादितमिति स्फुट एव विरोधस्तत्राऽऽह—**तामसवृत्तय** इत्यादिना । दुःखं हि क्लेशापरनामकमासुरसंपत्कार्यमपि तामसवृत्तिरूपमेवेत्यत्र न कोऽपि विवादः । यद्यपि दुःखेष्वनुद्विग्नमना इत्यादिगीताश्लोकविवरणे प्राङ्मूलकारैर्दुःखं रोगादिनिमित्तजन्या रजोगुणविकाररूपा संतापात्मिका प्रतिकूला चित्तवृत्तिरिति तस्य राजसत्वमेवोक्तमथापि प्रकृते साक्षादेव क्लेशहेतुत्वादित्युक्तेः स्वारस्यान्मधुसूदनाचार्यैरासुरसंपदो रजस्तमोमयीं संपदमिति तमोमयत्व-

---

[1] क. ख. ग. घ. ङ. च. °विभावानां ।

स्यापि विशेषितत्वाच्च तामसवृत्तित्वमेव दुःखस्योचितमिति प्रतिभाति । यद्वा क्लेशपदेनात्र पातञ्जलसूत्रोक्ताः पञ्चापि क्लेशाः स्वीकार्याः । तथा च तत्सूत्रम्—'अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः' इति । एवं तल्लक्षणान्यपि तत्रैव सूत्रितानि—'अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या' 'दिग्दर्शनशक्त्योरेकात्मतेवास्मिता' 'सुखानुशयी रागः' 'दुःखानुशयी द्वेषः' 'स्वरसवाही विदुषोऽपि तथारूढोऽभिनिवेशः' इति । एवं च दम्भदर्पादिरूपायाः प्रकृताया आसुरसंपदोऽज्ञानरूपेंऽशेऽविद्याख्यक्लेशं प्रत्युपादानत्वं तथाऽतिमाने तस्मिन्नभिमानं प्रति क्रोधे त्वस्मितारागद्वेषान्प्रतीति समुचितमेव । तेनाऽऽसुरसंपत्प्रधानांशानामतिमानक्रोधाज्ञानानां तामसवृत्तित्वेनैव तीव्रबन्धत्वं पूर्वोत्तरग्रन्थयोः समानमेव । यच्च पूर्वग्रन्थे द्वैतप्रतीतिरूपस्य मृदुबन्धस्य क्लेशकारणीभूतासुरसंपत्कारणत्वमुक्तमुत्तरग्रन्थे तु भोगजनकत्वेन साक्षादेव क्लेशकारणत्वमभिहितमिति विरुद्धमिव भाति तदप्यविवेकमूलकमेव । तथा हि—भोगः सर्वोऽपि सुखदुःखान्यतरसाक्षात्कारात्मा कस्तूर्यादिगन्धादिरूपद्वैतप्रतीतिजन्योऽपि मध्ये सूक्ष्मतया करणवद्व्यापारस्थानीयानासुरसंपत्प्रधानांशीभूतातिमानाज्ञानादिमात्रोपादानकान्क्लेशानुत्पाद्यैव भवतीत्यावश्यकमेव । अन्यथा रथ्यावस्थिततृणादिप्रतीत्याऽपि भोगापत्तेः । तस्मादुत्तरग्रन्थेऽप्युक्तरीत्या पूर्वग्रन्थोक्तमासुरसंपज्जनकत्वं द्वैतप्रतीत्यात्मकस्य मृदुबन्धस्याऽऽवश्यकमेव तथा सात्त्विकराजसवृत्तिद्वयात्मकत्वमपि । 'सत्त्वात्संजायते ज्ञानं रजसो लोभ एव च' इति स्मृतेः प्रथमं कस्तूरीगन्धज्ञानं तदुत्तरमेव तत्र रम्यबुध्या लोभ इति क्रमात्सात्त्विकादिवृत्त्यात्मकत्वं तत्रानुभवसिद्धमेव। न चैवमपि तत्र न दुःखमतः कथं क्लेशपूर्वकत्वं तस्येति सांप्रतम् । वियोगावच्छेदेन तस्यापि दुःखरूपत्वात् । कुणपधूमगन्धज्ञानस्याप्येवं वियोगावच्छेदेन सुखरूपत्वाच्च । तदुक्तं मदीयायां बोधैक्यसिद्धौ—

> यद्वत्पाटलगुल्मकं वितनुते सौख्यं च दुःखं क्रमा-
> त्पुष्पात्कण्टकतो द्वयं द्वयमपि प्राप्त्याऽनवाप्त्याऽपि च ॥
> संसारे रमणीमुखं प्रियमथ व्याघ्रादिकं चाप्रियं
> कुर्यात्तद्वदिदं द्वयं द्वयमपीत्यात्मैव भूमा सुखम् ॥ इति ।

विस्तरस्त्वत्रैतट्टीकायां मामक्यामेवावकलनीयः । एवं च सर्वत्रोक्तरीत्या साधकस्य विवेकिनः प्रपञ्चे दुःखबुद्धिरेव द्वैतानुसंधानात्सिद्धस्य त्वद्वैतात्मानुसंधानात्सुखबुद्धिरेव परिस्फुरतीति दृक् । ननूक्तबन्धद्वये किं मानमित्यत आह—**एतच्चे**त्यादिना । तद्यथा—स्थितप्रज्ञलक्षणविचारे हि दुःखेष्वनुद्विग्नमना इति श्लोकं पठित्वा दुःखं रोगादिनिमित्तजन्या रजोगुणविकाररूपा संतापात्मिका प्रतिकूला चित्तवृत्तिः । तादृशे दुःखे प्राप्ते सत्यहं पापी धिङ्मां दुरात्मानमित्यनुतापात्मिका तमोगुणविकारत्वेन भ्रान्तिरूपा चित्तवृत्तिरुद्वेगः । यद्यप्ययं विवेक इवाऽऽभाति तथाऽपि पूर्वस्मिञ्जन्मनि चेत्तत्पापप्रवृत्तिप्रतिबन्धकत्वात्सप्रयो-

जनो भवति। इदानीं तु निष्प्रयोजन इति भ्रान्तित्वं द्रष्टव्यम्। सुखं राज्यपुत्रलाभादिनिमित्तजन्या सात्त्विकी प्रीतिरूपाऽनुकूला चित्तवृत्तिः। तस्मिन्सुखे सत्यगामिनस्तादृशसुखस्य कारणं पुण्यमननुष्ठाय वृथैव तदपेक्षा तामसी चित्तवृत्तिः स्पृहा। तत्र च सुखदुःखयोः प्रारब्धकर्मप्रापितत्वाद्व्युत्थितचित्तस्य वृत्तिसंभवाच्च तदुभयं समुपपद्यते। उद्वेगस्पृहे तु न विवेकिनः संभवतः। तथा रागभयक्रोधाश्च तामसत्वेन कर्मणा प्रापितत्वाभावान्नास्य विद्यन्त इति व्याख्यानमुक्तम्। तत्र सुखदुःखयोः सात्त्विकराजसवृत्त्यात्मकयोः प्रारब्धकर्मप्रापितयोरप्यतामसवृत्तित्वेन मृदुबन्धत्वं पर्यवस्यति। उद्वेगस्पृहयोस्तथा रागभयक्रोधानां च तामसवृत्तित्वेन तीव्रबन्धत्वमिति ध्येयम्। तत्रापि शिष्यादिः शङ्कते—**एवं** चेत्यादिना अथ सिद्धान्ती सानुवादं समाधातुं तत्र प्रतिजानीते—**इति चेन्नेति**। तत्र हेतुमाह—**दुर्बले**त्यादिना। दुर्बलं मध्यवेगापन्नमेतादृशं यत्प्रारब्धं तेनाऽऽपादिताः प्रापितास्तेषामित्यर्थः। एतादृशामप्यवश्यंभाविभोगानाम्। 'यावदधिकारमवस्थितिराधिकारिकाणाम्' इतिन्यायोक्तानेकजन्मभोग्यप्रारब्धव्युदासपूर्वकमेकवार्तमानिकजन्ममात्रभोग्यप्रारब्धसंग्रहार्थमिहावश्यपदम्। एवं चावश्यमद्वैतब्रह्मविद्योत्पत्तिशालिशरीरमात्रभोगयोग्यत्वावच्छिन्नं यथा स्यात्तथा ये भाविनो भवनशीला भोगाः सुखादिसाक्षात्कारास्तेषामिति यावत्—**प्रतीकारेति**। प्रतीकारो वायवीयमाघमाहात्म्योक्तेतिहासरीत्या माण्डव्याख्यमुनेः शूलारोपप्रापकप्रारब्धं यावद्दुर्बलत्वावस्थं मनोनाशाख्यनिर्विकल्पापरनामकासंप्रज्ञातसमाधिना भानाभाववन्निरासः किंचित्कालं तत्प्राबल्यानुदयपर्यन्तमेवोपशमः, अर्थः प्रयोजनं यस्य मनोनाशस्य तत्त्वादित्यर्थः। एवं च प्रबलप्रारब्धोदये तु निरुक्तोदाहरण एव तत्कर्तृकशापादिविस्तरः सुप्रसिद्ध एवेति भावः। इदं हि प्रारब्धस्य प्राबल्यादिघटकं वेगचतुष्टयं छान्दोग्ये सप्तमाध्याये सनत्कुमारविद्यायां 'स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड्भवति तस्य सर्वेषु लोकेषु कामचारो भवति' इतिश्रुतिवाक्ये मूलकारैरेवानुभूतिप्रकाशाख्यव्याख्याने—

क्रमेणानेन यस्तत्त्वं पश्यञ्शास्त्रविचारतः।
युक्त्या मत्वा धिया वेत्ति जीवन्मुक्तो भवेदसौ॥
जीवन्मुक्तो रतिक्रीडामिथुनानन्दलक्षणान्।
व्यवहारान्क्रमेणैति प्रारब्धस्यानुसारतः॥
सुखदुःखप्रदारब्धकर्मवेगश्चतुर्विधः।
तीव्रो मध्यो मन्दसुप्तौ चेति तस्य विधा मताः॥
तीव्रवेगे स पश्चादितुल्यो नाऽऽत्मानमीक्षते।
आत्मनि प्रीतिरस्तीति भवेदात्मरतिस्तदा॥
मध्यवेगे तु भोगानां प्राधान्यं स यदा कदा।
कृत्वाऽवकाशमात्मानं वदन्क्रीडति बालवत्॥

मन्दवेगे तिरस्कृत्य भोगान्प्रायेण चिन्तयन् ।
धियाऽऽत्मानं द्वंद्वसुखं प्राप्नोति मिथुनं यथा ॥
सुप्तवेगेऽतिनिर्विघ्नो निर्विकल्पसमाधिभाक् ।
आत्मानन्दावशेषः सन्नास्ते मुक्तवदद्वयः ॥

इत्यादि प्रतिपादितम् । नन्वेवमपि मध्यवेगाख्यप्रारब्धापादितद्वैतमात्रप्रतीतिजन्यकस्तूरीकुणपधूपगन्धजनिताविद्यादिपञ्चक्लेशसूक्ष्मद्वारकसुखदुःखान्यतरसाक्षात्कारलक्षणमृदुबन्धप्रतीकारप्रयोजनत्वं मनोनाशस्यानुपपन्नमेव तस्य मन्दादितद्वेगमात्रसाध्यताया उक्तवाक्यैरेव सिद्धत्वादिति चेत् । सत्यम् । निरुक्तमध्यवेगाख्यप्रारब्धदशावच्छेदेनैव शास्त्रविचारवतो यततः पुरुषस्य मन्दादिवेगात्मकतद्वं(द्ध्वं)सस्य मनोनाशैकसाध्यत्वात्तद्दशायामेव यत्नवादियावच्छास्त्रस्य सार्थक्यादन्यथा तदनारम्भापत्तेर्दुर्वारत्वाच्च । अयमेवाऽऽशयः प्राचीनाचार्याणामप्यवश्यंभाविभोगानां प्रतिकारो भवेद्यदीत्यादिवाक्यं पठतामस्तीत्याह—**तादृग्भोगस्ये**त्यादिना । मध्यप्रारब्धापादितमृदुबन्धजनितभोगस्यैवेत्यर्थः । **प्रतीकारेति** । मनोनाशविनाश्यत्वम् । इदं, सद्य एव वक्ष्यमाणं वाक्यम् । आहुः, पूर्वाचार्या इत्यार्थिकम् । तदेवोदाहरति— **अवश्यंभावीति** । अत्र भावानामित्यपपाठ एव भोगस्य प्रतीकारेतिमूलकारावतरणविरोधात् । एवं च नलादीनां विद्वत्संन्यासस्य क्षत्रियत्वेन दण्डधारणादिरूपस्य गौणस्य राज्यकर्तृत्वेनर्षभादिवन्मुख्यस्य चाभावेन मनोनाशरूपनिरुक्तप्रारब्धप्रतीकाराभावादेव तेषां तदा दुःखलेप इत्याशयः । न चेदमेतत्पद्यतात्पर्यकल्पनं तृप्तिदीपविरुद्धमिति वाच्यम् । तन्मते नलादीनां तीव्रवेगप्रारब्धवत्त्वादित्युभयाविरुद्धत्वामिति ।

**तदेवं जीवन्मुक्तिं प्रति वासनाक्षयमनोनाशयोः साक्षात्साधनत्वात्प्राधान्यम् । तत्त्वज्ञानं तूभयोत्पादनेन[1] व्यवहितत्वादुपसर्जनम् । तत्त्वज्ञानस्य वासनाक्षयहेतुत्वं बहुधा श्रुतौ श्रूयते—'ज्ञात्वा देवं सर्वपाशापहानिः' * । 'अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति'। 'तरति शोकमात्मवित्' । 'तत्र को मोहः कः शोक एकत्वमनुपश्यतः'। 'ज्ञात्वा देवं मुच्यते सर्वपाशैः' इति । मनोनाशहेतुत्वं च तत्त्वज्ञानस्य श्रुतिसिद्धम् । विद्यादशामभिप्रेत्येदं श्रूयते—'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्केन कं जिघ्रेत्' इत्यादि । गौडपादाचार्याश्चाऽऽहुः—**

---

* ग. घ. चेत्येतदतिरिक्तपुस्तकेषु 'क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः' इत्यधिकम् ।

---

१ क. ख. ग. घ. ङ. च. °नं तु तयोरुत्पा° ।

आत्म[1]सत्तानुरोधेन न संकल्पयते यदा ।
अमनस्तां तदा याति ग्राह्याभावे तद्ग्रहः ॥ इति ।

जीवन्मुक्तेर्वासनाक्षयमनोनाशाविव विदेहमुक्तेः साक्षात्साधनत्वाज्ज्ञानं प्रधानम् ।

'ज्ञानादेव तु कैवल्यं प्राप्यते येन मुच्यते' इति स्मृतेः ।

केवलस्याऽऽत्मनो भावः कैवल्यं देहादिरहितत्वं तच्च ज्ञानादेव प्राप्यते । सदेहत्वस्याज्ञानकल्पितत्वेन ज्ञानैकनिवर्त्यत्वात् । ज्ञानादेवेत्येवकारेण कर्मव्यावृत्तिः । 'न कर्मणा न प्रजया धनेन' इति श्रुतेः । यस्तु ज्ञानशास्त्रमनभ्यस्य यथासंभवं वासनाक्षयमनोनाशावभ्यस्य सगुणं ब्रह्मोपास्ते न तस्य कैवल्यमस्ति लिङ्गदेहस्यानपायात् । अत एवकारेण तावपि व्यावर्त्येते । येन मुच्यत इत्यस्यायमर्थः—येन ज्ञान[2]प्राप्तिबलत्वेन कृत्स्नबन्धाद्विमुच्यत इति ।

फलितमाह—**तदेव**मित्यादिनो**पसर्जनमि**त्यन्तेन । जीवन्मुक्तिं प्रतीत्यत्राप्यन्वेति । ननु तत्त्वज्ञानस्याऽऽदौ वासनाक्षयं प्रत्येव कारणत्वे किं प्रमाणमित्यत्राऽऽह—**तत्त्वज्ञानस्ये**-**त्यादि** । श्रूयते, आम्नातत्वेनाऽऽकर्ण्यत इत्यर्थः । तान्येव श्रुतिवाक्यानि पठति—**ज्ञात्वा देवं सर्वपाशे**त्यादिना । पाशाः प्रसिद्धपाशवत्तीव्रबन्धरूपाः प्रागुक्ताखिलतामसवृत्तय एव बन्धकत्वात्पाशाभिधा इति यावत् । नन्वेवमपि मनोनाशं प्रति तत्त्वज्ञानस्य कथं कारणत्वं वासनाक्षयं प्रति त्यागस्येवात्रापि योगस्यैव कारणत्वादित्यत आह—**विद्येति** । तामेव श्रुतिं संगृह्णाति—**यत्रेति** । आदिना तत्केन कं रसयेदित्यादितद्वाक्यशेषो ग्राह्यः । नन्विदं वाक्यं ' स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि ' इति सूत्रेण सुतिविदेहकैवल्यान्यतरपरत्वेन व्याख्यातमित्यस्वरसात्तत्र संमत्यन्तरमाह—**गौडेति** । चोऽप्यर्थे । तत्कारिकामेव लिखति—**आत्मेति** । **ग्राह्येत्यादि** । ग्राह्यस्य दृश्यस्यैव निर्मनस्कत्वाख्यनिर्विकल्पसमाध्युपलक्षितचिन्मात्रावस्थितिदशायामस्फूर्तावित्यर्थः । **तदिति** । तस्य चिन्मात्रस्य द्वैतवद्ग्रहो भास्यत्वेन प्रकाशो न भवति किंतु स्वप्रकाशत्वेन तत्स्वयमेव भासत इत्येतत् । ननु विदेहमुक्तौ किं प्रधानं साधनमित्यपेक्षयां तदाह—**जीवन्मुक्ते**रित्यादिना । तत्र मानमाह—**ज्ञानादेवेति** हेतुव्याजेन । तामेव विवृणोति—**केवलस्ये**त्यादिना । स्पष्टमेवान्यत् ।

---

१ क. ख. ङ. °त्मतत्त्वानुबोधे° । ग. च °त्मसत्यानु° । २ क. ख. ङ. च. °प्रापित-केवल° ।

ननु बन्धे कृत्स्नेतिविशेषणं किं जीवन्मुक्तिनिरस्ये बन्धे तीव्रादिभेदेन द्वैविध्यवद्विदेहमुक्त्या तत्वज्ञानजन्ययाऽनादिभावरूपशोधिततत्त्वंपदार्थैक्यलक्षणचिन्मात्राश्रयविषयमूलाज्ञानध्वस्त्यात्मिकया निरस्येऽपि बन्धेऽस्ति वैविध्यमिति चेदोमित्याह—

**बन्धश्चानेकविधः—अविद्याग्रन्थिरब्रह्मत्वं हृदयग्रन्थिः संशयः कर्माण्यसर्वकामत्वं[1] मृत्युः पुनर्जन्मेत्यादिशब्दैस्तत्र तत्र व्यवहारात्। त एते बन्धाः सर्वेऽपि ज्ञाननिवर्त्याः। तथा च श्रुतयः—'एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सोम्य'। 'ब्रह्म वेद ब्रह्मैव भवति'।**

**भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।**
**क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे॥**

**'यो वेद निहितं गुहायां परमे व्योमन्'। 'सोऽश्नुते सर्वान्कामान्सह' 'तमेव विदित्वाऽति मृत्युमेति'।**

**यस्तु विज्ञानवान्भवति[2] समनस्कः सदा शुचिः।**
**स तु तत्पदमाप्नोति यस्माद्भूयो न जायते॥**

**'य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवति'। इत्यादीन्यसर्वत्वादि[3]बन्धनिवृत्तिपराणि वाक्यान्यत्रोदाहरणीयानि।**

**बन्धश्चेति।** तत्प्रकारानेवाऽऽह—**अविद्ये**त्यादिना हेतूक्तिव्याजेन। आदिनाऽसार्वात्म्यं ग्राह्यम्। एतन्मूलीभूतानुपदोदाहृतश्रुतिवाक्येष्वन्ते सार्वात्म्यप्रतिबोधकवाक्यस्यैव ज्ञानफलकथनार्थत्वेनोदाहृतत्वात्। ननु केन वा साधनेनैते निवर्तन्त इत्याशङ्कायां समाधत्ते—**एत** इत्यादिना। एतेन ज्ञाननिवर्त्यत्वरूपं विवरणाचार्यसंमतमद्वैतसिध्युक्तं मिथ्यात्वं सर्वेषामपि बन्धानामुक्तं भवति। अथ श्रुतय एवोक्तबन्धनामव्यवहारस्थलत्वेन संमता इति स्वाकूतं स्पष्टयति—**तथा चेति**। ता एव यथोद्देशक्रमं लिखति—**एतद्यो वेदे**त्यादिना। अविद्याग्रन्थिम्, अहमज्ञ इत्यविद्यातादात्म्याध्यासमित्यर्थः। **सोम्येति**। शौनकाख्यशिष्यं प्रत्यङ्गिरःसंज्ञस्य गुरोर्मुमुक्षुत्वेन प्रियदर्शनत्वात्संबुद्धिः। गुहा तु पञ्चकोशरूपा प्रसिद्धैव। हृदयग्रन्थिरन्तःकरणेन सहाहं मन्ताऽहं बोद्धेत्यादितादात्म्याध्यास एव। परमे, अव्याकृतत्वेनोत्कटे। व्योमन्, देशपरिच्छेदविधुरेऽज्ञान इति यावत्। निहितं, तदावृतत्वेन तत्र स्थापितमिवेत्यर्थः। **सहेति**। ब्रह्मणा विपश्चितेति वाक्यशेषात्स्वप्रकाशत्वेन वास्तविक-

---

१ घ. च. °र्माणि स°। २ क. ख. ग. घ. च. °ति अम°। ३ क. क. ग. घ. ङ. च. °र्वज्ञत्वा°।

कूटस्थज्ञानरूपेण यावद्दृश्यसाक्षित्वोपलक्षितब्रह्मणा दैशिकादित्रिविधपरिच्छेदशून्येन सन्मात्रवस्तुना साकमित्येतत्। एतेन मूलाज्ञाननाशात्पारमार्थिकैक्यलक्षणकैवल्यावस्थायामखण्डानन्दरूपतया मनुष्यानन्दादिहैरण्यगर्भानन्दातिर्द्योत्यते। **असर्वत्वादीति**। अत्राऽऽदिना 'ब्रह्मविदाप्नोति परम्' इतिवाक्यप्रभृतीति परशब्दितनिरतिशयानन्दप्रतियोगिकापरप्राप्त्यादिनिवृत्तिवाक्यानि।

एवं विदेहमुक्तेस्तत्त्वसाक्षात्कारसमकालीनत्वं प्राग्भूयः प्रबोधितमपि विस्मरणशीलं शिष्यं प्रत्याचार्यः करुणया प्रतिबोधयति **सेय**मित्यादिना—

**सेयं विदेहमुक्तिर्ज्ञानोत्पत्तिसमकालीना ज्ञेया। ब्रह्मण्यविद्यारोपितानामेतेषां बन्धानां विद्यया विनाशे सति पुनरुत्पत्त्यसंभवादनुमवाच्च। तदेतद्विद्यासमकालीनत्वं भाष्यकारः समन्वयसूत्रे प्रपञ्चयामास—'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्' इति। ननु वर्तमानदेहपातानन्तरभाविनी विदेहमुक्तिरिति बहवो वर्णयन्ति। तथा च श्रुतिः—'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' इति। वाक्यवृत्तावप्युक्तम्—**

**प्रारब्धकर्मवेगेण जीवन्मुक्तो यदा भवेत्।**
**कंचित्कालमथाऽऽरब्धकर्मबन्धस्य संक्षये॥**
**निरस्तातिशयानन्दं वैष्णवं परमं पदम्।**
**पुनरावृत्तिरहितं कैवल्यं प्रतिपद्यते॥ इति।**

**सूत्रकारोऽप्याह—'भोगेन त्वितरे क्षपयित्वा संपद्यते' इति। इतरे प्रारब्धपुण्यपापे। वसिष्ठोऽप्याह—**

**जीवन्मुक्तपदं त्यक्त्वा स्वदेहे कालसात्कृते।**
**विशत्यदेहमुक्तत्वं पवनोऽस्पन्दतामिव॥ इति।**

**नायंदोषः, विवक्षाया विशेषेण मतद्वयस्याविरोधात्। विदेहमुक्तिरित्यत्रानेन देहशब्देन कृत्स्नं देहजातं विवक्षित्वा बहुभिर्वर्णितम्। अस्माभिस्तु भाविदेहमात्रविवक्षयोच्यते। तदनारम्भायैव ज्ञानसंपादनात्। अयं तु देहः पूर्वमेवाऽऽरब्धः। अतो ज्ञानेनाप्यस्याऽऽरम्भो वारयितुं न शक्यते। एतद्देहनिवृत्तिरपि न ज्ञानफलम्। अज्ञानिनामप्यारब्धकर्मक्षये तन्निवृत्तेः।**

---

१ क. ख. ङ. °दनु°। २ क. ख. ग. ङ. ञ. °त्यत्रत्येन।

तच्छब्देदंशब्दावुपक्रमानुभवयोरेव निगमनव्याजेन व्यञ्जकौ । तत्र हेतू आह— **ब्रह्मणी**त्यादिना । तत्रासांप्रदायिकत्वशङ्कां शमयति—**तदेतदि**त्यादिना । तत्रापि शङ्कते—नन्वित्यादिना । एवं बहुवादिसंमताऽपि निरुक्तशङ्का भगवतो भाष्यकारस्य पुरस्ताद्भास्करोदयसमये तिमिरोच्चयवत्कत्तृणायमानैवेत्यत आह—**तथा चेति** । तस्य जीवन्मुक्तस्य । तावदेव, तावत्कालपर्यन्तमेव । चिरं, द्वैतध्वस्त्युपलक्षिताद्वैतात्मरूपकैवल्याय विलम्ब इत्यर्थः । यावन्न विमोक्ष्ये, यावत्कालपर्यन्तं प्रारब्धफलं निःशेषमुपभुज्य दृश्यं न त्यजति । अथ, प्रारब्धफलनिरवशेषोपभोगाव्यवहितलोकदृष्टिकल्पितोत्तरक्षण एवेति यावत् । संपत्स्ये, संपत्स्यति निरुक्तकैवल्यं प्राप्तमेव द्वैताप्रतीत्या प्राप्नोतीवेत्यर्थः । तदुक्तं तैत्तिरीयवार्तिके—

सत्यादिलक्ष्याज्ज्ञानोत्था सत्याद्यर्थनिषेधधी-<br>
वर्त्मनैवाऽऽत्समाप्नोति केवलाज्ञानहानतः ॥<br>
एवं ज्ञातं विजानाति विमुक्तश्च विमुच्यते ।<br>
निवर्तते निवृत्तं च त्रिर्वः शपथयाम्यहम् । इति ।

ननूक्तसूत्रभाष्यविरोध इयं श्रुतिरपि तदनुरोधेनैव व्याख्येयेत्यत आह—**वाक्येति** । भाष्यकारचरणैरेवेति शेषः । तच्छ्लोकावेव पठति—**प्रारब्धे**त्यादिना । यदा, अविद्याध्वस्तिकारकाद्वैतप्रमितिक्षण इत्यर्थः । एवं च सद्योमुक्त्यर्थमेवोक्तप्रमा प्रवृत्ता तथाऽपि प्रारब्धकर्मवेगेण कृष्णेच्छया पार्थरथदाहकाश्वत्थामब्रह्मास्त्रवत्सा किंचित्कालं प्रतिबध्यत एवेति भावः । तत्र सूत्रमप्यनुकूलयति—**सूत्रेति** । तद्विवृणोति—**इतरे इति** । वासिष्ठवचोऽप्युदाहरति—**वसिष्ठ** इत्यादिना । **अस्पन्देति** । न विद्यते स्पन्दो यस्य तत्तां नभस्तामिव । सरलमेवापरम् ।

एवं नायं दोष इत्यादिना विदेहमुक्तिविषयकाक्षेपस्य विवक्षाविशेषद्वारकसमाधाने कृतेऽपि तत्र परमते कृत्स्नं देहजातमित्यत्र कृत्स्नपदेन वर्तमानदेहस्तथा भाविदेहस्तद्वल्लिङ्गदेहश्चेति देहत्रयमपि मुक्तौ ध्वंसप्रतियोगित्वेन विवक्षितमिति निर्विवादमेव । स्वमते तु भाविस्थूलदेहमात्रमेव तथेति सयुक्तिकमुक्त्वा वर्तमानदेहनिवृत्तिरपि ज्ञानफलत्वेन वक्तुं न शक्यत इत्यपि सहेतुकमुक्तं, तत्र शिष्यादिः शङ्कते **तर्हि वर्तमाने**त्यादिना—

**तर्हि वर्तमानलिङ्गदेहनिवृत्तिर्ज्ञानफलमस्तु । ज्ञानमन्तरेण तदनिवृत्तेरिति चेन्न । सत्यपि ज्ञाने जीवन्मुक्ते तन्निवृत्त्यभावात् । ननु ज्ञानस्य किंचित्कालं प्रारब्धेन कर्मणा प्रतिबद्धेनानिवर्तकत्वेऽपि प्रतिबन्धक्षये लिङ्गदेहनिवर्तकत्वं भविष्यतीति चेन्न । पञ्चपादिकाचार्येण ‘ यतो**

---

१ क. ख. ग. घ. ङ. च. °क्तेस्तन्नि° ।

ज्ञानमज्ञानस्यैव निवर्तकम् ' इत्युपपादितत्वात् । तर्हि लिङ्गदेहनिवृत्तेः किं साधनमिति चेत्सामग्रीनिवृत्तिरिति ब्रूमः । द्विविधं हि कार्यनिवर्तकं विरोधिसद्भावः सामग्रीनिवृत्तिश्च । तद्यथा विरोधिना वायुना तैलवर्तिसामग्रीनिवृत्त्या वा दीपो निवर्तते । लिङ्गदेहस्य साक्षाद्विरोधिनं न पश्यामः । सामग्री द्विधा प्रारब्धमनारब्धं चेति । ताभ्यामुभाभ्यामज्ञानिनां लिङ्गदेह इहामुत्र चावतिष्ठते । ज्ञानिनां त्वनारब्धे ज्ञानेन निवृत्ते प्रारब्धे च भोगेन निवृत्ते तैलवर्तिरहितप्रदीपवत्सामग्रीनिवृत्त्या लिङ्गदेहो निवर्तते । अतो न तन्निवृत्तिर्ज्ञानफलम् ।

अत्र वर्तमानपदं साक्षात्परम्परया च ज्ञानकारणत्वेन वर्तमानो यो लिङ्गदेह इत्यादिविग्रहमात्रसूचकं न तु भाविलिङ्गशरीरव्यावर्तकम् । तत्प्रापकसामग्र्यभावादिति भावः । तत्र हेतुमाह—**ज्ञानमन्तरेणे**त्यादिना । अथोक्तशङ्कां सिद्धान्त्यनूद्य तद्विदलनं प्रतिजानीते—**इति चेन्नेति** । तत्र हेतुं प्रतिपादयति—**सत्यपी**त्यादिना । तत्राप्याशङ्क्य सप्रमाणं समाधत्ते—**नन्वि**त्यारभ्यो**पपादितत्वादि**त्यन्तेन । एवं लिङ्गदेहभङ्गे साधनममन्वानः पृच्छति—**तर्ही**त्यादिना । तत्प्रश्नमनूद्य सिद्धान्ती समाधत्ते—**इति चेत्सामग्री**त्यादिना । तत्रोपपत्तिमाह—**द्विविधं ही**त्यादिना । तद्वैविध्यमेवाऽऽह—**विरोधी**त्यादिना । तदुदाहरति—**तद्यथे**त्यादिना । तत्र दार्ष्टान्तिके प्रकृते प्रथमाभावमाह—**लिङ्गेति** । परिशेषादन्त्यावशेषे तत्रापि द्वैविध्यं विधत्ते—**प्रारब्धमि**त्यादिना । अत्रानारब्धपदेन तत्तत्संचितानि ग्राह्याणि । अग्रिमप्रारब्धोपयोगित्वाच्च । तत्र हेतुं द्योतयति—**ताभ्यामि**त्यादिना । ननु तिष्ठत्वेवमज्ञानिनां लिङ्गदेहस्ताभ्यां परं तु ज्ञानिनां मुक्त्यर्थं तन्निवृत्तिरावश्यक्येव सा कथं तत्राऽऽह—**ज्ञानिनां त्वि**त्यादिना । फलितमाह—**अत इति** ।

तत्राप्युक्तयुक्त्यैव शङ्कते—

नन्वनेन न्यायेन भाविदेहानारम्भोऽपि[1] न ज्ञानफलम् । तथाहि किमनारम्भ एव फलं किंवा तत्प्रतिपालनम् । नाऽऽद्यः । तस्य प्रागभावरूपत्वेनानादिसिद्धत्वात् । न द्वितीयः, अनारब्धकर्मरूपसामग्रीनिवृत्त्यैव भाविदेहारम्भप्रागभावप्रतिपालनसिद्धेः । न च तन्निवृत्तिः फलम् । अविद्यानिवृत्तेरेव विद्याफलत्वात् । नैष दोषः । भाविजन्मानारम्भादीनां विद्याफलत्वस्य प्रामाणिकत्वात् । 'यस्माद्भूयो न जायते ' इत्याद्युदाहृतश्रुतयस्तत्र प्रमाणम् । न च ज्ञानमज्ञानस्यैव निवर्तकमिति न्यायेन विरोधः । अज्ञानसहभावनियतानामब्रह्मत्वादीनामज्ञानशब्देन पञ्चपादिकाचार्यैर्विवक्षितत्वात् ।

---

१ क. ख. ग. घ. ङ. च. 'पि ज्ञा' ।

**नन्विति ।** तदुपपादयति—**तथा ही**त्यादिना । तत्र विकल्प्य पृच्छति—**किम-नारम्भ एवे**त्यादिना । तत्राऽऽद्यं प्रत्याह—**नाऽऽद्य इति ।** तत्र हेतुं तार्किकमत-रीत्याऽऽह—**तस्येति ।** द्वितीयं निराकरोति—**नेति ।** तत्रापि हेतुमाह—**अनारब्धे-**त्यादिना । आशङ्क्य दूषयति—**न चेति ।** तत्र हेतुं प्राक्समुदाहृतपञ्चपादिकारीत्यैव प्रतिपादयति—**अविद्ये**त्यादिना । अथ सिद्धान्ती निरुक्ताशङ्कां प्रशमयितुं प्रतिजानीते—**नेति ।** तत्र हेतुं प्रतिबोधयति—**भावी**त्यादिना । ननु भाविजन्मानारम्भादयोऽप्यद्वै-तब्रह्मात्मैक्यविषयकापरोक्षज्ञानफलमित्यस्य प्रामाणिकत्वं यत्प्रतिज्ञातं तर्हि कानि तत्प्रतिबोध-कानि प्रमाणानीत्यत आह—**यस्मादि**त्यादिना । अत्र बहुवचनेन ‘ एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सोम्य ’ इत्यादयः प्रागुदाहृताः सर्वा अपि श्रुतयो ग्राह्याः परम्परया भाविजन्माभावप्रतिपादिकाः । प्रकृतश्रुतिस्तु ‘ यस्तु विज्ञानवान्भवति’ इत्यादिरूपा साक्षादेव तत्प्रतिपादिकेति सैवोदाहारि । अथैवं तर्हि त्वयैव प्रागुदाहृतश्रीमत्प-ञ्चपादिकाचार्यवचनविरोध इति शङ्कनमयुक्तमेवेति प्रतिजानीते—**न चे**त्यादिना । **न्यायेनेति ।** सयुक्तिकवाक्येन सहेत्यर्थः । तत्र तद्विवक्षालक्षणं हेतुं स्पष्टयति—**अज्ञाने-**त्यादिना । अत्राहमज्ञ इत्यविद्यातादात्म्याध्यासेऽविद्याग्रन्थ्याख्ये तन्निवृत्तिनान्तरीयकनिवृत्तेः सर्वसंमतत्वाज्जपाकुसुमादिसांनिध्यनिवृत्तौ स्फटिकरक्तिमनिवृत्तिदर्शनाच्च तत्त्याग इत्याशयः । नन्वेवमप्यज्ञानेत्यादिविशेषणमब्रह्मत्वादीनां किमितीति चेन्न । अज्ञानलक्षणे धर्मिण्यब्रह्म-त्वादीनां तद्ग्रन्थ्याख्यतदध्यासवत्तन्निवृत्तिसमकालनिवृत्तिकथनार्थं तादात्म्यावेदनाय सार्थ-क्यात् । तद्यथा—अब्रह्मत्वं हि ब्रह्मप्रतियोगिक आत्मानुयोगिको भेदापरनामाऽन्योन्याभाव एव, अहं ब्रह्म न भवामीति प्रायः सर्वाज्ञजीवानुभवात् । स चाज्ञानवन्निर्वचनानर्हतया तावन्निर्वचनानर्ह एव । तथा हि—प्रतियोग्यादिज्ञानमन्तरा सामान्यतः संसर्गाभावस्यापि ज्ञानं न जायते किमुतान्योन्याभावात्मनो भेदस्य । एवं च ब्रह्मणि प्रतियोगिता चाऽऽत्म-न्यनुयोगिताऽपि भेदज्ञानमात्रायत्ता तद्भेदज्ञानं चोक्तप्रतियोगितादिज्ञानैकसाध्यमिति परस्परा-श्रयः । किंच प्रथमं प्रतियोगिताश्रयीभूतस्य ब्रह्मण एव ज्ञानं सकलं भेदं ग्रसदेव संभवति । तदन्तरा तदुदयस्य कालत्रयेऽप्यसंभवात् । तथा च क्व भेदसिद्ध्याशाऽपि । तदुक्तं वार्तिक-कारचरणैः—

> अव्यावृत्ताननुगतं वस्तु ब्रह्मेति भण्यते ।
> ब्रह्मार्थो दुर्लभोऽत्र स्याद्द्वितीये सति वस्तुनि ॥ इति ।

न च ‘ अस्ति ब्रह्मेति चेद्वेद ’ ‘ सन्तमेनं ततो विदुः ’ इति श्रुतेः ‘ परोक्षं ब्रह्म-विज्ञानं शाब्दं देशिकपूर्वकम् ’ इति तत्त्वविवेकोदाहृतसूतसंहितास्मृतेश्च ब्रह्मणः परोक्षज्ञा-नस्य भेदाविरोधिनोऽपि संभव इति सांप्रतम् । तथाऽपि तत्र प्रतियोगिताज्ञानसिद्धेर्भेदासि-

द्वयैकापेक्षतयोक्तदोषतादवस्थ्यात् । किंचाज्ञानसहभावनियतानामब्रह्मत्वादीनामितिविशेषणाद्ब्रह्मत्वादेरनादित्वं त्वज्ञानवत्तत्सहभावनैयत्याविनाभावसिद्धमेव । तथा च कथं 'षडस्माकमनादयः' इति कारिकायां पूर्वाचार्यकृतमनादिवस्तुसंपरिगणनमपि संगच्छेत । तस्मात्—

अविद्याया अविद्यात्व इदमेव तु लक्षणम् ।
यत्प्रमाणासहिष्णुत्वमसाधारणमिष्यते ॥

इति वार्तिकोक्तेः प्रमाणपदवाच्यविचारजन्यानुमानासहिष्णुत्वेनाब्रह्मत्वस्याज्ञानानतिरिक्तत्वमेवेति सिद्धम् । तथा च न पञ्चपादिकाचार्यवचनविरोधगन्धोऽपि । मूले तदविरोधार्थमज्ञानसहभावेत्यादिस्तद्विवक्षोपपादनग्रन्थस्तु स्थूलदृगनुरोधेनैवेति ध्येयं धीरैः । न चैवं तर्ह्यन्यथाऽनुभवविरोध इत्यादिर्निवृत्तिरपीत्यन्तः प्रकृतोत्तरग्रन्थः कथमब्रह्मत्वादेरज्ञानानतिरेके संगतः स्यादिति वाच्यम् । ज्ञानप्रागभावनिवृत्त्यनुभववदुक्तानुभवस्यापि सामञ्जस्यादिति संक्षेपः । एवं प्रागुद्दिष्टाष्टविधबन्धमध्येऽविद्याग्रन्थिरब्रह्मत्वं च विचारितम्, इदानीं क्रमप्राप्तस्तृतीयो हृदयग्रन्थिरसौ विचार्यते । तत्र स तावदधस्ताद्विद्वत्संन्यासप्रस्तावे भिद्यते हृदयग्रन्थिरितिश्रुतिव्याख्यानावसरे यथाश्रुत एव वर्णितः—हृदये बुद्धौ साक्षिणस्तादात्म्याध्यासोऽनाद्यविद्यानिर्मितत्वेन ग्रन्थिवद्दृढसंश्लेषरूपत्वाद्ग्रन्थिरित्युच्यत इति । चित्रदीपे तु मूलकृद्भिरेव 'यदा सर्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः' इति श्रुत्यन्तरविवरणेऽसौ प्रकारान्तरेण विशेषत एव—

यदा सर्वे प्रभिद्यन्ते हृदयग्रन्थयस्त्विति ।
कामा ग्रन्थिस्वरूपेण व्याख्याता वाक्यशेषतः ॥
अहंकारचिदात्मानावेकीकृत्याविवेकतः ।
इदं मे स्यादिदं मे स्यादितीच्छा कामशब्दिता ॥
अप्रवेश्य चिदात्मानं पृथक्पश्यन्नहंकृतिम् ।
इच्छंस्तु कोटिवस्तूनि न बाधो ग्रन्थिभेदतः ॥
ग्रन्थिभेदेऽपि संभाव्या इच्छाः प्रारब्धदोषतः ।
बुद्ध्वाऽपि पापबहुल्यादसंतोषो यथा तव ॥
अहंकारगतेच्छाद्यैर्देहव्याध्यादिभिस्तथा ।
वृक्षादिजन्मनाशैर्वा चिद्रूपात्मनि किं भवेत् ॥
ग्रन्थिभेदात्पुराऽप्येवमिति चेत्तन्न विस्मर ।
अयमेव ग्रन्थिभेदस्तव तेन कृती भवान् ॥
नैवं जानन्ति मूढाश्चेत्सोऽयं ग्रन्थिर्न चापरः ।
ग्रन्थितद्भेदमात्रेण वैषम्यं मूढबुद्धयोः ॥ इति ।

अनुभूतिप्रकाशेऽपि मुण्डकीयप्रथमश्रुतिव्याख्याने—

अहंकारस्य कर्तृत्वं चित्यध्यस्य तथा चितः ।
स्फूर्तिं चाहंकृतौ ग्रन्थिं कुर्यान्माया तयोर्दृढम् ॥ इति ।

एवं तत्रैव कठीयद्वितीयश्रुतिविवृतावपि—

अहंकारेण चैतन्यं ग्रथित्वेच्छति चेत्तदा ।
हृदयग्रन्थयः कामास्ते भिद्यन्ते विवेकिनः ॥ इति च ।

तत्रात्रत्य एवाऽऽद्यव्याख्याने हृदये बुद्धौ साक्षिणस्तादात्म्याध्यासोऽनाद्यविद्यानिर्मितत्वेनेत्यादिना हृदयग्रन्थिस्वरूपमुक्तम् । तथा च—

तमःप्रधानप्रकृतेस्तद्भोगायेश्वराज्ञया ।
वियत्पवनतेजोम्बुभुवो भूतानि जज्ञिरे ॥
सत्त्वांशैः पञ्चभिस्तेषां क्रमाद्धीन्द्रियपञ्चकम् ।
श्रोत्रत्वगक्षिरसनघ्राणाख्यमुपजायते ॥
तैरन्तःकरणं सर्वैर्वृत्तिभेदेन तद्द्विधा ।
मनो विमर्शरूपं स्याद्बुद्धिः स्यान्निश्चयात्मिका ॥

इति तत्त्वविवेके मूलकारोक्तरीत्यैव बुद्धेः प्रकृतश्रुतौ हृदयपदवाच्यत्वेनेष्टाया जन्यत्वेन साक्षिणस्तत्र तादात्म्याध्यासोऽपि जन्य एव स्यात् । तेन बुद्धिप्रतिबिम्बितचैतन्यस्य जीवस्य कार्योपाधिरयं जीव इति श्रुतिसिद्धस्यापि जन्यत्वेऽकृताभ्यागमापत्तिः, जन्यभावत्वेन विनाशित्वनैयत्यात्कृतविप्रणाशापत्तिः, 'अजो ह्येको जुषमाणोऽनुशेते, इति श्रुतिव्याकोपापत्तिः'

जीव ईशो विशुद्धा चित्तथा जीवेशयोर्भिदा ।
अविद्या तच्चितोर्योगः षडस्माकमनादयः ॥

इति प्राचीनाचार्यवचनसंकोचापत्तिश्च स्यात् । यद्येतत्परिजिहीर्षयाऽनाद्यविद्यानिर्मितत्वेनेत्यादिवाक्यशेषस्वारस्येन च बुद्ध्यादेरनादित्वमेवोररी क्रियेत चेत्तर्हि तज्जन्यत्वप्रतिपादकानां कार्योपाधिरयं जीव इत्यादिशास्त्राणां विरोधापातः प्रसज्येत । यद्यजो ह्येक इत्यादिश्रुत्या

' यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन् ।
उपाधिना क्रियते भिन्नरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा ' ॥

इति सोपपत्तिकोक्तश्रुत्यनुग्राहकश्रुत्यादिना च सहाविरोधार्थं बुद्ध्यादिजन्यत्वप्रतिपादकश्रुत्यादेः प्रलये सुप्त्यादाविव बीजाख्यसूक्ष्मरूपेण स्थितस्य बुध्यादेः सृष्ट्यारम्भकाल आविर्भावमात्रपरत्वमुच्यते चेत्तर्हि सत्कार्यवादः स्यात् । इष्टापत्तौ किमपराद्धं सांख्येनेति चेच्छृणु रहस्यम् । यदसौ नानिर्वचनीयां ज्ञानैकनिवर्त्यामविद्यां श्रुत्यादिसिद्धामपि मनुत इत्येतदेव तेनापराद्धम् । एवं तर्हि बुध्यादेरुपादानीभूता सैवास्तु हृदयग्रन्थिपदेन प्रकृते । तथा चाहं-

कारगतेच्छाद्यैरित्यादिना चित्रदीपेऽपि चिन्मात्रात्मनस्त्रैकालिकासङ्गत्वं प्रतिपाद्य ग्रन्थिभेदात्पुराऽप्येवमिति चेत्तन्न विस्मरेत्यनेन तच्छिष्यानुभवाधिरूढमनुवादेन दृढीकृत्यायमेवेत्यादिना चिन्मात्रात्मासङ्गत्वबोधस्यैव ग्रन्थिभेदत्वं विधाय नैवं जानन्तीत्यादिना मूढबुद्ध्योरित्यन्तेन कण्ठत एव ग्रन्थेः प्रकृतस्याविद्यामात्ररूपत्वमुपपादितमपि संगच्छेत । एतेन भिद्यते हृदयग्रन्थिरिति मुण्डकश्रुतिगतहृदयग्रन्थिपदार्थनिर्णायकमहंकारस्य कर्तृत्वमित्याद्यनुभूतिप्रकाशवाक्यं तथा 'यदा सर्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः' इति कठवल्लीगततन्निर्णायकमहंकारेणेत्यादिना तद्वाक्यमपि व्याख्यातम् । कुर्यान्मायेति तस्य मायैकोपादानकत्वात्ते भिद्यन्ते विवेकिन इति ज्ञानैकनाश्यत्वाच्च । न चैवं तर्हि सत्कार्यवादेन सर्वस्यापि द्वैतस्याविद्यैकरूपत्वं स्यादिति सांप्रतम् । इष्टापत्तेः । अत एवाद्वैतसिद्धौ विवरणमतेन ज्ञाननिवर्त्यत्वमेव मिथ्यात्वमित्युपपादितं विस्तरत एव । एवं च 'अविद्यास्तमयो मोक्षः सा च बन्ध उदाहृतः' इति वार्तिकमप्यत्रैवानुकूलमिति वेदितव्यम् । एतेन संशयादयोऽग्रिमाः सर्वेऽपि बन्धा व्याख्याताः । तथा हि—सर्वस्यापि द्वैतस्याविद्याविद्यमानत्वेन तदेकोपादानकत्वात्तन्मात्ररूपत्वं मृद्घटादिवत्सुघटमेव । नन्वेवं चेत्तर्हि मूलकारैरेव सप्रमाणं सलक्षणं किमिति निरुक्तविविधबन्धविधानमभ्यधायि । सत्यम् । तस्य प्रकृतजीवन्मुक्तिसाधनीभूतवासनाक्षयनिरूपणप्रकरणेऽत्र ज्ञानस्य गौणत्वमेव मुख्यत्वं तु तस्यानादिभावरूपाविद्याकृतविविधबन्धविध्वंसनद्वारा कैवल्याख्यविदेहमुक्तिदान इति प्रतिबोधनार्थत्वात्, मूलाज्ञाननिवृत्तितुल्यकालैकासिद्धानिवृत्तिकानुभूयमानयावद्भावाभावात्मकभ्रमव्युत्पादनार्थत्वात्, ततः प्रतिक्षणतत्त्वानुसंधानसौकर्योपयोगाच्च । तत्र संशयस्वरूपं त्वधस्तादेव मूले—

' भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ' ॥

इति श्रुतिविवृतावेव कर्मस्वरूपेण सहैवोक्तम् । आत्मा साक्षी कर्ता वा । साक्षित्वेऽप्यस्य ब्रह्मत्वमस्ति न वा । ब्रह्मत्वेऽपि तद्बुध्या वेदितुं शक्यते न वा । शक्यत्वेऽपि तद्वेदनमात्रेण मुक्तिरस्ति न वेत्यादयः संशयाः । कर्माण्यनारब्धान्यागामिजन्मकारणानीति । एवमसर्वकामत्वं मृत्युः पुनर्जन्म, असर्वत्वं चेति स्पष्टमेवावशिष्टबन्धचतुष्टयम् । तेनोक्तरीत्या सूक्ष्मतमविवेचने सर्वेषामेतेषामनेकेषामप्येवंजातीयकानां वक्ष्यमाणानां बन्धानामविद्यामात्रान्वयव्यतिरेकसत्त्वासत्त्वानुभवात्तन्तुपटवत्तदेकरूपत्वमिति दिक् । इदमत्र रहस्यम्—

साभासाऽवित्स्वगावृत्त्यखिलतनुभवानर्थशक्तित्रयं च
स्वेड्भिच्चिन्मोहयोगस्त्रयमिति सच्चिदाभासतादात्म्यमोहम् ।
प्रोक्तं सिद्धान्तबिन्दौ दशकमिति यदव्याकृतं तत्र सर्वे
बन्धा अब्रह्मताद्या अपि भिदि युजि वा मोहतोऽन्तर्भवन्ति ॥ इति ।

सेति साभासमूलाविद्या । स्वेति स्वनिष्ठावरणसूक्ष्मस्थूलप्रपञ्चोत्पादनबीजविक्षेपाख्य-शक्तित्रयमपि । स्वोऽिति जीवेशभेदः । तथा—चिदिति अविद्याचित्संबन्धः । इति त्रयम् । सेति । चिदाभासत्रयतत्तादात्म्यत्रयमूलाविद्यासहितं दशकमित्यर्थः । भिदि जीवेशभेदे । युजि, अविद्याचित्संबन्धे वा ।

ननूक्तबन्धानां पञ्चपादिकाचार्यैरज्ञानपदेन विवक्षितत्वकल्पने किं मानामित्यत आह—

**अन्यथाऽनुभवविरोधः । अनुभूयते ह्यज्ञाननिवृत्तिवद्ब्रह्मत्वादिनि-वृत्तिरपि । तस्माद्भाविदेहराहित्यलक्षणा विदेहमुक्तिर्ज्ञानसमकालीना । तथा च याज्ञवल्क्यवचनं श्रूयते—' अभयं वै जनक प्राप्तोऽसि ' इति । ' एतावदरे खल्वमृतत्वम् ' इति च । श्रुत्यन्तरेऽपि—'तमेवं विद्वानमृत इह भवति ' इति । यद्युत्पन्ने तत्त्वज्ञाने तत्फलभूता विदेहमुक्तिस्तदानीं न भवेत्कालान्तरे च भवेत्तदा ज्योतिष्टोमादाविव ज्ञानजन्यमपूर्वं किंचि-त्कल्प्यते । तथा च कर्मशास्त्र एव ज्ञानशास्त्रमन्तर्भवेत् । अथोच्येत । मन्त्रादिप्रतिबद्धाग्निवत्प्रारब्धप्रतिबद्धं ज्ञानं कालान्तरे विदेहमुक्तिं दास्यतीति । नैवम् । अविरोधात् । न ह्यस्मदभिमता भाविदेहात्यन्ता-भावलक्षणविदेहमुक्तिर्वर्तमानदेहमात्रस्थापकेन प्रारब्धेन विरुध्यते । येन प्रतिबध्येत । किंच क्षणिकत्वेन कालान्तरे स्वयमविद्यमानं ज्ञानं कथं मुक्तिं दद्यात् । ज्ञानान्तरं चरमसाक्षात्कारलक्षणमुत्पत्स्यत इति चेन्न । साधनाभावात् । प्रतिबन्धकप्रारब्धनिवृत्त्यैव सह गुरुशास्त्रदेहे-न्द्रियाद्यशेषजगत्प्रतिभासनिवृत्तेः किं[1] तत्साधनं स्यात् ।**

**अन्यथेति** । एवं चानुभवानुपपत्तिरेवात्र मानमित्यर्थः । तदुक्तं वार्तिके—

अन्यथानुपपत्तिश्चेदस्ति वस्तुप्रसाधिका ।
पिनष्टयदृष्टिवैमत्यं सैव *सर्वबलायते ।। इति ।

नन्वसावप्यनुभूतिरज्ञानां चेत्तुच्छैवेत्यत्राऽऽह—**अनुभूयते** हीत्यादिना । हिरवधारणे प्रसिद्धौ वा । ' प्राणोऽस्मि प्रज्ञात्मा ' इति कौषीतकिश्रुताविन्द्रवाक्यं प्रतर्दनं प्रति । ' अहमात्मा गुडाकेश ' इत्यर्जुनं प्रति स्मृतौ भगवद्वाक्यमपि । ' तदेकोऽवशिष्टः शिवः केवलोऽहम् ' इति भगवतो भाष्यकारचरणारुणनलिनस्यापि दशश्लोक्यां वाक्यानि ।

* छ. ' बलाधिका ' इति पाठान्तरम् ।

१ क. ख. ग. घ. ङ. च. किं ते साध° ।

फलितमाह—**तस्मादिति** । तत्र मानमाह—**तथा चेति** । तद्वाक्यमेव पठति—**अमयं वा इति** । तत्रान्यश्रुतिमपि मैत्रेयीब्राह्मणगां समुच्चिनोति—**एतावदिति** । श्रुत्यन्तरमपि संवादयति—**श्रुत्यन्तरेऽपी**त्यादिना । एवं योगानन्देऽपि—

ब्रह्मवित्परमाप्नोति शोकं तरति चाऽऽत्मवित् ।
रसो ब्रह्मरसं लब्ध्वाऽऽनन्दी भवति नान्यथा ॥
प्रतिष्ठां विन्दते स्वस्मिन्यदा स्यादथ सोऽभयः ।
आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन ॥
एतमेव तपेन्नैषा चिन्ता कर्माग्निसंभृता ।
कृते च कर्मणी स्वात्मरूपेणैवैष पश्यति ॥
ज्ञात्वा देवं पाशहानिः क्षीणैः क्लेशैर्न जन्मभाक् ।
देवं ज्ञात्वा हर्षशोकौ जहात्यत्रैव धैर्यवान् ॥
नैनं कृताकृते पुण्यपापे तापयतः क्वचित् ।

इत्यादिफलश्रुतिसूचनादिना । अथ प्रतिवादिसंमतविदेहमुक्तिपक्षेऽनिष्टापत्तिं स्पष्टयति—**यदी**त्यादिना । ततः प्राप्तदोषोद्धारमाशङ्क्य दूषयति—**अथोच्येते**त्यादिना । तत्र हेतुमाह—**अविरोधादिति** । तं व्याकरोति—**न ही**त्यादिना । दूषणान्तरमपि प्रतिवादीष्टविदेहमुक्तिपक्षे प्रक्षिपति—**किं चे**त्यादिना । तत्रापि दोषोद्धारमाशङ्क्य तं प्रशमयति—**ज्ञानान्तरमिति** प्रभृतिना । तत्र हेतुमाह—**साधनेति** । तमुपपादयति—**प्रतिबन्धके**त्यादिना । आदिना तत्संमतचरमप्रमोपादानमन्तःकरणं ग्राह्यम् ।

तत्रापि शिष्यादिश्रुतिविरोधं मन्वानः संस्तदर्थं पृच्छति **तर्ही**त्यादिना—

**तर्हि ' भूयश्चान्ते विश्वमायानिवृत्तिः ' इत्यस्याः श्रुतेः कोऽर्थ इति चेत् । आरब्धान्ते निमित्ताभावाद्देहेन्द्रियाद्यशेषनैमित्तिकनिवृत्तिरित्येवार्थः । ततो भवदभिमता वर्तमानदेहराहित्यलक्षणा विदेहमुक्तिः पश्चादस्तु[1] अस्मदभिमता तु ज्ञानसमकालीनैव । एतदेवाभिप्रेत्य भगवाञ्शेष आह—**

**तीर्थे श्वपचगृहे वा नष्टस्मृतिरपि परित्यजन्देहम् ।**
**ज्ञानसमकालमुक्तः कैवल्यं याति हतशोकः ॥ इति ।**

**तस्माद्विदेहमुक्तौ साक्षात्साधनस्य तत्त्वज्ञानस्य प्रधानत्वमुपपन्नम् । वासनाक्षयमनोनाशयोर्ज्ञानसाधनत्वेन व्यवहितत्वादुपसर्जनत्वम् । आसु-**

---

१ क. ख. ग. घ. ङ. च. °स्तु देहपातानन्तरम् । अ° ।

**रवासनाक्षयकारिण्या दैववासनाया ज्ञानसाधनत्वं श्रुतिस्मृत्योरुपलभ्यते–'शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्येत्' इति श्रुतिः। स्मृतिरपि—**

**अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम्।**
**आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः॥**
**इन्द्रियार्थेषु वैराग्यमनहंकार एव च।**
**जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम्॥**
**असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु।**
**नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु॥**
**मयि चानन्ययोगेन भक्तिरव्यभिचारिणी।**
**विविक्तदेशसेवित्वमरतिर्जनसंसदि॥**
**अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम्।**
**एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा। इति॥**

अथ सिद्धान्ती तदाशङ्कामनूद्य समाधत्ते—**इति चे**दित्यादिना। **निमित्तेति।** उषरधरण्यवच्छेदेन तरणिकिरणसंयोगाभावे प्रागाप्तवाक्यादिना बाधितस्यापि यावदुपाधिप्रतिभासमानमृगजलस्य लयवदित्यर्थः। तेन तदानीं तन्मतसिद्धविदेहमुक्तिमनुमोदते—**तत** इत्यादिना। एवं तर्हि भवदभिमता विदेहमुक्तिः कथमित्यत आह—**अस्मदभिमता त्वि**त्यादिना। तत्र शेषसंमतिं विशेषयति—**एतदेवेति।** परमार्थसारस्थां तदार्यामेव पठति—**तीर्थ इति।** निगमयति—**तस्मा**दित्यादिना। नन्वासुरवासनायाः क्षयकारिण्या दैववासनायास्तत्त्वज्ञानसाधनत्वे किं मानमित्यत्राऽऽह—**आसुरे**त्यादिना। ते एवानुक्रमेणोदाहरति—**शान्त** इत्यादिना **यदतोऽन्यथे**त्यन्तेन। तत्र शान्तिदान्ती त्वन्तर्बहिरिन्द्रियनिग्रहावेव। उपरतिः संन्यासः। तितिक्षा शीतोष्णादिद्वंद्वसहिष्णुता। श्रवणादौ चित्तैकाग्र्यं समाधिः। श्रद्धावित्त इति माध्यंदिनपाठः। तत्र गुरूक्तवेदान्तवाक्यार्थावश्यंभावित्वनिश्चयः श्रद्धा। तदेव वित्तं सर्वस्वं यस्येति विग्रहः। स्मृत्यर्थस्तु स्पष्ट एवाथापि विषमांशं व्याकुर्यादेवानुपदमेवाऽऽचार्यः। विस्तरस्तु गूढार्थदीपिकायां माधुसूदन्यामेव द्रष्टव्य इति शिवम्।

तत्राभिष्वङ्गपदार्थं कथयति—

**अन्यस्मिन्नहंबुद्धिरभिष्वङ्गः। ज्ञायतेऽनेनेति व्युत्पत्त्या ज्ञानसाधनमित्यर्थः। मनोनाशस्यापि ज्ञानसाधनत्वं श्रुतिस्मृतिप्रसिद्धम्—'ततस्तु तं पश्यति निष्कलं ध्यायमानः' इति श्रुतिः। 'अध्यात्मयोगाधिगमेन**

देवं मत्वा धीरो हर्षशोकौ जहाति' इति च। प्रत्यगात्मसमाधिप्राप्त्या देवं ज्ञात्वेत्यर्थः।

यं विनिद्रा जितश्वासाः संतुष्टाः संयतेन्द्रियाः।
ज्योतिः पश्यन्ति युञ्जानास्तस्मै[1] योगात्मने नमः॥ इति स्मृतिः।

तदेवं तत्त्वज्ञानादीनां त्रयाणां विदेहमुक्तिजीवन्मुक्तिवशाद्गुणप्रधानभावव्यवस्था सिद्धा। ननु विविदिषासंन्यासिना संपादितानामेतेषां किं विद्वत्संन्यासादूर्ध्वमनुवृत्तिमात्रं किं वा पुनरपि संपादनप्रयत्नोऽपेक्षितः। नाऽऽद्यः। तत्त्वज्ञानस्येवान्ययोरप्ययत्नसिद्धत्वे प्राधान्यप्रयुक्तादराभावप्रसङ्गात्[2]। न द्वितीयः। इतरयोरिव ज्ञानस्यापि प्रयत्नसापेक्षत्वे सत्युपसर्जनत्वप्रयुक्तौदासीन्याभावप्रसङ्गात्। नायं दोषः। ज्ञानस्यानुवृत्तिमात्रमितरयोर्यत्नसाध्यत्वमित्यङ्गीकारात्। तथा हि—विद्याधिकारी द्विविधः, कृतोपास्तिरकृतोपास्तिश्चेति। तत्रोपास्यसाक्षात्कारपर्यन्तामुपास्तिं कृत्वा यदि ज्ञाने प्रवर्तते तदा वासनाक्षयमनोनाशयोर्दृढतरत्वेन ज्ञानादूर्ध्वं विद्वत्संन्यासजीवन्मुक्ती स्वत एव सिध्यतः। तादृश एव शास्त्राभिमतो मुख्यो विद्याधिकारी। ततस्तं प्रति शास्त्रेषु सहोपन्यासात्स्वरूपेण विविक्तावपि विद्वत्संन्यासविविदिषासंन्यासौ संकीर्णाविव प्रतिभासेते।

**अन्यस्मिन्निति**। पुत्रमित्रकलत्रादावित्यर्थः। एवं प्रकृते ज्ञानपदविवक्षितार्थमपि कथयति—**ज्ञायत** इत्यादिना। नन्वेवमपि मनोनाशस्य ज्ञानसाधनत्वे किं मानमित्यत आह—**मनोनाशस्यापी**त्यादिना। तत्र श्रुती उदाहरति—**ततस्त्वि**त्यादिना। तत्रान्त्यां व्याचष्टे—**प्रत्यगात्मे**त्यादिना। स्मृतिमाह—**यमिति**। फलितमाह—**तदेवमि**त्यादिना। तत्रापि शङ्कते सविकल्पद्वयम्—**नन्वि**त्यादिना। तत्राऽऽद्यं प्रत्याह—**नाद्य इति**। तत्र हेतुं प्रतिपादयति—**तत्त्वे**त्यादिना। द्वितीयं प्रत्याह—**न द्वितीय इति**। तत्र हेतुमाह—**इतरयोरिवे**त्यादिना। समाधातुमथ सिद्धान्ती प्रतिजानीते—**नायमिति**। तत्र हेतुमाह—**ज्ञानस्ये**त्यादिना। तदेवोपपादयति—**तथा ही**त्यादिमा सप्रतिज्ञम्। तत्र संग्रहवाक्यमाह—**विद्याधिकारीति**। तद्द्वैविध्यं समभिधत्ते—**कृते**त्यादिना। आद्यं विशदयति—**तत्रे**त्यादिना। ननु किमिदमुपास्यं को वाऽस्य साक्षात्कारः का वोपास्तिः। तत्राऽऽद्ये किमुप समीप आसितुमस् भुवि भूसत्तायामितिधातुभ्यां वर्तितुं

---

१ क. ख. ङ. °स्मै विद्यात्म°। २ घ. °कान्तरा°।

योग्यमिति व्युत्पत्त्या निकटावस्थानयोग्यं वस्तु कस्तूर्यादि विवक्षितमिति ब्रूषे किं वा गुरु-मुपास्ते राजानमुपास्त इत्यादिप्रयोगाद्रूढ्या गुर्वादिकमेव । आद्ये दृष्टसौगन्ध्यलाभलोभेन स्वत एव प्रवृत्त्युपपत्तौ शास्त्रीयविधिवैयर्थ्यापत्तिः, अन्त्येऽपि प्रयोगव्यवहारादेर्लोकत एव सिद्धावपि गुर्वाद्यनुगतोपास्यतावच्छेदकाज्ञानानिरासेन प्रश्नतादवस्थ्यापत्तिश्चेति । एतेन द्वितीयतृतीयप्रश्नावपि प्रत्युक्तौ । कुड्यचित्रन्यायेन विषयस्यैवासिद्ध्या तयोर्वन्ध्यापुत्रसाक्षात्कारादिसमकक्षत्वेन तद्विषयकप्रश्नासंगतेः । तस्मात्किमत्राऽऽचार्यतात्पर्यमिति चेदुच्यते । ध्यानं नाम मानसी क्रियैवेति समन्वयसूत्रस्थभाष्यवचनाद्यस्यै देवतायै हविर्गृहीतं स्यात्तां ध्यायेद्वषट्करिष्यन्निति । उद्यन्तमस्तं यन्तमादित्यमभिध्यायन्निति । अहरहः संध्यामुपासीतेत्यादिश्रुतिशतेन च संचोदिता ध्यानाद्यपरनामिका भावनाख्या सजातीयमात्रमनोवृत्तिसंततिरेवोपास्तिस्तत्कर्मीभूतं वस्तूपास्यं तद्विषयकश्चाक्षुषप्रमाविशेष एव तत्साक्षात्कार इति । तत्र द्वयोरेतयोरुपास्तिसामान्यैकायत्तरूपनिरूपणत्वादादावुपास्तिरेव विविच्यते । सा चोक्तरूपा ह्युपास्तिर्द्विविधा । प्रतीकाहंग्रहभेदात् । तदुक्तं मदीयाद्वैताधिकरणचिन्तामणिमालाप्रभायां प्रथमाध्यायस्य प्रथमपादीये सप्तमाधिकरणे सामोक्तोद्गीथविद्येत्यादिपद्यप्रकाशे सप्रमाणं सोदाहरणं च । उपासनाविधयश्चतुर्विधाः । तदुक्तं शिवगीतायाम्—

उपासाविधयस्तत्र चत्वारः परिकीर्तिताः ।
संपदारोपसंवर्गाध्यासा इति मनीषिभिः ॥
अल्पस्य चाधिकत्वेन गुणयोगाद्विचिन्तनम् ।
अनन्तं वै मन इति संपद्विधिरुदाहृतः ॥
विधिरारोप्य योपासा साऽऽरोपः परिकीर्तितः ।
यद्वदोंकारमुद्गीथमुपासीतेत्युदाहृतः ॥
क्रियायोगेन(ण) चोपासाविधिः संवर्ग उच्यते ।
संवर्तवायुः प्रलये भूतान्येकोऽवसीदति ॥
आरोपो बुद्धिपूर्वेण य उपासाविधिश्च सः ।
योषित्यग्निमतिर्यद्वत्तदध्यास उदाहृतः ॥
उपसंगम्य बुध्या यदासनं देवतात्मना ।
तदुपासनमन्तः स्यात्तद्बहिः संपदादयः ॥ इति ।

तत्र प्रथमस्य संपद्रूपोपासनविधिप्रतिपादकश्लोकस्य सरलत्वात्तं विहायावशिष्टव्याख्यानमपि तत्रैव मामकम् । विधिरारोप्येति । संबन्धमिति शेषः । तथा च संबन्धमारोप्य योपासा सा विधिरारोपस्तस्या विधिरारोपाख्यः परिकीर्तितो भवतीत्यर्थः । विधावारोप्येति पाठे तु विधीयते प्रधानोपकारकतयेति विधिरङ्गं तत्राऽऽरोप्य योपासेत्यादि प्राग्वत् । तमुदाहरति—यद्वदिति । यथोद्गीथाख्यसामभागस्थितत्वसंबन्धेन प्रणव उद्गीथत्वेनोपासनं विहितं

भवतीत्यर्थः। या क्रियायोगेनो(णो)पासा, उपासना स विधिः संवर्ग उच्यत इति संबन्धः। उदाहरति—संवर्तेति। यथैक एव संवर्तवायुः प्रलये भूतान्यवसीदति तथैक एव प्राणवायुरन्तर्बहिःकरणानि वशी करोतीति क्रियायोगात्प्राणवायुः संवर्गत्वेनोपास्य इत्यर्थः। संहृत्येति पाठे तु वायुर्भूतवायुः प्राणवायुश्च प्रलये महाप्रलये सुषुप्त्याख्ये च। भूतानि सकलभूतान्यग्न्यादीनि प्राणस्तु वागादीनि। एकः, असहाय एव। अवसीदति, अन्तर्भावितण्यर्थः। अवसादयति स्वलीनानि करोतीत्यर्थः। आरोपो बुद्धीति। बुद्धिपूर्वेण बुद्धिः प्रत्यक्षादिजन्यबाधप्रमा सा पूर्वं यत्र तेनेत्यर्थः। य आरोपः स उपासाविधिरारोपाख्यो भवतीत्यर्थः। तमुदाहरति—योषितीति। यद्वद्योषित्यग्निमतिः। 'योषा वाव गौतमाग्निः इत्यादिशास्त्रविहितपञ्चाग्निविद्यायां योषित्यग्नित्वबुद्धिः स उपासाविधिरध्यास आरोप इत्यर्थः। एवं संपदारोपसंवर्गाध्यासरूपां क्रमाद्गुणसंबन्धक्रियाशास्त्रमात्रज्ञायोगाच्चतुर्विधां बाह्यां प्रतीकोपासनामभिधायाधुनाऽऽन्तरामहंग्रहोपासनां सगुणामेवाभिधत्ते—उपसंगम्येति। तादात्म्येन संचिन्त्येत्यर्थः। आसनमवस्थानम्। एवं च देवतात्मना देवतारूपेणेति विवक्षायां सगुणाहंग्रहोपासनाऽपि लक्षिता भवतीति भावः। तस्यैवान्तर्बहिर्भेदेन संज्ञाभेदमभिधत्ते—तदित्यादिना। तथा चात्राऽऽदित्यमण्डलान्तर्गतहिरण्मयपारमेश्वरलीलाविग्रहप्रतीकावच्छेदेन तच्चिन्तनं प्रतीयते। तत्त्वध्यासरूपमेव प्रतीकोपासनं यथा नाम ब्रह्मेत्युपासीतेति शास्त्रान्नाम्नि ब्रह्मत्वबुद्धिः शालग्रामादिप्रतिमायां विष्ण्वादिबुद्धिश्चेति। तत्र यद्यपि सगुणत्वालम्बनेन निर्गुणत्वमेव पर्यवस्यत्यथाप्यहंग्रहाभावेनाऽऽत्मतादात्म्याभावात्कथं पूर्वाधिकरणवत्संवादिभ्रमन्यायेन ब्रह्माहमस्मीत्यनुभववाक्यालम्बनतः प्रत्ययावृत्तिसातत्यात्तदीयपरिपाकेणाप्रतिबद्धब्रह्माद्वैतात्मैक्यप्रमातस्तदज्ञानबाधरूपा मुक्तिः पर्यवस्येत्। तत्र तु पञ्चकोशेष्वपि गुणयोगान्निरुक्तपक्षे संपद्रूपप्रतीकोपासनयैकाग्र्यदार्ढ्ये सति निर्गुणाहंग्रहोपासनया प्रतिबन्धापगमे तत एव वाक्याददैतब्रह्मात्म्यैक्यसाक्षात्कारतो निरुक्तमुक्तिर्निर्बाधैव भवतीति नैवात्र तत्साम्यमिति तत्त्वमिति। एवं च प्रतीकाहंग्रहभेदेन सामान्यत उपासनाया द्वैविध्येऽपि प्रतीकोपासना संपदारोप संवर्गाध्यासभेदाच्चतुर्धा, अहंग्रहोपासना तु सगुणनिर्गुणभेदाद्द्विविधेति षोढैव सर्वाऽप्युपासनेति दिक्। ननु भवत्वेवमुपास्तिस्तत्कर्मीभूतमुपास्यमपि तथाऽपि कथं तद्विषयकश्चाक्षुषप्रमाविशेषलक्षणः साक्षात्कारः सूपपादः। न च काऽत्रानुपपत्तिः। समुदाहृतषड्विधोपासनोपास्यानां मध्ये क्रमात्संपदुपासनोदाहरणस्य मनस्यानन्त्यस्य तद्वदारोपोपासनोदाहरणस्य प्रणवेऽप्युद्गीथत्वस्य तथा संवर्गोपासनोदाहरणस्य संवर्तवायुना साकं प्राणवायावैक्यस्यैवमध्यासोपासनोदाहरणस्य योषित्यग्नित्वस्य चारूपवद्द्रव्यत्वेनाचाक्षुषत्वादिति चेत्सत्यम्। तथाऽपि 'अनन्तं वै मन अनन्ता विश्वे देवाः' इति श्रुतेस्तदधिष्ठातृभूतविश्वेषां देवानां, तथोद्गीताख्यसामभागविशेषाधिष्ठातृभूतस्य साधारण्येन 'वेदानां सामवेदोऽस्मि' इति स्मृतेर्विष्णोः, तद्वत्प्रलयवायुप्रतियोगिकप्राणवाय्वैक्याधिष्ठातृभूतवायोः,

एवं योषिदवच्छिन्नाग्नित्वाधिष्ठातृभूताग्नेश्च विग्रहाणां चाक्षुषप्रत्यक्षयोग्यतायाः संभवादुपपद्यत एवोक्तसाक्षात्कारः प्रतीकोपासनोपास्यानाम् । एतेन सगुणाहंग्रहोपासनोपास्यसाक्षात्कारोऽपि व्याख्यातः । बृहद्योगवासिष्ठेऽहंग्रहेणाऽऽत्मनि विष्णुमुपासितुः प्रह्लादस्य तन्माहात्म्येन तथैव चतुर्भुजाद्यनुभववर्णनात् । निर्गुणाहंग्रहोपासनफलीभूतार्षज्ञानाख्याद्वैतात्मैक्यसाक्षात्कारस्य सर्वसाक्षात्कारोत्तमस्यैव तत्परिपाके प्रागुपपादितत्वान्न काऽप्यत्रानुपपत्तिरिति संक्षेपः । अत्र 'यदि ज्ञाने प्रवर्तते' इति यदिशब्दं प्रयुञ्जताऽऽचार्येणैतादृशाधिकारसंपत्तेः परमदौर्लभ्यं ध्वनितं, तत्कस्माद्धेतोरित्याशङ्क्य तत्तद्देवतासलोकतादिसगुणपञ्चविधगौणमुक्तीनामप्यनादरणादित्याशयेन समादधानः फलितमाह—**तदे**त्यादिना । विष्णुसायुज्यान्तविषयसुखस्य क्षयित्वेनानादरणाद्वासनाक्षयस्य दृढत्वं निरुक्तोपास्यसाक्षात्कारान्तोपासनानुष्ठानस्याङ्गीभूताष्टाङ्गयोगानुष्ठानं विना स्वप्नेऽप्यसंभवान्मनोनाशस्य दृढत्वमिति बोध्यम् । ततः किं तदाह—**ज्ञानादूर्ध्वमि**त्यादिना । स्वत एव । 'एतदेव विदित्वा मुनिर्भवति' इत्यादिश्रुतीनां स्वारस्यपर्यालोचनं विना स्वभावत एवेत्यर्थः । तत्र हेतुं द्योतयति—**तादृश एवेति । शान्तेति** । 'शान्तो दान्तः' इत्यादिश्रुतीनाम्, 'अभयं सत्त्वसंशुद्धिः' इत्यादिस्मृतीनाम्, 'अथातो ब्रह्मजिज्ञासा' इत्यादिसूत्रस्य च संमत इत्येतत् । अस्त्वेवमेतावताऽपि किं प्रकृत इत्यत्राऽऽह—**तत** इत्यादिना । **सहोपन्यासादिति** । 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' इत्यादिविविदिषासंन्यासप्रतिपादकशास्त्रस्य 'एतमेव विदित्वा मुनिर्भवति' इति विद्वत्संन्यासप्रतिपादकशास्त्रादूर्ध्वमव्यवधानेनाऽऽम्नानादिति यावत् । बहुवचनं तु 'किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोकः' इत्यादिश्रुत्यादिसंग्रहार्थमेवेत्याकूतम् ।

ननु भवत्वेवं प्राक्प्रतिज्ञातद्विविधविद्याधिकारिणोर्मध्ये कृतोपास्त्याख्यस्य प्रथमस्यैवं व्यवस्था तथाऽपि द्वितीयस्याकृतोपास्तेः काऽसावित्यत **आहेदानींतनास्त्वि**त्यादिना—

**इदानींतनास्तु प्रायेणाकृतोपास्तय एवौत्सुक्यमात्रात्सहसा विद्यायां प्रवर्तन्ते । वासनाक्षयमनोनाशौ च तात्कालिकौ संपादयन्ति । तावता श्रवणमननिदिध्यासनानि निष्पाद्यन्ते[1] । तैश्च दृढाभ्यस्तैरज्ञानसंशयविपर्ययनिरासात्तत्त्वज्ञानं सम्यगुदेति[2] । तस्य बाधकप्रमाणाभावान्निवृत्तायामविद्यायां पुनरुत्पत्तिकारणाभावाच्च नास्ति तस्य शैथिल्यम् । वासनाक्षयमनोनाशौ तु दृढाभ्यासाभावाद्भोगप्रदेन प्रारब्धेन तदा तदा बाध्यमानत्वाच्च सवातप्रदेशदीपवत्सहसा निवर्तेते । तथा च वसिष्ठः—**

१ क. ख. ग. घ. ङ. च. °निष्पद्य° । २ क. ख. ग. घ. ङ. च. °ति । उदितस्य ज्ञानस्य ।

पूर्वेभ्यस्तु प्रयत्नेभ्यो विषमोऽयं हि संमतः।
दुःसाध्यो वासनात्यागः सुमेरून्मूलनादपि ॥

अर्जुनोऽपि—

चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम्।
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥ इति।

तस्मादिदानींतनानां विद्वत्संन्यासिनां ज्ञानस्यानुवृत्तिमात्रम्। वासनाक्षयमनोनाशौ तु प्रयत्न[1]साध्याविति सिद्धम्। ननु केयं वासना यस्याः क्षयाय प्रयतितव्यमिति चेत्तत्स्वरूपमाह—वसिष्ठः—

दृढ[2]वासनया त्यक्तपूर्वापरविचारणम्।
यदादानं पदार्थस्य वासना सा प्रकीर्तिता ॥
भावितं तीव्रसंवेगादात्मना यत्तदेव सः।
भवत्याशु महाबाहो विगतेतरसंस्मृतिः ॥
तादृग्रूपो हि पुरुषो वासनाविवशीकृतः।
संपश्यति यदैवैतत्सद्वस्त्विति विमुह्यति ॥
वासनावेगवैवश्यात्स्वरूपं प्रजहाति तत्।
[3]भ्रान्तिं पश्यति दुर्दृष्टिः सर्वं मदवशादिव* ॥ इति।

विद्यायामद्वैतब्रह्मविद्यायामित्यर्थः। विषयसप्तमीयम्। सहसा स्वकीयवासनाक्षयादिसामग्रीदार्ढ्यमविचार्यैव प्रवर्तन्त इत्यन्वयः। अत एव—**वासनेति**। अदृढत्यागयोगौ। ततः किं तदाह—**तावतेति**। नन्वेवं चेत्तर्हि तत्फलं न स्यादित्यत आह—**तैश्चेति**। न चैवमपि प्रतिबद्धाग्नेर्दाहाभाववन्मूलाज्ञानध्वंसस्ततो न स्यादिति वाच्यम्। अग्नौ मण्यादिवत्प्रकृते प्रतिबन्धकाभावादित्याह—**तस्येत्या**दिना। तदुक्तम्—

प्रमाणोत्पादिता विद्या प्रमाणं प्रबलं विना।
न नश्यति न वेदान्तात्प्रबलं मानमिष्यते। इति।

---

* क. ख. ङ. पुस्तकेष्वत्र "प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः। न शौचं नापि चाऽऽचारो न सत्यं तेषु विद्यते ॥ असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्। अपरस्परसंभूतं किमन्यत्कामहैतुकम् ॥ एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः। प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः" ॥ इति श्लोकत्रयमधिकं दृश्यते।

---

१ क. ख. ग. घ. ङ. च. °त्नसंपाद्याविति स्थितम्। २ क. ख. ग. घ. ङ. च. °ढभावन°। ३ क. ख. ग. घ. ङ. च. भ्रान्तं।

ननु दीपादिना तमःशमेऽपि तद्विरहे क्षणान्तरे तदुपसर्पणवद्ब्रह्मावरणमज्ञानान्तरेण स्यादेवेति चेन्न । एकाज्ञानपक्षे बुद्धिभेदाज्जीवभेदेऽपि यद्बुद्ध्युपादानाज्ञानशमः समुच्यते, जीवन्मुक्तिपक्षे यावत्प्रारब्धं तल्लेशाभासेन द्वैतप्रतीतिः, नानाज्ञानपक्षे तु न काऽप्यनुपपत्तिः, पल्लवाज्ञानैरेव घटाद्यावरणोपपत्तिश्चेति सर्वव्यवस्थितेरित्याशयेनाऽऽह—**निवृत्तायामि**त्यादिना । तस्य, तत्त्वज्ञानफलीभूताविद्याध्वस्तिरूपप्रागुक्तविदेहमोक्षस्येत्यर्थः । ततः किं प्रकृत इत्यत आह—**वासनाक्षये**त्यादिना । तत्र वासिष्ठगीते प्रमाणयति—**तथा चे**त्यादिना । फलितमाह—**तस्मादि**त्यादिना । ततः सप्रश्नं वासनास्वरूपं सामान्यतः सप्रमाणं निरूपयति—**नन्वि**त्यादिना **मद्वशादि**वेत्यन्तेन । अत्र दृढेतितृतीयान्तेन तदनादित्वं व्यज्यते ।

अत्रोदाहरणाकाङ्क्षायां सामान्यतस्तत्संक्षिपत्य**त्र चे**त्यादिना—

**अत्र च स्वस्वदेशाचारकुलधर्मभाषाभेदतद्गतापशब्दसुशब्दादिषु प्राणिनामभिनिवेशः समान्यत उदाहरणम् । विशेषतस्तु भेदानुक्त्वा पश्चादुदाहरामः । यथोक्तां वासनामभिप्रेत्य बृहदारण्यके श्रूयते—'स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते यत्कर्म कुरुते तदभिसंपद्यते' इति । वासनाभेदो वाल्मीकिना दर्शितः—**

**वासना द्विविधा प्रोक्ता शुद्धा च मलिना तथा ।**
**मलिना जन्महेतुः स्याच्छुद्धा जन्मविनाशिनी ॥**
**अज्ञानसुघनाकारा घनाहंकारशालिनी ।**
**जन्ममृत्युकरी प्रोक्ता मलिना वासना बुधैः ॥**
**पुनर्जन्माङ्कुरं[1] त्यक्त्वा स्थिता संभृष्टबीजवत् ।**
**देहार्थं ध्रियते ज्ञातज्ञेया शुद्धेति चोच्यते । इति ॥**

**देहादीनां पञ्चकोशानां तत्साक्षिणश्चिदात्मनश्च भेदावरकमज्ञानं तेन सुष्ठु घनीभूत आकारो यस्याः सेयमज्ञानसुघनाकारा । यथा क्षीरं तक्रमेलनेन घनीभूतं भवति, यथा वा विलीनं घृतं शीतलप्रदेशे चिरमवस्थापितं सुघनी भवति तथा वासना द्रष्टव्या । घनीभावश्चात्र भ्रान्तिपरम्परा ।**

अत्र प्राणिपदेनोक्ताभिनिवेशवतां तिर्यक्त्वमेव न तु मनुष्यत्वमपीति द्योत्यते । विशेषतस्तदपेक्षायां वक्ष्यमाणत्वेन तत्साविस्तरं प्रतिजानीते—**विशेषतस्त्वि**त्यादिना । ननूक्तस्मृति-

---

१ क. ख. ङ. 'पुनर्जन्मक' ।

मूलीभूताऽत्र श्रुतिः केत्यत्राऽऽह—**यथोक्ताम्**इत्यादिना । तामेव श्रुतिं पठति—**स यथेति।** कामो ह्यनादिसंस्कार एव वासनापरनामाऽन्तीयः कार्यतर्क्यः पूर्वप्रज्ञाभिधः सदसल्लोकशास्त्रज्ञानकर्मसूक्ष्मावस्थाविशेष एवाविद्यादिनिष्ठोऽष्टधा सुप्रपञ्चित एव मदीये प्रारब्धध्वान्तविध्वंसने सप्रमाणम्। क्रतुस्वरूपमुक्तमेतद्व्याख्यान एवानुभूतिप्रकाशे—

रुचेरतिशयः काम्ये विषये क्रतुरीर्यते ।
पाक्षिकं कर्म कामे स्यात्करोत्येव क्रतौ सति । इति ॥

ननु भवत्वेवं वासनासामान्यस्वरूपं तद्विशेषस्तु यः प्राग्वक्ष्यमाणत्वेन प्रतिज्ञातः स कथमित्यपेक्षायामाह—**वासनाभेद इति ।** तद्वाक्यान्येव पठति—**वासना द्विविध**-त्यादिना । तत्कार्यभेदमाह—**मलिने**त्यर्धेन । भवत्वेवं तत्कार्यमथापि प्रथमं मलिनायाः स्वरूपमेव कथमित्याकाङ्क्षायां तत्कथयति—**अज्ञानेति ।** तत्सर्वस्वीभूतं धर्मजातमाह—**घनेति ।** मलिना जन्महेतुरिति प्रागुक्तं जन्मपदं जन्ममृत्युसहस्रपरम्पराद्यखिलसुखदुःखरूपसंसारचक्रस्याप्युपलक्षणमेवेत्याशयेन पुनस्तां विशिनष्टि—**जन्ममृत्युकरी**त्यर्धेनैव । एवं मलिनवासनां संक्षिप्याथ शुद्धां तामभिधत्ते—**पुनरिति । संभृष्टेति ।** सम्यग्भर्जितव्रीह्यादिधान्यवदित्यर्थः । एवं च तद्यथा भक्षणमात्रोपयोगि लाजादिरूपं तथेयं शरीरनिर्वाहैकोपयोगिनी भवतीति भावः । अथाज्ञानसुघनाकारपदं व्याचष्टे—**देहे**त्यादिना **परम्परे**त्यन्तेन ।

ननूक्तमलिनवासना गीतासु क्वोक्तेत्यत आह—

**तां चाऽऽसुरसंपद्विवरणे भगवानाह—**

*** प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ।**
**न शौचं नापि चाऽऽचारो न सत्यं तेषु विद्यते ॥**
**असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।**
**अपरस्परसंभूतं किमन्यत्कामहेतुकम् ॥**
**एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।**
**प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥**
**काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः ।**
**मोहाद्गृहीत्वाऽसद्ग्राहान्प्रवर्तन्तेऽशुचिव्रताः ॥**

---

* ग. घ. च. छेत्येतदतिरिक्तपुस्तकेष्वेतच्छ्लोकत्रयस्थानेऽयं ग्रन्थः—"प्रवृत्तिं च निवृत्तिं च, इति षोडशाध्यायोक्तश्लोकत्रयक्रमेण पठित्वाऽग्रे पठनीयम् " इति ।

चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः ।
कामोपभोगपरमा एतावदितिनिश्चिताः ॥
आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ।
ईहन्ते कामभोगार्थमन्यायेनार्थसंचयान् । इति ॥

[ + त आसुरा जगदसत्यमाहुः । नास्ति सत्यं वेदपुराणादिप्रमाणं यस्मिंस्तादृशं जगदाहुः । वेदानां प्रामाण्यं न मन्यन्त इत्यर्थः । अत एव नास्तीश्वरः कर्ता व्यवस्थापकश्च यस्मिंस्तादृशं जगदाहुः । तर्हि कुतोऽस्य जगत उत्पत्तिं वदन्तीत्यत्राऽऽह—अपरस्परेति । अपरश्च परश्चेत्यपरस्परम् । अपरस्परतोऽन्योन्यतः स्त्रीपुरुषमिथुनात्संभूतं जगत्किमन्यत्कारणमस्य, नास्त्यन्यत्किंचित् । किंतु कामहेतुकं स्त्रीपुरुषयोः काम एव प्रवाहरूपेण हेतुरस्येत्याहुरित्यर्थः ] धनाहंकारश्च[1] तत्रै-वोदाहृतः—

इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम् ।
इदमस्तीदमपि मे भविष्यति पुनर्धनम् ।
असौ मया हतः शत्रुर्हनिष्ये चापरानपि ॥
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान्सुखी ।
आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ॥
यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ।
अनेकचित्तविभ्रान्ता मोहजालसमावृताः ॥
प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ । इति ॥

एतेन पुनर्जन्मकारणत्वमुदाहृतं भवति । तच्च पुनः प्रपञ्चितम्—

आत्मसंभाविताः स्तब्धा धनमानमदान्विताः ।
यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम् ॥
अहंकारं बलं दर्पं कामं क्रोधं च संश्रिताः ।
मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥
तानहं द्विषतः क्रूरान्संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥

---

+ धनुश्चिह्नान्तर्गतस्थोऽयं ग्रन्थश्छपुस्तकस्थ एव ।

---

१ क. ख. ग. घ. ङ. च. अहंका° ।

**आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि।**
**मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम्। इति॥**

**तां चेति**। तद्वाक्यान्येव पठति—**प्रवृत्तिं** चेत्यादिषोडशाध्यायगषड्भिः। तदर्थं संक्षेपेण विवृणोति—**त आसुरा** इत्यारभ्येत्याहुरित्यर्थ इत्यन्तेन। नन्वेवं सामान्यतो मलिनवासनायां भगवद्गीतोदाहरणेऽपि तद्घनीभावः क्वोदाहृत इत्यत्राऽऽह—**घनाहंकारश्चेति**। तद्वाक्यान्यपि संगृह्णाति—**इदमद्ये**त्यादिचतुर्भिः। एतदर्थं संक्षिप्य पूर्वोक्तवासिष्ठवाक्येन सह योजयति—**एतेनेति**। वाक्यशेषैरेतत्प्रपञ्चनमेवेत्याह—**तच्चेति**। कैर्वाक्यैः प्रपञ्चितमित्याकाङ्क्षायां तान्येव लिखति—**आत्मे**त्यादिचतुर्भिः। इह विस्तरस्तु श्रीमधुसूदनसरस्वतीनां गूढार्थदीपिकायामेवानुसंध्ये(धे)यः। प्रायः स्फुटत्वादत्यन्तानपेक्षत्वाच्च नात्र मया प्रतन्यत इति तत्त्वम्।

ननु भवत्वेवं मलिनवासनाप्रपञ्चनं तथाऽपि शुद्धवासनायास्तत्कथमित्याशङ्क्य प्राग्वासिष्ठवाक्येन पुनर्जन्माङ्कुरं त्यक्त्वेत्यादिना सूत्रितं तत्सामान्यस्वरूपं स्मारयति—

**शुद्धवासना तु ज्ञातज्ञेया। ज्ञेयस्वरूपं त्रयोदशाध्याये भगवानाह—**

**ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते।**
**अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते॥**
**सर्वतःपाणिपादं तत्सर्वतोऽक्षिशिरोमुखम्।**
**सर्वतःश्रुतिमल्लोके सर्वमावृत्य तिष्ठति॥**
**सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम्।**
**असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च॥**
**बहिरन्तश्च भूतानामचरं चरमेव च।**
**सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत्॥**
**अविभक्तं च भूतेषु विभक्तमिव च स्थितम्।**
**भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च॥**
**ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते।**
**[* ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम्] इति।**

**अत्र तटस्थलक्षणस्वरूपलक्षणाभ्यामवगन्तुं सोपाधिकनिरुपाधिकस्वरूपद्वयमुपन्यस्तम्। [+ कदाचित्संबन्धि सद्यल्लक्षयति तत्तटस्थलक्ष-**

---

* इदपर्धं ध. छ. पुस्तकयोरेव। + ग. घ. च. छ. पुस्तकेषु कदाचिदित्यारभ्य प्रकाशश्चन्द्र इतीत्यन्तो ग्रन्थो न विद्यते।

णम् । यथा देवदत्तगृहम् । तथा कालत्रयसंबन्धि सद्यल्लक्षयति तत्स्व-रूपलक्षणम् । यथा प्रकृष्टप्रकाशश्चन्द्र इति । ] ननु त्यक्तपूर्वापरविचारत्वं वासनालक्षणमुक्तम् । ज्ञेयज्ञानं च विचारजन्यम् । अतो न शुद्धायां तल्लक्षणमस्ति । मैवम् । लक्षणे दृढभावनयेत्युक्तत्वात् । यथा बहुषु जन्मसु दृढभावितत्वेनास्मिञ्जन्मनि विनैव परोपदेशमहंकारममकारकामक्रोधादयो मलिनवासनयोत्पद्यन्ते[1] । तथा प्राथमिकबोधस्य विचारजन्यत्वेऽपि दीर्घकालनैरन्तर्यसत्कारैर्भाविते तत्त्वे पश्चाद्वाक्ययुक्तिपरामर्शमन्तरेणैव पुरोवर्तिघटादिवत्सहसा तत्त्वं परिस्फुरति तादृश्या बोधानुवृत्त्या सहित इन्द्रियव्यवहारः शुद्धवासना । सा च देहजीवनमात्रायोपयुज्यते । न तु दम्भदर्पाद्यासुरसंपदुत्पादनाय, नापि जन्मान्तरहेतुधर्माधर्मोत्पादनाय । यथा भृष्टानि व्रीह्यादिबीजानि कुसूलपूरणमात्रायोपयुक्तानि । न तु रुचिरान्नाय, नापि सस्यनिष्पत्तये तद्वत् ।

**शुद्धवासना त्विति** । पूर्ववैलक्षण्यार्थस्तुशब्दः । ननु कुड्यचित्रन्यायेनाऽऽदौ ज्ञेयस्वरूपमेव न ज्ञातं क्व पुनस्तद्घटितोक्तवासनास्वरूपं ज्ञातव्यमित्यत्राऽऽह—**ज्ञेयेति** । तद्वाक्यान्येव पठति—**ज्ञेयं यत्तदि**त्यादिना **विष्ठित**मित्यन्तेन षड्भिः । तत्तात्पर्यमाह—**अत्रे**त्यादिना । **तटस्थेति** । यथा कश्चित्पान्थः कंचिद्वनेचरं क्व जलमिति पृच्छंस्तेन पुरोवर्तिनि मराले जलमित्युपदिश्यते । तत्र स मरालशब्दितराजहंसः सरसस्तटस्थ एव सज्जलस्य लक्षकः कदाचित्संबद्धत्वेनोपलक्षणमेवोच्यते तद्वत्सर्वतःपाणिपादत्वादिनोपलक्षणेन सोपाधिकस्वरूपमेवावगन्तुमुक्तमित्याकूतम् । एवमनादिमदित्यादिस्वरूपलक्षणं निरुपाधिकस्वरूपमेवावगन्तुमुक्तमिति तत्त्वम् । तत्र शङ्कते—**नन्वि**त्यादिना । दृढभावनया त्यक्तेत्यादिवासिष्ठवाक्यैरित्यर्थः । समाधातुं प्रतिजानीते—**मैवमिति** । तत्र हेतुमाह—**लक्षण इति** । तं विवृणोति—**यथे**त्यादिना । एवं दृष्टान्तसिद्धमर्थं दार्ष्टान्तिके योजयति—**तथे**त्यादिना । एवं शुद्धवासनालक्षणं परिष्कृत्य सदृष्टान्तां स्पष्टयति—**सा चे**त्यादिना । तत्कार्यप्रदर्शनमपि । भृष्टानि लाजतां नीतानि । **कुसूलेति** । उदरपूरणमपि तैः कुसूलपूरणसममेवेति भावः ।

नन्वेवमस्त्वियं शुद्धवासना देहमात्रनिर्वाहोपयोगिन्यथापि प्रागुक्तमलिनवासनायाः किमेतस्या इवैकविधत्वमेवोत मालिन्यादेव वैविध्यमित्याशङ्क्यान्त्य एवेत्याशयेन समाधत्ते—

---

१ क. ख. ग. घ. ङ. च. °सना उत्प° ।

मलिना च वासना त्रिधा—लोकवासना शास्त्रवासना देहवासना चेति। सर्वे जना यथा मां न निन्दन्ति यथा वा स्तुवन्ति तथैव सर्वथाऽऽचरिष्यामीत्यभिनिवेशो लोकवासना। तस्याः संपादयितुमशक्यत्वान्मलिनत्वम्। तथा हि—

को न्वस्मिन्सांप्रतं लोके गुणवान्कश्च वीर्यवान्।
इत्यादिना बहुधा वाल्मीकिः पप्रच्छ॥
इक्ष्वाकुवंशप्रभवो रामो नाम जनैः श्रुतः।

इत्यादिना प्रत्युत्तरं नारदो ददौ। तादृशस्यापि रामस्य पतिव्रताशिरोमणिभूताया जगन्मातुः सीतायाश्च श्रोतुमशक्यो जनापवादः संप्रवृत्तः किमु वक्तव्यमन्येषाम्। तथा हि देशविशेषेण परस्परनिन्दाबाहुल्यमुपलभ्यते। दाक्षिणात्यैर्विप्रैरौत्तरा[हा] वेदविदो विप्रा मांसभक्षिणो निन्द्यन्ते। औत्तरेयै(राहै)श्च मातुलसुतोद्वाहिनो यात्रासु मृद्भाण्डवाहिनो दाक्षिणात्या निन्द्यन्ते। बह्वृचा आश्वलायनशाखीया[१]: काण्वशाखामप्रशस्तां मन्यन्ते। वाजसनेयिनस्तु वैपरीत्येन। एवं स्वस्वकुलगोत्रबन्धुवर्गेष्टदेवतादिप्रशंसा परकीयनिन्दा च, आविद्वदङ्गनागोपालं सर्वत्र प्रसिद्धा। एतदेवाभिप्रेत्योक्तम्—

" * शुचिः पिशाचो विचलो विचक्षणः
क्षमोऽप्यशक्तो बलवांश्च दुष्टः।
निश्चिन्तचोरः सुभगोऽपि कामी
को लोकमाराधयितुं समर्थः "॥ इति।

विद्यते न खलु कश्चिदुपायः सर्वलोकपरितोषकरो यः।
सर्वथा स्वहितमाचरणीयं किं करिष्यति जनो बहुजल्पः॥ इति च।

अतो लोकवासनाया मलिनत्वमभिप्रेत्य योगीश्वरस्य तुल्यनिन्दास्तुतित्वं मोक्षशास्त्रेषु वर्णितम्। शास्त्रवासना च त्रिविधा—पाठव्यसनं बहुशास्त्रव्यसनमनुष्ठानव्यसनं चेति। पाठस्य व्यसनं भरद्वाजेऽवगम्यते।

मलिना चेति। अथ—

---

* कं. ख. ग. घ. च. ङ. एषु पुस्तकेषु केवलमस्य पद्यस्य " को लोकमाराधयितुं समर्थः इति चरमचरण एव दृश्यते न साग्रश्लोकः।

---

१ क. ख. ग. ङ. °शाखां कण्वशाखायाः प्र°।

लोकवासनया जन्तोः शास्त्रवासनयाऽपि च ।
देहवासया ज्ञानं यथावन्नैव जायते ॥

इति यज्ञवैभवखण्डपूर्वार्धगतचतुर्दशाध्यायप्रसिद्धतत्संज्ञाः संज्ञापयति—**लोके**त्यादिना । तत्र लोकवासनां विशदयति—**सर्व** इत्यादिना । ननु कुतोऽत्र मलिनत्वं तत्राऽऽह—**तस्या इति** । तदुपपादयितुं प्रतिजानीते—**तथा हीति** । तदुदाहरति—**को न्वस्मि-न्नि**त्यादिना । एवं च जीवकोटिनिविष्टानामस्मदादीनां तदन्येषां तद्दौःसाध्यं कैमुत्यसिद्धमे-वेत्याह—**किम्विति** । तदुदाहरति—**तथा ही**त्यादिना । क देश उपलभ्यते । परस्पर-निन्दाबाहुल्यमित्यत आह—**दाक्षिणात्यै**रित्यादिना । मांसेति निन्दायां हेतुगर्भं विशेष-णम् । एवं मातुलेत्याद्यग्रेऽपि द्रष्टव्यम् । न केवलमेवमाचारविषयिण्येव लोककृता निन्दा किंतु वेदशाखाविषयिण्यप्यसावित्याह—**बह्वृचा** इत्यादिना **वैपरीत्ये**नेत्यन्तेन । उक्त-निन्दामन्यत्राप्यतिदिशति—**एवमि**त्यादिना । आदिना देशः । उक्तलोकवासनाध्वंसस्य सर्वथा दुःसाध्यत्वे संमतमपि प्राचामाह—**एतदेवे**त्यादिना । फलितं कथयन्प्रकृतं निगम-यति—**अत** इत्यादिना । एवमत्र लोकवासनां प्रपञ्च्य शास्त्रवासनामपि त्रैविध्येनाभिधत्ते—**शास्त्रे**त्यादिना । तत्राऽऽद्यमुदाहरति—**पाठस्येति** ।

कथं तदित्यत आह—**स ही**त्यादिना—

**स हि पुरुषायुषत्रयेण बह्वून्वेदानधीत्येन्द्रेण चतुर्थायुषि प्रलोभित-स्तत्रापि परिशिष्टवेदाध्ययनायोद्यमं चकार तस्यापि पाठस्याशक्यत्वा-न्मलिनवासनात्वम्[1] । तां चाशक्तिमिन्द्रः प्रतिबोध्य पाठान्निवर्त्य ततोऽ-प्यधिकपुरुषार्थाय सगुणब्रह्मविद्यामुपदिदेश । तदेतत्सर्वं तैत्तिरीयब्रा-ह्मणे * द्रष्टव्यम् । तथैवाऽऽत्यन्तिकपुरुषार्थाभावाद्बहुशास्त्रव्यसनस्य मालिन्यं कावषेयगीतायामुपलभ्यते—‘दुर्वासा मुनिर्बहुविधशास्त्रपुस्तक-भारैः सह महादेवं नमस्कर्तुमागतस्तत्सभायां मुनिना नारदेन भारवाहि-गर्दभसाम्यमापादितः कोपात्पुस्तकानि लवणार्णवे परित्यज्य महादेवे-नाऽऽत्मविद्यायां प्रवर्तितः’ इति । आत्मविद्या चानन्तमुखस्य गुरुकारु-**

* ङ. पुस्तके—(ब्राह्मणम्) “भरद्वाजो ह त्रिभिरायुर्भिर्ब्रह्मचर्यमुवास । तꣳह जीर्णिꣳ स्थ-विरꣳ शयानम् । इन्द्र उपव्रज्योवाच । भरद्वाज । यत्ते चतुर्थमायुर्दद्याम् । किमनेन कुर्या इति । ब्रह्मचर्यमेवैनेन चरेयमिति । होवाच । तꣳह त्रीन्गिरिरूपानविज्ञातानिव दर्शयांचकार । तेषाꣳ हैकैकस्मान्मुष्टिनाऽऽददे । स होवाच । भरद्वाजेत्यामन्त्र्य । वेदा वा एते ” इति ।

१ ङ. °ह मोक्षशास्त्रेषु वर्णितं म° ।

ण्यरहितस्य न वेदशास्त्रमात्रेणोत्पद्यते । तथा च श्रुतिः—' नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन' इति । अन्यत्राप्युक्तम्—

बहुशास्त्रकथाकन्थारोमन्थेन वृथैव किम् ।
अन्वेष्टव्यं प्रयत्नेन तत्त्वज्ञैर्ज्योतिरान्तरम् ।। इति ।
अधीत्य चतुरो वेदान्धर्मशास्त्राण्यनेकशः ।
ब्रह्मतत्त्वं न जानाति दर्वी पाकरसं यथा ।। इति च ।

'नारदश्चतुःषष्टिकलाविद्याकुशलोऽप्यनात्मवित्त्वेनानुतप्तः सनत्कुमारमुपससाद' इति च्छन्दोगा अधीयते । अनुष्ठानव्यसनं विष्णुपुराणे निदाघस्योपलभ्यते । वासिष्ठ[1]रामायणे दाशूरस्य । निदाघो हि ऋभुणा पुनः पुनः प्रबोध्यमानोऽपि कर्मश्रद्धाजाड्यं चिरं न जहौ । दाशूरश्चात्यन्तश्रद्धाजाड्येनानुष्ठानाय शुद्धप्रदेशं भूमौ न क्वाप्युपलेभे । अस्याश्च कर्मवासनायाः पुनर्जन्महेतुत्वान्मलिनत्वम् । तथा चाऽऽथर्वणिका अधीयते—

' प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म ।
एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवा[2]पियन्ति ॥
अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितंमन्यमानाः ।
जङ्घन्यमानाः परियन्ति मूढा अन्धेनैव नीयमाना यथाऽन्धाः ॥
अविद्यायां बहुधा वर्तमाना वयं कृतार्था इत्यभिमन्यन्ति बालाः ।
यत्कर्मिणो न प्रवेदयन्ति रागात्तेनाऽऽतुराः क्षीणलोकाश्च्यवन्ते ॥
इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्तेऽत्र मूढाः ।
नाकस्य पृष्ठे ते सुकृते[3]ऽनुभूत्वेमं लोकं हीनतरं वा विशन्ति' इति ।

**बहून्वेदानिति** । वेदशब्दोऽत्र शाखापरः । अन्यथा पुरुषायुषत्रयेण संपूर्णत्रय्या अपि संजातेऽध्ययने पुनश्चतुर्थायुःप्राप्त्याऽवशिष्टाथर्वणवेदाध्ययनस्यापि तत्र संभवात्संजाते चतुर्वेदाध्ययने पुनरुक्तब्राह्मण एवेन्द्रकर्तृकं तं प्रति त्रय्याः सुवर्णमयमहापर्वतत्रयप्रदर्शनमुक्तमनुपपन्नं स्यादित्याशयः । ननु क्वेदमुपाख्यानं तत्राऽऽह—**तदेतदित्यादि** । अथ द्वितीयामपि शास्त्रवासनां निन्दति सप्रमाणं सोदाहरणं च **तथेवे**त्यादिना । परित्यज्य, आगतोऽत एव महादेवेनेत्यध्याहृत्य योज्यम् । तत्र हेतुः—**आत्मविद्या चेति** । तत्र प्रमाणान्याह—

१ ङ. 'ष्ठपुराणे । २ क. क. ङ. च. 'वाभिय° । ३ ग- व. च. 'तेनानु° ।

**तथा चे**त्यादिना । तत्रोदाहरणमाह——**नारद** इत्यादिसप्रमाणम् । एवं तृतीयामपि तां सप्रमाणं सोदाहरणं तृणयति——**अनुष्ठाने**त्यादिना ननु । कुतः कर्मवासनायाः पुण्योत्पादकत्वेऽपि मलिनत्वं तत्राऽऽह——**अस्याश्चेति** । तत्र मानमाह——**तथा चे**त्यादिना सम्प्रतिज्ञं भूरितरं च ।

तत्र स्मृतिमप्याह **भगवते**त्यादिना——

**भगवताऽप्युक्तम्——**

**यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।**
**वेदवादरताः पार्थ नान्यदस्तीतिवादिनः ॥**
**कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम् ।**
**क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥**
**भोगैश्वर्यप्रसक्तानां तयाऽपहृतचेतसाम् ।**
**व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥**
**त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ।**
**निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥**
**यावानर्थ उदपाने सर्वतःसंप्लुतोदके ।**
**तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥ इति ।**

**दर्पहेतुत्वाच्च शास्त्रीयवासनाया मलिनत्वम् । श्वेतकेतुरल्पेनैव कालेन सर्वान्वेदानधीत्य दर्पेण पितुरपि पुरतो विनयं न चकारेति च्छन्दोगाः षष्ठाध्याये पठन्ति । तथा बालाकिः कानिचिदुपासनान्यवगत्य दृप्त उशीनरादिषु बहुषु देशेषु दिग्विजयेन बहून्विप्रानवज्ञाय काश्यामजातशत्रुं ब्रह्मविच्छिरोमणिमनुशासितुं धार्ष्ट्यं चकारेति कौषीतकिनो वाजसनेयिनश्चाधीयते ।**

पुष्पिताम् , ‘ अपाम सोमममृता अभूम ’ इत्याद्यर्थवादत्वेन पुष्पिण्यनुपमलोमजानिकामित्यर्थः । वेदाः पूर्वकाण्डात्मका इत्यार्थिकम् । **यावानर्थ इति** । यथोदपान उदकपानादिमात्रप्रयोजके वापीकूपादौ प्रत्येकं यावानर्थः प्रयोजनविशेषः सिध्यति तावान्सर्वोऽप्यर्थः , सर्वतःसंप्लुतोदके प्रचुरतरजलशालिनि गङ्गादितीर्थे नृणां सिध्यत्येकत्रैवेति प्रसिद्धमेव तथा सर्वेषु पूर्वकाण्डात्मकेष्वखिलेषु वेदेष्वृग्यजुःसामाख्येषु यावानर्थ ‘ऋग्भिः शंसन्ति यजुर्भिर्यजन्ति सामाभिः स्तुवन्ति ’ इति श्रुतेर्होतृत्वाध्वर्यवौद्गातृत्वादिभिः साधितेन पत्नीयजमानयोः परमात्मपारितोषलक्षणेन पुण्यापूर्वेण ‘ चित्रया यजेत पशुकामः ’ इति ‘ज्योतिष्टोमेन स्वर्गकामो यजेत ’ इत्यादिश्रुतिज्ञापितपश्वादिलक्षणेष्टविषयप्राप्तिजन्यस्तत्तदवच्छिन्न-

सुखलक्षणो यावानर्थः प्रयोजनविशेषः सिध्यति तावान्सर्वोऽप्यर्थो विजानतोऽद्वैतब्रह्मात्मैक्यविषयकसाक्षात्कारशालिनो ब्राह्मणस्य मुख्याधिकारिणः सदसद्विवेकादिनिदिध्यासनान्तसकलसाधनवतः संन्यासिनः संपद्यत इति शेषः। शते पञ्चाशन्न्यायेन क्षुद्रानन्दानां सर्वेषामद्वैतब्रह्मात्मैक्यभूमानन्द एवान्तर्भावात्कर्मकाण्डानुष्ठानसाध्याः सर्वेऽपि विषयानन्दाः स्वाद्वैतानन्दाग्रे तृणायमाना एवेति भावः। इतोऽपि शास्त्रवासनायास्तुच्छत्वमेवेत्याह—**इयं**त्यादिना। तदुदाहरति—**श्वेतकेतु**रित्यादिना। उदाहरणान्तरमप्याह—**तथे**त्यादिना। वाजसनेयिनः काण्वा माध्यंदिनाश्चेत्यर्थः।

अथावसरप्राप्तां तृतीयां देहवासनामपि तृणयिष्यंस्तस्या अपि त्रैविध्यमभिधत्ते—

**देहवासनाऽप्यात्मत्वगुणाधानदोषापनयनभ्रान्तिभेदात्त्रिधा। तत्राऽऽत्मत्वं भाष्यकार उदाजहार—'देहमात्रं चैतन्यविशिष्टमात्मेति प्राकृता जना लोकायतिकाश्च प्रतिपन्नाः' इति। 'स वा एष पुरुषोऽन्नरसमयः' इत्यारभ्य 'तस्मादन्नं तदुच्यते' इत्यन्तेन ग्रन्थेन तामेव प्राकृतप्रतिपत्तिं तैत्तिरीयाः स्पष्टी कुर्वन्ति। 'विरोचनः प्रजापतिनाऽनुशिष्टोऽपि स्वचित्तदोषेण देह आत्मत्वबुद्धिं दृढीकृत्यासुरान्सर्वाननुशशास' इति च्छन्दोगा अष्टमेऽध्याये समामनन्ति। गुणाधानं द्विविधम्—लौकिकं शास्त्रीयं चेति। समीचीनशब्दादिसंपादनं लौकिकम्। कोमलध्वनिना गातुमध्येतुं च तैलपानमरीचभक्षणादि[1]ना लोकाः प्रयतन्ते। मृदुस्पर्शाय लोकाः पुष्टिकरावौषधाहारावुपयुञ्जते लावण्यायाभ्यङ्गोद्वर्तनदुकूलालंकारानुपसेवन्ते। सौगन्ध्याय स्रगालेपने धारयन्ति। शास्त्रीयं गुणमाधातुं गङ्गास्नानशालग्रामतीर्थादिकं संपादयन्ति। दोषापनयनं च चिकित्सकोक्तैरौषधैर्मुखादिप्रक्षालनेन च लौकिकं, शौचाचमनादिना वैदिकमित्युभयविधम्। अस्याश्च देहवासनाया मालिन्यं वक्ष्यते। देहस्याऽऽत्मत्वं तावदप्रामाणिकत्वादशेषदुःखहेतुत्वाच्च मलि[2]नत्वम्। अस्मिंश्चार्थे पूर्वाचार्यैः सर्वैरपि पराक्रान्तम्। गुणाधानं च प्रायेण न पश्यामः। प्रसिद्धा एव गायका अध्यापकाश्च प्रयतमाना अपि बहवो ध्वनिसौष्ठवं न लभन्ते। मृदुस्पर्शोऽङ्गपुष्टिश्च न नियता। लावण्यसौगन्ध्ये अपि दुकूलस्रगादिनिष्ठे न तु देहनिष्ठे।**

**देहेति। आत्मत्वेति।** आत्मत्वं च गुणाधानं च दोषापनयनं चेति तथा तद्विषयिण्यो या भ्रान्तयोऽहं ब्राह्मण इति कस्तूर्याद्यान्तरलापनेन सुरभितोऽस्मि मङ्गलाभ्यङ्गस्नानेन

---

१ क. ख. ङ. °दिषु लो°। २ छ. °लिनम्°।

विमलोऽभवमिति चानुभूयमानभ्रमविभेदात्रिप्रकारा देहवासनाऽपि भवतीति भावः। तत्राऽऽद्यायां मानमाह–**तत्रेति**। तद्भाष्यमेव शारीरकसूत्रस्थाध्यासग्रन्थगमुदाहरति—**देहे**त्यादिना। अथैतन्मूलीभूतां तैत्तिरीयश्रुतिमपि प्रमाणयति–**स वा एष** इत्यादिना। अत्र सामश्रुतिमप्यर्थतः संवादयति–**विरोचन** इत्यादिना। अथ गुणाधानमपि क्रमप्राप्तं द्वैविध्येनाभिधत्ते–**गुणेति**। तद्विवृणोति–**लौकिकमिति**। तत्राऽऽद्यमुदाहरति–**समीचीनेति**। तत्र प्रसिद्धिमेव प्रमाणयति–**कोमले**त्यादिना **धारयन्ती**त्यन्तेन। अथ शास्त्रीयगुणाधानमप्याह—**शास्त्रीयमि**त्यादिना। एवं दोषापनयनमपि लौकिकादिभेदेन द्विविधमुदाहरति—**दोषापनयनं च**त्यादिना। उक्तदेहवासनाया मालिन्यं प्रतिजानीते—**अस्याश्चे**त्यादिना। तत्र देहात्मत्वमालिन्यमुपपादयति—**देहस्ये**त्यादिना। एवं गुणाधानाद्यपि दूषयति—**गुणाधानं च**त्यादिना **न त्वि**त्यन्तेन। शिष्टं तु स्पष्टम्।

तत्र मानमाहा**त एवे**ति सप्रतिज्ञम्—

**अत एव विष्णुपुराणेऽभिहितम्—**

**मांसासृक्पूयविण्मूत्रस्नायुमज्जास्थिसंहतौ।**
**देहे चेत्प्रीतिमान्मूढो भविता नरकेऽपि सः॥**
**स्वदेहाशुचिगन्धेन न विरज्येत यः पुमान्[१]।**
**वैराग्यकारणं तस्य किमन्यदुपदिश्यते। इति॥**

**शास्त्रीयं च गुणाधानं प्रबलेन शास्त्रान्तरेणापोह्यते। यथा 'न हिंस्यात्सर्वा भूतानि' इत्यस्य 'अग्नीषोमीयं पशुमालभेत' इत्यनेनापवादस्तद्वत्। प्रबलतरं शास्त्रमेतदन्यशास्त्रापेक्षया—**

**यस्याऽऽत्मबुद्धिः कुणपे त्रिधातुके**
**स्वधीः कलत्रादिषु भौम इज्यधीः।**
**यस्तीर्थबुद्धिः सलिले न कर्हिचि-**
**ज्जनेष्वभिज्ञेषु स एव गोखरः*।**

---

* क. पुस्तकेऽत्र त्रयो धातवो वातपित्तश्लेष्माणः प्रकृतयो यस्य तस्मिन्कुणपे शरीरे आत्मबुद्धिः, स्वधीः कलत्रादिषु स्वीया इति बुद्धिः, भौमे भूमिविकारे इज्यधीर्देवताबुद्धिः, यस्य तीर्थमिति बुद्धिः सलिले न, अभिज्ञेषु तत्त्ववित्सु यस्य (इत्ये) ता बुद्धयो न सन्ति स एव गोष्वपि खरो दारुणः। यथा गवां तृणादिभारवाहः। खरो गर्दभः इत्यधिकमुपलभ्यते।

---

१ क. ख. ङ. °न्। विरागका°।

अत्यन्तमलिनो देहो देही चात्यन्तनिर्मलः।
उभयोरन्तरं ज्ञात्वा कस्य शौचं विधीयते। इति च॥

यद्यप्यनेन शास्त्रेण दोषापनयनं प्रतिषिध्यते न तु गुणाधानं तथाऽपि सति विरोधिनि प्रबलदोषे गुण आधातुमशक्य इत्यर्थाद्गुणाधानस्य प्रतिषेधः। अत्यन्तमालिन्यं चात्र मैत्रायणीयशाखायां श्रूयते—'भगवन्नास्थिचर्मस्नायुमज्जामांसशुक्रशोणितश्लेष्माश्रुदूषिकादूषिते विण्मूत्रवातपित्तसंघाते दुर्गन्धे निःसारेऽस्मिञ्शरीरे किं कामोपभोगैः' इति।

शरीरमिदं मैथुनादेवोद्भूतं संविद्यपेतं निरय इव मूत्रद्वारेण निष्क्रान्तमस्थिभिश्चितं मांसेनानुलिप्तं चर्मणाऽवनद्धं विण्मूत्रपित्तकफमज्जामेदोवसाभिरन्यैश्च[1] मलैर्बहुभिः परिपूर्णं कोश इव वसुनेति च। चिकित्सया च रोगशान्तिर्न नियता। शान्तोऽपि रोगः कदाचित्पुनरुदेति। नवच्छिद्रैर्निरन्तरं स्रवत्सु मलेषु रोमकूपैरसंख्यातैः स्विन्ने गात्रे को नाम[2] खेदेन प्रक्षालयितुं शक्नुयात्।

तदुदाहरति—**मांसे**त्यादिद्वाभ्याम्। नन्वेवमपि गङ्गास्नानादिसाध्यं शास्त्रीयगुणाधानमीशतोषात्मकं कथं मलिनमित्याशङ्क्याऽऽह—**शास्त्रीयं चेति**। तत्र दृष्टान्तं स्पष्टयति—**न हिंस्याद्**इत्यादिना। एवं चाऽऽनर्थक्यप्रतिहतानां विपरीतं बलाबलमिति न्यायाद्यथा न हिंस्यादित्यादिसामान्यनिषेधशास्त्रेणाग्नीषोमीयविशेषविधिशास्त्रस्याऽऽनर्थक्यापातान्न बाधस्तथा गङ्गास्नानादिसामान्यगुणाधानशास्त्रेण मांसेत्यादिविशेषशास्त्रस्याऽऽनर्थक्यादेव तु बाधो नैवास्तीति बोध्यम्। न च मांसेत्यादिशास्त्रापेक्षया कथं न गङ्गास्नानादिशास्त्रमेव प्रबलमिति वाच्यम्। प्रत्यक्षविषयत्वात्तस्य त्वीशतोषैकविषयकत्वेन परोक्षमात्रविषयकत्वाच्चेत्यभिप्रेत्याऽऽह—**प्रबलतरमिति**। कोऽत्रैतच्छब्दार्थः किं मांसेत्यादिप्राच्यः कश्चिदुदीच्यो वेति चेदुभयमपीत्यभिसंधायाऽऽह—**यस्याऽऽत्मे**त्यादिभागवतादिना। तत्राप्याशङ्क्य समाधत्ते—**यद्यपी**त्यादिना। उक्तदेहात्यन्तमालिन्ये मानमाह—**अत्यन्ते**त्यादिसप्रतिज्ञम्। एवं दोषापनयेऽप्यनैयत्यमाह—**चिकित्से**त्यादिना **शक्नुयाद्**इत्यन्तेन।

उक्तेऽर्थे प्राचां वचः संवादयति—

तदुक्तं पूर्वाचार्यैः—

नवच्छिद्रयुता[3] देहात्स्रवन्ति घटिका इव।
बाह्यशौचैर्न शुध्यन्ति चान्तः शौचं न विद्यते॥

१ क. ख. ङ. °न्यैश्चाऽऽमयैर्ब°। २ क. ख. ग. घ. ङ. च. °म स्वेदे°। ३ क. ख. ग. च. छ. °तादेहाः स्रव°।

अतो देहवासना मलिना । तदेतन्मालिन्यमभिप्रेत्य वसिष्ठः—

आपादमस्तकमहं मातापितृविनिर्मितः ।
इत्येको निश्चयो राम बन्धायासद्विलोकनात् ॥
सा कालसूत्रपदवी सा महावीचिवागुरा ।
साऽसिपत्त्रवनश्रेणी या देहेऽहमिति स्थितिः ॥
सा त्याज्या सर्वयत्नेन सर्वनाशेऽप्युपस्थिते ।
स्प्रष्टव्या सा न भव्येन स श्वमांसेव पुल्कसी ॥ इति ।

तदेतल्लोकशास्त्रदेहवासनात्रयमविवेकिनामुपादेयत्वेन प्रतिभासमानमपि विविदिषोर्वेदनोत्पत्तिविरोधित्वाद्विदुषो ज्ञानप्रतिष्ठाविरोधित्वाच्च विवेकिभिर्हेयम् । अत एव स्मर्यते—

लोकवासनया जन्तोः शास्त्रवासनयाऽपि च ।
देहवासनया ज्ञानं यथावन्नैव जायते ॥ इति ।

या तु दम्भदर्पाद्यासुरसंपद्रूपा मानसवासना तस्या नरकहेतुत्वान्मालिन्यमतिप्रसिद्धम् । ततः केनाप्युपायेन वासनाचतुष्टयस्य क्षयः संपादनीयः । यथा वासनाक्षयः संपादनीयस्तथा मनसोऽपि । न च तार्किकवन्नित्यद्रव्यमणुपरिमाणं मनो वैदिका अभ्युपगच्छन्ति येन मनोनाशो दुःसंपाद्यः स्यात् । किं तर्हि सावयवमनित्यं सर्वदा जतुसुवर्णादिवद्बहुविधपरिणामार्हं द्रव्यं मनः । तस्य लक्षणं प्रमाणं वाजसनेयिनः समामनन्ति—'कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव ' इत्येतल्लक्षणम् । कामादिवृत्तयः क्रमेणोत्पद्यमानाश्चाक्षुषप्रत्यक्षघटवत्साक्षिप्रत्यक्षेणातिस्पष्टं भासन्ते तदुपादानं[1] मन इत्यर्थः । ' अन्यत्रमना अभूवं नादर्शमन्यत्रमना अभूवं नाश्रौषम् ' इति । ' मनसा ह्येव पश्यति मनसा शृणोति ' इत्येतत्प्रमाणम् ।

तदुक्तमिति । नवेति । घटिका ह्यत्र वालुकायन्त्रकाचपात्राण्येव । तेषामेव स्रवणसंभवात् । इन्द्रियगोलकानीति शेषः । फलितमाह—अत इति । तत्र वासिष्ठमनुकूलयति—तदेतदिति । तद्वचांस्येव संलिखति—आपादेत्यादिना । कालसूत्रादयो नरकविशेषाः प्रसिद्धा एव गारुडादौ । महावीचीत्यादि । महाऽवीचिर्वा । अमरे नरकान्प्र-

---

१ क. ख. ग. ङ. च. तद्वृत्त्युपा° ।

कृत्य 'तद्भेदास्तपनावीचिमहारौरवरौरवाः' इत्युक्तेर्महावीचिर्महारौरववन्नरकविशेषो वा वागुरा मृगबन्धनी रज्जुर्वेत्यार्षत्वाद्व्याख्येयं दुःखदत्वात् । पुल्कसी 'बुरडीण' इति महाराष्ट्रभाषाप्रसिद्धा । उपसंहरति—तदेतदित्यादिना । ज्ञानेति । ननु ज्ञानस्य नित्यापरोक्षस्वप्रकाशाद्वैतचिन्मात्रात्मविषयकाविचारितमहावाक्यजन्यापरोक्षप्रमात्वेन समानाश्रयविषयकाविद्यैकनिवृत्तेः का नामान्या प्रतिष्ठा यद्विरोधित्वमुक्तवासनानां तस्यास्तु तदुत्पत्तिमात्रेणैव सिद्धत्वान्न ह्यालोकः स्वसमानाश्रयकमन्धकारमनिरसयन्प्रसरतीति चेत्सत्यम् । 'नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता' इत्यादिप्रागुपन्यस्तशास्त्रशतसिद्धासंभावनादिसंस्कारध्वंससिद्धहर्षविषादवैधुर्यस्यैव प्रकृतज्ञानप्रतिष्ठापदेष्टत्वान्नात्र प्रश्नावकाशः । शिष्टं तु ग्रन्थजातमतिस्पष्टमेवेति ।

उक्तमनःप्रमाणश्रुतिं विवृणोति चक्षुरित्यादिना—

**चक्षुःसंनिकृष्टस्फीतालोकमध्यवर्तिघटः श्रोत्रसंनिकृष्टोच्चैःपठितवेदश्च यस्यानवधाने सति न प्रतीयते, अवधाने तु प्रतीयते तादृशं सर्वविषयोपलब्धिसाधारणकारणमन्वयव्यतिरेकाभ्यां प्रतीयत इत्यर्थः । तस्मादपि पृष्ठत उपस्पृष्टो मनसा विजानातीत्येतदुदाहरणम् । यस्माच्च लक्षणप्रमाणाभ्यां सिद्धं मनस्तस्मात्तदेवमुदाहरणीयम् । पृष्ठभागेऽप्यन्येनोपस्पृष्टे देवदत्तो विशेषेण जानाति हस्तस्पर्शोऽयमङ्गुलिस्पर्शोऽयमिति । न हि तत्र चक्षुः प्रसरति । त्वगिन्द्रियं तु मार्दवकाठिन्यमात्रग्रहण उपक्षीणम् । तस्मान्मन एव विशेषज्ञानकारणं परिशिष्यते । तच्च मननान्मन इति चेतनाच्चित्तमिति[1] चाभिधीयते । तच्चित्तं सत्त्वरजस्तमोगुणात्मकं, प्रकाशप्रवृत्तिमोहानां सत्त्वादिकार्याणां तत्र दर्शनात् । प्रकाशादीनां तु गुणकार्यत्वं गुणातीतलक्षणेऽवगम्यते—**

**प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव ।**

**इत्यभिधानात् । सांख्यशास्त्रेऽपि प्रकाशप्रवृत्तिमोहा नियमार्था इत्युक्तम् । प्रकाशो नात्र सितभास्वररूपं किंतु ज्ञानम् ।**

**सत्त्वात्संजायते ज्ञानं रजसो लोभ एव च ।**
**प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥**

**इत्युक्तत्वात् । ज्ञानवत्सुखमपि सत्त्वकार्यम् । तदप्युक्तम्—**

**सत्त्वं सुखे संजयति रजः कर्मणि भारत ।**
**ज्ञानमावृत्य तु तमः प्रमादे संजयत्युत ॥ इति ।**

---

१ क. ख. ग. ङ. °ति चिन्तना° ।

**समुद्रतरङ्गवन्निरन्तरं परिणममानेषु गुणेषु कदाचित्कश्चिदुद्भवति। इतरावभिभूयेते। तदुक्तम्—**

**रजस्तमश्चाभिभूय सत्त्वं भवति भारत।**

**रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा॥ इति।**

**बाध्यबाधकतां यान्ति कल्लोला इव सागरे। इति च।**

**तत्र तमस उद्भवे सत्यासुरसंपदुदेति रजस उद्भवे सति लोकादिवासनास्तिस्रो भवन्ति। सत्त्वस्योद्भवे सति दैवी संपदुपजायते। एतदेवाभिप्रेत्योक्तम्—**

**सर्वद्वारेषु देहेऽस्मिन्प्रकाश उपजायते।**

**ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत॥ इति।**

अथैतदुदाहरणमपि श्रुत्यैवाऽऽह—**तस्माद्पी**त्यादिना। एतद्व्याचष्टे—**यस्माच्चे**त्यादिना। इदानीं मनःसंज्ञां व्युत्पादयति—**तच्चेति**। अथ तत्स्वरूपं कथयति—**तच्चित्तमि**त्यादिना। तन्निरुक्तव्युत्पत्त्यादिसिद्धमित्यर्थः। तत्र हेतुमाह—**प्रकाशेति**। तत्र मानमाह—**प्रकाशादीनां त्वि**त्यादिना। तत्राऽऽशङ्क्य समाधत्ते—**प्रकाश** इत्यादिना। भास्वरं परप्रकाशकम्। तत्र मानमाह—**सत्त्वाद्**त्यादिना। हेतुविधया। एवं सुखेऽपि जन्येऽनात्मरूपे सत्त्वकार्यत्वमेवेत्याह—**ज्ञानवद्**त्यादिना। तत्रापि मानमाह—**तद्पी**त्यादिना। फलितमाह—**समुद्रे**त्यादिना। तत्रापि गीतामेव प्रमाणयति—**तदुक्तमिति** सप्रतिज्ञम्। बृहद्वासिष्ठवाक्यमप्याह—**बाध्येति**। तत्र तमआदिगुणोद्भवः कथमुन्नेय इत्यत्राऽऽह—**तत्र तमस** इत्यादिना। एवं च—

मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः।

राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः॥

इति गीतोक्ता राक्षसीप्रकृतिरप्यत्रैवान्तर्भवतीति भावः। अत्रापि गीतामनुकूलयति—**एतदेवेत्यादि**।

तत्राप्याशङ्क्य समाधत्ते **यद्यपी**त्यादिना—

**यद्यप्यन्तःकरणं त्रिगुणात्मकं भासते तथाऽपि सत्त्वमेवास्य[1] मुख्यमुपादानकारणं[2] रजस्तमसी तूपष्टम्भके। अत एव ज्ञानिनो योगाभ्यासेन रजस्तमसोरपनीतयोः सत्त्वमेव स्वरूपं परिशिष्यते। एतदेवाभिप्रेत्योक्तम्—**

---

१ क. ख. ङ. °स्य मनसो मु°। २ क. ख. ङ. °रणम्। उपादानसहकारिभूता अवयवा उपष्टम्भकाः। र°।

ज्ञस्य चित्तमचित्तं स्याज्ज्ञचित्तं सत्त्वमुच्यते । इति ॥

तच्च सत्त्वं चाञ्चल्यहेतुरजोगुणशून्यत्वादेकाग्रम् । भ्रान्तिकल्पितानात्मस्वरूपस्थूलपदार्थाकारहेतुतमोगुणशून्यत्वात्सूक्ष्मम् । तत आत्मदर्शनयोग्यम् । अत एव श्रुतिः—'दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः' इति । न खलु वायुना दोधूयमानेन प्रदीपेन मणिमुक्तादिलक्षणानि निर्धारयितुं शक्यन्ते । नापि स्थूलेन खनित्रेण सूच्येव सूक्ष्मपटस्यूतिः संभवति । तदेतदीदृशं सत्त्वमेवा[1]योगिषु तमोगुणगर्भितेन रजोगुणेनोपस्पृष्टं च बहुविधद्वैतसंकल्पेन चेतयमानं चित्तं भवति । तच्चित्तं तमोगुणाधिक्ये सत्यासुरीं संपदमुपचिन्वत्पीनं भवति । तथाऽऽह वसिष्ठः—

अनात्मन्यात्मभावेन देहभावनया तथा ।
पुत्रदारकुटुम्बैश्च चेतो गच्छति पीनताम् ॥
आधिव्याधिविलासेन समाश्वासेन संसृतौ ।
हेयादेयविभागेन चेतो गच्छति पीनताम् ॥
अहंकारविकारेण ममतामललीलया ।
इदं ममेतिभावेन चेतो गच्छति पीनताम् ॥
स्नेहेन धनलोभेन लाभेन मणियोषिताम् ।
आपातरमणीयेन चेतो गच्छति पीनताम् ॥
दुराशाक्षीरपानेन भोगानिलबलेन च ।
आस्थादानेन चारेण चित्ताहिर्याति पीनताम् ॥ इति ।

आस्था नाम प्रपञ्चे सत्यत्वबुद्धिस्तस्या आदानमङ्गीकारः स एव चारो गमनागमनक्रिया तयेति । तदेवं विनाशनीययोर्वासनामनसोः स्वरूपं निरूपितम् ।

अथ वासनाक्षयमनोनाशौ क्रमेण निरूप्येते । तत्र वासनाक्षयप्रकारमाह वसिष्ठः—

बन्धो हि वासनाबन्धो मोक्षः स्याद्वासनाक्षयः ।
वासनास्त्वं परित्यज्य मोक्षार्थित्वमपि त्यज ॥

---

१ क. ग. ङ. च. °मेव यो° । २ क. ग. ङ. च. °णसहिते° ।

मानसीर्वासनाः पूर्वं त्यक्त्वा विषयवासनाः ।
मैत्र्यादिवासनानाम्नीर्गृहाणामलवासनाः ॥
ता अप्यन्तः परित्यज्य ताभिर्व्यवहरन्नपि ।
अन्तः शान्तः समस्नेहो भव चिन्मात्रवासनः ॥
तामप्यन्तः परित्यज्य मनोबुद्धिसमन्विताम् ।
शेषे स्थिरसमासीनो येन त्यजसि तत्त्यज । इति ॥

तत्र वासिष्ठमेव प्रमाणयति—तदुक्तमित्यादिना सप्रतिज्ञम् । ततः किं तदाह—तच्चे-त्यादिना । तत्र श्रुतिमप्यनुकूलयति—अत एवेत्यादिना तत्संग्रहणपूर्वकम् । तदुपपाद-नाय युक्तिमपि व्यनक्ति—न खल्वित्यादिना । दोधूयमाने, कम्पमाने । फलितमाह—तदेतदित्यादिना । ननु भवत्वेवं चित्तं ततः किं तदाह—तच्चित्तमिति । तत्र मानं प्रतिजानीते—तथेति । तद्वाक्यान्येव पठति—अनात्मनीत्यादिना । अथ वृत्तार्थमनूद्य वक्ष्यमाणं प्रतिजानीते—तदेवमित्यादिना । तत्राऽऽद्यमवतारयति—तत्र वासनेति । तद्वचांस्येव पठति—बन्धो हीत्यादिना तत्त्यजेतीत्यन्तेन ।

तत्र मानसवासनाः संप्रबोधयति—

अत्र मानसवासनाशब्देन पूर्वोक्तास्तिस्रो लोकशास्त्रदेहवासना विव-क्षिताः । विषयवासनाशब्देन दम्भदर्पाद्यासुरसंपद्विवक्षिता । मृदुतीव्रत्वे तद्विवक्षायामेव कारणे । यद्वा शब्दस्पर्शरूपरसगन्धा विषयाः । तेषां काम्यमानत्वदशाजन्यः संस्कारो मानसवासना भुज्यमानत्वदशाजन्यः संस्कारो विषयवासना । अस्मिन्पक्षे पूर्वोक्तानां चतसृणामनयोरेवान्त-र्भावः । अन्तर्बाह्यव्यतिरेकेण वासनान्तरासंभवात् । ननु वासनायाः परि-त्यागः कथं घटते । न हि तासां मूर्तिरस्ति । येन संमार्जनीसमूहितधूलितृण-वद्धस्तेनोद्धृत्य बहिस्त्यक्ष्यामः । मैवम् । उपवासजागरणवत्तदुपपत्तेः । स्वभावात्तयोर्भुजिक्रियानिद्रयोरमूर्तत्वेऽपि तत्परित्यागरूपे उपवासजा-गरणे सर्वैरप्यनुष्ठीयेते तद्वदत्राप्यस्तु । 'अद्य स्थित्वा निराहारम्' इत्यादि-मन्त्रेण संकल्पं कृत्वा सावधानेनैवावस्थानं तत्र त्याग इति चेदत्रापि न तद्दण्डनिवारितम् । प्रैषमन्त्रेण संकल्प्याप्रमत्तत्वेनावस्थातुं शक्य-त्वात् । वैदिकमन्त्रानधिकारिणां तु भाषया संकल्पोऽस्तु । यदि तत्र

१ क. ख. ग. घ. ङ. च. °दि भावना° । २ ख. ग. घ. च. शान्ततमस्ने° । ३ क. ख. ग. घ. ङ. च. °सितं त्य° । ४ क. ख. ग. ङ. च. °हारः । इ° । ५ क. ख. ग. ङ. च. °षमात्रणे ।

**शाकसूपौदनादिसंनिधित्यागस्तर्ह्यत्रापि स्रक्चन्दनवनितादिसंनिधिपरित्यागोऽस्तु । अथ तत्र बुभुक्षानिद्रालस्यादिनिवर्तकैः पुराणश्रवणदेवपूजानृत्यगीतवादित्रादिभिश्चित्तमुपलाल्यते तर्ह्यत्रापि मैत्र्यादिभिस्तदुपलालयेत् । मैत्र्यादयस्तु पतञ्जलिना सूत्रिताः—'मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम्' इति ।**

**अत्रेति** । एवं विषयवासना अपि ज्ञापयति—**विषयेति** । नन्वेवं निरुक्तवासिष्ठवाक्यगतपदार्थविवक्षायां को हेतुस्तत्राऽऽह—**मृदुतीव्रेति** । ननु मानसवासनाविषयवासनयोरेवं मृदुत्वतीव्रत्वाभ्यां लोकादिवासनात्रयत्वं दम्भाद्यासुरसंपत्त्वं च मानसवासनादिशब्दमर्यादया तु नैव प्रतीयत इत्यत आह—**यद्धेति** । न चैवं तर्हि ततः केनाप्युपायेन वासनाचतुष्टयस्य क्षयः संपादनीय इति प्रागुक्तलोकादिवासनात्रयसहितदम्भदर्पाद्यासुरसंपद्रूपचतुर्थमानसवासनाभिः साकं वासनाषट्कं स्यादिति वाच्यम् । यत्कृतवासनाद्वय एव प्रागुक्तवासनानां चतसृणामप्यन्तर्भावादित्याह—**अस्मिन्पक्ष** इत्यादिना । तत्र हेतुमाह—**अन्तर्बाह्येति** । तत्रापि शङ्कते—**नन्वि**तिप्रभृतिग्रन्थेन । तत्समाधानं प्रतिजानीते—**मैवमिति** । तत्र सदृष्टान्तं हेतुमाह—**उपवासेति** । तमुपपादयति—**स्वभावे**त्यादिना । तत्र वैषम्यं दृष्टान्ते शङ्कते—**अथे**त्यादिना । सिद्धान्ती तत्रापि साम्येन समाधत्ते—**अत्रापी**त्यादिना । ननु जीवन्मुक्तिकामानां स्त्रीशूद्रादीनां क्व प्रैषमन्त्रेण संकल्पस्तत्राऽऽह—**वैदिकेति** । पुनरपि दृष्टान्तवैषम्यमाशङ्क्य समाधत्ते—**यदी**त्यादिना । पुनरपि तदाक्षिप्य प्रतिक्षिपति—**अथे**त्यादिना । किं तन्मैत्र्यादि तदाह—**मैत्र्यादयस्त्वि**त्यादिना सप्रमाणम् ।

ननु चित्तस्योक्तसाधनसाध्यप्रसादनं हि कलुषीभावपूर्वकं वाच्यं स एवाऽऽदौ तत्र केनेत्यत आह—

**चित्तं हि रागद्वेषपुण्यपापैः कलुषी क्रियते । रागद्वेषौ च पतञ्जलिरसूत्रयत्[1]—'सुखानुशयी रागः, दुःखानुशयी द्वेषः' इति । स्वेनानुभूयमानं सुखमनुशेते कश्चिद्वृत्तिविशेषः सुखजातीयं मे सर्वं भूयादिति । तच्च दृष्टादृष्टसामग्र्यभावान्न संपादयितुं शक्यम् । अतः स रागश्चित्तं कलुषी करोति । यदा सुखिष्वयं मैत्रीं भावयेत् । सर्वेऽप्येते सुखिनो मदीया इति तदा तत्सुखं स्वकीयमेव संपन्नमिति भावयतस्तत्र रागो निवर्तते । यथा स्वस्य राज्याभावेऽपि पुत्रादिराज्यमेव स्वकीयं राज्यं**

---

१ क. ख. ग. घ. ङ. च. °ति । स्नेहात्स्वेना° ।

तद्वत् । निवृत्ते रागे वर्षास्वतीतासु शरत्सरिदिव चित्तं प्रसीदति । तथा दुःखमनुशेते कश्चित्प्रत्ययः, ईदृशं सर्वं दुःखं सर्वदा मे मा भूदिति । तच्च रोगशत्रुव्याघ्रादिषु सत्सु न निवारयितुं शक्यम् । न च सर्वे दुःखहेतवो हन्तुं शक्यन्ते । अतः स द्वेषः सदा हृदयं दहति । यदा स्वस्येव परेषां प्रतिकूलं दुःखं मा भूदित्यनेन प्रकारेण करुणां दुःखिषु प्राणिषु भावयेत्तदा वैर्यादिद्वेषनिवृत्तौ चित्तं प्रसीदति । अत एव स्मर्यते—

प्राणा यथाऽऽत्मनोऽभीष्टा भूतानामपि ते तथा ।
आत्मौपम्येन भूतानां दयां कुर्वन्ति साधवः । इति ॥

तत्प्रकारं च महान्तो दर्शयन्ति—

सर्वेऽत्र सुखिनः सन्तु सन्तु सर्वे निरामयाः ।
सर्वे भद्राणि पश्यन्तु मा कश्चिद्दुःखमाप्नुयात् । इति ॥

तथा हि प्राणिनः स्वभावत एव पुण्यं नानुतिष्ठन्ति पापं त्वनुतिष्ठन्ति । तदाहुः—

पुण्यस्य फलमिच्छन्ति पुण्यं नेच्छन्ति मानवाः ।
न पापफलमिच्छन्ति पापं कुर्वन्ति यत्नतः । इति ॥

ते च पुण्यपापे पश्चात्तापं जनयतः । स च तापः श्रुत्याऽनूद्यते—
किमहꣳ साधु नाकरवम् । किमहं पापमकरवम् ' इति ।

**चित्तं हीति** । ननु रागद्वेषयोरेव किं स्वरूपं तत्राऽऽह—**रागेति** । तत्सूत्रमेव पठति—**सुखे**त्यादिना । तद्विवृणोति—**स्वेने**त्यादिना । एवं चित्तकालुष्यकारणं रागं निरूप्य मैत्रीत्यादिप्रागुक्तसूत्रे तदुपयोगमाह—**यदे**त्यादिना । एवं द्वेषपदार्थमप्यभिधाय तत्र प्राग्वदेव तदुपयोगमप्याह—**तथे**त्यादिना । तत्र स्मृतिमप्यनुकूलयति—**अत एवेति** । तद्वाक्यमेव पठति—**प्राणा यथेति** । तत्प्रकारे सांप्रदायिकवाक्यं प्रकाशयति—**तत्प्रकारं** चेत्यादिना सप्रतिज्ञम् । **सर्वेऽत्रेति** । अत्र, दृश्ये संसारे । श्रीमद्भागवतेऽपि—

स्वस्त्यस्तु विश्वस्य खलः प्रसीदतां ध्यायन्तु भूतानि शिवं मिथो धिया ।
मनश्च भव्यं भजतामधोक्षजे आविश्यतां नो मतिरप्यहैतुकी ॥ इति ।

फलितमाह—**तथा ही**त्यादिना । तत्र वृद्धवचनं प्रमाणयति—**तदाहुरिति** सप्रतिज्ञम् । **पुण्यस्येति** । ततः किं तत्राऽऽह—**ते चेति** । तत्र तैत्तिरीयकश्रुतिमपि संवादयति—**स चे**त्यादिना सावतरणम् । साधु, पुण्यकर्म । नाकरवं, नैवानुष्ठितवानस्मीत्यर्थः । एवमेवाग्रेऽपि ।

एवं तर्हि कोऽस्यानुतापस्योपशमोपाय इत्यत्राऽऽह **यद्यसावित्यादिना**—

यद्यसौ पुण्यपुरुषेषु मुदितां भावयेत्तदा तद्वासनया स्वयमेवाप्रमत्तः पुण्येषु प्रवर्तते । तथा पापिषूपेक्षां भावयन्स्वयमपि पापान्निवर्तते । अतः पश्चात्तापस्याभावेन चित्तं प्रसीदति । सुखिषु मैत्रीं भावयतो न केवलं रागनिवृत्तिः किंत्वसूयेर्ष्यादयोऽपि निवर्तन्ते । गुणेषु दोषाविष्करणमसूया, परगुणानामसहनमीर्ष्या । यदा मैत्रीवशात्परसुखं स्वकीयमेव संपद्यते तदा परगुणेषु कथमसूयादिकं संभवेत् । एवं दोषान्तरनिवृत्तिरपि यथायोग्यमनुमेया । दुःखिषु करुणां भावयतः शत्रुवधादिकरो द्वेषो यदा निवर्तते तदा दुःखित्वप्रतियोगिकस्वसुखित्वप्रयुक्तो दर्पोऽपि निवर्तते स च दर्प आसुरसंपद्यहंकारप्रस्तावे निरूपितः—

ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान्सुखी ।
आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ॥ इत्यादि ।

ननु पुण्यात्मसु मुदितां भावयतः पुण्यप्रवृत्तिः फलत्वेनोक्ता सा च योगिनो न युक्ता । मलिनायां शास्त्रवासनायां पुण्यमन्तर्भाव्य पूर्वमुदाहृतत्वात् । मैवम् । पुनर्जन्मकारणस्य काम्येष्टापूर्तादेस्तत्र मलिनत्वेनोदाहरणात् । इह तु योगाभ्यासजन्यमशुक्लकृष्णत्वेनाजन्मापादकं पुण्यं विवक्षितम् । अशुक्लकृष्णत्वं पतञ्जलिः सूत्रयामास—'कर्माशुक्लकृष्णं योगिनस्त्रिविधमितरेषाम्' इति ।

काम्यं कर्म विहितत्वाच्छुक्लं, निषिद्धं कृष्णं, मिश्रं शुक्लकृष्णम् । तदेतत्त्रयमितरेषामयोगिनां संपद्यते । तच्च त्रिविधं जन्म प्रयच्छति । तदाहुर्विश्वरूपाचार्याः—

शुभैराप्नोति देवत्वं निषिद्धैर्नारकीं गतिम् ।
उभाभ्यां पुण्यपापाभ्यां मानुष्यं लभतेऽवशः ॥ इति ।

ननु योगस्यानिषिद्धत्वादकृष्णत्वेऽपि विहितत्वाच्छुक्लत्वमिति चेन्मैवम् । अकाम्यत्वाभिप्रायेणाशुक्लत्वाभिधानात् । अतोऽशुक्लकृष्णे पुण्ये प्रवृत्तिर्योगिनोऽपेक्षिता ।

किंच मैत्र्यादिभावनानां न केवलं निरुक्तान्येव फलानि किं त्वन्यान्यपीत्युपपादयति—**सुखिष्वित्यादिना** । निरुक्तरीत्या दोषान्तरनिवृत्तिरप्यूह्येत्याह—**एवं दोषान्तरेति** । तद्यथा

१ क. ख. ग. घ. ङ. च. अतः शु° ।

यदा योगीन्द्रः पापिष्ठेषूपेक्षां भावयति तदा तत्कृतपापेनास्योपेक्ष्यत्वादेव क्रोधोऽपि नेति। एवमपि योगिनः पुण्यप्रवृत्त्यनौचित्यं शङ्कते—**नन्वि**त्यादिना। समाधातुं तत्रापि प्रतिजानीते—**मैवमिति**। तत्र हेतुं व्युत्पादयति—**पुन**रित्यादिना। ननूक्तकर्मणि किं प्रमाणं तत्राऽऽह—**अशुक्ले**त्यादिना। तत्सूत्रमुदाहरति—**कर्मेति**। तद्विवृणोति—**काम्यमि**त्यादिना। ननु भवत्वेवमयोगिकर्म किमतस्तदाह—**तच्चेति**। तत्र वार्तिकं प्रमाणयति—**तदाहु**रित्यादिना। तत्रापि शङ्कते—**नन्वि**त्यादिना। तत्र समाधातुं प्रतिजानीते—**मैवमिति**। तत्र हेतुमाह—**अकाम्यत्वेति**। फलितमाह—**अत** इत्यादिना।

अथैवमप्यनिष्टमाशङ्कते—

**ननु योगिनोऽप्यनेन न्यायेन यथोचितं पुण्यात्मसु मुदितां भावयित्वा पुण्येष्वेव प्रवर्तेरन्निति चेत्प्रवर्तन्तां नाम। ये मैत्र्यादिभिश्चित्तं प्रसादयन्ति तेषामेव योगित्वात्। मैत्र्यादिचतुष्टयमुपलक्षणम्। तेन 'अभयं सत्त्वसंशुद्धिः' इत्यादिदैवसंपत्, 'अमानित्वमदम्भित्वम्' इत्यादिज्ञानसाधनानि जीवन्मुक्तस्थितप्रज्ञादिवचनोक्ता धर्माश्चोपलक्ष्यन्ते। सर्वेषामेतेषां शुभ[1]वासनारूपत्वेन मलिनवासनानिवर्तकत्वात्। ननु सन्त्यनेकाः शुभवासनाः। न च ता एकेन सर्वा अभ्यसितुं शक्यन्ते। निरर्थकश्च तदभ्यासप्रयास इति चेन्न। तन्निवर्त्यानामनन्तानां मलिनवासनानामेकस्य[2] मनस्यसंभवात्। न ह्यायुर्वेदोक्तानि सर्वाण्यौषधान्येकेन सेवितुं शक्यन्ते। नापि तन्निवर्त्याः सर्वे रोगा एकस्य देहे संभवन्ति। एवं तर्हि स्वचित्तं प्रथमतः परीक्ष्य तत्र यदा यावत्यो मलिनवासनास्तदा तावतीः शुभवासना विरोधिनीरभ्यसेत्। यथा पुत्रमित्रकलत्रादिभिः पीड्यमानस्ततो विरक्तस्तन्निवर्तकं पारिव्राज्यं गृह्णाति, तथा विद्यामदधनमदकुलाचारमदादिमलिनवासनाभिः पीड्यमानस्तद्विरोधिनं विवेकमभ्यसेत्। स च विवेको जनकेन दर्शितः—**

**अद्य ये महतां मूर्ध्नि ते दिनैर्निपतन्त्यधः।**
**हन्त चित्त महत्तायां कैषा विश्वस्तता तव॥**
**क्व धनानि महीपानां ब्रह्मणः क्व जगन्ति वा।**
**प्राक्तनानि प्रयातानि केयं विश्वस्तता तव।**

---

१ क. ख. ङ. च. शुभाशुभ°। २ घ. ङ. °स्य नरस्यासं।

**कोटयो ब्रह्मणां याता गताः स्वर्गपरम्पराः।**
**प्रयाताः पांसुवद्भूपाः का धृतिर्मम जीविते ॥**
**येषां निमेषणोन्मेषौ जगतः प्रलयोदयौ।**
**तादृशाः पुरुषा नष्टा मादृशां गणनैव का ॥ इति।**

**नन्विति**। इष्टापत्त्या परिहरति—**प्रवर्तन्तां नामेति**। तत्र योगित्वभङ्गमाशङ्क्य लक्षणसत्त्वान्नैवमित्याह—**ये मैत्र्यादिभि**रित्यादिना निरुक्तेष्टापत्तिहेतुकथनेन। ननु किं मैत्र्यादिचतुष्टयवत्त्वमेव योगित्वं तथात्वे तदितरप्राक्प्रपञ्चितानेकधर्मवैयर्थ्यमित्यत आह—**मैत्र्यादी**त्यादिना। तत्र हेतुमाह—**चतुष्टयमि**त्यादिना। एवमुपलक्षणत्वकल्पने फलमाह—**तेनेति**। ततः किं तदाह—**सर्वेषामि**त्यादिना हेतूक्त्या। तत्राप्याशङ्क्य समाधत्ते—**नन्वि**त्यादिना। तत्समर्थयितुं दृष्टान्तमाह—**न ही**त्यादिना। नन्वेवं चेत्कोऽत्र वासनाक्षयेऽस्त्युपाय इत्यत्राऽऽह—**एवं तर्ही**त्यादिना। तत्रापि दृष्टान्तमाह—**यथे**त्यादिना। ननु कोऽसौ विवेको यदभ्यासेन सर्वासामपि विद्यामदादिमलिनवासनानां निवृत्तिरित्यतस्तं सप्रमाणं प्रतिज्ञाय वासिष्ठनिष्ठानि तद्वाक्यान्येव स्पष्टयति—**स चे**त्यादिना **केती**त्यन्तेन।

तत्रासांगत्यं शङ्कते **नन्वि**त्यादिना—

**नन्वयं विवेकस्तत्त्वज्ञानोदयात्प्राचीनः, नित्यानित्यवस्तुविवेकादिसाधनव्यतिरेकेण ब्रह्मज्ञानासंभवात्। इह तूत्पन्नब्रह्मसाक्षात्कारस्य जीवन्मुक्तये वासनाक्षयादिसाधनं वक्तुमुपक्रान्तमतः किमिदमकाण्डे ताण्डवमिति चेत्। नायं दोषः। साधनचतुष्टयसंपन्नस्य पश्चाद्ब्रह्मज्ञानमित्येष सर्वपुरुषसाधारणः प्रौ[3]ढो राजमार्गः। जनकस्य तु पूर्वपुण्यपुञ्जपरिपाकेनाऽऽ(णाऽऽ)काशफलपातवदकस्मात्सिद्धगीताश्रवणमात्रेण तत्त्वज्ञानमुत्पन्नम्। ततश्च चित्तविश्रान्तये विवेकोऽयं क्रियत इति काण्ड एवेदमुचितं ताण्डवम्। नन्वेवमप्यस्य विवेकस्य ज्ञानसमनन्तरभावित्वेन मलिनवासनानुवृत्त्यभावाच्छुद्धवासनाभ्यासो नापेक्षित इति चेन्न। जनकस्य तदनुवृत्त्यभावेऽपि याज्ञवल्क्यभगीरथादेस्तदनुवृत्तिदर्शनात्। अस्ति हि याज्ञवल्क्यस्य तत्प्रतिवादिनामुषस्तकहोलादीनां च भूयान्विद्यामदः। तैः सर्वैरपि विजिगीषुकथायां प्रवृत्तत्वात्। ननु तेषां विद्यान्तरमेवास्ति न ब्रह्मविद्येति चेन्न। कथागतयोः प्रश्नोत्तरयोर्ब्रह्मविषयत्वात्। ननु ब्रह्मविषयत्वेऽपि तेषामापाततो ज्ञानमेव न तु सम्यग्वेदन-**

१ क. ख. ग. घ. ङ. च. °ताः सर्गा°। २ छ. °षमात्रेण ज°। ३ क. क. ङ. च. °रणक्षुण्णः प्रौ°।

मिति चेन्न । तथा सत्यस्माकमपि तदीयवाक्यैरुत्पन्नाया ब्रह्मविद्याया असम्यक्त्वप्रसङ्गात् । ननु सम्यक्त्वेऽपि परोक्षज्ञानमेवेति चेन्न । यत्साक्षादपरोक्षाद्ब्रह्मेति मुख्यापरोक्षविषयतयैव विशेषतः प्रश्नोपलम्भात् । नन्वात्मज्ञानिनो विद्यामद आचार्यैर्नाभ्युपगम्यते । तथा चोपदेशसाहस्र्यामभिहितम्—

ब्रह्मवित्त्वं तथा मुक्त्वा स आत्मज्ञो न चेतरः ॥ इति ।

नैष्कर्म्यसिद्धावपि—

न चाध्यात्माभिमानोऽपि विदुषोऽस्त्यासुरत्वतः ।
विदुषोऽप्यासुरश्चेत्स्यान्निष्फलं ब्रह्मदर्शनम् ॥

इतिचेन्नायं दोषः । जीवन्मुक्तिपर्यन्तस्य तत्त्वज्ञानस्य तत्र विवक्षितत्वात् । न खलु वयमपि जीवन्मुक्तानां विद्यामदमभ्युपगच्छामः ।

अथ सिद्धान्ती सानुवादं समाधातुं प्रतिजानीते—**इति चेन्नायं दोष इति** । तत्रोपपत्तिमाह—**साधने**त्यादिना । जनके प्रकृतविवेकवति तद्वैलक्षण्यमाह—**जनकस्य त्वि**त्यादिना । तत्रापि शङ्कते—**नन्वेवमपी**त्यादिना । तत्रापि प्राग्वदेव समाधत्ते—**इति चेन्नेति** । तत्र हेतुमाह—**जनकस्ये**त्यादिना । तमुपपादयति—**अस्ति ही**त्यादिना । उपलक्षणमिदं भगीरथलोकत्रासनादेरपि । तस्यापि योगवासिष्ठे त्रितलाभिधमहर्षिणा चाऽऽर्येण मलिनवासनोपशमार्थं निःसीमत्यागस्य समुपदिष्टत्वात् । **तत्प्रतिवादिनामिति** । एतेन भगीरथादेरित्यादिपदार्थो व्याख्यातः । तत्र हेतुमाह—**सर्वैरपीति** । तत्रापि शङ्कते—**नन्वि**त्यादिना । समाधत्ते—**इति चेन्नेति** । तत्र हेतुः **कथेति** । तत्राप्याशङ्क्य समाधत्ते—**ननु ब्रह्मे**त्यादिना । तथा च सर्वत्र शास्त्रीयकथास्वनाश्वासेनानिर्मोक्षापत्तिरित्याकूतम् । पुनरप्याशङ्क्य समाधत्ते—**ननु सम्यक्त्वेऽपी**त्यादिना । तत्रापि प्राचीनाचार्यविरोधमाशङ्क्य समाधत्ते—**नन्वात्मे**त्यादिना ।

अथाद्वैतब्रह्मविदस्तावद्विद्यामदसभावनैव नास्तीति शङ्कते—

ननु विजिगीषोरात्मबोध एव नास्ति ।

रागो लिङ्गमबोधस्य चित्तव्यायामभूमिषु ।
कुतः शाद्वलता तस्य यस्याग्निः कोटरे तरोः ॥

इत्याचार्यैरभ्युपगमादिति चेन्न ।

रागादयः सन्तु कामं न तद्भावोऽपराध्यति[1] ।
उत्खातदंष्ट्रोरगवदविद्या किं करिष्यति ॥

---

१ ग. व. च. छ. °ध्यते । उ° ।

इत्यत्र तैरेव रागाद्यभ्युपगमात्। न चात्र परस्परव्याहतिः। स्थितप्रज्ञे ज्ञानिमात्रे च वचनद्वयस्य व्यवस्थापनोपयुक्तत्वात्। ननु ज्ञानिनो रागाद्यभ्युपगमे धर्माधर्मद्वारेण जन्मान्तरप्रसङ्ग इति चेन्मैवम्। अदग्धबीजवदविद्यापूर्वककामादेरेव मुख्यरागादित्वेन पुनर्जन्महेतुत्वात्। ज्ञानिनस्तु दग्धबीजवदाभासमात्रा एव रागादयः। एतदेवाभिप्रेत्योक्तम्—

उत्पद्यमाना रागाद्या विवेकज्ञानवह्निना।
तदा तदैव दह्यन्ते कुतस्तेषां प्ररोहणम्। इति॥

तर्हि स्थितप्रज्ञस्यापि ते सन्त्विति चेन्न। तत्काले मुख्यवदेवाऽऽभा[1]समानानां बाधकत्वात्। रज्जुसर्पोऽपि मुख्यसर्पवदेव तदानीं भीषयन्नुपलभ्यते तद्वत्। तर्ह्याभासत्वानुसंधानानुवृत्तौ न कोऽपि बाध इति चेच्चिरं जीवतु भवान्। इयमेवास्मदभिमता जीवन्मुक्तिः।

**नन्विति**। अयं भावः—विद्यामदो हि मानसो धर्मः स च विजिगीषामूलकसदसद्विवेककामुकराजसभायां कथाप्रवृत्त्युन्नेयः सा च प्रतिष्ठापूर्वकधनैकावाप्तिफलिकेति तद्रागमात्रपर्यवसायिनी स चाज्ञानानुमापक इति। नन्वत्र किं मानमित्यत आह—**रागो लिङ्गमि**त्यादिनैष्कर्म्यसिद्ध्युदाहरणपूर्वकं प्रतिज्ञातेऽर्थे हेतुं प्रतिपादयन्। ततः सिद्धान्ती निरुक्तशङ्कामनूद्य शमयितुं प्रतिजानीते—**इति चेन्नेति**। तत्रापि हेतुमुक्ताचार्यवचनपूर्वकमेवाऽऽह—**रागादय** इत्यादिना। **इतीत्यादि**। निरुक्तवार्तिकामृतपद्ये। तैरेव नैष्कर्म्यसिद्धिकृद्भिः श्रीमत्सुरेश्वराचार्यचरणैरेवेत्यर्थः। तत्रापि व्याघातमाशङ्क्य समाधत्ते—**नचे**त्यादिना। पुनरपि प्रकारान्तरमाशङ्क्य समाधत्ते—**नन्वि**त्यादिना। तत्र भारतीतीर्थवाक्यमपि तृप्तिदीपीयमनुकूलयति—**एतदेवे**त्यादिना। तत्राप्याशङ्क्य समाधत्ते—**तर्ही**त्यादिना। एवं चाऽऽभासत्वानुसंधानानुवृत्तौ न दोष इत्याशङ्क्येष्टापत्तिं स्पष्टयति—**तर्ही**त्यादिना **जीवन्मुक्तिरि**त्यन्तेन।

नन्वेवं चेत्तर्हि याज्ञवल्क्यस्य विजिगीषुकथायां प्रवृत्तस्याप्याभासत्वानुसंधानं द्वैतविषयकमस्त्येव। अन्यथा ह्यन्तर्यामिब्राह्मणे 'एष त आत्माऽन्तर्याम्यमृतोऽतोऽन्यदार्तम्' इति द्वैतमिथ्यात्वपूर्वकमद्वैतब्रह्मात्मैक्यरूपकैवल्योपदेष्टृत्वमाम्नातमनुपपन्नं स्यादित्यत आह—

याज्ञवल्क्यस्तु विजिगीषुदशायां न हीदृशः। चित्तविश्रान्तये विद्वत्संन्यासस्य तेन करिष्यमाणत्वात्। न केवलमस्य विजिगीषा किंतु

[1] क. ख. ङ. °भासानां°।

**धनतृष्णाऽपि महती जाता। बहूनां ब्रह्मविदां पुरतः स्थापितं सालंकारगोसहस्रमपहृत्य स्वयमेवेदमाह 'नमो वयं ब्रह्मिष्ठाय कुर्मो गोकामा एव वयं स्मः' इति । इतरान्ब्रह्मविदोऽवज्ञातुमियं काचिद्वचोभङ्गीति चेत्। अयमपि तर्ह्यपरो दोषः। इतरे च ब्रह्मविदः स्वकीयं धनमनेनापहृतमिति मत्वा चुक्रुधुः।**

**याज्ञवल्क्यस्त्विति**। निरुक्तशङ्कोपशान्त्यर्थस्तुशब्दः। तत्र हेतुमाह—**चित्ते**त्यादिना। नन्वेवं तर्ह्यन्तर्यामिब्राह्मणोक्तश्रुतार्थापत्त्या याज्ञवल्क्यस्य विजिगीषुदशायामपि द्वैतविषयकाभासत्वानुसंधानपूर्वकब्रह्मात्मैक्यरूपकैवल्यानुसंधानानुवृत्तिमत्त्वं तत्कर्तृकविद्वत्संन्यासबोधकश्रुतार्थान्यथानुपपत्त्यन्तरेण च तदभाव इति परस्परविरुद्धश्रुतिद्वयस्याप्यप्रामाण्यमिति चेन्न। श्रुत्यन्तरोपोद्बलितत्वेनोत्तरश्रुतार्थानुपपत्तेरेव प्रबलत्वात् पूर्वश्रुतार्थानुपपत्तेस्तु शिष्यविशेषं प्रति निरुक्तसिद्धान्तावबोधनैकतात्पर्यकत्वेनोक्तानुसंधानाभाव एव पर्यवसानान्नो चेत्कौषीतक्युपनिषदि प्रतर्दनं प्रतीन्द्रस्याद्वैतब्रह्मोपदेशेऽपि 'प्राणोऽस्मि प्रज्ञात्मा' इत्यस्मच्छब्दघटितवाक्यप्रयोगानापत्तेश्च । तस्मादुक्तप्रतिज्ञैव ज्यायसीत्याशयेनाऽऽह—**न केवलमि**त्यादिना। ननु किं योगीश्वरस्यापि याज्ञवल्क्यस्य महत्या धनतृष्णायाः सत्त्वे गमकमित्यत्राऽऽह—**बहूनामित्यादि**। तथा च काण्वैः समाम्नायते बार्हदारण्यकपञ्चमाध्याये—'जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे तत्र कुरुपाञ्चालानां ब्राह्मणा अभिसमेता बभूवुस्तस्य ह जनकस्य वैदेहस्य विजिज्ञासा बभूव कः स्विदेषां ब्राह्मणानामनूचानतम इति सह गवां सहस्रमवरुरोध दश दश पादा एकैकस्याः शृङ्गयोराबद्धा बभूवुः ।१।तान्होवाच ब्राह्मणा भगवन्तो यो वो ब्रह्मिष्ठः स एता गा उदजतामिति ते ह ब्राह्मणा न दधृषुरथ ह याज्ञवल्क्यः स्वमेव ब्रह्मचारिणमुवाचैताः सोम्योदज सामश्रवा३ इति ता होदाचकार ते ह ब्राह्मणाश्चुक्रुधुः कथं नो ब्रह्मिष्ठो ब्रुवीतेति' इति। ब्रह्मवित्त्वमत्र सगुणादिसाधारणमेव। पुरतः, पुरस्तात् । किमाहेत्याकाङ्क्षायां तद्वाक्यमेव पठति—**नम** इत्यादिना । तदन्यथाभिप्रायमाशङ्क्य दोषान्तरापत्त्या निराकरोति—**इतराणि**त्यारभ्य **दोष** इत्यन्तेन। शिष्टं त्वतिरोहितमेव।

किंच नैतावदेव, अपि तु ब्रह्महत्यावधिक्रोधपारवश्यमप्यस्य प्रागुक्तानुसंधानवैधुर्यबोधकमित्यभिधत्ते—

**स्वयं च क्रोधपरवशः शाकल्यं शापेन मारयामास । न चास्य**

१ क. ख. ग. घ. ङ. च. °ता। यतो ब°।

**ब्रह्मज्ञो मोक्षाभावः शङ्कनीयः । यतः कौषीतकिनः समामनन्ति—‘नास्य केन च कर्मणा लोको मीयते न मातृवधेन न पितृवधेन न स्तेयेन न भ्रूणहत्यया’ इति ।**

**स्वयं चेति** । एवं तर्हि तत्त्वज्ञत्वेनास्याविद्याध्वस्तिरूपमुक्तिरपि दूरोत्सारितैवेत्यत आह—**न चेति** । तत्र हेतुत्वेन श्रुतिमेव प्रतिजानीते—**यत** इत्यादिना । तामेव श्रुतिं पठति—**नास्येति** । केन चेत्यत्र केनापीति पाठः । ननु श्रीभारतीतीर्थैर्विद्यानन्दे तु—

मातापित्रोर्वधः स्तेयो भ्रूणहत्याऽन्यदीदृशम् ।
न मुक्तिं नाशयेत्पापं मुखकान्तिर्न नश्यति ॥

इत्युक्तम् । तद्वत्तैत्तिरीयोपनिषव्द्याख्याने माधवाचार्यैरियं श्रुतिरज्ञातपातकाभिप्रायेण क्षत्रियब्रह्मविन्निदर्शनेन व्याख्याता ।

वाचा वा मनसा मातृवधादीन्कुरुते यदि ।
तथाऽपि ज्ञानिनो मोक्षो न ह्येतैर्विनिवार्यते ॥
पापं कृतवतोऽप्यस्य मुखे हर्षक्षयो नहि ।
न मुक्तिर्नश्यतीत्येव शास्त्रैरस्य विनिश्चयात् ॥

इत्यनुभूतिप्रकाशे तु वाचिकाद्यभिप्रायेण विव्रियत इति कथं न विरोध इति चेत्सत्यम् । विद्यानन्दे सामान्यत उक्तस्यैव माधवाचार्यैरनुभूतिप्रकाशे च विवरणात् । वस्तुतस्तु यदि तथाऽपिशब्दैरत्राभिप्रायान्तरमेव श्रीगुरुचरणप्रसादलब्धमस्ति । तथा हि—यदा ह्ययं मुमुक्षुः श्रवणादि करोति तदा जगन्मातृत्वेन स्वमातुर्मायायास्तद्वज्जगत्पितृत्वेन स्वपितुर्मायिनो महेश्वरस्यापि मिथ्यात्वनिर्णयलक्षणं मुख्यं वधं करोत्येव । ताभ्यां तयोर्जगतश्च सर्वस्वीभूतमद्वैतात्मतत्त्वसुखप्रकाशरत्नमात्मत्वेन निर्णयादपहरति तेन स्तेयेन । तद्वद्भ्रूणाः सर्वेऽप्यज्ञानिनो जीवा एवात्र बालाः ‘भ्रूणोऽस्त्री गर्भपिण्डयोः’ इति मेदिन्यास्तेषामपि मिथ्यात्वनिर्णयरूपा या हत्या तया च यदाऽस्य पापं नास्ति नापि मुखकालिमादिस्तदा किमु वक्तव्यं जीवन्मुक्तिसाम्राज्यपदाभिषिक्तस्य ब्रह्मनिष्ठस्य तादृशवाचिकादिवधादिभिस्तन्नेति । न चैवमपि माधवाचार्यैरज्ञातपातकाभिप्रायेण कृतं व्याख्यानं पुनरनेन सह विरुद्धमेवेति वाच्यम् । वधादिशब्दशक्यार्थाग्रहशालिनं मन्दाधिकारिणं बोधयितुमेव तत्र तैस्तथोक्तत्वात् । अन्यथा तैरेवोत्तराश्रमे विद्यारण्यसंज्ञकैरत्रोत्तमाधिकार्यर्थं स्वल्पग्रन्थात्मकोपनिषत्तात्पर्यविवरणे कथमित्थं व्याख्यातं स्यात् । तस्मादुक्तमेव श्रुतिपरमरहस्यमिति दिक् ।

---

१ क. ख. ङ. °ह्मस्य मो° ।

एतेन ‘ हत्वाऽपि स इमाँल्लोकान्न हन्ति न निबध्यते ’ इत्यादिस्मृत्यादिवाक्यान्यपि व्याख्यातानि । ‘ विदुषोऽप्यासुरश्चेत्स्याद्विफलं ब्रह्मदर्शनम् ’ इति वार्तिकोक्तेश्चेति सुमङ्गलमखिलम् । प्रकृतं तु शापप्रदानरूपं ब्रह्महननं मानसं वाचिकं चेत्युभयविधमपीति सर्वं संगतमेवेदम् ।

उक्तेऽर्थे परमार्थसारापरनामकपातञ्जलस्मृतिं संवादयति—

**शेषोऽपि स्वकृतार्यापञ्चाशीत्यामिदमाह—**

**हयमेधशतसहस्राण्यथ कुरुते ब्रह्मघातलक्षाणि ।**
**परमात्मविन्न पुण्यैर्न च पापैः स्पृश्यते विमलः । इति ॥**

**तस्मात्किं बहुना ब्रह्मविदां याज्ञवल्क्यादीनामस्त्येव मलिनवासनानुवृत्तिः, भगीरथस्तु तत्त्वं विदित्वाऽपि राज्यं परिपालयन्मलिनवासनाभिश्चित्तविश्रान्त्यभावे सति सर्वं परित्यज्य पश्चाद्विश्रान्तवानिति वसिष्ठेनोपाख्यायते ।**

**शेषोऽपीति** । तामेवाऽऽर्यां पठति— **हयमेधेति** । ननूक्तश्रुतिवाक्यशेषो ‘ नास्य पापं न चक्रुषो मुखान्नीलं वा’ इति वाक्यशेषोऽप्यनुभूतिप्रकाशे प्राक्पापं कृतवतोऽप्यस्येत्यादिकारिकया संक्षेपतो नीर्णीतस्तथाऽपि किंचिन्मात्रे पापालेपः प्रकृतश्रुतेः संमत उत चित्ताद्युपहिते जीवे । नाऽऽद्यः । अप्रसक्तप्रतिषेधापत्तेः । नाप्यन्त्यः । तत्त्वज्ञानहीनेऽपि तदापत्तेः प्रकरणभङ्गापत्तेश्चेति चेन्न । इत्याद्याशङ्कानां तत्रैवोत्तरत्र सविस्तरं समाधानात् । तद्यथा—ननु मूढस्यापि नास्ति चिन्मात्रे पापलेपनम् । ततः कोऽतिशयस्तत्त्वविदः स्यादिति चेच्छृणु—

अहंकर्तृगतं पापमज्ञात्वाऽऽरोप्यते चिति ।
तेन म्लानिर्मुखे भाति जन्मापि नरके भवेत् ॥
ज्ञानेन कर्मणस्तस्य बीजभावो विनश्यति ।
जन्मप्ररोहो नैवास्तीत्येवं निश्चित्य हृष्यति ॥
दग्धबीजं यथा लोके न प्ररोहक्षमं तथा ।
ज्ञानाग्निदग्धं यत्कर्म न तज्जन्मप्रदं भवेत् ॥
तर्हि तत्त्वविदः श्रेष्ठा मूढवन्नियमेन तत् ।
कुतः पापं त्यजन्तीति चेद्रहस्यमिदं शृणु ॥
यद्यप्यामुष्मिकी हानिर्नास्त्यथाप्यैहिकी तु सा ।
महती विद्यते तेन पापं यत्नेन वर्जयेत् ॥
शिष्टास्त्यजन्ति पापिष्ठं प्रत्यक्षो नरकः स हि ।
तन्निन्दकस्तस्य पापं गृहीत्वा नरकं व्रजेत् ॥

स्तोता कर्मी तु संसर्गात्स्वयमप्याचरेत्तथा ।
इत्थं दोषत्रयं दृष्ट्वा शिष्टाः पापं त्यजन्ति हि ॥
किंच पुण्यरतः पूर्वं ज्ञानमाप्नोति नान्यथा ।
पश्चाच्च तद्वासनया पुण्यमेव करोत्यसौ ॥
किं बहूक्त्या तत्त्वविदो न भयं पारलौकिकम् ।
उपदेशसहस्र्यां च तथाऽऽचार्यैरुदीरणात् ॥
परलोकभयं यस्य नास्ति मृत्युभयं तथा ।
तस्याऽऽत्मज्ञस्य शोच्याः स्युः सब्रह्मेन्द्रा अपीश्वराः । इति ॥

नन्वेवं प्राक्प्रतिज्ञातस्य याज्ञवल्क्यभगीरथादेस्तदनुवृत्तिदर्शनादित्यादिग्रन्थेन ज्ञानिनोऽपि याज्ञवल्क्यभगीरथादेर्मलिनवासनानुवृत्तिदर्शनमध्ये याज्ञवल्क्यस्य मलिनवासनानुवृत्तिप्रपञ्चनेऽपि भगीरथस्य तत्कथमित्यपेक्षायामवसरसंगत्या तत्संक्षिपति—**भगीरथस्त्वि**त्यादिना । शङ्काशान्त्यर्थस्तुशब्दः । संक्षेपतस्तु तन्मया भागीरथीकथाख्यचम्पूकाव्य एव संगृहीतं भवति तेनात्रोपरम्यत इति शिवम् ।

फलितमाह **अत** इत्यादिना—

**अतः स्वकीयं वर्तमानं मलिनवासनादोषं परकीयदोषवत्सम्यगुत्प्रेक्ष्य तत्प्रतीकारमभ्यसेत् । अनेनैवाभिप्रायेण स्मर्यते—**

**यथा सुनिपुणः सम्यक्परदोषेक्षणे रतः ।**
**तथा चेन्निपुणः स्वेषु को न मुच्येत बन्धनात् । इति ॥**

**नन्वादौ तावद्विद्यामदस्य कः प्रतीकार इति चेत् । किं स्वनिष्ठस्य परविषयस्य मदस्य किंवा स्वविषयस्य परनिष्ठस्य । आद्ये भङ्गोऽवश्यं क्वचिद्भविष्यतीति निरन्तरं भावयेत् । तद्यथा—श्वेतकेतुर्विद्यया मत्तः प्रवाहणस्य राज्ञः सभां गतस्तेन पञ्चाग्निविद्यायां पृष्टायां स्वयमजानानो निरुत्तरो राज्ञा बहुधा भर्त्सितः पितुः समीपमागत्य स्वनिर्वेदमुदाजहार । पिता तु निर्मदस्तमेव राजानमनुसृत्य तां विद्यां लेभे । दृप्तबालाकिश्चाजातशत्रुणा राज्ञा भर्त्सितो दर्पं संत्यज्य राजानमुपससाद । उषस्तकहोलादयश्च मदेन कथां कृत्वा पराजिताः । यदा स्वविषयः परनिष्ठो मदः प्रवर्तेत तदा मत्तः स परो निन्दत्ववमन्यतां वा । सर्वथाऽपि न मे हानिरिति भावयेत् । तथा हि—**

**आत्मानं यदि निन्दन्ति निन्दन्ति स्वयमेव हि ।**
**शरीरं यदि निन्दन्ति सहायास्ते मता मम ॥**

**निन्दावमानावत्यन्तं भूषणं यस्य योगिनः ।**
**धीविक्षेपः कथं तस्य वाचाटैः क्रियतामिह । इति ॥**

उक्तस्वकीयमलिनवासनादोषप्रतीकाराभ्यसनविधौ स्मृतिमनुकूलयति—**अनेनैवेति** । तामेव स्मृतिं पठति—**यथेति** । अथ योगीश्वरं याज्ञवल्क्यमित्यादिस्मृतिप्रसिद्धत्वेनापि बार्हदारण्यकश्रुतिसंग्रथितकथत्वेन च महामाहिम्नः प्रकृतस्य भगवतो याज्ञवल्क्यस्यापि विद्यामदैकमूलकनिखिलमलिनवासनाकथनात्प्रथमं तत्प्रतीकारमेव दुर्लभं मन्वानः पृच्छति—**नन्वि**त्यादिना । तत्र सिद्धान्ती विकल्प्याऽऽद्य उपायं विधत्ते—**किमि**त्यादिना । तत्र निदर्शनाकाङ्क्षायां तानि प्रतिजानीते—**तद्यथेति** । तत्र च्छान्दोग्ये तदुदाहरति—**श्वेतकेतु**रित्यादिना **लेभ** इत्यन्तेन । एवं कौषीतक्युपनिषदि बृहदारण्यकचतुर्थाध्याये चापि तदाह—**दृप्तबालाकि**रित्यादि**नोपससाद्**इत्यन्तेन । तद्वद्बृहदारण्यकपञ्चमाध्यायेऽपि तत्प्रकटयति—**उषस्त**इत्यादिना **पराजिता** इत्यन्तेन । आदिनाऽन्येऽपि तत्रत्या याज्ञवल्क्यप्रतिवादिना(नो) बहवः प्रसिद्धा एव । अथ विकल्पान्तरमुपन्यस्य तत्रोपायमाह—**यदा स्वे**त्यादिना । मत्तः, विद्यामदोन्मत्तः । मामित्यार्थिकम् । तदेवोपपादयति प्राचीनवचनाभ्यां सप्रतिज्ञम्—**तथा ही**त्यादिना । वाचाटो बहुगर्ह्यवागित्यमरः । स्पष्टमपरम् ।

उक्तेऽर्थे वार्तिककारसंमतिमप्याह **नैष्कर्म्यसिद्धा**वित्यादिना ।

**नैष्कर्म्यसिद्धौ**—

**" पुरीषे संपरित्यक्ते दोषतश्चावधारिते ।**
**यदि दोषं वदेत्तस्मै किं तत्रोच्चरितुर्भवेत् ॥**
**तद्वत्स्थूले तथा सूक्ष्मे देहे त्यक्ते विवेकतः ।**
**यदि दोषं वदेत्ताभ्यां किं तत्र विदुषो भवेत् ॥**
**शोकहर्षभयक्रोधलोभमोहस्पृहादयः ॥**
**अहंकारस्य दृश्यन्ते जन्म मृत्युश्च नाऽऽत्मनः ॥ "[इति ।]**

**निन्दाया भूषणत्वं च ज्ञानाङ्कुशे दर्शितम्—**

**" मन्निन्दया यदि जनः परितोषमेति**
**नन्वप्रयत्नसुलभोऽयमनुग्रहो मे ।**
**श्रेयोर्थिनो हि पुरुषाः परितुष्टिहेतो-**
**र्दुःखार्जितान्यपि धनानि परित्यजन्ति ॥**

---

१ क. ख. ग. घ. ङ. °द्धौ सपरिकरे वर्चस्के दो° । २ क. ख. म. ङ. °त्नज-नितोऽय° ।

सततसुलभदैन्ये निःसुखे जीवलोके
यदि मम परिवादात्प्रीतिमाप्नोति कश्चित् ॥
परिवदतु यथेष्टं मत्समक्षं तिरो वा
जगति हि बहुदुःखे दुर्लभः प्रीतियोगः । इति ॥

अवमानस्य भूषणत्वं स्मर्यते—

तथा चरेत वै योगी सतां धर्ममनुस्मरन् ।
जना यथाऽवमन्येरन्गच्छेयुर्नैव संगतम् ॥ इति ।

याज्ञवल्क्योषस्तादीनां यौ स्वनिष्ठपरनिष्ठविद्यामदौ तयोर्यथा विवेकेन प्रतीकारस्तथा धनाभिलाषक्रोधयोरप्यवगन्तव्यः ।

अर्थानामर्जने क्लेशस्तथैव परिपालने ॥
नाशे दुःखं व्यये दुःखं धिगर्थान्क्लेशकारिणः ।

इति धनविषये विवेकः ।

क्रोधोऽपि द्विविधः स्वनिष्ठः परविषयः परनिष्ठः स्वविषय इति । तत्र स्वनिष्ठपरविषयं प्रत्येवमुक्तम्—

अपकारिणि कोपश्चेत्कोपे कोपः कथं न ते ।
धर्मार्थकाममोक्षाणां प्रसह्य परिपन्थिनि ॥
फलार्थिनो धर्मयशोर्थनाशनः
स चेदपार्थः स्वशरीरतापनः ।
न चेह नामुत्र हिताय यः सतां
मनांसि रोषः स समाश्रयेत्कथम् ॥ इति ।

स्वविषयं परनिष्ठं प्रत्येवमीरितम्—

न मेऽपराधः किमकारणे नृणां मदभ्यसूयेत्यपि नैव चिन्तयेत् ।
न यत्कृता प्राग्भवबन्धनिष्कृतिस्ततोऽपराधः परमो नु चिन्त्यताम् ॥

नमोऽस्तु कोपदेवाय स्वाश्रयज्वालिने भृशम् ।
कोऽप्यस्य मम वैराग्यदायिने दोषबोधिने ॥ इति ।

धनाभिलाषक्रोधवद्योषित्पुत्राभिलाषावपि विवेकेन निवर्तनीयौ ।

**यदीत्यादि** । कश्चिदिति शेषः । तस्मै पुरीषाय । उच्चरितुः, पुरीषोत्सर्गकर्तुः । 'उच्चरेद्दक्षिणामुखः' इति स्मृतेः । आचार्यान्तरवचने अपि समुच्चिनोति—**निन्दाया** इत्यादिना । स्मृतिमप्यत्रानुकूलयति—**अवमानस्येत्यादि** । धर्ममदूषयन्नित्यपि पाठः । एतेन

मार्कण्डेयपुराणप्रसिद्धं दत्तात्रेयस्य सङ्गत्यागार्थं विकर्मप्रकाशनं मायिकमपीश्वरकोटिनिविष्टत्वादेव ।

धर्मव्यतिक्रमो दृष्ट ईश्वराणां च साहसम् ।
तेजीयसां न दोषाय वह्नेः सर्वभुजो यथा ॥

इति भागवतोक्तरीत्यैव व्याख्येयम् । एवं धनाभिलाषरोषयोरपि निरासोपायमतिदिशति— **याज्ञवल्क्य**येत्यादिना । तत्र धनाभिलाषे विवेकं प्राचां वचसैव विशदयति— **अर्थानामिति** । एवं क्रोधेऽप्याह— **क्रोध** इत्यादिना । धर्मेति तृतीयपादे सर्वेषां पुरुषार्थानामिति नैष्कर्म्यसिद्धिपाठः । 'अभिघातिपरारातिप्रत्यर्थिपरिपन्थिनः' इत्यमरः । अपार्थः, व्यर्थः । स्पष्टमपरम् ।

अत्राऽऽद्यं सप्रमाणमाह तत्रेत्यादिना—

**तत्र योषिद्विवेको वसिष्ठेन दर्शितः—**

**मांसपाञ्चालिकायास्तु यन्त्रलोलेऽङ्गपञ्जरे ।**
**स्नाय्वस्थिग्रन्थिशालिन्याः स्त्रियाः किमिव शोभनम् ॥**
**त्वङ्मांसरक्तबाष्पाम्बु पृथक्कृत्वा विलोचने ।**
**समालोकय रम्यं चेत्किं मुधा परिमुह्यसि ॥**
**मेरुशृङ्गतटोल्लासिगङ्गाजलरयोपमा ।**
**दृष्टा यस्मिन्स्तने मुक्ताहारस्योल्लासशालिता ॥**
**श्मशानेषु दिगन्तेषु स एव ललनास्तनः ।**
**श्वभिरास्वाद्यते काले लघुपिण्ड इवान्धसः ॥**
**केशकज्जलधारिण्यो दुःस्पर्शा लोचनप्रियाः ।**
**दुष्कृताग्निशिखा नार्यो दहन्ति तृणवन्नरम् ॥**
**ज्वलतामतिदूरेऽपि सरसा अपि नीरसाः ।**
**स्त्रियो हि नरकाग्नीनामिन्धनं चारु दारुणम् ॥**
**कामनाम्ना किरातेन विकीर्णा मुग्धचेतसाम् ।**
**नार्यो नरविहङ्गानामङ्गबन्धनवागुराः ॥**
**जन्मपल्वलमत्स्यानां चित्तकर्दमचारिणाम् ।**
**पुंसां दुर्वासनारज्जुर्नाडी[1] बडिशपिण्डिका ॥**
**सर्वेषां दोषरत्नानां सुसमुद्गिकयाऽनया ।**
**दुःखशृङ्खलया नित्यमलमस्तु मम स्त्रिया ॥**

---

१ क. ख. ग. व. ङ. च. °र्नारी ब° ।

इतो मांसमितो रक्तमितोऽस्थीनीति वासरैः।
ब्रह्मन्कतिपयैरेव याति स्त्री विशरारुताम् ॥
यस्य स्त्री तस्य भोगेच्छा निःस्त्रीकस्य क्व भोगभूः।
स्त्रियं त्यक्त्वा जगत्त्यक्तं जगत्त्यक्त्वा सुखी भवेत् ॥ इति।

पुत्रविवेको ब्रह्मानन्दे दर्शितः—

अलभ्यमानस्तनयः पितरौ क्लेशयेच्चिरम्।
लब्धोऽपि गर्भपातेन प्रसवेन च बाधते ॥
जातस्य ग्रहरोगादि कुमारस्य च मूर्खता।
उपनीते त्वविद्यत्वमनुद्वाहश्च पण्डिते ॥
यूनश्च परदारादि दारिद्र्यं च कुटुम्बिनः।
पित्रोर्दुःखस्य नास्त्यन्तो धनी चेन्म्रियते तदा ॥ इति।

यथा विद्याधनक्रोधयोषित्पुत्रविषयाणां मलिनवासनानां विवेकेन प्रतीकारस्तथाऽन्यासामपि वासनानां यथायोग्यं शास्त्रैः स्वयुक्त्या दोषं विविच्य प्रतीकारं कुर्यात्। कृते च प्रतीकारे जीवन्मुक्तिलक्षणं परमं पदं लभ्यते। तदाह वसिष्ठः—

वासनानां परित्यागे यदि यत्नं करोष्यलम्[1]।
तत्ते शिथिलतां यान्ति सर्वाधिव्याधयः क्षणात् ॥
पौरुषेण प्रयत्नेन बलात्संत्यज्य वासनाः।
स्थितिं बध्नासि चेत्तर्हि पदमासादयस्यलम् ॥ इति।

'पाञ्चालिका पुत्रिका स्याद्वस्त्रदन्तादिभिः कृता' इत्यमरः। स्नायवः, अन्त्राणि। हारस्योल्लासशालितेत्येव पाठः साधीयान्। हारस्योरसीत्यपपाठ एव स्तन इत्यनेनैवाधिकरणसिद्धेः। काले, पञ्चत्वोर्ध्वम्। अन्धसः, 'भिस्सा स्त्री भक्तमन्धोऽन्नम्' इत्यमरः। विशरारुतां, विशरणशीलतामित्यर्थः। जीर्णा भवतीति यावत्। एवं पुत्रविवेकमप्युदाहरति—**पुत्रे**त्यादिना। ग्रहः, बालग्रहादिः सूर्यादिश्च। आदिना कुरूपतादि। परदारादीत्यत्राऽऽदिना द्यूतादिव्यसनम्। अथोक्तानुवादेन काम्यकर्मादिष्वप्युक्तविवेकमतिदिशति—**यथे**त्यादिना। ततः किं तदाह—**कृते चेति**। तत्र मानमाह—**तदाहे**त्यादिनाऽ**लमि**तीत्यन्तेन। शिष्टं तु स्पष्टमेव।

---

१ क. ख. ग. ङ. °म्। तास्ते शि°।

तत्र शङ्कते नन्वत्रेत्यादिना—

नन्वत्र पौरुषप्रयत्नो नाम पूर्वोक्तो विषयदोषविवेकः । स च पुनः पुनः क्रियमाणोऽपि प्रबलेन्द्रियव्यवहारेणाभिभूयते । तदुक्तं भगवता—

यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः ।
इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥
इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते ।
तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ॥ इति ।

एवं तर्ह्युत्पन्नविवेकरक्षार्थमिन्द्रियाणि निरोद्धव्यानि । तदपि तत्रैवोत्तरश्लोकाभ्यां दर्शितम्—

तानि सर्वाणि संयम्य युक्त आसीत मत्परः ।
वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥
तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ इति ।

स्मृत्यन्तरेऽपि—

न पाणिपादचपलो न नेत्रचपलो यतिः ।
न च वाक्चपलश्चैवमिति शिष्टस्य लक्षणम् ॥ इति ।

एतदेवात्र संग्रहविवरणाभ्यां स्पष्टीकृतम्—

अजिह्वः षण्डकः पङ्गुरन्धो बधिर एव च ।
मुग्धश्च मुच्यते जन्तुः षड्भिरेतैर्न संशयः ॥
इदमिष्टमिदं नेति योऽश्नन्नपि न सज्जते ।
हितं सत्यं मितं वक्ति तमजिह्वं प्रचक्षते ॥
अद्य जातां यथा नारीं तथा षोडशवार्षिकीम् ।
शतवर्षां च यो दृष्ट्वा निर्विकारः स षण्डकः ॥
भिक्षार्थं गमनं यस्य विण्मूत्रकरणाय च ।
योजनान्न परं याति सर्वथा पङ्गुरेव सः ॥
तिष्ठतो व्रजतो वाऽपि यस्य चक्षुर्न दूरगम् ।
चतुर्युगां भुवं त्यक्त्वा परिव्राट्सोऽन्ध उच्यते ॥

---

१ क. ख. ग. व. ङ. च. °वान्यत्र । २ क. ख. ग. घ. ङ. च. भिक्षुः ।

**हितं मितं मनोरम्यं वचः शोकापहं च यत् ॥**
**श्रुत्वा यो न शृणोतीव बधिरः स प्रकीर्तितः।**
**संनिधौ विषयाणां च समर्थोऽविकलेन्द्रियः ॥**
**सुप्तवद्वर्तते नित्यं भिक्षुर्मुग्धः स उच्यते।**
**न निन्दां न स्तुतिं कुर्यान्न कंचिन्मर्माणि स्पृशेत् ॥**
**नातिवादी भवेत्तद्वत्सर्वत्रैव समो भवेत्।**
**न संभाषेत्स्त्रियं कांचित्पूर्वदृष्टां न च स्मरेत् ॥**
**कथां च वर्जयेत्तासां न पश्येल्लिखितामपि ॥ इति।**

तत्र भगवद्वाक्यमनुकूलयति—**तदुक्तमि**त्यादिना। अथोक्तशङ्कामङ्गीकृत्य सिद्धान्ती तत्रोदाहृतभगवद्वाक्याग्रिमवाक्योक्तमेव तदभिधानपूर्वकमुपायमाह—**एवं तर्ही**त्यादिना। एतेन वक्ष्यमाणं ज्ञानरक्षाख्यं जीवन्मुक्तेः प्रथमं प्रयोजनमपि व्याख्यातम्। इन्द्रियनिरोधनोक्तविवेको रक्षितो भवति परं त्वसावप्युक्तविवेकायत्त एव मनोनाशवासनाक्षयतत्त्वज्ञानाभ्यासानां परस्परकार्यकारणभावस्य सप्रमाणमधस्तादेवोक्तत्वात्तद्वत्तत्रापि ज्ञानपदेनाऽऽर्थिकद्वैतमिथ्यात्वपूर्वकाद्वैतात्मरूपब्रह्मानुसंधानस्यैव विवक्षितत्वात्। इयमेवास्मदभिमता जीवन्मुक्तिरित्यधस्ताद्वदद्भिराचार्यैस्तथैव सूचितत्वाच्च। विस्तरतस्तु तत्प्रकरण एवेदं प्रतिपादयिष्याम इति दिक्। उक्तेऽर्थे स्मृत्यन्तरमपि संवादयति—**स्मृत्यन्तरेऽपी**त्यादिना। एवं निरुक्तोपलक्षितपाश्वितराखिलेन्द्रियनिग्रहवत्त्वम्। यतिपदेन यतत इति व्युत्पत्त्या मनोनिग्रहस्याप्युक्तत्वादित्येतावदेव शिष्टस्य लक्षणमित्यर्थः। अथैतद्विवरणाकाङ्क्षायां तदपि संक्षेपविस्तराभ्यां स्मृत्यैव कृतमित्याह—**एतदेवे**त्यादिना। अत्र वक्ष्यमाणस्मृतिव्राते। षोडशेति रूपाद्युपलक्षणम्। चतुर्युगां, युगशब्दितशकटाग्रकाष्ठचतुर्गुणपरिमितामित्यर्थः। हितमित्यादि वैषयिकहितादिग्राम्यवचःपरम्, अन्यथा वेदान्तेष्वतिव्याप्तेः। न निन्दामित्यादि तु वाक्चक्षुर्मनसां निग्रहे त्वादरार्थमेव।

अथोक्तस्मृतितात्पर्यं संक्षिपति **यथे**त्यादिना—

**यथा कश्चिद्व्रती नक्तैकभुक्तोपवासमौनादिव्रतं संकल्प्य सावधानो भ्रंशमकृत्वा सम्यक्पालयति, तथैवाजिह्वत्वादिव्रते स्थितः सावधानो विवेकं पालयेत्। तदेवं विवेकेन्द्रियनिरोधाभ्यां दीर्घकालनैरन्तर्यसत्कारसेविताभ्यां मैत्र्यादिभावनासु प्रतिष्ठितास्वासुरसंपद्रूपा मलिनवासनाः क्षीयन्ते। ततो निःश्वासोच्छ्वासवन्निमेषोन्मेषवच्च पुरुषप्रयत्नमन्तरेण प्रवर्तमानाभिर्मैत्र्यादिवासनाभिर्लोके व्यवहरन्नपि तदीयसाकल्यवैकल्यानुसंधानं चित्ते परित्यज्य निद्रातन्द्रामनोराज्यादिरूपाः समस्तचेष्टाः**

**प्रयत्नेन शान्ताः कृत्वा चिन्मात्रवासनामभ्यसेत् । स्वतस्तावदिदं जगच्चिज्जडोभयात्मकं भासते । यद्यपि शब्दस्पर्शादिजडवस्तुभासनायैवेन्द्रियाणि सृष्टानि 'पराञ्चि खानि व्यतृणत्स्वयंभूः' इति श्रुतेः, तथाऽपि चैतन्यस्योपादानतया वर्जयितुमशक्यत्वाच्चैतन्यपूर्वकमेव जडं जगद्भासते "तमेव भान्तमनु भाति सर्वं तस्य भासा सर्वमिदं विभाति" इति श्रुतेः । तथा सति पश्चाद्भासमानस्य जडस्य प्रथमभासमानं चैतन्यमेव वास्तवं रूपमिति निश्चित्य जडमुपेक्ष्य चिन्मात्रं चित्ते वासयेत् । एतच्च बलिशुक्रयोः प्रश्नोत्तराभ्यां विस्पष्टमवगम्यते—**

> **किमिहास्तीह किंमात्रमिदं किंमयमेव च ।**
> **कस्त्वं कोऽहं क एते वा लोका इति वदाऽऽशु मे ॥**
> **चिदिहास्तीह चिन्मात्रमिदं चिन्मयमेव च ।**
> **चित्त्वं चिदहमेते च लोकाश्चिदिति संग्रहः ॥ इति ।**

**यथा सुवर्णकामः कटकं विक्रीणन्नपि वलयाकारस्य गुणदोषावुपेक्ष्य गुरुत्तमवर्णयोरेव मनः प्रणिधित्सति तथा चिन्मात्रे मनः प्रणिधातव्यम् । यावता कालेन जडं सर्वथैवोपेक्ष्य चिन्मात्रे मनसः प्रवृत्तिर्निःश्वासादिवत्स्वाभाविकी संपद्येत तावत्कालं चिन्मात्रवासनायां प्रयतेत । नन्वादावेव चिन्मात्रवासनाऽस्तु तयैव मलिनवासनानिवृत्तेः । किमनेनान्तर्गडुना मैत्र्याद्यभ्यासेनेति चेन्न । चिन्मात्रवासनाया अप्रतिष्ठितत्वप्रसङ्गात् ।**

उक्तानुवादेन फलितमाह—**तदेवमि**त्यादिना । ततः किं कार्यं तदाह—**तत** इत्यादिना । तत्प्रकारं प्रतिपादयति—**स्वत** इत्यादि । उभयभानमसिद्धं जडस्यैव घटादेरिन्द्रियैर्भानादिति शङ्कते—**यद्यपी**त्यादिना । तत्र श्रुतिमेव हेतुत्वेन प्रमाणयति—**पराञ्चीति** । पराग्जडं वस्तु, अञ्चन्ति गच्छन्तीति तथा । एतादृशानि खानीन्द्रियाणि स्वयंभूरीश्वरो व्यतृणत्सृष्ट्यादौ मायया रचितवानित्यर्थः । समाधत्ते—**तथाऽपी**त्यादिना । तत्र मानमाह—**तमेवेति** । फलितमाह—**तथा सती**त्यादिना । तत्राऽऽख्यायिकां संवादयति—**एतच्चे**त्यादिना । तत्र युक्तिमाह—**यथेति** । विक्रीणन्मूल्यं दत्त्वा गृह्णन्नपीत्यर्थः । **गुरुत्तमेति** । गुरुत्वाख्यपीतरूपाख्यगुणयोरित्यर्थः । प्रणिधित्सति, प्रणिधातुमिच्छति । उक्तप्रणिधाना-

---

१ क. ङ. च. कारः क° ।

वधिमाह—**यावत**त्यादिना। तत्राप्याशङ्क्य समाधत्ते—**नन्वि**त्यादिना। अन्तर्गडु, शरीरे वातगुल्मम्।

तत्र दृष्टान्तं स्पष्टयति **यथे**त्यादिना—

**यथा कुट्टिमदार्ढ्यव्यतिरेकेण क्रियमाणमपि स्तम्भकुड्यात्मकं गृहं न प्रतितिष्ठति। यथा वा विरेचनेन प्रबलदोषमनिःसार्य सेवितमप्यौषधं नाऽऽरोग्यकरं तद्वत्। ननु 'तामप्यथ परित्यजेत्' इति चिन्मात्रवासनाया अपि परित्यागोऽवगम्यते। तदप्ययुक्तम्। चिन्मात्रं परित्यज्यान्यस्य कस्यचिदुपादेयस्याभावात्। नायं दोषः। द्विधा चिन्मात्रवासना मनोबुद्धिसमन्विता तद्रहिता चेति। करणं मनः, कर्तृत्वोपाधिर्बुद्धिः। तथा च सत्यप्रमत्तोऽहमेकाग्रेण मनसा चिन्मात्रं भावयिष्यामीत्येतादृशेन कर्तृकारणानुसंधानेन समन्विता प्राथमिकी या चिन्मात्रवासना ध्यानशब्दाभिधेया तां परित्यजेत्। या त्वभ्यासपाटवेन कर्तृत्वाद्यनुसंधानव्यवधानरहिता समाधिशब्दाभिधेया तामुपाददीत। ध्यानसमाध्योस्तु लक्षणं पतञ्जलिः सूत्रयामास—'तत्र प्रत्ययैकतानता ध्यानम्' 'तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः' इति। तादृशसमाधौ दीर्घकालनैरन्तर्यसत्कारैः सेविते स्थैर्यं लब्ध्वा पश्चात्कर्तृकरणानुसंधानपरित्यागार्थो यः प्रयत्नस्तमपि परित्यजेत्। नन्वेवं सति तत्त्यागप्रयत्नोऽपि परित्याज्य इत्यनवस्था स्यात्। मैवम्। कतकरजोन्यायेन स्वपरनिवर्तकत्वात्। यथा कलुषिते जले प्रक्षिप्तं कतकरज इतररजसा सह स्वात्मानमपि निवर्तयति तथा त्यागार्थः प्रयत्नः कर्तृकरणानुसंधानं निवर्तयन्स्वात्मानमपि निवर्तयिष्यति। निवृत्ते तस्मिन्मलिनवासनावच्छुद्धवासनानामपि क्षीणत्वान्निर्वासनं मनोऽवतिष्ठते।**

कुट्टिमं हि पाषाणबद्धभूमिः। प्रकृतदृष्टान्ते देहबहिर्भूतत्वरूपास्वरसात् [आह]—**यथा वेति**। तत्राप्याशङ्क्य समाधत्ते—**नन्वि**त्यादिना। तत्र हेतुं प्रतिपादयति—**द्विधे**त्यादिना। मनोबुद्ध्योः प्रकृतोपयोगिस्वरूपमाह—**करण**मित्यादिना। ततः किं प्रकृत इत्यत आह—**तथा** चेत्यादिना। एवमुक्तद्वैविध्यमध्ये ध्यानपदाभिधेयायाः प्रथमायाः परित्यागं विधाय द्वितीयायाः समाधिपदाभिधेयाया वासनायाः समुपादानं विधत्ते—**या त्वि**त्यादिना। तुशब्दः पूर्ववैलक्षण्यद्योतनार्थः। ननु किं ध्यानसमाध्योर्लक्षणमित्यपेक्षायां तत्र योगसूत्रमेव प्रमाणयति—**ध्यानेति**। ते सूत्रे एव पठति—**तत्रे**त्यादिना। फलितमाह—**तादृश** इत्यादिना। तत्राप्यनवस्थामाशङ्कते—**नन्वि**त्यादिना। तत्र समाधानं प्रतिजानीते—

**मैवमिति** । अत्र हेतुमाह—**कृतकेति** । उक्तन्यायमेव विशदयति—**यथेति** । दार्ष्टान्तिके योजयति—**तथेत्यादिना** । ततः । किं प्रकृत इत्यत्राऽऽह—**निवृत्त** इत्यादिना ।

तत्र प्रमाणमाह—

एतदेवाभिप्रेत्य वसिष्ठ आह—

तस्माद्वासनया बद्धं मुक्तं निर्वासनं मनः ।
राम निर्वासनीभावमाहराऽऽशु विवेकतः ॥
सम्यगालोचनात्सत्याद्वासना प्रविलीयते ।
वासनाविलये चेतः शममायाति दीपवत् ॥ इति ।
यो जागर्ति सुषुप्तिस्थो यस्य जाग्रन्न विद्यते ।
यस्य निर्वासनो बोधः स जीवन्मुक्त उच्यते ॥ इति च ।
सुषुप्तवत्प्रशमितभाववृत्तिना
स्थितं सदा जाग्रति येन चेतसा ।
कलान्वितो विधुरिव यः सदा बुधै-
र्निषेव्यते मुक्त इतीह स स्मृतः ॥ इति च ।
हृदयात्संपरित्यज्य सर्वमेव महामतिः ।
यस्तिष्ठति गतव्यग्रः स मुक्तः परमेश्वरः ॥
समाधिमथ कर्माणि मा करोतु करोतु वा ।
हृदयेनास्तसर्वाशो मुक्त एवोत्तमाशयः ॥
नैष्कर्म्येण न तस्यार्थस्तस्यार्थोऽस्ति न कर्मभिः ।
न समाधानजप्याभ्यां यस्य निर्वासनं मनः ॥
विचारितमलं शास्त्रं चिरमुद्ग्राहितं मिथः ।
संत्यक्तवासनान्मौनादृते नास्त्युत्तमं पदम् ॥ इति च ।

न च निर्वासनमनस्कस्य जीवनहेतुर्व्यवहारो लुप्येतेति शङ्कनीयम् । किं चक्षुरादिव्यवहारस्य लोपः, किं वा मानसव्यवहारस्य लोपः । तत्राऽऽद्यमुद्दालको निराचष्टे—

वासनाहीनमप्येतच्चक्षुरादीन्द्रियं स्वतः ।
प्रवर्तते बहिः स्वार्थे वासना नात्र कारणम् ॥ इति ।

द्वितीयं वसिष्ठो निराचष्टे—

अयत्नोपनतेष्वक्षिदृग्द्रव्येषु यथा पुनः ।
नीरागमेव पतति तद्वत्कार्येषु धीरधीः ॥ इति ।

**ताहृश्या धिया प्रारब्धभोगं स एवोपपादयति—**

**परिज्ञायोपभुक्तो हि भोगो भवति तुष्टये ।**
**विज्ञाय सेवितश्चोरो मैत्रीमेति न चोरताम् ॥**
**अशङ्किताऽपि संप्राप्ता ग्रामयात्रा यथाऽध्वगैः ।**
**प्रेक्ष्यते तद्वदेव ज्ञैर्भोगश्रीरवलोक्यते ॥ इति ।**

**भोगकालेऽपि सवासनेभ्यो निर्वासनानां विशेषमाह—**

**नाऽऽपदि ग्लानिमायान्ति हेमपद्मं यथा निशि ।**
**नेहन्ते प्रकृतादन्यद्रमन्ते शिष्टवर्त्मनि ॥**

**एतदेवेति** । तद्वाक्यान्यपि संगृह्णाति—**तस्मादि**त्यादित्रिभिः । सत्यात्सत्यब्रह्मविषयात् । अत्र स्थलान्तरस्थत्वेनेतिशब्दद्वयं समुच्चायकश्चकारश्च । एवमेवाग्रेऽपि बोध्यम् । एवमन्यान्यपि प्रकृतोपयुक्तानि वासिष्ठपद्यान्येवोदाहरति—**सुषुप्तवदि**त्यादिना । तत्राप्याशङ्कते—**न चेत्या**दिना । तत्र समाधातुं विकल्पयति—**किं चक्षुरि**त्यादिना । आद्यं प्रति वासिष्ठप्रसिद्धोद्दालकवचसा समाधत्ते—**तत्राऽऽद्य**मित्यादिना । द्वितीयं प्रत्याह—**द्वितीय**मित्यादिना । फलितमाह—**ताहृश्ये**त्यादिना । स एव, वासिष्ठ एव । **परीत्या**दिना । नन्वेवं भोगः सवासननिर्वासनयोः सम एव चेत्कथं तयोर्निर्णय इत्यत्राऽऽह—**भोगकालेऽपी**त्यादिना ।

**नित्यमापूर्णतामन्तरक्षुब्धामिन्दुसुन्दरीम् ।**
**आपद्यपि न मुञ्चन्ति शशिनः शीततामिव ॥**
**अब्धिवद्धृतमर्यादा भवन्ति वितताशयाः ।**
**नियतिं न विमुञ्चन्ति महान्तो भास्करा इव ॥ इति ।**

**जनकस्यापि समाधिव्युत्थितस्येदृशमाचरणं पठ्यते—**

**तूष्णीमथ चिरं स्थित्वा जनको जनजीवितम् ।**
**व्युत्थितश्चिन्तयामास मनसा शमशालिना ॥**
**किमुपादेयमस्तीह यत्नात्संसाधयामि किम् ।**
**स्वतः स्थितस्य शुद्धस्य चितः का मेऽस्ति कल्पना ॥**
**नाभिवाञ्छाम्यसंप्राप्तं संप्राप्तं न त्यजाम्यहम् ।**
**स्वस्थ आत्मनि तिष्ठामि यन्ममास्ति तदस्तु मे ॥**
**इति संचिन्त्य जनको यथाप्राप्तक्रियामसौ ।**
**असक्तः कर्तुमुत्तस्थौ दिनं दिनपतिर्यथा ॥**

**भविष्यं नानुसंधत्ते नातीतं चिन्तयत्यसौ ।**
**वर्तमाननिमेषं तु हसन्नेवानुवर्तते ॥ इति ।**

**तदेवं यथोक्तेन वासनाक्षयेण यथोक्ता जीवन्मुक्तिर्भविष्यतीति स्थितम् ।**

**इति जीवन्मुक्तिविवेके वासनाक्षयनिरूपणम् ।**

---

**नित्यमिति । इन्दुसुन्दरीम् ।** चैतन्यानुसंधानैकशिशिरेणेन्दुशब्दिताजहल्लक्षणासिद्ध-चन्द्राधिष्ठेयेन मनसाऽतिरम्यामित्यर्थः । शशिन इति बहुवचनं तु प्रतिदिनं कलोपचयादिना व्यक्तिभेदप्रत्यक्षात्सोऽयमिति प्रत्यभिज्ञायास्तु जातिविषयकत्वस्यापि संभवादुपमेयीभूत-जीवन्मुक्तबाहुल्यानुकूल्याच्च समुचितमेवेति भावः । तथाऽपि तत्र यथेष्टचेष्टां निराचष्टे—**अब्धिवदिति** । एवं भास्करा इवेति बहुवचनमपि तत्तत्संक्रान्तिभेदेनैव व्याख्येयमिति दिक् । एवं सामान्येन चिन्मात्रवासनोपशमशालिनां जीवन्मुक्तानां लक्षणं संक्षिप्य तदुदाहरणमाह—**जनकस्यापी**त्यादिना । वासिष्ठगतान्येव तदुपाख्यानवाक्यान्यपि संगृह्णाति—**तूष्णीमथे**त्यादिना । **जनेति** । सर्वजनवास्तविकस्वरूपमद्वैतं ब्रह्मैव यथा स्यात्तथेत्यर्थः । उपसंहरति—**तदेवमि**त्यादिना ।

इति जीवन्मुक्तिविवेकटीकायां पूर्णानन्देन्दुकौमुदीनामिकायां वासनाक्षयप्रकरणम् ॥ ६ ॥

---

ननु

वक्ष्ये विविदिषान्यासं विद्वन्न्यासं च भेदतः ।
हेतू विदेहमुक्तेश्च जीवन्मुक्तेश्च तौ क्रमात् ॥

इति मूलकारैर्ग्रन्थारम्भ एव कथमुक्तं विविदिषासंन्यासस्य ज्ञानद्वारा भाविदेहाभावरूपविदेहकैवल्यकारणत्वम् 'अविद्यास्तमयो मोक्षः सा च बन्ध उदाहृतः' इत्यादिवार्तिकानुसारेणेह यदि 'लोकवासनया जन्तोः शास्त्रवासनयाऽपि च' इत्याद्युदाहृतवचनादिवशाद्विना वासनाक्षयं तत्त्वज्ञानमेवाऽऽदौ नोदेति क पुनर्मोक्षः स्यात् । न चाऽऽपातिकतात्कालिकश्रवणाद्यौपयिकनित्यानित्यवस्तुविवेकादिसाधनचतुष्टयवशात्तत्त्वज्ञानोपयुक्तं वासनाक्षयादि सिध्यत्येवेत्यधस्तादेवोक्तमिति वाच्यम् । संस्कारैकरूपायास्तस्याः पुनरप्याविर्भावसंभवादिति चेत्, संजाते तत्त्वज्ञानेऽनन्तरं 'ज्ञात्वा देवं मुच्यते सर्वपाशैः' इत्यादिश्रुतिभिः 'ज्ञानसमकालमुक्तः कैवल्यं याति हतशोकः' इत्यादिस्मृतिभिश्च तथा 'शुद्धं ब्रह्मेति विषयीकुर्वाणा वृत्तिः स्वस्वेतरोपाधिनिवृत्तिरुदयते' इति कल्पतर्वाद्याकरोक्तिभिर्यावन्निरुपाधिकभ्रान्तियुक्तिभिराप्रारब्धं बाधितद्वैतावभासे सकलसोपाधिकभ्रान्तिनिदर्शनयुक्तिभिश्च निरुक्तोपक्रम एव परमतात्पर्यात् । तदुक्तमनुपदमेव मूलकारचरणैर्वासनाक्षयनिरूपणे—'ज्ञानिनस्तु दग्धबीजवदाभासमात्रा एव रागादयः । एतदेवाभिप्रेत्योक्तम्—

उत्पद्यमाना रागाद्या विवेकज्ञानवह्निना ।
तदा तदैव दह्यन्ते कुतस्तेषां प्ररोहणम् ॥

इत्युपपाद्य तर्हि स्थितप्रज्ञस्यापि ते सन्त्विति चेन्न । तत्काले मुख्यवदेवाऽऽभासमानानां बाधकत्वात् । रज्जुसर्पोऽपि मुख्यसर्पवदेव तदानीं भीषयन्नुपलभ्यते तद्वत् । तद्याभासत्वानुसंधानानुवृत्तौ न कोऽपि बाध इति चेत् । चिरं जीवतु भवानियमेवास्मदभिमता जीवन्मुक्तिः' इति । तदयमत्र तात्पर्यसंग्रहः—

ईशाज्ञाम्नायमात्रेरितसकलनिजश्लाघ्यनित्यादिकृत्या
शुद्धोपास्त्या निरुद्धाऽप्यतुलमिह मतिर्यस्य तस्यैव विद्या ।
जीवन्मुक्तिश्च तुल्यक्षणमिह तु कलावायुराद्यल्पतायाः
शुध्यैवोदेति विद्याऽग्रिमजनिहतिदेतीप्सितं वार्तिकेऽस्ति ॥ १ ॥

आप्रारब्धक्षयं चिद्विगलितभिदलं त्यागयोगैर्विचिन्त्या
जीवन्मुक्त्यै विदाऽपि प्रचुरमिह न चेद्दृश्यसंस्कारयोगात् ।
भावि स्याज्जन्म यं यं स्मरति तु मरणेऽर्थं जनस्तं तमेव
प्राप्नोतीतीशवाक्यादिति विवरणकृत्संमतं तेन ते द्वे ॥ २ ॥

विद्यारण्यैर्मते अप्यलमिह गदिते गूढतात्पर्ययोगा-
ज्जीवन्मुक्तेर्विवेके तदपि तु गदितं मुख्यमाद्यं मुनीनाम् ।
प्रामाण्येष्टेर्यथोर्ध्वं चरममपि सुखाप्त्याऽन्तकालेऽपि सद्यो-
मुक्तेः पक्षे यथाऽहंग्रहभजनवशान्निर्गुणस्येतिह्याद्भिः ॥ ३ ॥

टीकायां ज्ञानमित्यादि विशदमुदितं ज्ञानमज्ञानमात्र-
ध्वंस्येवं ज्ञानबोध्यत्वमपि विवरणेष्टं मृषात्वं प्रसिद्धम् ।
तेन द्वैतस्य बाधे मितिसमसमयं जायमानेऽपि तत्त्व-
स्मृत्याऽऽरब्धान्त इष्टः कथित इह बुधैस्तन्मते त्वित्यभीप्स्य ॥ ४ ॥

ज्ञानात्पापाद्यलेपादिह कलिसमये स्याद्यथेष्टप्रवृत्ति-
र्लोकानां तन्निवृत्त्यै सततमभिमताऽऽत्मस्मृतिस्त्यागयोगात् ।
किंचाऽऽपातावबोधान्निखिलजनमनोवञ्चनं ये चरन्ति
प्रायस्तेषां मृषात्वं प्रथयितुमनिशं रक्षितुं चापि शास्त्रम् ॥ ५ ॥

अत्राऽऽद्यपद्यद्वयं निगदव्याख्यमेव । विद्यारण्यैरिति । तेन निरुक्तप्रकारेण । ते वार्तिकविवरणप्रसिद्धे द्वे अपि मते । अलं सविस्तरम् । इह प्रकृते । जीवन्मुक्तेर्विवेके जीवन्मुक्तिविवेकप्रकरण इत्यर्थः । गूढेति । गदिते, वक्ष्ये विविदिषान्यासमित्यादिना सप्रतिज्ञमुपपादिते स्त इत्यार्थिकम् । तत्रापि किं साम्यमेव तदभिमतमुभयसारकारत्वेनैतेषामित्यत्राऽऽह–

तदपि त्वित्यादि । तत्र हेतुं व्युत्पादयति—मुनीनामित्यादिना । यथोत्तरं मुनीनां प्रामाण्यमिति पाणिनीयसाधारणपरिभाषातः । आद्यं वार्तिककृन्मतमेव । मुख्यं प्रधानं गदितं निरूपितं भवतीति संबन्धः । ननु तर्हि विवरणमतरीत्या मनोनाशवासनाक्षयतत्त्वज्ञानाभ्यासान्निरतिशयं यावज्जीवं कुर्वतः किं फलं स्यादित्याशङ्कां शमयिष्यंस्तानेव विद्यारण्याचार्यान्विशिनष्टि—सुखेत्यादिशेषेण । यथा सद्योमुक्तेः पक्षे निर्गुणस्याद्वैतब्रह्मणः । अहंग्रहेति । अहं ब्रह्मास्मीति शोधिततत्त्वंपदार्थैक्यविषयकयावद्देहपातं निरतिशयत्यागयोगपूर्वकभावनया प्रारब्धपरिसमाप्तिसमकालमेव निरुक्ततत्त्वंपदार्थैक्यविषयकसाक्षात्कृतिदृश्योच्छित्तिलक्षणसद्योमुक्तिवद्यावदुपाधिप्रोक्तसाधनपरिपाकादेव । सुखाप्त्या निर्विकल्पानन्दप्राप्त्येति यावत् । अन्तकालेऽपि, मरणकालेऽपि वक्ष्यमाणविवरणमतसिद्धतत्त्वसाक्षात्कारसंस्कारतः सकलाविद्यातद्व्याप्यतत्कार्यात्मकदृश्यध्वंसाधिष्ठानीभूताद्वैतसच्चिदानन्दात्मकैवल्यं तथैव संभवतीत्येवंप्रकारं हृदन्तःकरणतात्पर्यं येषां ते तथा तैरेतादृशाशयवद्भिः श्रीविद्यारण्यैस्ते द्वे मते इह जीवन्मुक्तेर्विवेकेऽलं गदिते स्त इति पूर्वेणान्वयः । एवं चेह न कोऽपि विरोधगन्धोऽपि प्राचीनाचार्यचरणवचनानाम् । अनुपदं वक्ष्यामोऽप्यथ तं साक्षेपक्षोदक्षममिति संक्षेपः ॥ ३ ॥ अथ प्रतिज्ञाताविरोधकथनप्रकारमेव प्रथयति—टीकायामित्यादियुग्मेन । टीकायां, पञ्चपादिकाख्यायां प्रथमशारीरभाष्यव्याख्यायामित्यर्थः । ज्ञानमित्यादीति । यतो ज्ञानमज्ञानस्यैव निवर्तकमिति पूर्वादिपदग्रहार्थमादिपदम् । विशदं स्पष्टमेव । ज्ञानं तत्त्वज्ञानम् । अज्ञानेति । अज्ञानमनादिभावरूपं संसारकारणं ब्रह्मात्मैक्यविषयकं मूलाज्ञानं ध्वंसयति साधनचतुष्टयपुष्टिमतः सद्गुरूपसत्तिपूर्वकं श्रवणादिशालिनः स्वोत्पत्तिमात्रेणैव समानाश्रयविषयतया निर्मूलयतीति तथा । उदितं, कथितमस्तीति यावत् । एवं चाज्ञानेतरतद्व्याप्यतत्कार्यसंस्कारादिनिवृत्तिस्तु सोपाधिकभ्रमत्वेन बाधितानुवृत्त्या तस्य तावदेव चिरमित्यादिश्रुत्यादिना प्रतीयमानाऽपि निरुक्ताधिष्ठानत्वप्रयोजकोपाधिनिवृत्त्यैव संपद्यत इति न तत्त्वज्ञानस्य तदर्थमन्तकाले स्मृत्याकाङ्क्षेत्याशयः । नन्वथापि विवरणे किमागतमित्यत आह—एवमित्यादिपूर्वार्धशेषेण । एवं, निरुक्तपञ्चपादिकावाक्यवत् । ज्ञानेति । ज्ञाननिवर्त्यत्वं हि विवरणाचार्यमते । मृषात्वं प्रसिद्धमेवाद्वैतसिध्यादौ । प्रकृते बाध्यत्वपाठस्तु जीवन्मुक्तिसाधकसोपाधिकभ्रमाभिप्रायेणैव । ज्ञाननिवर्त्यत्वपाठस्त्वद्वैतसिध्यादावुपक्रमे विमतं मिथ्या दृश्यत्वाच्छुक्तिरजतवदिति निरुपाधिकभ्रमस्यैव दृष्टान्तीकृतत्वात्तदभिप्रायक एवेति ध्येयम् । फलितमाह—तेनेत्यादिशेषेण । तेन निरुक्तविवरणेष्टज्ञानबाध्यत्वाभिधमिथ्यात्वलक्षणकरणेनेत्यर्थः । द्वैतस्य, दृश्यस्य । बाधे, मिथ्यात्वनिश्चये । मितीति । अद्वैतब्रह्मात्मैक्यसाक्षात्कृतितुल्यकालमेव यथा स्यात्तथा जायमानेऽपि । इह शास्त्रे । तु पुनः । तन्मते विवरणमते । स्मृत्या द्वैतमिथ्यात्वस्मृतिपूर्वकाद्वैतब्रह्मात्मैक्यानुसंधि(धी)त्येत्यर्थः । आरब्धेति । प्रारब्धकर्मक्षयः कार्य इति बुधैः पण्डितैरिति वक्ष्यमाणं कारणमेवाभीप्स्याभिसंधा-

यैव कथितः प्रतिपादितो भवतीति योजना । न चैवमप्यद्वैतसिध्द्यादिप्रसिद्धं ज्ञाननिवर्त्यत्वमेव मिथ्यात्वं विवरणमतसिद्धं विहाय त्वया स्वाभिमतार्थानुकूलमेव ज्ञानबाध्यत्वं मिथ्यात्वमिति विवरणपाठकल्पनं कपोलकल्पितत्वादसांप्रदायिकमिति सांप्रतम् । अज्ञानस्य स्वकार्येण प्रविलीनेन वर्तमानेन वा सह ज्ञानेन निवृत्तिर्बाध इति विवरणाक्षरतात्पर्यविषयकस्य तवैव स्फुटतरावरणत्वात् । ज्ञानेन बाध एव निवृत्तिरिति निवृत्तिरेव बाध इति च क्रमाद्योजनाभ्यां जीवन्मुक्तिसद्योमुक्तिपक्षयोरुत्तमाधमाधिकार्यपेक्षयोस्तत एव सिद्धत्वाच्च ॥ ४ ॥

इतीतिपदाभिसंधितं कारणं कथयति—ज्ञानादिति । ज्ञानादद्वैतब्रह्मात्मैक्यविषयकाप्रतिबद्धसाक्षात्काराद्धेतोः । 'एतꣳ ह वाव न तपति । किमहꣳ साधु नाकरवम् । किमहं पापमकरवम्' इति । 'न वर्तते कर्मणा नो कनीयान्' 'तस्यैव स्यात्पदवित्तं विदित्वा न लिप्यते कर्मणा पापकेन' इत्यादिश्रुतिभिः । 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्' इत्यादिसूत्रादिभिः ।

लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ।
यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ॥
हत्वाऽपि स इमाँल्लोकान्न हन्ति न निबध्यते ।
सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥
सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते ॥

इति च स्मृतिभिः । पापादीति । आदिना पुण्यम् । अलेपात् , अध्यासवैधुर्येण तत्फलीभूतनरकपातादिदुःखोपभोगराहित्यश्रवणादित्यर्थः । इह मर्त्यलोके । कलीति । एतेन देशसामग्रीवत्कालसामग्र्यप्यासुरसंपद्युद्दीपिका द्योतिता । अत एव लोकानामपक्वाधिकारिणां मादृशां जनानाम् । यथेष्टेति । स्वैराचारितेति यावत् । स्याद्भविष्यत्येव । अतः—तन्निवृत्त्यै परमकारुणिकत्वेन तद्वारणाय । त्यागेति । विद्वत्संन्यासपूर्वकवासनाक्षयमनोनाशपरमावधिभूतासंप्रज्ञातसमाध्यभ्यासादित्यर्थः । तत्रापि सततं, यावत्प्रारब्धपरिसमाप्ति न तु क्षणमात्रम् । आत्मेति । अद्वैतब्रह्मात्मैक्यानुसंधि(धी)तिपूर्वकदृश्यानादृतिरिति यावत् । अभिमता विवक्षिताऽस्तीति संबन्धः । विवरणाचार्याणामिति शेषः । न केवलमेतावदेव किंतु प्रयोजनान्तरमप्यस्तीत्याह—किंचेत्यादिना । तदाहुः पौराणिकाः—

सर्वे ब्रह्म वदिष्यन्ति संप्राप्ते तु कलौ युगे ।
नानुतिष्ठन्ति मैत्रेय शिश्नोदरपरायणाः ॥ इति ।

आपातेति । पातमविद्यावातं मर्यादीकृत्येत्यापातमविद्याध्वंसं विनैव यथाकथंचिद्वावदूकतामात्रेण योऽवबोधः शब्दपाण्डित्यप्रकटनं तस्मादित्यर्थः । मनःपदमात्मव्यावृत्त्यै ॥ ५ ॥

अत एवोक्तमद्वैतसिद्धौ जीवन्मुक्तिं प्रकृत्य तदुपपत्त्यर्थं शक्तिपक्षाङ्गीकारमपि विहायाविद्यालेशानुवर्तनमाप्रारब्धम् । तच्च जीवन्मुक्तानां स्वानुभवसिद्धम् । जीवन्मुक्तश्च तत्त्वज्ञानेन निवृत्ताविद्योऽप्यनुवृत्तदेहादिप्रतिभासः । न च तत्त्वज्ञानादविद्यानाशे सद्यःशरीरपातापत्तिः । निवृत्तसर्पभ्रमस्यापि संस्काराद्भयकम्पाद्यनुवृत्तिवद्दण्डसंयोगनाशे चक्रभ्रमणवच्च संस्कारानुवृत्तेरविद्यानिवृत्तावपि तत्कार्यानुवृत्तिसंभवात् । न च क्रियाज्ञानयोरेव संस्कारो नान्यस्येति वाच्यम् । निःसारितपुष्पायां संपुटिकायां पुष्पवासनादर्शनात् । विमतो नाशः संस्कारव्याप्तः संस्कारनाशान्यत्वे सति नाशत्वाज्ज्ञाननाशवदित्यनुमानाच्च । संस्कारः कार्योऽपि ध्वंस इव निरुपादानकोऽविद्येव च शुद्धात्माश्रित इति नाविद्यासापेक्षः । न च भावकार्यस्याध्यस्तस्य संस्कारदेहादितद्धेतुप्रारब्धकर्मादेः स्थित्यर्थं तदुपादानाज्ञानानुवृत्त्याऽपात इति वाच्यम् । विनश्यदवस्थस्य समवायिकारणं विनाऽपि स्थितिदर्शनात् । न च क्षणमात्रस्थितावपि कथं बहुक्षणस्थितिरिति वाच्यम् । सत्युपपादके क्षणगणनाया अप्रयोजकत्वात् । अत्र तु प्रतिबन्धकाभावसहकृतहेतोस्तावत्कालमभावात् । अत एव पूर्वज्ञानानिवृत्तस्याध्यस्तस्य तदनधिकविषयेण कथं निवृत्तिरिति निरस्तम् । प्रतिबन्धकाभावसहकारासहकाराभ्यां विशेषात् । जीवन्मुक्तिदशायामानन्दस्फूर्त्यापादनमिष्टमेव । तत्त्वे ज्ञाते द्विचन्द्रादिवद्दोषाद्बाधितानुवृत्तिसंभवाच्च । न च तत्रैवात्र ज्ञानानिवर्त्यदोषाभावेन वैषम्यम् । यावत्प्रतिबन्धकसत्त्वं ज्ञानानिवर्त्यस्य दोषस्यात्रापि संभवात् । सर्वज्ञानानिवर्त्यस्य तस्य कुत्राप्यसंप्रतिपत्तेः । तदुक्तं ‘ न हि जात्यैव कश्चिद्दोषोऽस्ति ’ इति । यद्वा, अविद्यालेशानुवृत्त्या देहाद्यनुवृत्तिः । ननु लेशो नावयवोऽज्ञानस्य निरवयवत्वात् । अत एवाविद्या दग्धपटन्यायेन तावत्तिष्ठतीत्यपि निरस्तं, निरवयव एतन्न्यायासंभवादिति चेन्न । आकारस्यैव लेशपदार्थत्वात् । ‘ इन्द्रो मायाभिः पुरुरूप ईयते ’ इत्यादिश्रुत्याऽविद्याया अनेकाकारत्वावगमात् । आकारिनिवृत्तावप्याकारानुवृत्तिर्व्यक्तिनिवृत्तौ जातेरिव । ननु कोऽयमाकारो नाम जातिर्वा, शक्त्यादिरूपो धर्मो वा, सुवर्णकुण्डलादिवदवस्थाविशेषो वा । नाऽऽद्यौ । तयोर्देहादिभ्रमोपादानत्वेऽविद्यात्वापातादनुपादानत्वे चोपादानान्तराभावे देहादिभ्रमोत्पत्त्ययोगादात्मान्यत्वेन ज्ञाननिवर्त्यत्वेनाविद्यातत्कार्यान्यतरत्वावश्यंभावेनाज्ञाने निवृत्ते स्थित्ययोगाच्च । अत एव न तृतीयः । अवस्थावन्तं विनाऽवस्थास्थित्ययोगादिति चेन्न । अनेकशक्तिमदविद्यायाः प्रपञ्चे पारमार्थिकत्वादिभ्रमहेतुशक्तेः, प्रपञ्चेऽर्थक्रियासत्त्वसंपादकशक्तेश्च प्रारब्धकर्मसकालीनेन तत्त्वसाक्षात्कारेण निवृत्तावप्यपरोक्षप्रतिभासयोग्यार्थाभासजनिकायाः शक्तेरनुवृत्तेस्तद्वत्यविद्याऽपि तिष्ठत्येवेति नोक्तदोषावकाशः । न चाविद्यायां कथं मुक्त इति व्यपदेशः, शक्तिनाशमात्रात् । अत एव समये सर्वशक्तिमदज्ञाननाशस्तज्जातीयेनाप्रतिबद्धेन प्रत्ययेन । तथा च श्रुतिः—‘भूयश्चान्ते विश्वमायानिवृत्तिः’ । न च भूय इत्यस्य योजनादित्यनेनान्वयान्न लेशानुवृत्तावस्याः श्रुतेर्मानतेति वाच्यम् । विशेषणान्वयापेक्षया

विशेष्यान्वयस्याभ्यर्हितत्वात्, तत्त्वभावादित्यनेन व्यवधानात्, अन्त इतिपदवैयर्थ्याच्च विपरीतयोजनस्यासंगतेः । न च लेशस्थितौ कर्मानुवृत्तिस्तदनुवृत्तौ च ज्ञानप्रतिबन्धेन लेशस्थितिरित्यन्योन्याश्रय इति वाच्यम् । न तावज्ज्ञप्तौ । भूयश्चान्त इत्यादिश्रुतेरेव लेशानुवृत्तेरवगतत्वात् । नापि स्थितौ । एककालीनत्वेन दोषाभावात् । यद्वा, अज्ञानस्य सूक्ष्मावस्था लेशः । यथा—

तस्मात्फले प्रवृत्तस्य यागादेः शक्तिमात्रकम् ।
उत्पत्तावपि पश्चादेरपूर्वं न ततः पृथक् ॥

इति वार्तिकेन यागे गतेऽपि यागसूक्ष्मावस्थारूपमपूर्वं यागसाधनतानिर्वाहकमङ्गी क्रियते तथाऽज्ञाने गतेऽपि तत्सूक्ष्मावस्थारूपो लेशो देहादिप्रत्ययानुकूलः स्वी क्रियते स्वर्गजनकताग्राहकश्रुतेरिवात्रापि जीवन्मुक्तिश्रुतेस्तादृगर्थस्वीकारात् । तस्मादविद्यालेशानुवृत्त्या जीवन्मुक्तिरुपपन्नतरेति । नन्वेवमप्यत्र भवता संगृहीताद्द्वितीयश्लोक आप्रारब्धक्षयमित्यारभ्येति विवरणकृत्संमतमित्यन्तग्रन्थेन जीवन्मुक्तिसाधकविद्वत्संन्यासाद्यनुग्राहके विवरणमते किमागतमिति चेदुच्यते । पञ्चपादिकायां हि—ननु ब्रह्मज्ञानादग्रहणापाये तन्निमित्तस्याहंकारग्रन्थेस्तत्कालमेवाभावः प्रसज्येत । न । संस्कारादप्यग्रहणानुवृत्तेः संभवाद्भयानुवृत्तिवदित्युक्तम् । अत्र विवरणम्—ननु संस्कारात्स्मृतिमात्रहेतोः कथमपरोक्षद्वैतावभासः स्यात् । अविद्यावत्तत्संस्कारस्यापि चैतन्यदोषत्वादिति वदामः । अपरोक्षावभासकारणगतो दोषोऽपरोक्षभ्रमहेतुरिति सिद्धत्वादात्ममात्रस्यैवाविद्याश्रयत्ववत्संस्काराश्रयत्वोपपत्तेश्च । अविद्यासंस्कारव्यतिरिक्तकार्याणामेवाविद्योपादानत्वादात्मनो मिथ्याभूतसंस्कारोपादानत्वाभावेऽप्याश्रयोपाधित्वस्याविद्योपाधित्ववदविरोधात् तत्त्वज्ञानानुसंधानादेव च क्रमेण संस्कारनिवृत्तेः कंचित्कालमवस्थायैव विदेहमुक्तिर्न विरुध्यते । अविद्यालेशो वा तमोलेशवत्संस्कारशब्देनाभिधीयत इति निरवद्यमिति । इह तत्त्वदीपनमपीदम्—तत्त्वज्ञानसंस्कारस्येतरसंस्कारनिवर्तकत्वान्न किंचिदवद्यमित्यर्थः । संस्कारादनुवृत्तिसमर्थने भावकार्यं सोपादानमितिप्रसिद्धिविरोध इत्याशङ्क्य पक्षान्तरं कक्षी करोति—अविद्यालेश इति । प्रारब्धकार्यसंपादनपटीयानविद्याया अवस्थाविशेषो लेशशब्दार्थः । न च तत्र प्रमाणाभावः । जीवन्मुक्त्यादिशास्त्रस्य प्रमाणत्वादित्यर्थ इति ।

एवं वासनाक्षयं जीवन्मुक्तिसाधनत्वेन संप्रपञ्च्य मनोनाशमपि तथात्वेन निरूपयितुमाचार्यः प्रतिजानीतेऽथेत्यादिना—

**अथ जीवन्मुक्तिसाधनं मनोनाशं निरूपयामः। यद्यप्यशेषवासनाक्षये सत्यर्थान्मनो नश्यत्येव तथाऽपि स्वातन्त्र्येण मनोनाशे सम्यगभ्यस्ते सति वासनाक्षयो रक्षितो भवति । न चाजिह्वत्वषण्डकत्वाद्यभ्यासेनैव**

तद्रक्षा सिद्धेति वाच्यम् । नष्टे मनस्यजिह्वत्वादीनामर्थसिद्धत्वेनाभ्यासप्रयासाभावात् । ननु मनोनाशाभ्यासप्रयासस्तत्राप्यस्तीति चेत् । अस्तु नाम तस्याऽऽवश्यकत्वात् । अन्तरेण मनोनाशमभ्यस्ता अप्यजिह्वत्वादयो न स्थिरा भवन्ति । अत एव मनसो नाशनीयत्वं जनक आह—

सहस्राङ्कुरशाखाग्रफलपल्लवशालिनः ।
अस्य संसारवृक्षस्य मनो मूलमिति स्थितम् ॥
संकल्पमेव तन्मन्ये संकल्पोपशमे न तत् ।
शोषयामि यथा शोषमेति संसारपादपः ॥
प्रबुद्धोऽस्मि प्रबुद्धोऽस्मि दुष्टश्चोरो मयाऽऽत्मनः ।
मनो नाम निहन्म्येनं मनसाऽस्मि चिरं हतः ॥

ननु वासनाशब्दितसकलसदसत्संस्कारसंक्षये संपन्ने सति तन्मूलकसदसदन्यतरसंकल्पलक्षणस्य मनसोऽपि नाशः सिद्ध एवेति न तदर्थं प्रयत्नान्तरापेक्षेति व्यर्थैव तन्निरूपणप्रतिज्ञेयमिति शङ्कामुत्थाप्य समाधत्ते—**यद्यपी**त्यादिना। तत्रापि प्रकारान्तरेणाऽऽशङ्कयापि समाधत्ते—**न चे**त्यादिना । तत्रापि शङ्कते—**नन्वि**त्यादिना । गत्यन्तराभावादुक्तशङ्कामङ्गीकरोति—**अस्तु नामेति** । मनोनाशस्याऽऽवश्यकत्वे हेतुमाह—**अन्तरेणे**त्यादिना । उक्तहेतोरेव मनसोऽवश्यनाश्यत्वं जनकेनापि वासिष्ठ उक्तमित्याह—**अत एवेति** । तद्वाक्यमेव संगृह्णाति—**सहस्राङ्कुरे**त्यादिना । ननु भवत्वेवं संसारशाल्मलिवृक्षस्य मनो मूलमथापि मनसः किं मूलमित्यत आह—**संकल्पमेवेति** । तन्मनः । ततः किं तदाह—**संकल्पेति** । तन्मन एव । फलितमाह—**प्रबुद्धोऽस्मी**त्यादिना । वीप्सा त्वत्र संभ्रमादेव । एनं मनोरूपं चोरमित्यर्थः ।

उक्तेऽर्थे वसिष्ठसंमतिमप्याह—

वसिष्ठोऽप्याह—

अस्य संसारवृक्षस्य सर्वोपद्रवदायिनः ।
उपाय एक एवास्ति मनसः स्वस्य निग्रहः ॥
मनसोऽभ्युदयो नाशो मनोनाशो महोदयः ।
ज्ञमनो नाशमभ्येति मनोऽज्ञस्य हि शृङ्खला ॥
तावन्निशीथवेताला वल्गन्ति हृदि वासनाः ।
एकतत्त्वदृढाभ्यासाद्यावन्न विजितं मनः ॥
प्रक्षीणचित्तदर्पस्य निगृहीतेन्द्रियद्विषः ।
पद्मिन्य इव हेमन्ते क्षीयन्ते भोगवासनाः ॥

हस्तं हस्तेन संपीड्य दन्तैर्दन्तान्विचूर्ण्य च।
अङ्गान्यङ्गैः समाक्रम्य जयेदादौ स्वकं मनः॥
एतावति धरणितले सुभगास्ते साधुचेतसः पुरुषाः॥
पुरुषकथासु च गण्या न जिता ये चेतसा स्वेन॥
हृदयबिले कृतकुण्डल उल्बणकलनाविषो मनोभुजगः॥
यस्योपशान्तिमगमच्चन्द्रवदुदितं तमव्ययं वन्दे॥ इति।
[१]चिन्तनाभिः किलास्येदं मायाचक्रस्य सर्वतः।
स्थीयते चेत्तदाक्रम्य तन्न किंचित्प्रबाधते॥ इति च।

गौडपादाचार्यैरप्युक्तम्—

मनसो निग्रहायत्तमभयं सर्वयोगिना(णा)म्।
दुःखक्षयः प्रबोधश्चाप्यक्षया शान्तिरेव च।

यत्त्वर्जुनेनोक्तम्—

चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम्।
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम्॥ इति।

तद्वचनं हठयोगविषयम्।

**वसिष्ठोऽपीति**। तद्वाक्यान्येव पठति—**अस्ये**त्यादिना। उपायः, छेदन इत्यार्थिकम्। मनोऽङ्गस्येत्यत्र मनः, अङ्गस्येति च्छेदः। **हस्तमिति**। इदं हि मनोरूपमहाशत्रुनिबर्हणार्थं तदुपर्यत्यन्तकोपमूलकरौद्ररसानुभावसूचकं चेष्टाजातं सर्वलोकप्रसिद्धमेव। **अङ्गानी**त्यादि। भृकुट्योष्ठादीनि। अङ्गैः, क्रोधबद्धललाटत्रिबलीरूपैर्बहिर्निष्काशितदन्तरूपैश्चावयवैरित्यर्थः। समाक्रम्य, समाबध्येति यावत्। कृतकुण्डलः, विरचितकुण्डलाकारावस्थितिविशेष इवेत्यर्थः। अयं हि सर्पजातिस्वभावः प्रसिद्ध एव यत्कुण्डलाकारतयाऽवस्थानम्। **उल्बणेति**। तीव्रसंकल्परूपविषशालीत्यर्थः। तस्यैव तत्रैव प्रकृतानुकूलं वाक्यान्तरमप्यादरातिशयार्थमुदाहरति—चिन्तनाभिरिति। अस्य, साक्ष्यस्य। इदं मायाचक्रस्य दृश्यैन्द्रजालस्य। चिन्तनाभिः किल, दृक्तः पार्थक्येनानवस्थित्यादिरूपमननयुक्तिभिरित्यर्थः। इदं पदप्रयोगयुगं तु दृश्यत्वबोधदार्ढ्यार्थमेव। यद्वाऽस्य मायाचक्रस्य चिन्तनाभिः स्वतःसत्ताशून्यत्वलक्षणमिथ्यात्वानुसंधानवृत्तिभिरिदं निरुक्तमायाचक्रमेव सर्वतः सर्वदेशकालावच्छेदेनाऽऽक्रम्य तुच्छत्वादिनाऽभिव्याप्य यदि मुमुक्षुणा स्थीयते चेत्तदा तन्मायाचक्रं किंचिदपि न प्रबाधत इति संबन्धः। चित्तं नाभिरिति पाठे त्वस्य मायाचक्रस्य नाभिश्चित्तमेवास्ति तदिदं सर्वत आक्रम्य स्थीयते चेन्मुमुक्षुणा तर्हि तन्मायाचक्रं तं प्रति किंचिदपि न प्रबाधत इति संबन्धः।

१ क. ख. ग. घ. ङ. च. चित्तं ना°।

प्रकरणादयमेव पाठः साधुः । अत्र वृद्धसंमतिमप्याह—गौडेत्यादिना । गीताविरोधं समाधत्ते—यत्त्वित्यादिना ।

उक्तार्जुनवचनस्य हठयोगविषयकत्वं कपोलकल्पितामित्यत आहात एवेत्यादिना—

**अत एव वसिष्ठ आह—**

**उपविश्योपविश्यैव[1] क्वचित्केन मुहुर्मुहुः ।**
**न शक्यते मनो जेतुं विना युक्तिमनिन्दिताम् ॥**
**अङ्कुशेन विना मत्तो यथा दुष्टमतङ्गजः ।**
**विजेतुं शक्यते नैव तथा युक्त्या विना मनः ॥**
**मनोविलयहेतूनां युक्तीनां समुदीरणम् ।**
**वसिष्ठेन कृतं तावत्तन्निष्ठस्य वशे मनः ॥**
**हठतो युक्तितश्चापि द्विविधो निग्रहो मतः ।**
**निग्रहो धीक्रियाक्षाणां हठो गोलकनिग्रहात् ॥**
**कदाचिज्जायते कश्चिन्मनस्तेन विलीयते ।**
**अध्यात्मविद्याधिगमः साधुसंगम एव च ॥**
**वासनासंपरित्यागः प्राणस्पन्दनिरोधनम् ।**
**एतास्ता युक्तयः पुष्टाः सन्ति चित्तजये किल ॥**
**सतीषु युक्तिष्वेतासु हठान्नियमयन्ति ये ।**
**चेतस्ते दीपमुत्सृज्य विनिघ्नन्ति तमोऽञ्जनैः ॥**
**विमूढाः कर्तुमुद्युक्ता ये हठाच्चेतसो जयम् ।**
**ते निबध्नन्ति नागेन्द्रमुन्मत्तं बिसतन्तुभिः ॥**

**उपविश्येति** । क्वचिद्देशे कालेऽपि केनापि पुरुषविशेषेणानिन्दितसकलसांप्रदायिकसंमतां युक्तिं विना मुहुर्मुहुरुपविश्योपविश्यैव केवलं चित्तवृत्तिनिरोधार्थमेकान्ते स्थित्वा स्थित्वैव मनो जेतुं नैव शक्यत इत्यध्याहृत्यान्वयः । तत्र दृष्टान्तं स्पष्टयति—**अङ्कुशेनेति** । **दुष्टेति** । स्वाभाविकदौष्ट्यशालिगज इत्यर्थः । **वसिष्ठेनेति** । एतेनात एव वसिष्ठ आहेति पुस्तकेषूपलभ्यमानोऽत्रोपविश्योपविश्येत्याद्युदाहृतश्लोकवृन्दावतरणग्रन्थोऽपपाठ एव संजातो बोध्यः । वसिष्ठोक्तग्रन्थ एव वसिष्ठेनेति पौनरुक्त्याद्यापत्तेः । किंत्वत एव वासिष्ठ आहेत्येव, वाल्मीकेर्भारद्वाजं प्रति संवादग्रन्थस्य वसिष्ठवाक्यप्राचुर्याद्योगवासिष्ठवासिष्ठरामायणसंज्ञावशेन वाल्मीकिरिति कर्त्रध्याहारपाठ एव साधीयान् । अन्यथा निरुक्तरीत्या ग्रन्थासांगत्यस्य दुर्निरसत्वादिति सुधिय एव विदांकुर्वन्त्वित्यलमिति कृतं पल्लवितेन । तन्निष्ठस्य,

---

१ क. ख. ग. ङ. च. °श्यैक चित्तकेन ।

वसिष्ठोक्तयुक्तिनिष्ठस्येत्यर्थः । अथोद्दिष्टहठादिद्विविधानिग्रहमध्ये प्रथमं हठनिग्रहं व्युत्पादयति-**निग्रह इति**। **धीक्रियेति** । बुद्धिवृत्तयः श्रोत्रादिजाः शब्दादिविषयिकास्तथा क्रियाः शब्दोच्चारणादयस्तत्कारीणि यान्यक्षाणीन्द्रियाणि तेषामित्यर्थः । **गोलकेति** । गोलकानि श्रोत्रादीनि प्रसिद्धान्येव । ननु किं हठनिग्रह एव श्रेयस्करः किं वा युक्तिनिग्रह इत्याशङ्कयाधिकारिभेदेनोभयमपीत्याह—**कदाचिज्जायत** इत्यादि । जायते फलतीति शेषः । एवं हठमार्गमुक्त्वा युक्तिमार्गं क्रमप्राप्तं द्वितीयं व्युत्पादयितुं ताः प्रबोधयति—**अध्यात्मे**त्यादिना । नन्वथापि मार्गद्वये कः श्रेयानित्यत आह—**सतीष्वि**त्यादि ।

उदाहृतग्रन्थतात्पर्यं संक्षिपति **निग्रह** इत्यादिना—

**निग्रहो द्विविधः । हठनिग्रहः क्रमनिग्रहश्चेति । तत्र चक्षुःश्रोत्रादिज्ञानेन्द्रियाणि वाक्पाण्यादिकर्मेन्द्रियाणि च तत्तद्गोलकोपरोधमात्रेण हठान्निगृह्यन्ते । तद्दृष्टान्तेन मनोऽपि तथा निग्रहीष्यामीति मूढस्य भ्रान्तिर्भवति । न तु तन्निग्रहीतुं शक्यते । तद्गोलकस्य हृदयकमलस्य निरोद्धुमशक्यत्वात् । अतः क्रमनिग्रह एव योग्यः । क्रमनिग्रहे चाध्यात्मविद्याप्राप्त्यादय एवोपायाः । सा च विद्या दृश्यमिथ्यात्वं दृग्वस्तुनः स्वप्रकाशत्वं च बोधयति । तथा च सत्येतन्मनः स्वगोचरेषु दृश्येषु प्रयोजनाभावं प्रयोजनवति दृग्वस्तुन्यगोचरत्वं च बुद्ध्वा निरिन्धनाग्निवत्स्वयमेवोपशाम्यति । तथा च श्रूयते—**

**यथा निरिन्धनो वह्निः स्वयोनावुपशाम्यति ।**
**तथा वृत्तिक्षयाच्चित्तं स्वयोनावुपशाम्यति ॥**

**योनिरात्मा । यस्तु बोधितमपीह तत्त्वं न सम्यग्बुध्यते यश्च विस्मरति तयोरुभयोः साधुसंगम एवोपायः । साधवो हि पुनः पुनर्बोधयन्ति स्मारयन्ति च । यस्तु विद्यामदादिदुर्वासनया पीड्यमानो न साधुमनुवर्तितुमुत्सहते तस्य पूर्वोक्तविवेकेन वासनापरित्याग उपायः । वासनानां प्राबल्येन त्यक्तुमशक्यत्वे प्राणस्पन्दनिरोधनमुपायः । प्राणस्पन्दवासनयोश्चित्तप्रेरकत्वात्तयोर्निरोधे चित्तशान्तिरुपपद्यते । प्रेरकत्वं च वसिष्ठ आह—**

**द्वे बीजे चित्तवृक्षस्य वृत्तिव्रततिधारिणः ।**
**एकं प्राणपरिस्पन्दो द्वितीयं दृढवासना ॥**
**सती सर्वगता संवित्प्राणस्पन्देन बोध्यते ।**
**संवेदनादनन्तानि ततो दुःखानि चेतसः ॥ इति ।**

**यथा भस्मच्छन्नमग्निं लोहकारा दृतिभ्यां धमन्ति, तत्र च दृत्युत्पन्नवायुना सोऽग्निर्ज्वलति, तथा चित्तोपादानेन काष्ठस्थानीयेनाज्ञानेनाऽऽवृता संवित्प्राणस्पन्देन बोध्यमाना चित्तवृत्तिरूपेण प्रज्वलति। तस्माच्चित्तवृत्तिनामकात्संविज्ज्वालारूपात्संवेदनाद्दुःखान्युत्पद्यन्ते[1] सेयं प्राणस्पन्देन प्रेरिता चित्तोत्पत्तिः।**

मनस इत्यार्थिकम्। ततः किं तदाह—**तत्रे**त्यादिना। गोलकनिरोधेनेन्द्रियनिग्रहवन्मनोनिरोधाभावे हेतुं प्रथयति—**तद्गोलकस्ये**त्यादि। फलितमाह—**अत इति।** तत्रोपायान्प्रागुक्तानेव स्मारयति—**क्रमेति।** तत्राध्यात्मविद्या किं करोतीत्यत्राऽऽह—**सा चे**त्यादि। **दृश्येति।** भानभास्यत्वं दृश्यत्वम्। स्वतः सत्ताशून्यत्वं मिथ्यात्वम्। अनधीनभानत्वं स्वप्रकाशत्वमित्यर्थः। विस्तरस्त्वत्र मदीयबोधैक्यासिद्धिव्याख्याने मामक एवाद्वैतात्मप्रबोधे द्रष्टव्यः। तत्फलमाह—**तथा चे**त्यादिना। तत्र श्रुतिं संवादयति—**यथेति।** तत्र चित्तस्य योनिशब्दितं किमुपादानमित्याकाङ्क्षायां तत्संक्षिपति—**योनिरात्मेति।** अज्ञात इति शेषः। ननु क्रमेण चित्तनिग्रहेऽध्यात्मविद्यादयश्चतस्रो युक्तयो याः प्रदर्शितास्तत्राधिकारिभेदव्यवस्थाऽस्ति न वेत्यत्राऽऽह—**यस्त्वि**त्यादिना। तत्र हेतुमाह—**प्राणस्पन्दवासनयो**रित्यादिना। तत्र मानमाह—**प्रेरकत्व**मित्यादिना। तद्विवरणार्थं तत्र दृष्टान्तं स्पष्टयति—**यथे**त्यादिना। दृतिभ्यां भस्त्राभ्याम्। धमन्त्युभयतः प्रज्वालयन्तीत्यर्थः। दार्ष्टान्तिके योजयति—**तथे**त्यादिना। फलितं कथयन्नुपसंहरति—**तस्मा**दित्यादि।

अथ दृढवासनामूलिका चित्तप्रवृत्तिः क्वोक्तेत्यत आह—

**अन्यां च स एवाऽऽह—**

**भावसंवित्प्रकटितामनुभूतां च राघव।**
**चित्तस्योत्पत्तिमपरां वासनाजनितां शृणु॥**
**दृढाभ्यस्तपदार्थैकभावनादतिचञ्चलम्।**
**चित्तं संजायते जन्मजरामरणकारणम्॥ इति।**

**न केवलं प्राणवासनयोश्चित्तप्रेरकत्वं किंतु परस्परप्रेरकत्वमप्यस्ति। तदाह वसिष्ठः—**

**वासनावशतः प्राणस्पन्दस्तेन च वासना।**
**[2]जायते चित्त[3]वृक्षस्य तेन बीजाङ्कुरक्रमः॥ इति।**

**अत एवान्यतरनाशेनोभयनाशमप्याह—**

---

१ घ. च. °त्संवे°। २ क. ख. ङ. क्रियते। ३ क. ख. ग. ङ. च. °त्तबीजस्य।

द्वे बीजे चित्तवृक्षस्य प्राणस्पन्दनवासने ।
एकस्मिंश्च तयोः क्षीणे क्षिप्रं द्वे अपि नश्यतः ॥ इति ।

तयोर्नाशोपायं नाशफलं चाऽऽह—

प्राणायामदृढाभ्यासैर्युक्त्या च गुरुदत्तया ।
आसनाशनयोगेन प्राणस्पन्दो निरुध्यते ॥
असङ्गव्यवहारित्वाद्भवभावनवर्जनात् ।
शरीरनाशदर्शित्वाद्वासना न प्रवर्तते ॥[1]
वासनासंपरित्यागाच्चित्तं गच्छत्यचित्तताम् ।
प्राणस्पन्दनिरोधाच्च यथेच्छसि तथा कुरु ॥
एतावन्मात्रकं मन्ये रूपं चित्तस्य राघव ।
यद्भावनं वस्तुनोऽन्तर्वस्तुत्वेन रसेन च ॥
यदा न भाव्यते किंचिद्धेयोपादेयरूपि यत् ।
स्थीयते सकलं त्यक्त्वा तदा चित्तं न जायते ॥
अवासनत्वात्सततं यदा न मनुते मनः ।
अमनस्ता तदोदेति परमोपशमप्रदा ॥ इति ।

अमनस्तानुदये शान्त्यभावमाह—

चित्तयक्षदृढाक्रान्तं न मित्राणि न बान्धवाः ।
शक्नुवन्ति परित्रातुं गुरवो न च मानवाः[2] ॥ इति ।

आसनाशनयोगेनेति यदुक्तं तत्राऽऽसनस्य लक्षणमुपायं फलं च त्रिभिः सूत्रैः पतञ्जलिः सूत्रयामास—‘स्थिरसुखमासनम्’ ‘प्रयत्नशैथिल्यानन्तसमापत्तिभ्याम्’ ‘ततो द्वंद्वैर्नाभिघातः[3]’ इति ।

**अन्यां चेति** । स एव, प्रागुक्तवसिष्ठ एव । तद्वाक्यसंग्रहमपि करोति—**भावे**त्यादिना । भावविषयिणी येयं संविच्चित्तवृत्तिरूपा ज्ञप्तिस्तया प्रकटितां स्पष्टीकृताम् । अतोऽनुभूतां, साक्षिप्रत्यक्षीकृतामित्यर्थः । चः प्रसिध्द्यर्थः । एतादृशीमपरामन्यां वासनाजनितां चित्तस्योत्पत्तिं हे राघव त्वं शृण्विति योजना । एवं प्राणस्पन्दवासनयोरनयोः परस्परकारणत्वमपि तेनैवोक्तमिति वदंस्तद्वचःसंग्रहणमपि तनोति—**न केवल**मित्यादिना । एवमेतयोः परस्परकारणत्वं यदुक्तमेतेनैवैकतरनाशादुभयनाशोऽपि फलतीत्यपि तद्वा-

१ क. ख. ग. घ. ङ. च. °शवर्तित्वा° । २ क. ख. ग. घ. च. छ. °नवम् । इ° । ३ क. ख. घ. ङ. द्वंद्वानभि° ।

क्योदाहरणेनैव प्रतिपादयति—**अत एवे**त्यादिना । ननु कोऽनयोर्नाशोपायो येनैकतरं नाशयता मया द्वयमपि नाश्येताथ किंवा तत्फलमपि येन तत्रावश्यं प्रयतितव्यमपि स्यादित्यत्राऽऽह—**तयो**रित्यादिना परमोपशमप्रदेत्यन्तेन । आहेत्यत्र वासिष्ठ इत्यार्थिकम् । गुरुदत्ता युक्तिस्तु मम स्वभ्रूमध्यनिरीक्षणपूर्वकं सर्वदा सोऽहमित्यनुसंधानेन यथासुखं वहमानस्य प्राणवायोर्मनसैव सर्वदा बहिर्विरेचनमेव । नन्वमनस्तानुदये किं स्यादित्यत आह—**अमनस्ते**त्यादिना । चोऽप्यर्थे । ननु प्रागासनाशनेत्यादि न विवृतमित्यत्राऽऽह—**आसने**त्यादिना । तान्येव सूत्राणि लिखति—**स्थिरसुख**मित्यादिना ।

तत्राऽऽद्यं विवृणोति **पद्मके**त्यादिना—

**पद्मकस्वस्तिकादिना यादृशेन देहस्थापनरूपेण यस्य पुरुषस्यावयवव्यथानुत्पत्तिलक्षणं सुखं स्वदेहचलनराहित्यलक्षणं स्थैर्यं च संपद्यते तस्य तदेव सुखमासनम् । तस्य च प्रयत्नशैथिल्यं लौकिक उपायः । गमनगृहकृत्यतीर्थयात्रास्नानहोमादिविषये यः प्रयत्नो मानस उत्साहस्तस्य शैथिल्यं कर्तव्यम् । अन्यथा स उत्साहो बलाद्देहमुत्थाप्य यत्र क्वापि प्रेरयति । अलौकिकोपायश्च फणासहस्रेण धरणीं धारयित्वा स्थैर्येणावस्थितो योऽयमनन्तः स एवास्मीति ध्यानं चित्तस्यानन्तसमापत्तिः । तया यथोक्तासनसंपादकमदृष्टं निष्पद्यते । सिद्धे चाऽऽसने शीतोष्णसुखदुःखमानावमानादिद्वंद्वैर्यथापूर्वं नाभिहन्यते । तथाविधस्य चाऽऽसनस्य योग्यो देशः श्रूयते—**

**विविक्तदेशे च सुखासनस्थः शुचिः समग्रीवशिरःशरीरः । इति ।**
**समे शुचौ शर्करवह्निवालुकाविवर्जिते शब्दजलाशयादिभिः ।**
**मनोनुकूले न तु चक्षुपीडने गुहानिवाताश्रयणे प्रयोजयेत् ॥ इति च ।**
**सोऽयमासनयोगः ।**

तत्र पद्मकस्वस्तिकयोर्लक्षणं तूक्तं पातञ्जलसूत्रस्यैव नारायणतीर्थवृत्तौ योगप्रदीपादिप्रसिद्धमेव—

अङ्गुष्ठौ संनिबध्नीयाद्धस्ताभ्यां व्युत्क्रमेण तु ।
ऊरूपरि च विप्रेन्द्र कृत्वा पादतले उभे ॥
पद्मासनं भवेदेतत्सर्वेषामेव पूजितम् । इत्यादिना ।
जानूर्वोरन्तरे सम्यक्कृत्वा पादतले उभे ॥
ऋजुकायः सुखासीनः स्वस्तिकं तत्प्रचक्षते । इत्यादिना च ।

अथ द्वितीयसूत्रमपि विवृणोति—**तस्य** चेत्यादिनोक्तासनसाधनमभिदधत् । एवं लौकिकाद्युपदिष्टतदुपायद्वयमध्ये प्रथमं प्रख्यापयति—**गमने**त्यादिना । अत्र गमनपदेन योगाभ्यासेष्टैकान्तदेशत्यागपूर्वकं बहिः संचारः । अथालौकिकमपि तदुपायं विशदयति—**फणे**त्यादिना । ननु भवत्वेवं सूत्रोक्तानन्तसमापत्तिपदार्थः । किं ततस्तत्राऽऽह—**तथेति**। नन्वेतादृगासने प्रत्यहं ब्राह्ममुहूर्तादाववस्थानाभ्यासः कियत्कालं कार्य इत्याशङ्क्य यावत्तत्फलमिति समादधानस्तत्कथयति—**सिद्धे** चेत्यादिना । **यथेति** । प्राग्वदित्यर्थः । ननु कैवं स्थातव्यमित्यत आह—**तथाविधस्येति** । ते एव कैवल्यश्वेताश्वतरश्रुती क्रमादुदाहरति—**विविक्तदेशे** चेत्यादिना । विजनदेश इत्यर्थः । अवस्थानप्रकारं प्रकटयति—**सम इति** । शरीरं ग्रीवाधोमूलाधारान्तदेहभागः । एतेषां समत्वं समसूत्रत्वेन संधारणमेव । जलाश्रयेत्यपि पाठः । चक्षुःपीडनं समशकादिदेशः । नियोजयेदित्यपि पाठः । एवं प्राक्प्रतिज्ञातमासनयोगमुपसंहरति—सोऽयमिति ।

अथोपक्रान्तक्रमावसरप्राप्तमशनयोगं प्रपञ्चयितुमुपक्रमते—

**अशनयोगस्तु मिताहारत्वम्, ‘ अत्याहारमनाहारं नित्यं योगी विवर्जयेत् ’ इति श्रुतेः । भगवताऽप्युक्तम्—**

**नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः ।**
**न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन ॥**
**युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।**
**युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥ इति ।**

**जितासनस्य प्राणायामेन मनोनाशः श्वेताश्वतरैराम्नायते—**

**त्रिरुन्नतं स्थाप्य समं शरीरं हृदीन्द्रियाणि मनसा संनिवेश्य ।**
**ब्रह्मोडुपेन प्रतरेत विद्वान्स्रोतांसि सर्वाणि भयावहानि ॥**
**प्राणान्प्रपीड्येह स युक्तचेष्टः क्षीणे प्राणे नासिकयोच्छ्वसीत ।**
**दुष्टाश्वयुक्तमिव वाहमेनं विद्वान्मनो धारयेताप्रमत्तः ॥ इति ।**

**अशनेति** । तुशब्दः प्राग्वैलक्षण्यार्थः । तल्लक्षणं संक्षिपति—**मितेति** । तत्र हेतुत्वेन श्रुतिमेव प्रमाणयति—**अत्याहारमिति** । तत्र भगवद्गीतामप्यनुकूलयति—**भगवताऽपीति** । तद्वाक्ये एव पठति—**नात्या**दिद्वाभ्याम् । ‘ आसनाशनयोगाच्च प्राणस्पन्दो निरुध्यते ’ इति प्रागुपन्यस्तवासिष्ठवचनोक्तरीत्योक्तयोगयुग्मस्य श्रुत्युक्तमेव कार्यं मनोनाश इत्याह—**जिते**त्यादिना । तन्मन्त्रद्वयमेव पठति—**त्रिरुन्नतमि**त्यादिना । अत्र प्राचां दीपिका यथा—पद्मासनादीनामन्यतममासनं परिगृह्य शरीरस्थापनप्रकाराभिधानपूर्वकं प्रत्याहारमुक्त्वा तदाश्रयेण संसारसमुद्रतरणं सिध्यतीत्याह—

त्रिरुन्नतं स्थाप्य, उरो ग्रीवा शिर इति त्रीण्यङ्गान्युन्नतानि यस्य तच्छरीरं त्रिरुन्नतं यथा भवति तथा संस्थाप्य हृदि हृदयकुहर इन्द्रियाणि मनसा सह साधनेन संनिवेश्य सम्यङ्निवेशयित्वा सम्यङ्नियम्येति यावत् । ब्रह्मोडुपेन, तारप्लवेन । प्रतरेत, प्रकर्षेण तरेत । प्रणवस्वरूपं तदर्थं परापरब्रह्म च यथावद्विद्वान् । स्रोतांसि, सर्वाणि सुरनरतिर्यक्स्थावरादिभेदभिन्नानि सांसारस्रोतांसि । भयावहानि, भयप्रदातॄणि । अनेनोपायेन संसारदुःखमहोदधिं प्रतरेदिति योग्याधिकारिणं प्रति श्रुतिरनुशास्ति । प्राणायामप्रकारमाह—प्राणान्प्राणादिप्रभेदभिन्नान्वायून्प्रपीड्य प्रकर्षेण मनोधारणमुखेन निरुध्य कुम्भकप्राणनिरोधस्थानत्वेन योगशास्त्रे प्रसिद्धमूलाधारादौ । सोऽधिकारी । युक्तचेष्टः, नात्यश्नत इत्यादिशास्त्रेण युक्ता चेष्टा यस्य । युक्ता, उपाययुक्ता चेष्टा यस्येति वा स युक्तचेष्टः । क्षीणे प्राण, तत्तत्स्थाननिरोधेन तत्तत्स्थाने क्षीणे तनुत्वं गते वायौ । नासिकयोच्छ्वसीत, तत्तत्स्थाने सम्यङ्निरुध्यानन्तरं प्राप्तनाडीद्वारेणेडया पिङ्गलया वा नासिकापुटेन शनैः शनैरुच्छ्वसीत वायुमुत्सृजेत् । दुष्टाश्वयुक्तमिव वाहं दुर्दान्तैरश्वैर्युक्तं वाहं रथं कुशलसारथिरिव विद्वान् । बाह्यकरणनिरोधप्रकारं मनोनिरोधप्रकारं तद्द्वारेण वायुनिरोधप्रकारं च विद्वान् । मनो धारयेत, यत्र यत्र वायुनिरोध इष्टस्तत्र मनो धारयेत् । अप्रमत्तः, अवहितो भूत्वा । यत्र मनस्तत्र वायुरिति वचनादिति ।

अथोदाहृतमन्त्रयोस्तात्पर्यं स्वयं मूलकार एव विवृणोति **योगी**त्यादिना—

**योगी द्विविधः, विद्यामदाद्यासुरसंपद्रहितस्तत्सहितश्चेति । तयोराद्यस्य ब्रह्मध्यानेन मनसि निरुद्धे सति तन्नान्तरीयकतया प्राणो निरुध्यते । तं प्रति त्रिरुन्नतमिति मन्त्रः पठितः । द्वितीयस्याभ्यासेन प्राणे निरुद्धे तन्नान्तरीयकतया मनो निरुध्यते तं प्रति प्राणान्प्रपीड्येति मन्त्रः प्रवृत्तः । प्राणपीडनप्रकारो वक्ष्यते । तेन च पीडनेन युक्तचेष्टो भवति । मनश्चेष्टा विद्यामदाद्यो निरुध्यन्ते । प्राणनिरोधेन चित्तदोषनिरोधे दृष्टान्तोऽन्यत्र श्रूयते—**

**यथा पर्वतधातूनां [1]दह्यन्ते धमतां मलाः ।**
**तथेन्द्रियकृता दोषा दह्यन्ते प्राणनिग्रहात् ॥ इति ।**

**अत्रोपपत्तिर्वसिष्ठेन दर्शिता—**

**यः प्राणपवनस्पन्दश्चित्तस्पन्दः स एव हि ।**
**प्राणस्पन्दक्षये यत्नः कर्तव्यो धीमतोच्चकैः ॥ इति ।**

---

१ ङ. ख. ग. ङ. °न्ते दहनान्मलाः ।

**मनोवाक्चक्षुरादीन्द्रियदेवताः स्वस्वव्यापारं निरन्तरं करिष्याम इति व्रतं धृत्वा श्रमरूपेण मृत्युना ग्रस्ताः। स च मृत्युः प्राणं नाऽऽप्नोति। ततो निरन्तरमुच्छ्वासनिःश्वासौ कुर्वन्नप्ययं प्राणो न श्राम्यति। तदा विचार्य देवताः प्राणरूपं प्राविशन्। सोऽयमर्थो वाजसनेयिभिराम्नायते— 'अयं वै नः श्रेष्ठः संचरंश्चासंचरंश्च न व्यथते अथो न रिष्यति हन्तास्यैव सर्वे रूपमसामेति। तत एतस्यैव सर्वे रूपमभवंस्तस्मादृत एतेनाऽऽख्यायन्ते प्राणाः' इति। अत इन्द्रियाणां प्राणरूपत्वं नाम प्राणाधीनचेष्टावत्त्वम्।**

ततः किं तदाह—**तयोराद्यस्ये**त्यादिना। ननु भवत्वेवमथाप्यन्त्यस्य का गतिस्तत्राऽऽह—**द्वितीयस्ये**त्यादिना। ननु प्राणपीडनं कीदृक्श्रुतिसंमतं तत्राऽऽह—**प्राणेति**। तेन किं भवतीत्यत आह—**तेन चेति**। युक्तचेष्टत्वमेव विशदयति—**मनश्चेष्टा इति**। नन्वेकनिरोधेनापरदोषनिरोधोऽनुपपन्न इत्यत्राऽऽह—**प्राणनिरोधेनेति**। अन्यत्र शाखान्तरे। तामेव श्रुतिमुदाहरति—**यथेति**। धमतां, वह्नौ धमनं कुर्वतां प्रयत्नेनेत्यर्थः। दहनान्मला इति स्पष्टहेतुघटितः। धमिता मला इत्यपि क्वचित्पाठः। ननु श्रुत्युक्तमपीदं ग्रावप्लवनवदेव प्रतीयत इत्यत आह—**अत्रे**त्यादिना। ननु वसिष्ठेनोक्तमपीदं राज्ञामाज्ञामात्रमेव युक्त्यभावादिति चेन्न। 'प्राणबन्धनं हि सोम्य मनः' इति श्रुतेः प्राणस्य क्रियाशक्तिप्रधानत्वमपञ्चीकृतपञ्चमहाभूतसमस्तराजसांशजन्यत्वेनैवेति मनश्चलनक्रियाया अपि तदेकायत्तत्वाच्च। तस्माद्युक्तमेव यः प्राणपवनस्पन्दश्चित्तस्पन्दः स एव हीति वच इति दिक्। उक्तेऽर्थे बृहदारण्यकश्रुतिमप्यनुकूलयन्नादौ तदर्थमेव सुखप्रतिपत्त्यर्थं संपिण्डीकृत्य संक्षिपति—**मनोवागि**त्यादिना **प्राविशन्नि**त्यन्तेन। अथैतन्मूलीभूतां श्रुतिमप्यवतार्योदाहरति—**सोऽयमि**त्यादिना। नरिष्यति, प्राणसत्त्व एव जीवव्यवहारान्नरशब्दलक्षितजीवतादात्म्यमपि करिष्यतीति यावत्। असाम, संपादयामः। फलितमाह—अत इति।

तत्रत्यमेवाग्रिमग्रन्थस्थं श्रुत्यन्तरमप्यत्र संवादयति—**तथे**त्यादिना।

**तथाऽन्तर्यामिब्राह्मणे सूत्रात्मप्रस्तावे श्रूयते—'वायुर्वै गौतम तत्सूत्रं वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवन्ति। तस्माद्वै गौतम पुरुषं प्रेतमाहुर्व्यस्रंसिषतास्याङ्गानीति। वायुना हि गौतम सूत्रेण संदृब्धानि भवन्ति' इति। अतः प्राणमनःस्पन्दयोः सहभावित्वात्प्राणनिग्रहे मनो निगृह्यते। ननु सह स्पन्दो न युक्तः, सुषुप्तौ चेष्टमानेऽपि प्राणे मनसोऽचेष्टमानत्वात्। न।**

**विलीनत्वेन तदानीं मनसः सत्त्वाभावात् । ननु क्षीणे प्राणे नासिकयो-च्छ्वसितीति व्याहतम् । नहि क्षीणप्राणस्य मृतस्य श्वासं क्वचित्पश्यामः । नापि श्वसतो जीवतः प्राणक्षयोऽस्ति । मैवम् । अनुल्बणत्वस्यात्र क्षय-त्वेन विवक्षितत्वात् । यथा खननच्छेदनादिषु व्याप्रियमाणस्य पर्वत-मारोहतः शीघ्रं धावतो वा श्वासवेगो यावान्भवति न तावान्स्थित-स्याऽऽसीनस्य निद्रितस्य वा श्वासो विद्यते । तथा प्राणायामपाटवोपे-तस्येतरस्मादल्पश्वासो भवति । एतदेवाभिप्रेत्य श्रूयते—**

**‘ भूत्वा तत्राऽऽयतप्राणः शनैरेव समुच्छ्वसेत् ’ इति ।**

यथा दुष्टैरश्वैरुपेतो रथो मार्गं त्यक्त्वा यत्र क्वापि नीयते स च सारथिना दृढमश्वं रज्जुभ्याकृष्य सुखमार्गे पुनर्धार्यते तथेन्द्रियैर्वासनादिभिरितस्ततो नीयमानं चित्तं प्राण-रज्जौ दृढं धृतायां धार्यते । प्राणान्प्रपीड्येति यदुक्तं तत्र प्राणपीडनप्रकारोऽन्यत्र श्रूयते—

‘ सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।
त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥
प्राणायामास्त्रयः प्रोक्ता रेचपूरककुम्भकाः ।
उत्क्षिप्य वायुमाकाशं शून्यं कृत्वा निरात्मकम् ॥
शून्यभावेन युञ्जीत रेचकस्येति लक्षणम् ।
वक्त्रेणोत्पलनालेन तोयमाकर्षयेन्नरः ॥
एवं वायुर्ग्रहीतव्यः पूरकस्येति लक्षणम् ।
नोच्छ्वसेन्निःश्वसेन्नैव नैव गात्राणि चालयेत् ॥
एवं तावन्नियुञ्जीत कुम्भकस्येति लक्षणम् ॥ इति ।

संदब्धानि, व्याप्तानि । एवमपि किं प्रकृत इत्यत आह—**अत** इत्यादिना । तत्रापि शङ्कते—**नन्विति** । समाधत्ते—**नेत्या**दिना । एवमप्युदाहृतश्रुतावेव व्याघातमाशङ्कते—**नन्वि**त्यादिना । समाधत्ते—**मैवमि**त्यादिना । कृष्णपक्षे हि क्षीणश्चन्द्र इत्यादिवदवयवा-पचय एवात्र क्षयः संमतो न तु क्षयः कल्पान्त इत्यपीत्यमरात्सार्वांशिकनाश इत्याशयः । तदेवान्वयव्यतिरेकाभ्यामनुल्बणत्वं प्राणस्य प्रकाशयति—**यथे**त्यादिना । उक्तेऽर्थे श्रुत्यन्त-रमपि संवादयति—**भूत्वा तत्रेति** । ताः श्रुतीरेव पठति—**सव्याहृति**मित्यादिसार्धचतुर्भिः । अत्र व्याख्येयांशो मूल एवानुपदं व्याख्यात एव दिङ्मात्रमिति मयोपरम्यते । नोच्छ्वसेदि-त्यर्धे मल्लिखितेतरदपि क्वचित्पुस्तके पाठान्तरं प्रतीयते तथाऽपि मूलाशयविरोधात्तदुपेक्ष्यमे-वेति दिक् ।

तत्रोत्क्षिप्येत्यादि संदिग्धं व्याकरोति अत्रेत्यादिना—

अत्र शरीरान्तर्गतं वायुं बहिर्निःसारयितुमुत्क्षिप्य शारीरमाकाशं शून्यं निरात्मकं वायुरहितं कृत्वा स्वल्पमपि वायुमप्रवेश्य शून्यभावेनैव नियमयेत् । तदिदं रेचकं भवति । कुम्भको द्विविधः, आन्तरो बाह्यश्च । तदुभयं च वसिष्ठ आह–

अपाने स्तम्भितः प्राणो यावन्नात्युदितो हृदि ।
तावत्सा कुम्भकावस्था योगिभिर्याऽनुभूयते ॥
बहिरस्तं गते प्राणे यावन्नापान उद्गतः ।
तावत्पूर्णां समावस्थां बहिष्ठं कुम्भकं विदुः ॥ इति ।

तत्रोच्छ्वास आन्तरकुम्भकविरोधी । निःश्वासो बाह्यकुम्भकविरोधी । गात्रचालनमुभयविरोधि । तस्मिन्सति निःश्वासोच्छ्वासयोरन्यतरस्यावश्यंभावित्वात् । पतञ्जलिरप्यासनानन्तरभाविनं प्राणायामं सूत्रयामास–'तस्मिन्सति निःश्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः' इति । ननु कुम्भके गत्यभावेऽपि रेचकपूरकयोरुच्छ्वासनिःश्वासगती विद्येते इति चेन्न । अधिकमात्राभ्यासेन स्वभावमात्रसिद्धाया: समप्राणगतेर्विच्छेदात् । तमेवाभ्यासं सूत्रयति–' बाह्याभ्यन्तरस्तम्भवृत्तिर्देशकालसंख्याभिः परिदृष्टो दीर्घः सूक्ष्मः' इति । रेचको बाह्यवृत्तिः । पूरकोऽन्तर्वृत्तिः । कुम्भकः स्तम्भवृत्तिः । तत्रैकैको देशादिभिः परीक्षणीयः । तद्यथा–स्वभावसिद्धे रेचके हृदयान्निर्गत्य नासासंमुखे द्वादशाङ्गुलपर्यन्ते श्वासः समाप्यते । अभ्यासेन तु क्रमेण नाभेराधाराद्वायुर्निर्गच्छति । चतुर्विंशत्यङ्गुलपर्यन्ते षट्त्रिंशदङ्गुलपर्यन्ते वा समाप्तिः । अत्र रेचके प्रयत्नातिशये सति नाभ्यादिप्रदेशक्षोभेणान्तर्निश्चेतुं शक्यम् । बहिश्च सूक्ष्मं तूलं धृत्वा तच्चालनेन निश्चेतव्यम्[1] । सेयं देशपरीक्षा । रेचककाले प्रणवस्याऽऽवृत्तयो दश विंशतिस्त्रिंशदित्यादि कालपरीक्षा । अस्मिन्मासे प्रतिदिनं दश रेचकाः, आगामिमासे विंशतिः, उत्तरमासे त्रिंशदित्यादिभिः[2] संख्यापरीक्षा । यथोक्तदेशकालविशिष्टाः प्राणायामा एकस्मिन्दिने दश विंशतिस्त्रिंशदित्यादिभिः संख्यापरिक्षा । पूरकेऽप्येवं

१ घ. च. छ. °व्यः । से° । २ क. ख. ग. घ. ङ. च. °दिकालपरीक्षाभिः ।

**योजनायम्। यद्यपि कुम्भके देशव्याप्तिविशेषो नावगम्यते तथाऽपि कालसंख्याव्याप्तिरवगम्यत एव यथा घनीभूतस्तूलपिण्डः प्रसार्यमाणो दीर्घो विरलतया सूक्ष्मश्च भवति तथा प्राणोऽपि देशकालसंख्याधिक्ये-नाभ्यस्यमानो दीर्घो दुर्लक्ष्यतया सूक्ष्मश्च संभवति।**

**नियमयेत्**, वायुं यावच्छक्ति किंचित्कालं बहिरेव निरोधयेदित्यध्याहृत्यैवान्वयः। एवं रेचेत्याद्युद्दिष्टप्राणायामत्रयमध्ये प्रथमस्येदं लक्षणमित्याह—**तदिदमित्यादि**। अथ क्रम-प्राप्तमपि पूरकाख्यं निरुक्तरेचकाव्यवहितोत्तरक्षण एव विना वक्ष्यमाणकुम्भकाभ्यासं निस-र्गसिद्धत्वाद्धित्वैव कुम्भकमेव विवृणोति—**कुम्भक** इत्यादिना। तत्र प्रमाणाद्यपेक्षायां तदाह—**तदुभयं च**त्यादिना। चोऽप्यर्थे। उभयमपीत्यर्थः। अधोगतिरान्तरो वायुरपानः। एवं स एवोर्ध्वगतिः प्राण इति स्पष्टे एव तल्लक्षणे। अत्र वसिष्ठसंमतिमाहात्म्यसिद्ध-कुम्भकद्वये प्रागुक्तश्रुतिनिषिद्धोच्छ्वासादीनां प्रयोजनमाह—**तत्रोच्छ्वास** इत्यादिना। अत्र पतञ्जलिवाक्यमपि संवादयति—**पतञ्जलिरपीति**। तदेव सूत्रं पठति—**तस्मि-न्सतीति**। तत्र शङ्कते—**नन्वि**त्यादिना। समाधत्ते—**ने**त्यादिना। अभ्यासः कीदृगि-त्यत आह—**तमेवे**त्यादिना सावतरणम्। बाह्येत्याद्युदाहृतं सूत्रं विवृणोति—**रेचक** इत्या-दिना **संभवती**त्यन्तेन।

रेचकादित्रयापेक्षयाऽन्योऽपि तत्प्रकारः पतञ्जल्युक्त इत्याह—

**रेचकादिभ्यस्त्रिभ्योऽन्यं प्रकारं सूचयति—'बाह्याभ्यन्तर[1]विषयानपेक्षी चतुर्थः' इति। यथाशक्ति सर्वं वायुं विरेच्यानन्तरं क्रियमाणो बहिष्कु-म्भको यथाशक्ति वायुमापूर्यानन्तरं क्रियमाणोऽन्तःकुम्भक इति। रेचक-पूरकावनादृत्य केवलः कुम्भकोऽभ्यस्यमानः पूर्वत्रयापेक्षया चतुर्थो भवति। निद्रातन्द्रादिप्रबलदोषयुक्तानां रेचकादित्रयं दोषरहितानां चतुर्थ इति विवेकः। प्राणायामफलं सूत्रयति—'ततः क्षीयते प्रकाशा-वरणम्' इति। प्रकाशस्य सत्त्वस्याऽऽवरणं तमो निद्रालस्यादिहेतुस्तस्य क्षयो भवति। क्षये सति फलान्तरं सूत्रयति—'धारणासु च योग्यता मनसः' इति। आधारनाभिचक्रहृदयभ्रूमध्यब्रह्मरन्ध्रादिदेशविशेषे विकृष्य चित्तस्थापनं धारणा। 'देशबन्धश्चित्तस्य धारणा' इति सूत्र-णात्।**

१ क. ख. रविषयावनपेक्ष्य च°। घ. च. 'रपूर्वत्रयापेक्षोऽपि च°। छ. रविषयाक्षेपी च।

श्रुतिश्च–'मनः संकल्पकं ध्यात्वा संक्षिप्याऽऽत्मनि बुद्धिमान्।
धारयित्वा तथाऽऽत्मानं धारणा परिकीर्तिता' इति॥

प्राणायामेन रजोगुणकार्याच्चाञ्चल्यात्तमोगुणकार्यादालस्यादेश्च निवारितं मनस्तस्यां धारणायां योग्यं भवति।

'प्राणायामदृढाभ्यासैर्युक्त्या च गुरुदत्तया' इत्यत्रत्येन युक्तिशब्देन योगिजनप्रसिद्धं शिरोरूपमेरुचालनं, जिह्वाग्रेण घण्टिकाभ्रमणं नाभिचक्रे हृदये ज्योतिर्ध्यानं विस्मृतिप्रदौषधसेवा चेत्येवमादिकं गृह्यते।

तदेवमध्यात्मविद्यासाधुसंगमवासनाक्षयप्राणनिरोधाश्चित्तनाशोपाया दर्शिताः। अथ तदुपायभूतं समाधिं वक्ष्यामः। पञ्चभूम्युपेतस्य चित्तस्य भूमित्रयत्यागेनावशिष्टं भूमिद्वयं समाधिः। भूमयश्च योगभाष्यकृता दर्शिताः—'क्षिप्तं मूढं विक्षिप्तमेकाग्रं निरुद्धमिति पञ्च चित्तस्य भूमयः' इति। आसुरसंपल्लोकशास्त्रदेहवासनासु वर्तमानं चित्तं क्षिप्तं भवति। निद्रातन्द्रादिग्रस्तं मूढम्। कादाचित्कध्यानयुक्तं क्षिप्ताद्विशिष्टतया विक्षिप्तम्।

**रेचकादिभ्य इति**। तदेव सूत्रं पठति—**बाह्येति**। तद्विशदयति—**यथाशक्तीत्या**दिना। ननु कस्यात्राधिकारस्तत्राऽऽह—**निद्रे**त्यादिना॥ननु किं प्राणायामफलमित्यतस्तदपि सूत्रकृतैवोक्तमित्याह—**प्राणायामेति**। तत्सूत्रमुदाहरति—**तत इति**। तद्विवृणोति—**प्रकाशस्ये**त्यादिना। ततः किं तदाह—**क्षये सती**त्यादिना। धारणास्वित्याद्युदाहृतसूत्रं विवृणोति-**आधारे**त्यादिना। मूलाधारेत्यर्थः। आदिनाऽऽधिदैविकं सूर्यमण्डलादि। आधिभौतिकमाकाशाद्यपि। तत्र मानं वदन्हेतुमाह—**देशेति**। तन्मूलीभूतां श्रुतिमप्यवतार्योदाहरति—**श्रुतिश्चे**त्यादिना। संक्षिप्य, तदेकायत्तसत्ताकत्वेन प्रविलाप्येत्यर्थः। अथ सिंहावलोकनन्यायेन प्रागुदाहृतस्मृत्यंशविशेषं विवृणोति—**प्राणायामे**त्यादिना। घण्टिका लम्बिका। **विस्मृतीति**।

मूर्छितो हरते व्याधिं मृतो जीवयति स्वयम्।
रुद्धः खेचरतां धत्ते रसो वायुश्च पारदः॥

इति हठप्रदीपिकोक्तेरधातुरुद्धस्य पारदगुटिकाविशेषस्यौषधिविशेषसाध्यत्वाद्दृश्यविस्मृतिद्वारा समाधिप्रदतायाः शिवस्वरूपतादेश्च तच्छास्त्रसिद्धत्वाच्च तत्सेवैव मुखे तद्धारणलक्षणेह गृह्यते। तेन संविदासवयोर्मध्ये संविदेव गरीयसीति वदन्तः संवित्पदसंकेतितविजयापराभिधभृङ्गां प्रकृते ब्रुवाणाः शाक्ताः प्रत्युक्ताः। विस्तरस्त्वत्र मदीये शाक्तशातन एव ज्ञेयः। आदिना मनसैव प्राणवायुविरेचनं सात्मानुसंधानं ग्राह्यम्। उपसंहरति—**तदेवमि**-

त्यादिना । इतः परं मुख्यं चित्तनाशोपायं वक्तुं प्रतिजानीते—**अथेति** । तं लक्षयति—**पञ्चे**त्यादिना । तत्र मानमाह—**भूमयश्चे**त्यादि । ताः संविवृणोति—**आसुरे**त्यादिना ।

भवत्वेवमथापि किं प्रकृत इत्यत आह **तत्रे**त्यादिना—

**तत्र क्षिप्तमूढयोः समाधिशङ्कैव नास्ति । विक्षिप्ते तु चेतसि विक्षेपोपसर्जनीभूतः समाधिर्योगपक्षे न वर्तते । विक्षेपान्तर्गततया दहनान्तर्गतबीजवत्सद्य एव विनश्यति । यस्त्वेकाग्रे चेतसि सद्भूतमर्थं प्रद्योतयति क्षिणोति च क्लेशान्कर्मबन्धनानि श्लथयति निरोधमभिमुखी करोति स संप्रज्ञातयोग इत्याख्यायते । सर्ववृत्तिनिरोधे त्वसंप्रज्ञातसमाधिः । तत्र संप्रज्ञातसमाधिभूमिमेकाग्रतां सूत्रयति—' शान्तोदितौ तुल्यप्रत्ययौ चित्तस्यैकाग्रतापरिणामः ' इति । शान्तः, अतीतः । उदितो वर्तमानः । प्रत्ययः, चित्तवृत्तिः । अतीतप्रत्ययो यं पदार्थं गृह्णाति तमेव चेदुदितो गृह्णीयात्तदा तावुभौ तुल्यौ भवतः । तादृशश्चित्तस्य परिणाम एकाग्रतेत्युच्यते । एकाग्रताभिवृद्धिलक्षणं समाधिं सूत्रयति—' सर्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्य समाधिः परिणामः ' इति । रजोगुणेन चाल्यमानं चित्तं क्रमेण सर्वान्पदार्थान्गृह्णाति । तस्य रजोगुणस्य रोधाय क्रियमाणेन योगिना प्रयत्नविशेषेण दिने दिने सर्वार्थता क्षीयते, एकाग्रता चोदेति तादृशश्चित्तस्य परिणामः समाधिरित्युच्यते । तस्य समाधेरष्टाङ्गेषु यमनियमासनप्राणायामप्रत्याहाराः पञ्च बहिरङ्गानि( णि ) तत्र यमान्सूत्रयति—' अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः ' इति । हिंसादिभ्यो निषिद्धधर्मेभ्यो योगिनं यमयन्ति निवर्तयन्तीति यमाः । नियमान्सूत्रयति—' शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः ' इति । जन्महेतोः काम्यधर्मान्निवर्त्य मोक्षहेतौ निष्कामधर्मे नियमयन्ति प्रेरयन्तीति नियमाः । यमनियमयोरनुष्ठानवैलक्षण्यं स्मर्यते—**

**यमा[1]न्कुर्वीत सततं न कुर्यान्नियमान्बुधः ।**
**यमान्पतत्यकुर्वाणो नियमान्केवलान्भजन् ॥**
**पतति नियमवान्यमेष्वसक्तो**
**न तु यमवान्नियमालसोऽवसीदत् ।**
**इति यमनियमौ समीक्ष्य बुद्ध्या**
**यमबहुलेष्वनुसंदधीत बुद्धिम् ॥ इति ।**

---

१ छ. °क्षे व° । २ क. ख. ङ. 'मान्सेवेत सततं न नित्यं नियं° ।

यमनियमफलानि सूत्रयति—'तत्संनिधौ वैरत्यागः, क्रियाफलाश्रा[1]वित्वम्, सर्वरत्नोपस्थानम्, वीर्यलाभः, जन्मकथंतासंबोधः, जननादिभयाभावः, शौचात्स्वाङ्गजुगुप्सा परैरसंसर्गः, सत्त्वशुद्धिसौमनस्यैकाग्रतेन्द्रियजयात्मदर्शनयोग्यत्वानि च भवन्ति। संतोषादनुत्तमः सुखलाभः। कायेन्द्रियबुद्धिशुद्धिपापक्षयास्तपसः, स्वाध्यायादिष्टदेवतासंप्रयोगः, समाधिसिद्धिरीश्वरप्रणिधानात्' इति। आसनप्राणायामौ व्याख्यातौ।

नन्वेवमप्येकाग्रनिरुद्धभूम्योः किं स्वरूपमित्याकाङ्क्षायां तव्द्युत्पादयति—**यस्त्वे**त्यादिना सप्रमाणम्। अत्राऽऽदौ संप्रज्ञातसमाधिरेवोपन्यस्तस्तत्र कः ऽस्ति चित्तभूमिरित्यत्राऽऽह—**तत्रे**त्यादि ससूत्रावतरणम्। सूत्रं व्याकरोति—**शान्त** इत्यादिना। एकाग्रतापरिपाकः क इत्यत्र सूत्रं योजयति—**एकाग्रते**त्यादिना। निरुक्तसूत्रं विवृणोति—**रजोगुणने**त्यादिना। प्रयत्नविशेषेण, द्वैतमिथ्यात्वपूर्वकसार्वदिकाद्वैतात्मानुचिन्तनात्मनेत्यर्थः। **तस्य समाधे**रित्यादिर्यमनियमफलानि **सूत्रयती**त्यन्तो ग्रन्थः स्पष्ट एव। **तत्संनिधावि**त्यादि। **क्रियेति**। धार्मिको भव स्वर्गी भवेति क्रिया धर्मः फलं सुखं ते स्ववाचैव जनानां जनयतीत्यर्थः। **जन्मेति**। दुःखबहुलपूर्वापरजन्मज्ञानेन वैराग्यादि। **शौचा**दित्यादि**व्याख्याता**वित्यन्तं सरलमेव।

नन्वेवमपि प्रागुक्तयोगाङ्गाष्टकक्रमप्राप्तस्य प्रत्याहारस्य किं स्वरूपमित्यतस्तल्लक्षकसूत्रं सावतरणमाह **प्रत्याहार**मित्यादिना—

प्रत्याहारं सूत्रयति—'स्वविषयासंप्रयोगे चित्तस्य स्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः' इति। शब्दस्पर्शरूपरसगन्धादिविषयास्तेभ्यो निवर्तिताः श्रोत्रादयश्चित्तस्वरूपमनुकुर्वन्तीवावतिष्ठन्ते। श्रुतिश्च भवति—

'शब्दादिविषयान्पञ्च मनश्चैवातिचञ्चलम्।
चिन्तयेदात्मनो रश्मीन्प्रत्याहारः स उच्यते॥ इति।

शब्दादयो विषया येषां श्रोत्रादीनां ते श्रोत्रादयः पञ्च मनःषष्ठानामेतेषामनात्मरूपेभ्यः शब्दादिभ्यो निवर्तनमात्मरश्मित्वेन चिन्तनं प्रत्याहारः स इत्यर्थः। प्रत्याहारफलं सूत्रयति—'ततः परमा वश्यतेन्द्रियाणाम्' इति। धारणाध्यानसमाधीन्सूत्रैस्त्रिभिः सूत्रयति—'देशबन्धश्चित्तस्य धारणा। तत्र प्रत्ययैकतानता ध्यानम्। तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः' इति। आधारादिदेशाः पूर्वमुक्ताः। देशान्तरं श्रूयते—

---

१ क. ख. ग. घ. ङ. च. °लाश्रयत्व°।

मनः संकल्पकं ध्यात्वा संक्षिप्याऽऽत्मनि बुद्धिमान् ।
धारयित्वा तथाऽऽत्मानं धारणा परिकीर्तिता ॥ इति ।

यत्सर्ववस्तुसंकल्पकं मनस्तद्ध्यात्वा तदात्मानमेव संकल्पयतु न त्वन्यदित्येवंविधः प्रयत्न आत्मनि संक्षेपः । प्रत्ययस्यैकतानता तत्त्वैकविषयः प्रवाहः । स च द्विविधः—विच्छिद्य विच्छिद्य जायमानः संततश्चेति । तावुभौ क्रमेण ध्यानसमाधी भवतः । तदुभयं सर्वानुभवयोगिना दर्शितम्—

चित्तैकाग्र्याद्यतो ज्ञानमुक्तं समुपजायते ।
तत्साधनमतो ध्यानं यथावदुपदिश्यते ॥

विलाप्य विकृतिं कृत्स्नां संभवव्यत्ययक्रमात् ।
परिशिष्टं च सन्मात्रं चिदानन्दं विचिन्तयेत् ॥ इति ।

ब्रह्माकारमनोवृत्तिप्रवाहोऽहंकृतिं विना ।
संप्रज्ञातसमाधिः स्याद्ध्यानाभ्यासप्रकर्षजः ॥ इति ।

तं च भगवत्पादा उदाजह्रुः—

दृशिस्वरूपं गगनोपमं परं
सकृद्विभातं त्वजमेकमक्षरम् ।
अलेपकं सर्वगतं यदद्वयं
तदेव चाहं सततं विमुक्त ओम् ॥
दृशिस्तु शुद्धोऽहमविक्रियात्मको
न मेऽस्ति कश्चिद्विषयः स्वभावतः ।
पुरस्तिरश्चोर्ध्वमधश्च सर्वतः
संपूर्णभूमा त्वज आत्मनि स्थितः ॥
अजोऽमरश्चैव तथाऽजरोऽमृतः
स्वयंप्रभः सर्वगतोऽहमद्वयः ।
न कारणं कार्यमतीव निर्मलः
सदैव तृप्तश्च ततो विमुक्त ओम् ॥ इति ।

ननु संप्रज्ञातसमाधिरङ्गी स कथं ध्यानानन्तरभाविनोऽष्टमाङ्गस्य समाधेः स्थान उदाह्रियते । नायं दोषः । अत्यन्तभेदाभावात् । यथा वेदमधीयानो माणवकः पदे पदे स्खलन्पुनः पुनः समादधाति । अधीतवेदस्तु सावधानो न स्खलति । अध्यापको निरवधानस्तन्द्रीं कुर्व-

**ष्वपि न स्खलति। तथा विषयैक्येऽपि परिपाकतारतम्येन ध्यानसमाधिसंप्रज्ञातानामवान्तरभेदोऽवगन्तव्य इति।**

स्वेत्युदाहृतसूत्रं विवृणोति—**शब्दस्पर्शे**त्यादिना। तत्र श्रुतिमपि संवादयति—**श्रुतिश्चे**त्यादिना। तामपि व्याकरोति—**शब्दादय** इत्यादिना। अथ किमनेन भवतीत्यत आह—**प्रत्याहारे**त्यादिना। **धारणे**त्यादि समाधी **भवत** इत्यन्तं तु निगदव्याख्यातमेव। तत्र पूर्वाचार्यवचः प्रमाणयति—**तदुभयमि**त्यादिना। **विलाप्येति**। उत्पत्त्यादिक्रमादित्यर्थः। विकृतिं विकारं दृश्यं विलाप्य दृङ्मात्रत्वेन संचिन्त्य। एवमुपदेशसाहस्रीवाक्यान्यपि संवादयति—**तं चे**त्यादिना। तत्राप्याशङ्कते—**नन्वि**त्यादिना। समाधत्ते—**नायं दोष** इत्यादिना। तत्र हेतुः—**अत्यन्तेति**। तत्र दृष्टान्तमाह—**यथे**त्यादिना। दार्ष्टान्तिके योजयति—**तथे**त्यादिना।

ननु भवत्वेवं वेदाध्ययनदृष्टान्तेन ध्यानसमाधिसंप्रज्ञातसमाधीनामवान्तरतारतम्यमथाप्युक्ताष्टाङ्गानां मध्ये कानि बहिरङ्गाणि कानि वाऽन्तरङ्गाणीत्यतः सूत्रमेवावतारयति **ध्यानधारणे**त्यादिना—

**ध्यानधारणासमाधित्रयं मनोविषयत्वात्संप्रज्ञातसमाधेरन्तरङ्गं यमादिपञ्चकं तु बहिरङ्गम्। तदेतत्सूत्रयति—'त्रयमन्तरङ्गं पूर्वेभ्यः' इति। ततः केनापि पुण्येनान्तरङ्गे प्रथमं लब्धे सति बहिरङ्गलाभाय नातिप्रयासः कर्तव्यः। यद्यपि पतञ्जलिना भौतिकभूततन्मात्रेन्द्रियाहंकारादिविषयाः संप्रज्ञातसविकल्पसमाधयो बहुधा प्रपञ्चितास्तथाऽपि तेषामन्तर्धानादिसिद्धिहेतुतया मुक्तिहेतुसमाधिविरोधित्वान्नास्माभिस्तत्राऽऽदरः क्रियते। तथा च सूत्रितम्—'ते समाधावुपसर्गा व्युत्थाने सिद्धयः' इति। 'स्थान्युपनिमन्त्रणे सङ्गस्मयाकरणं पुनरनिष्टप्रसङ्गात्' इति च। 'स्थानिनो देवाः। उद्दालको देवैरामन्त्रितोऽप्यवज्ञाय देवान्निर्विकल्पकसमाधिमेव चकारेत्युपाख्यायते। प्रश्नोत्तराभ्यामप्येवमेवावगम्यते—**

**श्रीरामः—जीवन्मुक्तशरीराणां कथमात्मविदां वर।**
**शक्तयो नेह दृश्यन्ते आकाशगमनादिकाः॥**

**वसिष्ठः—*अनात्मविदमुक्तोऽपि नभोविहरणादिकम्।**
**अणिमाद्यष्टसिद्धीनां सिद्धिजालानि वाञ्छति॥**

---

* क. ग. घ. ङ. छ. पुस्तकेषु "अनात्मविदमुक्तो हि(ऽपि) सिद्धिजाला(ता)नि वाञ्छति। " इत्यर्धपद्यमेव दृश्यते।

*द्रव्यमन्त्रक्रियाकालशक्त्याऽऽप्नोत्येव राघव ।
नाऽऽत्मज्ञस्यैष विषय आत्मज्ञो ह्यात्ममात्रदृक् ॥
आत्मनाऽऽत्मनि संतृप्तो नाविद्यामनुधावति ।
ये केचन जगद्भावास्तानविद्यामयान्विदुः ॥
कथं तेषु किलाऽऽत्मज्ञस्त्यक्ताविद्यो निमज्जति ।
द्रव्यमन्त्रक्रियाकालशक्तयः साधुसिद्धिदाः ॥
परमात्मपदप्राप्तौ नोपकुर्वन्ति काश्चन ।
सर्वेच्छाजालसंशान्तावात्मलाभोदयो हि यः ॥
स कथं सिद्धिवाञ्छायां मग्नचित्तेन लभ्यते । इति ।
न केचन जगद्भावास्तत्त्वज्ञं रञ्जयन्त्यमी ।
नागरं नागरीकान्तं कुग्रामललना इव ॥
अपि शीतरुचावर्के सुतीक्ष्णेऽपीन्दुमण्डले ।
अप्यधः प्रसरत्यग्नौ जीवन्मुक्तो न विस्मयी ॥
चिदात्मन इमा इत्थं प्रस्फुरन्तीह शक्तयः ।
इत्यस्याऽऽश्चर्यजालेषु नाभ्युदेति कुतूहलम् ॥ इति च ।
"+यस्तु वा भावितात्माऽपि सिद्धिजालानि वाञ्छति ।
स सिद्धिसाधकैर्द्रव्यैस्तानि साधयति क्रमात् ॥" इति[च]।

**मनोविषयत्वादिति** । 'देशबन्धश्चित्तस्य धारणा' इत्यादिधारणादिलक्षकसूत्रत्रयेऽपि देशबन्धप्रत्ययैकताननताऽर्थमात्रनिर्भासेषु प्रतियोगितासंबन्धेन ध्यानादीनां मनोविषयत्वादित्यर्थः । ध्यानधारणयोर्व्युत्क्रमस्त्वल्पाच्तरत्वेन ध्यानपदस्य पूर्वप्रयोगादेव । फलितमाह—**तत** इत्यादिना । तत्र सूत्रविरोधमाशङ्क्य समाधत्ते—**यद्यपी**त्यादिना । ननु भवदपेक्षया सूत्रकारोऽभ्यर्हित इत्यत आह—**तथा चेति** । स्थानीत्यादिद्वितीयसूत्रं व्याकरोति—**स्थानिन** इत्यादिना । तत्र निदर्शनं योगवासिष्ठप्रसिद्धमुद्दालक एवेत्याह—**उद्दालक** इत्यादिना । एवमेव श्रीरामप्रश्नादिनाऽपि निर्णीयत इत्याह—**प्रश्नेति** । तद्वाक्यवृन्दमेव संगृह्णाति—**श्रीराम** इत्यादिमध्यवासिष्ठनिष्ठम् । **जीवन्मुक्तेति** । जीवद्दशायां लोकदृष्ट्या प्रतीयमानायां सत्यामपि मुक्तं मिथ्यात्वनिर्णयेन शरीरं शीर्यत इति व्युत्पत्त्या ज्ञान-

---

* ङ. पुस्तके—द्रव्यमन्त्रक्रियाकालास्तैः सह युक्तियोगस्तेन द्रव्यादियुक्तः सन्प्राप्नोतीत्यर्थ इत्यधिकम् । + घ. ध. ङ. पुस्तकेष्वयं श्लोको नास्ति ।

निवर्त्य द्वैतजालं यैस्तेषां तत्त्वविदामित्यर्थः । एवं स्थलान्तरप्रसिद्धान्यपि तद्वाक्यान्येवात्र संमत्यर्थं संलिखति—न केचनेत्यादिना । अस्य आत्मज्ञस्येत्यर्थः ।

नन्वेवमप्यद्वैतात्मविषयकसंप्रज्ञातसमाधावादरः श्रीमतामावश्यक एवेति चेदोमित्याहाऽऽत्मविषयस्त्वित्यादिना ।

**आत्मविषयस्तु संप्रज्ञातसमाधिर्वासनाक्षयस्य निरोधसमाधेश्च हेतुस्तस्मादत्राऽऽदरः कृतः ।**

**अथ पञ्चमभूमिरूपो निरोधसमाधिर्निरूप्यते । तं च निरोधं सूत्रयति—' व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधक्षणचित्तान्वयो निरोधपरिणामः ' इति । व्युत्थानसंस्काराः समाधिविरोधिनः । ते चोद्दालकस्य समाधावुदाहृताः—**

**कदाऽहं मुक्तमनने पदे परमपावने ।**
**चिरं विश्रान्तिमेष्यामि मेरुशृङ्ग इवाम्बुदः ॥**
**इति चिन्तापरवशो बलादुद्दालको द्विजः ।**
**पुनः पुनरुपाविश्य ध्यानाभ्यासं चकार ह ॥**
**विषयैर्नीयमाने तु चित्ते मर्कटचञ्चले ।**
**न स लेभे समाधाने[1] प्रतिष्ठां प्रीतिदायिनीम् ॥**
**कदाचिद्बाह्यसंस्पर्शपरित्यागादनन्तरम् ।**
**तस्यागच्छच्चित्तकपिरान्तरस्पर्शसंचयान् ॥**
**कदाचिदान्तरस्पर्शाद्बाह्यं विषयमाददे ।**
**तस्योड्डीय मनो याति कदाचित्त्रस्तपक्षिवत् ॥**
**कदाचिदुदितार्काभं तेजः पश्यति विस्तृतम् ।**
**कदाचित्केवलं व्योम कदाचिन्निबिडं तमः ॥**
**आगच्छतो यथाकामं प्रतिभासान्पुनः पुनः ।**
**अच्छिनन्मनसा शूरः खड्गेनेव रणे रिपून् ॥**
**विकल्पौघे समालीने सोऽपश्यद्धृदयाम्बरे ।**
**तमश्छन्नविवेकार्कं लोलकज्जलमेचकम् ॥**
**तमप्युत्सादयामास सम्यग्ज्ञानविवस्वता ।**
**तमस्युपरते स्वान्ते तेजःपुञ्जं ददर्श सः ॥**

---

१ क. ख. ग. ध. ङ. च. °घलक्ष° । २ क. ख. ग. घ. ङ. च. °धानप्र° ।

तल्लुलाव स्थलाब्जानां वनं बाल इव द्विपः ।
तेजस्युपरते तस्य घूर्णमानं मनो मुनेः ॥
निशाब्जवद्गान्निद्रां तामप्याशु लुलाव सः ।
निद्राव्यपगमे तस्य व्योमसंवित्समुद्ययौ ॥
व्योमसंविदि नष्टायां मूढं तस्याभवन्मनः ।
मोहमप्येष मनसस्तं ममार्ज महाशयः ॥
ततस्तेजस्तमोनिद्रामोहादिपरिवर्जिताम् ।
काममप्यवस्थामासाद्य विशश्राम मनः क्षणम् ॥ इति ।

**त एते व्युत्थानसंस्कारा निरोधहेतुना योगिप्रयत्नेन प्रतिदिनं प्रतिक्षणं चाभिभूयन्ते । तद्विरोधिनश्च निरोधसंस्काराः प्रादुर्भवन्ति । तथा सति निरोध एकैकस्मिन्क्षणे चित्तमनुगच्छति । सोऽयमीदृशश्चित्तस्य निरोधपरिणामो भवति ।**

ननु विरोधसमाधिः कोऽपरो यदङ्गमयमित्यत आह—**अथेति** । तत्र सूत्रमवतारयति—**तं चेति** । उदाहृतसूत्रं व्याकरोति—**व्युत्थाने**त्यादिना । कथमुदाहृता इत्यपेक्षायां तद्वाक्यान्येव पठति—**कदाऽह**मित्यादिना । नन्वेवमपि क एतत्प्रशमोपाय इत्यत्राऽऽह—**त एत** इत्यादिना । **योगीति** । यावद्दृश्यं स्वतः सत्ताशून्यत्वेनाऽऽकाशकार्ष्ण्यवन्मिथ्यैवातोऽनधीनभानोऽहमद्वैत एवाऽऽत्मेति स्वरूपानुसंधानात्मनेत्यर्थः । एवं विवृत्तं सूत्रार्थमुपसंहरति—**सोऽयमिति** ।

तत्र शङ्कते—

**ननु 'प्रतिक्षणपरिणामिनो हि भावा ऋते चितिशक्तेः' इति न्यायेन चित्तस्य सर्वदा परिणामप्रवाहो वक्तव्यः । बाढम् । तत्र व्युत्थितचित्तस्य वृत्तिप्रवाहः स्फुटः । निरुद्धचित्तस्य तु कथमित्याशङ्क्योत्तरं सूत्रयति—'ततः प्रशान्तवाहिता संस्कारात्' इति । यथा समिदाज्याहुतिप्रक्षेपे वह्निरुत्तरोत्तरप्रवृद्ध्या प्रज्वलति समिदादिक्षये प्रथमक्षणे किंचिच्छाम्यत्युत्तरोत्तरक्षणे शान्तिर्वर्धते तथा निरुद्धचित्तस्योत्तरोत्तराधिकः प्रशमः प्रवहति । तत्र पूर्वपूर्वप्रशमजनितसंस्कार एवोत्तरोत्तरप्रशमस्य कारणम् । तामेतां प्रशान्तवाहितां भगवान्विस्पष्टमुदाजहार—**

यदा विनियतं चित्तमात्मन्येवावतिष्ठते ।
निःस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥

यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता।
योगिनो यतचित्तस्य युञ्जतो योगमात्मनः॥
यत्रोपरमते चित्तं निरुद्धं योगसेवया।
यत्र चैवाऽऽत्मनाऽऽत्मानं पश्यन्नात्मनि तुष्यति।
सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम्॥
वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः।
यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः॥
यस्मिन्स्थितो न दुःखेन गुरुणाऽपि विचाल्यते।
तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम्॥
स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा॥ इति।

निरोधसमाधेः साधनं सूत्रयति—'विरामप्रत्ययाभ्यासपूर्वकः संस्कारशेषोऽन्यः' इति। विरामो वृत्त्युपरमस्तस्य प्रत्ययः कारणं वृत्त्युपरमार्थः पुरुषप्रयत्नस्तस्याभ्यासः पौनःपुन्येन संपादनं तत्पूर्वकस्तज्जन्यः। अनन्तरातीतसूत्रे संप्रज्ञातसमाधेरुक्तत्वात्तदपेक्षयाऽन्योऽसंप्रज्ञातसमाधिः। तत्र वृत्तिरहितचित्तस्य दुर्लक्ष्यत्वात्संस्काररूपेण चित्तं शिष्यते। विरामप्रत्ययजन्यत्वं भगवान्विस्पष्टमाह—

संकल्पप्रभवान्कामांस्त्यक्त्वा सर्वानशेषतः।
मनसैवेन्द्रियग्रामं विनियम्य समन्ततः॥
शनैः शनैरुपरमेद्बुध्द्या धृतिगृहीतया।
आत्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेत्॥
यतो यतो निश्चरति मनश्चञ्चलमस्थिरम्।
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत्॥ इति।

**नन्विति**। उक्तशङ्कामङ्गी करोति—**बाढमिति**। तत्र सूत्रमनुकूलयति—**तत्रे**त्यादिना। तत्र दृष्टान्तं प्रकटयति—**यथे**त्यादिना। तत्र स्मृतिमप्युदाहरति—**तामि**त्यादिना। स्मृत्यर्थस्तु श्रीमधुसूदनाचार्यैः प्रपञ्चित एवेति नेह मया प्रतन्यते। उक्तनिरोधसमाधिः कथं स्यादित्यतः सूत्रमवतारयति—**निरोधेति**। तद्विवृणोति—**विराम** इत्यादिना। **अनन्तरेति**। अव्यवहितगतसूत्र इत्यर्थः। अत्रापि प्राग्वद्भगवद्गीतां संवादयति—**विरामेति**। तद्वाक्यान्येव पठति—**संकल्पे**त्यादिना। अत्रापि प्राग्वदेवोदाहृतवचनसा(स्वा)रस्यं गूढार्थदीपिकायामेव द्रष्टव्यम्। विस्तरभयादनतिप्रयोजकत्वाच्च नेह मयोदाह्रियत इति शिवम्।

उदाहृतस्मृतिं विवृणोति—**काम्यमाना** इत्यादिना—

काम्यमानाः स्रक्चन्दनवनितापुत्रमित्रगृहक्षेत्रादयो मोक्षशास्त्रकुशलविवेकिजनप्रसिद्धैर्बहुभिर्दोषैरुपेता अप्यनाद्यविद्यया तान्दोषानाच्छाद्य तेषु विषयेषु सम्यक्त्वं कल्पयन्ति तस्माच्च संकल्पादिदं मे स्यादित्येवंरूपाः कामाः प्रभवन्ति । तथा च स्मर्यते—

संकल्पमूलः कामो वै यज्ञाः संकल्पसंभवाः ।
काम जानामि ते मूलं संकल्पात्किल जायसे ॥
न त्वां संकल्पयिष्यामि समूलस्त्वं विनङ्क्ष्यसि ॥ इति ।

तत्र विवेकेन विषयदोषेषु साक्षात्कृतेषु शुना वान्ते पायस इव कामास्त्यज्यन्ते । स्रक्चन्दनवनितादिविषयेष्विव ब्रह्मलोकादिष्वणिमाद्यैश्वर्येष्वपि कामास्त्याज्या इत्यभिप्रेत्य सर्वानित्युक्तम् । मासोपवासव्रतिना तस्मिन्मासेऽन्ने त्यक्तेऽपि कामः पुनः पुनरुदेति तद्वन्मा भूदित्यशेषत इत्युक्तम् । कामत्यागे मनःपूर्वकप्रवृत्त्यभावेऽपि चक्षुरादीनां रूपादिषु स्वभावसिद्धा या प्रवृत्तिः साऽपि प्रयत्नयुक्तेन मनसैव नियन्तव्या । देवतादर्शनादिष्वप्यननुसरणाय समन्तत इत्युक्तम् । भूमिकाजयक्रमेणोपरमं विवक्षित्वा शनैः शनैरित्युक्तम् । ताश्च भूमिकाश्चतस्रः कठवल्लीषु श्रूयन्ते—

यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि ।
ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि । इति ॥

वाग्व्यापारो द्विविधः—लौकिको वैदिकश्च । लौकिको जल्पादिरूपो वैदिको जपादिरूपः । तत्र लौकिकस्य बहुविक्षेपकरत्वाद्व्युत्थान कालेऽपि योगी तं परित्यजेत् । अत एव स्मर्यते—

मौनं योगासनं योगस्तितिक्षैकान्तशीलता ।
निस्पृहत्वं समत्वं च सप्तैतान्येकदण्डिनः । इति ॥

वैदिकं जपादिकं तु दण्डी निरोधसमाधौ परित्यजेत् । सेयं वाग्भूमिः प्रथमा । तां भूमिं प्रयत्नमात्रेण कतिपयैर्दिनैर्मासैर्वत्सरैर्वा दृढं विजित्य पश्चाद्द्वितीयायां मनोभूमौ[1] प्रयतेत । अन्यथा बहुभूमिकप्रासादवत्प्रथमभूमिकापातेनैवोपरितनयोगभूमयो विनश्येयुः । यद्यपि चक्षुरादयो निरोद्धव्यास्तथाऽपि तेषां वाग्भूमौ मनोभूमौ वाऽन्तर्भावो द्रष्टव्यः ।

---

१ ग. घ. च. °मिका प्रयासात्प°।

कामानां संकल्पजन्यत्वे स्मृत्यन्तरमप्यनुकूलयति—**तथा चेति**। ननु काः सन्ति ज्ञेयाः प्रकृते भूमिका इत्यत्राऽऽह—**ताश्चे**त्यादिना। अथोक्तश्रुतिं विवृणोति—**वाग्व्यापारो द्विविध इति**। द्वैविध्यमेवाऽऽह—**लौकिक** इत्यादिना। तौ कथयति—**लौकिको जल्पादिरूप** इत्यादिना। तत्राऽऽद्यत्यागे हेतुमाह—**तन्ने**त्यादिना। तत्त्यागे स्मृतिमपि प्रमाणयति—**अत एवे**त्यादिना। **योगेति**। पञ्चकादि। योगश्चित्तवृत्तिनिरोधः। वैदिकत्यागकालमाह—**वैदिकमि**त्यादिना। उपसंहरति—**वैदिकमि**त्यादि। तत्रात्यादरमाह—**तां भूमिमि**त्यादिना। ननु चक्षुरादयोऽपि रोद्धव्या एवेत्याशङ्क्याऽऽह—**यद्यपीत्यादि**।

तत्रापि शङ्कते **नन्वि**त्यादिना—

**ननु वाचं मनसि नियच्छेदित्यनुपपन्नम्। न हीन्द्रियस्येन्द्रियान्तरे प्रवेशोऽस्ति। मैवम्। प्रवेशस्याविवक्षितत्वात्। नानाविक्षेपकारिणोर्वाङ्मनसयोर्मध्ये प्रथमतो वाग्व्यापारनियमनेन मनोव्यापारमात्रपरिशेष इह विवक्षितः। गोमहिषाश्वादीनामिव वाङ्नियमे स्वाभाविके संपन्ने ततो ज्ञानात्मनि मनो नियच्छेत्। आत्मा त्रिविधः—ज्ञानात्मा महात्मा शान्तात्मा चेति। जानाम्यत्र स्थित आत्मेति ज्ञातृत्वोपाधिरहंकारोऽत्र ज्ञानशब्देन विवक्षितः। करणस्य मनसो नियम्यत्वेन पृथगुपात्तत्वात्। अहंकारो द्विविधः—विशेषरूपः सामान्यरूपश्चेति। अयमहमेतस्य पुत्र इत्येवं व्यक्तिमभिमन्यमानो विशेषरूपः। अस्मीत्येतावन्मात्रमभिमन्यमानः सामान्यरूपः। स च सर्वव्यक्तिषु व्याप्तत्वान्महानित्युच्यते। ताभ्यामहंकाराभ्यां द्वाभ्यामुपहितौ द्वावात्मानौ। निरुपाधिकः शान्तात्मा। तदेतत्सर्वमन्तर्बहिर्भावेन वर्तते। शान्तात्मा सर्वान्तरश्चिदेकरसस्तस्मिन्नाश्रितं जडशक्तिरूपमव्यक्तं मूलप्रकृतिः। सा च प्रथमं सामान्याहंकाररूपं महत्तत्वं नाम धृत्वा व्यक्ता भवति। ततो बहिर्विशेषाहंकाररूपेण ततो बहिर्मनोरूपेण ततो बहिर्वागादीन्द्रियरूपेण। तदेतदभिप्रेत्योत्तरोत्तरमान्तरत्वं विविनक्ति श्रुतिः—**

**+इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः।**
**मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः॥**
**महतः परमव्यक्तमव्यक्तात्पुरुषः परः।**
**पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः॥ इति।**

---

+ क. ख. ङ. पुस्तकेषु 'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः' इति भिन्नः पाठः।

एवं सत्यत्र नानाविधसंकल्पविकल्पसाधनकरणरूपं मनोऽहंकर्तरि नियच्छेत् । मनोव्यापारान्परित्यज्याहंकारमात्रं शेषयेत् । न चैतदशक्यमिति वाच्यम्,

तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ।

इति वदन्तमर्जुनं प्रति भगवतोत्तराभिधानात्—

असंशयं महाबाहो मनो दुर्निग्रहं चलम् ॥
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ।
असंयतात्मना योगो दुष्प्राप इति मे मतिः ॥
वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः । इति ।

अत्र शङ्कस्तार्किक एव तन्मत एव मनस इन्द्रियत्वात्स्वसिद्धान्ते तदभावाच्च । समाधत्ते—**मैवमिति** । तत्र हेतुमाह—**प्रवेश्यस्येति** । तर्हि किं विवक्षितं प्रकृते श्रुतेरित्यत आह—**नानेत्यादिना** । ततः किं तदाह—**गोमहिषेत्यादिना** सदृष्टान्तम् । **आत्मेति** । प्रागुपन्यस्तमत्रावशेषविवृत्त्यर्थमेवाऽऽत्मत्रैविध्यप्रतिज्ञानम् । तदुपपादयति—**ज्ञानात्मेत्यादिना** । फलितमाह—**एवं सतीत्यादिना** । नियमनप्रकारमेवाऽऽह—**मन इत्यादिना** । तत्राप्याशङ्क्य सप्रमाणं समाधत्ते—**नचेत्यादि** ।

ननु निरुक्तस्मृत्युक्ते अभ्यासवैराग्ये अपि कीदृशे इत्यत्राऽऽह—**अभ्यासवैराग्ये इत्यादिना**—

अभ्यासवैराग्ये पतञ्जलिसूत्रोदाहरणेनैव व्याख्यास्येते । पूर्वपूर्वभूमिदार्ढ्यरहितोऽसंयतात्मा तत्सहितो वश्यात्मा । उपायतः प्राप्तिं गौडपादाचार्याः सदृष्टान्तमाह—

उत्सेक उदधेर्यद्वत्कुशाग्रेणैकबिन्दुना ।
मनसो निग्रहस्तद्वद्भवेदपरिखेदतः ॥ इति ।
*बहुभिर्न विरोद्धव्यमेकेनापि बलीयसा ।
स पराभवमाप्नोति समुद्र इव टिट्टिभात् ॥ इति ।

अत्र संप्रदायविद आख्यायिकामाचक्षते—

'कस्यचित्किल पक्षिणोऽण्डानि तीरस्थान्युदधिरुत्सेकेनापजहार । तं च समुद्रं शोषयामीति प्रवृत्तः स च पक्षी स्वमुखाग्रेणैकैकं जलबिन्दुं

* क. ख. ग. घ. च. छ. पुस्तकेषु बहुभिरित्ययं श्लोको न विद्यते ।

बहिः प्रक्षिपति स्म । तदा बहुभिः पक्षिभिर्बन्धुवर्गैर्वार्यमाणोऽप्यनुपरतः प्रत्युत तानपि सहकारिणो वव्रे । तांश्च पतनोत्पतनाभ्यां बहुधा क्लिश्यत सर्वानवलोक्य कृपालुर्नारदो गरुडं समीपे प्रेषयामास ततो गरुड-पक्षवातेन शुष्यन्समुद्रो भीतस्तान्यण्डान्यानीय पक्षिणे ददौ' । एवमखेदेन मनोनिरोधे परमधर्मे प्रवर्तमानं योगिनमीश्वरोऽनुगृह्णातीति । अखेदश्च मध्ये मध्ये तदनुकूलव्यापारमिश्रणेन संपद्यते। यथौदनं भुञ्जानस्तद्ग्रासान्तरे चोष्यलेह्यादीनास्वादयति तद्वत् । इदमेवाभिप्रेत्य वसिष्ठ आह—

चित्तस्य भोगैर्द्वौ भागौ शास्त्रेणैकं प्रपूरयेत् ।
गुरुशुश्रूषया भागमव्युत्पन्नस्य संक्रमः ॥
किंचिद्व्युत्पत्तियुक्तस्य भागं भोगेन पूरयेत् ।
गुरुशुश्रूषया भागौ भागं शास्त्रार्थचिन्तया ॥
व्युत्पत्तिमनुयातस्य पूरयेच्चेतसोऽन्वहम् ।
द्वौ भागौ शास्त्रवैराग्यैर्द्वौ ध्यानगुरुपूजया ॥ इति ।

भोगशब्देनात्र जीवनहेतुर्भिक्षाव्यापारो वर्णाश्रमोचितव्यापारश्चोच्यते। घटिकामात्रं मुहूर्तमात्रं वा यथाशक्ति योगमभ्यस्य ततो मुहूर्तं शास्त्रश्रवणेन परिचर्यया वा गुरूनुपगम्य मुहूर्तं स्वदेहमनुसृत्य मुहूर्तं योगशास्त्रं पर्यालोच्य पुनर्मुहूर्तं योगमभ्यसेत्। एवं योगप्राधान्येन व्यापारान्तराणि मेलयंस्तानि द्रागभ्यस्य शयनकाले तद्दिनगतान्योगमुहूर्तान्गणयेत् । ततः परेद्युर्वा परपक्षे वा परमासे वा योगमुहूर्तान्वर्धयेत् । तथा चैकैकस्मिन्मुहूर्त एकैकक्षणयोगेऽपि संवत्सरमात्रेण भूयान्योगकालो भवति। न चैवं योगैकशरणत्वे व्यापरान्तराणि लुप्येरन्निति शङ्कनीयम् ।

नन्वसंयतात्मेति कोऽर्थ इत्यत आह—**पूर्वेत्यादिना** । एवमुक्तपरिखेदशामकयोगानुकूलव्यापारान्तरमिश्रणे वासिष्ठसंमतिमवतारयति—**इदमेवेति** । तद्वाक्यान्युदाहरति—**चित्तस्ये**त्यादिना । तत्र संदिग्धं विवृणोति—**भोगे**त्यादिना । एवं निरुक्तवासिष्ठवचनोक्तव्यवस्थारीत्या प्रत्यहं कालविभागे क्रियमाणेऽप्यारुरुक्षोर्योगेतरसर्वलौकिकशास्त्रीयक्रियाक्षय एव भूयादित्याशङ्क्य तत्समाधानं प्रतिजानीते—**न चैवमि**त्यादिना ।

तत्रेष्टापत्तिमेव हेतुत्वेनाऽऽह—**लुप्तेतरे**त्यादिना—

लुप्तेतरकृत्स्नव्यापारस्यैव योगाधिकारात् । अत एव विद्वत्संन्यासोऽपेक्ष्यते । तस्मात्तदेकनिष्ठः पुमानध्येतृवणिगादिवत्क्रमेण योगारूढो

भवति । यथाऽध्येता माणवकः पादांशं पादार्धमर्धर्चमृचमृग्द्वयं वर्गं च क्रमेण पठन्द्वादशवर्षैरध्यापको भवति । यथा च वाणिज्यं कुर्वन्नेकनिष्कद्विनिष्कादिक्रमेण लक्षपतिः कोटिपतिर्वा भवति । तथा ताभ्यां वणिगध्येतृभ्यां सहैवोपक्रम्य मत्सरग्रस्त इव युञ्जानस्तावता कालेन कुतो न योगमारोहेत् । तस्मात्पुनः पुनः प्राप्यमाणान्संकल्पविकल्पानुद्दालकवत्पौरुषप्रयत्नेन परित्यज्याहंकर्तरि ज्ञानात्मनि मनो नियच्छेत् । तामेतां द्वितीयभूमिकां विजित्य बालमूकादिवन्निर्मनस्त्वे स्वाभाविके सति ततो विशेषाहंकाररूपं विस्पष्टं ज्ञानात्मानमस्पष्टे सामान्याहंकारे महत्तत्त्वे नियच्छेत् । यथा स्वल्पां तन्द्रां प्राप्नवतो विशेषाहंकारः स्वत एव संकुचति विनैव तन्द्रां तथा विस्मरणे प्रयतमानस्याहंकारसंकोचो भवति सेयं लोकप्रसिद्धया तन्द्रया तार्किकाभिमतनिर्विकल्पकज्ञानेन च समाना सामान्याहंकारमहत्तत्त्वमात्रपरिशेषावस्था तृतीया भूमिः । अस्यां चाभ्यासपाटवेन वशीकृतायां तमेतं सामान्याहंकाररूपं महान्तमात्मानं निरुपाधितया शान्ते चिदेकरसस्वभावे नियच्छेत्

'महत्तत्त्वं तिरस्कृत्य चिन्मात्रं परिशेषयेत्'

अत्रापि पूर्वोक्तविस्मृतिप्रयत्न एव ततोऽप्यतिशयेनोपायतामापद्यते । यथा शास्त्राभ्यासे प्रवृत्तस्य व्युत्पत्तेः प्राक्प्रतिग्रन्थव्याख्यानापेक्षायामपि व्युत्पन्नस्य स्वत एवोत्तरग्रन्थार्थः प्रतिभाति तथा सम्यग्वशीकृतपूर्वभूमेर्योगिन उत्तरभूम्युपायः स्वत एव प्रतिभाति । तदाह योगभाष्यकारः—

योगेन योगो ज्ञातव्यो योगो योगात्प्रवर्तते ।
योऽप्रमत्तस्तु योगेन स योगी रमते चिरम् ॥ इति ।

ननु महत्तत्त्वशान्तात्मनोर्मध्ये महत्तत्त्वोपादानमव्यक्ताख्यं श्रुत्योदाहृतं तत्र कुतो नियमनं नाभिधीयत इति चेन्न । लयप्रसङ्गादिति ब्रूमः । यथा घटोऽनुपादाने जले निरुध्यमानो न लीयते, उपादानभूतायां तु मृदि लीयते तथा महत्तत्त्वमात्मनि न लीयते, अव्यक्ते तु लीयते । न च स्वरूपलयः पुरुषार्थः । आत्मदर्शनानुपयोगात् । 'दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः' इति पूर्ववाक्य आत्मदर्शनं विधाय सूक्ष्मत्वसिद्धये निरोधस्याभिधानात् । लयस्य प्रतिदिनं सुषुप्तौ स्वतः सिद्धत्वेन प्रयत्नवैयर्थ्याच्च ।

एवमेव मनसि निधायैव प्रागस्माभिर्जीवन्मुक्तिसाधने विद्वत्संन्यासिन एवाधिकारो नत्वितरस्येति तदर्थं प्रथममेव विद्वत्संन्यासोऽभिहित इति द्योतयति—अत एवेत्यादिना ।

अथ सदृष्टान्तं फलितं कथयति **तस्मादि**त्यादिना । तत्र प्रथमदृष्टान्तं प्रथमं स्पष्टयति—**यथाऽन्धेते**त्यादिना । अथ द्वितीयमपि तं व्युत्पादयति—**यथा चे**त्यादिना । दार्ष्टान्तिके योजयति **तथे**त्यादिना । फलितमाह—**तस्मादि**त्यादिना । एवमुक्तद्वितीयभूमिकापरिपाकं सदृष्टान्तमभिधाय तृतीयामपि तां सदृष्टान्तं विस्पष्टीकृत्योपसंहरति—**तामेतामि**त्यादिना । एवमेतद्वशीकारे सति चतुर्थीमपि तां विधत्ते—**अस्यां चे**त्यादिना । अत्र तु चतुर्गुण एवोक्तनिरोधप्रयत्नोऽपेक्षित इति सदृष्टान्तं स्पष्टयति—**अत्रापी**त्यादिना । उक्तेऽर्थे योगभाष्यकृद्वचः प्रमाणयति—**तदाहे**त्यादिना स तद्वचनम् । **योगेनेति** । इह चतुर्भिः पादैर्यच्छेद्वागिति श्रुत्युक्तोऽर्थ एव क्रमाद्भूमिकाचतुष्टयात्मा । योगेन वागादीन्द्रियाणां मनसि नियमनेन योगः स्थूलाहंकारमात्रावशेषो ज्ञातव्यः । योगः, तस्यापि सूक्ष्माहंकारे नियमनरूपो योगादुक्तप्रथमनियमनात्प्रवर्तते । एवं योगेन महत्तत्त्वमात्रावशेषेण योऽप्रमत्तः सावधानः स एव योगे चिन्मात्रावशेषे चिरं रमते महत्तत्त्वरूपसूक्ष्माहंकारप्रविलापनेन पूर्णानन्दरूपो भवतीति ज्ञेय इत्याशयः । तत्राप्याशङ्क्य समाधत्ते—**नन्वि**त्यादिना । दृश्यत इत्यादिनाऽऽत्मदर्शनप्रयोजकधीसौक्ष्म्यार्थमेवोक्तयोगप्रयास इति रहस्यम् ।

तत्राप्याशङ्क्य समाधत्ते—**नन्वि**त्यादिना—

**ननु धारणाध्यानसमाधिसाध्यस्य संप्रज्ञातस्यैकाग्र्यवृत्तिरूपत्वेन दर्शनहेतुत्वेऽपि शान्तात्मन्यवरुद्धस्यासंप्रज्ञातसमाधिमापन्नस्य चित्तस्य वृत्तिरहितत्वेन सुषुप्तवन्न दर्शनहेतुत्वमिति चेन्न । स्वतः सिद्धस्य दर्शनस्य निवारयितुमशक्यत्वात् । अतः श्रेयोमार्गेऽभिहितम्—**

**आत्मानात्माकारं स्वभावतोऽवस्थितं सदा चित्तम् ।**
**आत्मैकाकारतया तिरस्कृतानात्मदृष्टि विदधीत ॥ इति ।**

**यथा घट उत्पद्यमानः स्वतो वियत्पूर्ण एवोत्पद्यते जलतण्डुलादिपूरणं तूत्पन्ने घटे पश्चात्पुरुषप्रयत्नेन भवति । यथा तत्र जलादौ निःसारितेऽपि न वियन्निःसारयितुं शक्यते । मुखपिधानेऽप्यन्तर्वियदवतिष्ठत एव । तथा चित्तमुत्पद्यमानमात्मचैतन्यपूर्णमेवोत्पद्यते । उत्पन्ने चित्ते पश्चान्मूषानिषिक्तद्रुतताम्रवद्घटपटरूपरससुखदुःखादिवृत्तिरूपत्वं भोगहेतुधर्माधर्मादिवशाद्भवति । तत्र रूपरसाद्यनात्माकारे निवारितेऽप्यनिमित्तश्चिदात्माकारो न निवारयितुं शक्यते । ततो निरोधसमाधिनाऽवृत्तिकेन संस्कारमात्रशेषतया[1] सूक्ष्मत्वेन चिदात्ममात्राभिमु-**

१ क. ख. ग. घ. ङ. च. °शेष्यत° ।

खत्वादेकाग्रेण चित्तेन निर्विघ्नमात्माऽनुभूयते । अनेनैवाभिप्रायेण वार्तिककारसर्वानुभवयोगिनावाहतुः—

सुखदुःखादिरूपत्वं धियो धर्मादिहेतुतः ।
निर्हेतु त्वात्मसंबोधरूपत्वं वस्तुवृत्ततः ॥
प्रशान्तवृत्तिकं चित्तं परमानन्ददीपकम् ।
असंप्रज्ञातनामाऽयं समाधिर्योगिनां प्रियः ॥

आत्मदर्शनस्य स्वतःसिद्धत्वेऽप्यनात्मवारणाय निरोधाभ्यासः । अत एवोक्तम्—

'आत्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेत्' इति ।

योगशास्त्रस्य चित्तचिकित्सकसमाधिमात्रे प्रवृत्तत्वान्निरोधसमाधावात्मदर्शनं न साक्षादुक्तम् । भङ्ग्यन्तरेण त्वभ्युपगम्यते । 'योगश्चित्तवृत्तिनिरोधः' इति सूत्रयित्वा 'तदा द्रष्टुः स्वरूपेणावस्थानम्' इति सूत्रणात् । यद्यपि निर्विकारो द्रष्टा सदा स्वरूप एवावतिष्ठते तथाऽपि वृत्तिषूत्पद्यमानासु तत्र चितिच्छायायां[2] प्रतिबिम्बितायां तदविवेकादस्वस्थ इव द्रष्टा भवति । तदप्यनन्तरसूत्रेणोक्तम् । 'वृत्तिसारूप्यमितरत्र' इति । अन्यत्रापि सूत्रितम् 'सत्त्वपुरुषयोरत्यन्तासंकीर्णयोः प्रत्ययाविशेषो भोगः परार्थत्वात्' इति । चितेरप्रतिसंक्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनम्' इति च ।

तत्र सांप्रदायिकवाक्यं संवादयति—**अत** इत्यादि स तद्वचनम् । तत्र दृष्टान्तं स्पष्टयति । **यथे**त्यादिना । तत्र वार्तिककारादिसंमतिमप्याह—**अनेनैवे**त्यादिना । तद्वचने एव पठति—**सुखे**त्यादिना । नन्वेवं यद्यात्मदर्शनं स्वप्रकाशत्वेन स्वतः सिद्धमेव चेत्तर्हि निरोधसमाधिः कुतोऽभिधीयत इत्यत्राऽऽह—**आत्मदर्शनस्येति** । तत्र स्मृतिं प्रमाणयति—**अत एवे**त्यादिना सावतरणम् । अत एव योगशास्त्रस्याप्यनात्माकारवृत्तिमात्रनिरोध एव तात्पर्यं न त्वात्माकारवृत्तिजननेन तद्भासनार्थं तस्य स्वप्रकाशत्वादित्याह—**योगेत्यादि** । ननु नैवानात्माकारचित्तवृत्तिनिराकृतिमात्र एव निरोधसमाधिविधायकयोगशास्त्रोपयोगः किं त्वात्मनो ब्रह्मत्वानुभवसिद्ध्यर्थमपि प्रसंख्यानापराभिधनिदिध्यासनद्वारेति वेदान्तैकदेशिविशेषमतमाशङ्क्य पतञ्जलिसारस्येन समाधत्ते—**निरोधसमाधिने**त्यादिना—

१ क. ख. ग. घ. ङ. च. °वृत्तितः । २ ग. ङ. °चिच्छा° ।

निरोधसमाधिना शोधिते त्वंपदार्थे साक्षात्कृतेऽपि तस्य ब्रह्मत्वं गोचरयितुं महावाक्येन ब्रह्मविद्यानामकं वृत्त्यन्तरमुत्पद्यते[1]। न च शुद्धत्वंपदार्थसाक्षात्कारे निरोधसमाधिरेक एवोपायः किं तु चिज्जडविवेकेनापि पृथक्कृते तत्साक्षात्कारसंभवात् । अत एव वसिष्ठ आह—

द्वौ क्रमौ चित्तनाशस्य योगो ज्ञानं च राघव ।
योगस्तद्वृत्तिरोधो हि ज्ञानं सम्यगवेक्षणम् ॥ इति ।
असाध्यः कस्यचिद्योगः कस्यचिज्ज्ञाननिश्चयः ।
प्रकारौ द्वौ ततो देवो जगाद परमेश्वरः ॥ इति च ।

ननु विवेकोऽपि योगे पर्यस्यति दर्शनवेलायात्ममात्रगोचराया एकाग्रवृत्तेः क्षणिकसंप्रज्ञातरूपत्वात् । बाढम् । तथा सति संप्रज्ञातासंप्रज्ञातयोः स्वरूपतः साधनतश्चास्त्येव महद्वैलक्षण्यम् । वृत्त्यवृत्तिभ्यां स्फुटः स्वरूपभेदः । साधनं तु संप्रज्ञातस्य सजातीयत्वाद्धारणादित्रयमन्तरङ्गम् । असंप्रज्ञातस्य त्ववृत्तिकस्य विजातीयत्वाद्बहिरङ्गम् । तथा च सूत्रम्—'तदपि बहिरङ्गं निर्बीजस्य' इति । विजातीयत्वेऽपि बहुविधानात्मवृत्तिनिवारणेनोपकारितया बहिरङ्गत्वमविरुद्धम् । तदेवोपकारित्वं विशदयितुं सूत्रयति—'श्रद्धावीर्यस्मृतिसमाधिप्रज्ञापूर्वक इतरेषाम्' इति । केषांचिद्देवादीनां पूर्वसूत्रे जन्मनैव समाधिमुक्त्वा मनुष्यान्प्रत्येतदुच्यते । ममायं योग एव परमपुरुषार्थसाधनमिति प्रत्ययः श्रद्धा । स चोत्कर्षश्रवणेनोपजायते । तदुत्कर्षश्च स्मर्यते—

तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः ।
कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन । इति ।

उत्तमलोकसाधनत्वात्कृच्छ्रचान्द्रायणादितपसो ज्योतिष्टोमादिकर्मणश्च योगोऽधिकः । ज्ञानं प्रत्यन्तरङ्गत्वाच्चित्तविश्रान्तिहेतुतया ज्ञानादप्यधिकत्वम् । एवं जानतो योगे श्रद्धा जायते । तस्यां च श्रद्धायां वासितायां वीर्यमुत्साहो भवति—सर्वथा योगं संपादयिष्यामीति । एतादृशेनोत्साहेन तदा तदाऽनुष्ठेयानि योगाङ्गानि स्मर्यन्ते । तया च स्मृत्या सम्यगनुष्ठितसमाधेरध्यात्मप्रसादे सत्यृतंभरा प्रज्ञोदेति । तत्प्रज्ञापूर्वकस्तत्प्रज्ञाकारणकोऽसंप्रज्ञातसमाधिरितरेषां देवादिभ्योऽर्वाचीनानां मनुष्याणां सिध्यति ।

---

१ व. छ. मुत्पाद्य ।

एतेन समाहितो भूत्वेत्यादिश्रुत्यादयोऽपि व्याख्याताः । ननु किं शुद्धत्वं पदार्थसाक्षात्कारः प्रकृतसमाध्येकायत्त इत्यत आह—**न चेत्यादिना** । **पृथगिति** । शोधितत्वंपदार्थ इति शेषः । तत्र मानमाह—**अत एवेत्यादिना** । तत्राप्याशङ्क्य समाधत्ते—**ननु विवेकोऽपीत्यादिना** । प्रतिज्ञातबहिरङ्गत्वे सूत्रं प्रमाणयति **तथाचेदित्यादिना** । उक्तोपकारित्वे सूत्रमवतारयति—**तदेवेत्यादिना** । श्रद्धेत्याद्युदाहृतसूत्रं विवृणोति—**केषांचिदित्यादिना** । उदाहृतयोगाधिक्यस्मृतिं विवृणोति—**उत्तमलोकेत्यादिना** । **अध्यात्मेति** । अधिकबुद्धिनैर्मल्य इत्यर्थः ।

ननु काऽसावृतंभरा प्रज्ञेत्यतस्तां व्युत्पादयितुं सूत्रमेव तत्रावतारयति—

**तां च प्रज्ञां सूत्रयति—'ऋतंभरा तत्र प्रज्ञा' इति । ऋतं सत्यं वस्तुयाथात्म्यं बिभर्ति प्रकाशयतीति ऋतंभरा तत्र तस्मिन्समाध्युत्कर्षजन्येऽध्यात्मप्रसादे सतीत्यर्थः । ऋतंभरत्वोपपत्तिं सूत्रयति 'श्रुतानुमानाभ्या-[१]मन्यविषयाविशेषार्थत्वात्' इति । सूक्ष्मव्यवहितविप्रकृष्टवस्तुष्वयोगिप्रत्यक्षं न प्रवर्तते । आगमानुमानाभ्यां तानि वस्तून्ययोगिभिर्ज्ञायन्ते । ते च शास्त्रानुमानजन्ये प्रज्ञे वस्तुसामान्यमेव गोचरयतः । इदं तु योगिप्रत्यक्षं विशेषवस्तुगोचरत्वादृतंभरम् । तस्य च योगिप्रत्यक्षस्यासंप्रज्ञातसमाधौ बहिरङ्गत्वसिध्यर्थमुपकारित्वं सूत्रयति—'तज्जसंस्कारोऽन्यसंस्कारप्रतिबन्धी' इति ।**

**असंप्रज्ञातसमाधेर्बहिर[२]ङ्गत्वमुक्त्वा तन्निरोधप्रयत्नस्यान्तरङ्गसाधनतां सूत्रयति—'तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिः' इति । सोऽयं समाधिः सुषुप्तिसमानः साक्षिचैतन्येनानुभवितुं शक्यः । तदाऽसौ सर्वधीवृत्तिराहित्यात्सुषुप्तिरेवेति न शङ्कनीयम् । मनःस्वरूपस्य सदसत्त्वाभ्यां विशेषात् । तदुक्तं गौडपादाचार्यैः—**

**निगृहीतस्य मनसो निर्विकल्पस्य धीमतः ।**
**प्रचारः स तु विज्ञेयः सुषु[३]प्तेऽन्यो न तत्समः ॥**
**लीयते हि सुषुप्तौ तन्निगृहीतं न लीयते ।**
**तदेव निर्भयं ब्रह्म ज्ञानालोकं समन्ततः ॥ इति ।**

**( माण्डूक्यशाखायामपि* श्रूयते— )**

---

* धनुश्चिह्नान्तर्गतमधिकमिव दृश्यते । द्वैतस्येत्यादीनां गौडपादाचार्यकृतकारिकास्वेव दृश्यमानत्वात् ।

---

१ क. ख. ग. घ. ङ. च. °मानप्रज्ञाभ्या° । २ क. ख. ग. घ. ङ. च. °ङ्गसाधनत्व° । ३ क. ख. ङ. च. °षुप्त्यन्यो ।

"द्वैत*स्याग्रहणं तुल्यमुभयोः प्राज्ञतुर्ययोः ।
बीजनिद्रायुतः प्राज्ञः सा च तुर्ये न विद्यते ॥
स्वप्ननिद्रायुतावाद्यौ प्राज्ञस्त्वस्वप्ननिद्रया ।
न निद्रां नैव च स्वप्नं तुर्ये पश्यन्ति निश्चिताः ॥
अन्यथा गृह्णतः स्वप्नो निद्रातत्त्वमजानतः ।
विपर्यासे तयोः क्षीणे तुरीयं पदमश्नुते ॥" इति ।

आद्यौ विश्वतैजसौ । अद्वैतस्य वस्तुनोऽन्यथाग्रहणं नाम द्वैतरूपेण प्रतिभासः स च विश्वतैजसयोर्वर्तमानः स्वप्न उच्यते । तत्त्वस्याज्ञानं निद्रा । सा च विश्वतैजसप्राज्ञेषु वर्तते । तयोः स्वप्ननिद्रयोः स्वरूपभूतयोर्विपर्यासो मिथ्याज्ञानम् । तस्मिन्विद्यया क्षीणे सति तुरीयं पदमद्वैतं वस्त्वश्नुतेऽनुभवतीत्यर्थः । नन्वस्त्वेवमसंप्रज्ञातसमाधिसुषुप्त्योर्महान्भेदः । तत्र तत्त्वविदृक्षोर्दर्शनसाधनत्वेन समाध्यपेक्षायामपि दृष्टतत्त्वस्य जीवन्मुक्तये नास्ति तदपेक्षा । रागद्वेषादिक्लेशबन्धस्य सुषुप्तावपि निवृत्तेः ।

तां चेति । तद्व्याचष्टे—ऋतमित्यादिना । ननु काऽत्रानुग्राहिका युक्तिरित्यत्रापि सूत्रमेवावतारयति ऋतंभरत्वेति । तत्सूत्रं विवृणोति—सूक्ष्मेत्यादिना । नन्वेवं किं ततः प्रकृते निर्विकल्पसमाधावित्यत आह—तस्य चेति । तदेव सूत्रं पठति—तज्जेति । अथ फलितं कथयन्प्रकृतमाह—असंप्रज्ञातसमाधेरित्यादिना। तदेव सूत्रं पठति—तस्यापीति । ननु भवत्वेवं निर्बीजनिर्विकल्पनिरोधाद्यपरनामाऽयमसंप्रज्ञातसमाधिस्तथाऽप्यसौ केनानुभूयत इत्यत आह—सोऽयमिति । एवं तर्हि सुप्त्यविशेष इत्याशङ्क्य समाधत्ते—तदाऽसाविति । तत्र हेतुः—मन इति । तत्र मानमाह—तदुक्तमित्यादिना धीमतः प्रत्यग्ब्रह्मैक्यविषयकापरोक्षप्रमावतः परोक्षज्ञानिनस्तु तादृग्भावनावत इत्यर्थः । विज्ञेयः । प्रोक्तसाक्ष्येकप्रत्यक्षलक्षणेन विशेषेण ज्ञेय इति यावत् । उदाहृतमाण्डूक्यशाखीयश्लोकौ सांप्रदायिकरीत्या विशदयति—आद्यावित्यादिना । एवमपि निष्प्रयोजनत्वात्तत्त्वविदः समाध्यपेक्षा नैवेति शङ्कते—नन्विति ।

तत्र समाधातुं प्रतिजानीते—

---

* अयं श्लोकश्छसंज्ञकास्मिन्नटीकपुस्तके नास्ति ।

---

१ क. ख. ङ. च. °सुप्त्याऽपि ।

मैवम्। किं प्रतिदिनं स्वतः प्राप्ता कादाचित्की सुषुप्तिर्बन्धनिवर्तिका, किं वाऽभ्यासेन निरन्तरवर्तिनी । आद्येऽपि किं सुषुप्तिकालीनस्य क्लेशबन्धस्य निवृत्तिः, किं वा कालान्तरवर्तिनः । नाऽऽद्यः । अप्रसक्तेः । न हि मूढानामपि सुषुप्तौ क्लेशबन्धः । अन्यथाऽऽयासः प्रसज्येत । न द्वितीयः । असंभवात् । न ह्यन्यकालीनया सुषुप्त्या कालान्तरवर्तिनः क्लेशस्य क्षयः संभवति । अन्यथा मूढानामपि जागरणस्वप्नयोः क्लेशक्षयः प्रसज्येत । नापि सुषुप्ते[1] नैरन्तर्यमभ्यसितुं शक्यम् । तस्याः कर्मक्षयनिमित्तत्वात् । तस्मात्तत्त्वविदोऽपि क्लेशक्षयायास्त्येवासंप्रज्ञातसमाध्यपेक्षा । तस्य च समाधेर्गवाश्वादिष्विव वाङ्निरोधः प्रथमा भूमिः । बालमूकादिष्विव निर्मनस्त्वं द्वितीया । तन्द्रामिवाहंकाररहित्यं तृतीया । सुषुप्ताविव महत्तत्त्वराहित्यं चतुर्थी । तदेतद्भूमिचतुष्टयमभिप्रेत्य शनैः शनैरुपरमेदित्युक्तम् । अत्र चोपरमे धृतिगृहीता बुद्धिः सा साधनम् । महदहंकारमनोवागादीनां स्वत एव तीव्रवेगेन(ण) बहिः प्रवहतां कूलंकषाया इव नद्या निरोधे धैर्यं महदपेक्षितम् । बुद्धिर्विवेकः । पूर्वा भूमिर्जिता न वेति परीक्ष्य जितायामुत्तरभूम्युपक्रमः, अजितायां तु सैव पुनरभ्यसनीयेति तदा तदा विविच्यात् । आत्मसंस्थमित्यादिना सार्धश्लोकेन चतुर्थभूम्यभ्यासोऽपि स्मृतः । गौडपादाचार्या आहुः—

उपायेन निगृह्णीयाद्विक्षिप्तं कामभोगयोः ।
सुप्रसन्नं लये[2] चैव यथा कामो लयस्तथा ॥
दुःखं सर्वमनुस्मृत्य कामभोगान्निवर्तयेत् ।
अजं सर्वमनुस्मृत्य जातं नैव तु पश्यति ॥
लये संबोधयेच्चित्तं विक्षिप्तं शमयेत्पुनः ।
सकषायं विजानीयात्[3]समप्राप्तं न चालयेत् ॥
नाऽऽस्वादयेद्रसं तत्र निःसङ्गः प्रज्ञया भवेत् ।
निश्चलं निश्चरच्चित्तमेकी कुर्यात्प्रयत्नतः ।
यदा न लीयते चित्तं न च विक्षिप्यते पुनः ॥
अ[4]निङ्गनमनाभासं निष्पन्नं ब्रह्म तत्तदा । इति ।

लयविक्षेपकषायसमप्राप्तयश्चतस्रश्चित्तस्यावस्थाः । तत्र निरुध्यमानं चित्तं विषयेभ्यो व्यावृत्तं सत्पूर्वाभ्यासवशाद्यदि लयाय सुषुप्तयेऽभिमुखं

१ क. ख. ग. घ. ङ. च. °षुप्तौ नै°। २ छ. लयं । ३ क. ख. ग. घ. ङ. च. °येत्सुखं त°। ४ क. ख. ग. घ. ङ. च. अलिङ्गन° ।

**मवेत्तदानीमुत्थापनप्रयत्नेन लयकारणनिवारणेन वा तच्चित्तं सम्यक्प्रबोधयेत्।**

**मैवमिति**। तत्र हेतुं वक्तुं विकल्प्य पृच्छति—**किं प्रतिदिन**मित्यादिना। फलितमाह—**तस्मा**दित्यादिना। अथोक्तसमाधेरपि भूमिकाचतुष्टयं स्पष्टयति—**तस्य** चेत्यादिना। तत्र प्रमाणाकाङ्क्षायां भगवद्वाक्यमेवानुकूलयति—**तदेत**दित्यादिना। तत्त्वोक्तार्थपरतया योजयति—**अत्र** चेत्यादिना। तथा च प्रागुक्तकठवल्लीश्रुतौ 'यच्छेद्वाङ्मनसी प्राज्ञः' इत्यादिरूपायामुक्तभूमिकाचतुष्टयमध्ये त्रयमेतेनार्धेनैव विहितं शिष्टां तु चतुर्थीं विधत्ते—आत्मेत्यादिना। अत्र सांप्रदायिकसंमतिमप्याह—**गौडेति**। तद्वाक्यान्येव लिखति—**उपायेने**त्यादिना। तानि व्याकरोति संक्षेपतः—**लयविक्षे**पेत्यादिना। प्रकृते लयो निद्रैव। विक्षेपः स्वप्नाद्यवभासः। कषायश्चेतसः परमसंकटेनानवलम्बनावस्था। समप्राप्तिः परोक्षत्वादिनाऽऽत्माप्तिः।

ननु कानि लयकारणानीत्यत्राऽऽह—

**लयहेतवो निद्राशेषाजीर्णबह्वशनश्रमाः। अत एवाऽऽहुः—**

**समाप्य निद्रां सुजीर्णाल्पभोजी**
**श्रमत्याज्यबाधे विविक्ते प्रदेशे।**
**सदाऽऽसीत निस्तृष्ण एष प्रयत्नोऽ-**
**थवा प्राणरोधो निजाभ्यासमार्गात्॥ इति।**

**लयादुत्थापितं चित्तं दैनंदिनप्रबोधाभ्यासवशाद्यदि कामभोगयोर्विक्षिप्येत तदा विवेकिजनप्रसिद्धभोग्यवस्तुगतसर्वदुःखानुस्मरणेन शास्त्रप्रसिद्धजन्मादिरहिताद्वितीयब्रह्मतत्त्वानुस्मरणपूर्वकेण भोग्यवस्तुदर्शनेन च पुनः पुनर्विक्षेपाच्चित्तं शमयेत्। कषायस्तीव्रचित्तदोषस्तीव्ररागद्वेषादिवासना तया ग्रस्तं चित्तं कदाचित्समाहितमिव लयविक्षेपरहितं दुःखैकाग्रमवतिष्ठते। तादृशं तच्चित्तं विजानीयात्समाहितचित्ताद्विवेकेनावगच्छेत्। असमाहितमेतदित्यवगम्य लयविक्षेपवत्कषायस्य प्रतीकारं कुर्यात्। समशब्देन ब्रह्माभिधीयते।**

**'समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्' इति स्मृतेः।**

**लयविक्षेपकषायेषु परिहृतेषु परिशेषाच्चित्तेन समं ब्रह्म प्राप्यते। तच्च समप्राप्तं चित्तं कषायलयभ्रान्त्या न चालयेत्। सूक्ष्मया बुद्ध्या लयकषा-**

---

१ छ. °जीर्णोऽल्प°। २ क. ख. ग. द, ङ. च. °वस्त्वद°।

यप्राप्तिं विविच्य तस्यां समप्राप्तावतिप्रयत्नेन चित्तं स्थापयेत् । स्थापिते तस्मिन्ब्रह्मस्वरूपभूतः परमानन्दः सम्यगाविर्भवति । तथा चोदाहृतम्—

'सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम्' इति ।

श्रुतिश्च भवति—

'समाधिनिर्धूतमलस्य चेतसो
निवेशितस्याऽऽत्मनि यत्सुखं भवेत् ।
न शक्यते वर्णयितुं गिरा तदा
स्वयं तदन्तःकरणेन गृह्यते' ॥ इति ।

ननु समाध्याविर्भूतब्रह्मानन्दस्य बुद्धिग्राह्यत्वं श्रुतिस्मृतिभ्यामभिहितम् । आचार्यैस्तु—'नाऽऽस्वादयेत्सुखं तत्र' इति बुद्धिग्राह्यत्वं प्रतिषिध्यत इति चेन्नायं दोषः ।

**लयहेतव इति** । तत्र प्राचीनाचार्यवचः संवादयति—**अत एवे**त्यादिना । ननु भवत्वेवं निद्राख्यलयकारणवारणेन तद्विनिवारणं तथाऽपि विक्षेपावस्थायां प्रधाने जागरेऽपि प्रधानीभूतयोरिष्टशब्दादिविषयेच्छातदपरोक्षसुखानुभवयोर्यदि चेतः संसृज्येत तर्हि कोऽत्र तत्प्रशमोपाय इत्यत आह—**लयादुत्थापित**मित्यादिना । भोग्यवस्तुदर्शनेन चेति पुनः-पुनरित्याद्युत्तरत्रैवान्वेति । तदेत्यादि तत्प्राक्तनं तु चित्तं शमयेदित्यत्रैव योज्यम् । कषाय-स्वरूपमाह—**कषाय** इत्यादिना । तन्निरसनोपायं विशदयति—**तादृश**मित्यादिना । अथ समप्राप्तं न चालयेदिति चरणं विवृणोति—**समशब्दे**नेत्यादिना । ततः किं तदाह—**स्थापित** इत्यादिना । तत्र मानमाह—**तथाचे**त्यादिना । तत्राप्याशङ्क्य समाधातुं प्रतिजानीते—**नन्वि**त्यादिना ।

तत्र हेतुमाह—**समाधी**त्यादिना—

(* तत्र निरोधसुखं बुद्धिग्राह्यं न प्रतिषिध्यते । किंतु) समाधिविरोधिनो व्युत्थानरूपस्य परामर्शस्यैव प्रतिषेधात् । यथा निदाघदिवसेषु मध्याह्ने जाह्नवीह्रदे निमग्नेनानुभूयमानमपि शैत्यसुखं तदा वक्तुमशक्यं पश्चादुन्मग्नेनाभिधीयते । यथा वा सुषुप्तावविद्यावृत्तिभिरतिसूक्ष्माभिरनुभूयमानमपि स्वरूपसुखं तदानीं सविकल्पकेनान्तःकरणवृत्तिज्ञानेन

* धनुश्चिह्नान्तर्गतोऽयं ग्रन्थश्छसंज्ञकास्मिन्सटीक पुस्तके नास्ति ।

१ क. ख. ग. घ. ङ. च. चिरं° ।

ग्रहीतुमशक्यम्। प्रबोधकाले तु स्मृत्या विस्पष्टं परामृश्यते। तथा समाधौ वृत्तिरहितेन संस्कारमात्रशेषतया सूक्ष्मेण वा चित्तेन सुखानुभवः श्रुतिस्मृत्योर्विवक्षितः। महदिदं समाधिसुखमन्वभूवमित्येतादृशो व्युत्थितस्य विकल्पकः परामर्श आस्वादनं तदेवाऽऽचार्यैः प्रतिषिध्यते। तमेव स्वाभिप्रायं प्रकटयितुं निःसङ्गः प्रज्ञया भवेदित्युक्तम्। प्रकृष्टं सविकल्पकं ज्ञानं प्रज्ञा तया सह सङ्गं परित्यजेत्। यद्वा पूर्वोक्ता धृतिगृहीता बुद्धिः प्रज्ञा तदात्मकेन साधनेन सुखास्वादनतद्वर्णनादिरूपामासक्तिं वर्जयेत्। समाधौ ब्रह्मानन्दे निमग्नं चित्तं यदि कदाचित्सुखास्वादनाय वा शीतवातमशकाद्युपद्रवेण वा निश्चरेत्तदा [1]निश्चरत्तच्चित्तं पुनः पुनर्निश्चलं यथा भवति तथा परब्रह्मणा सहैकी कुर्यात्। तत्र निरोधप्रयत्न एव साधनम्। एकीभाव एव यदा न लीयते चित्तमित्यनेन श्लोकेन स्पष्टी क्रियते। अ[2]निङ्गनमनाभासमित्याभ्यां पदाभ्यां कषायसुखास्वादौ द्वौ च निषिध्येते। लयविक्षेपकषायसुखास्वादेभ्यो रहितं चित्तमविघ्नेन ब्रह्मण्यवस्थितं भवति। एतदेवाभिप्रेत्य कठवल्लीषु पठ्यते—

यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह।
बुद्धिश्च न विचेष्टेत तामाहुः परमां गतिम्॥
तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम्।
अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ॥ इति।

उपेक्षितो योग इन्द्रियवृत्तीनां प्रभवं करोति। अनुष्ठितस्तु तासां लयहेतुः।

तत्र दृष्टान्तावभिदधत्तत्कालमनुभूयमानं सुखमतिस्पष्टयति—**यथा निदाघे**त्यादिना। अत्र जाह्नवीजलस्य सेतुदेशावच्छेदेनाभावरूपे दृढास्वरसे स दृष्टान्तान्तरं स्पष्टयति—**यथा वे**त्यादिना। ननु प्रज्ञाशब्देनोक्तसविकल्पकज्ञानस्य तदानीं प्रसक्तेरेवाभावान्निःसङ्गः प्रज्ञया भवेदिति निषेध एवानुपपन्न इत्यस्वारस्यादाह—**यद्वा पूर्वो**क्तेत्यादिना। एवं निश्चलं निश्चरदित्यादेरप्यर्थमाह—**समाधावि**त्यादिना। एवमनिङ्गनमनाभासमित्यादेरपि सांप्रदायिकसंमतमर्थं कथयति—**अनिङ्गनमि**त्यादिना। चोऽप्यर्थे द्वावपीत्यर्थः। फलितमाह—**लये**त्यादिना। तत्र कठश्रुतिमनुकूलयति—**एतदेवेति**। तां श्रुतिमेव पठति—**यदे**

---

१ क. ख. छ. निश्चरितं चित्तं पुनर्निश्चलं भवति तदा प°। २ क. ख. ग. घ. ङ. च. अलिङ्ग°।

यादिना। तत्र प्रभवादिपदार्थौ व्युत्पादयति—**उपेक्षित** इत्यादिना। अत्र क्रमादानुकूल्यप्रातिकूल्ये हेतू बोध्यौ।

उक्तेऽर्थे योगलक्षणसूत्रमनुकूलयत्**यत एवे**त्यादिना—

**अत एव योगस्य स्वरूपलक्षणं सूत्रयति—'योगश्चित्तवृत्तिनिरोधः' इति। वृत्तीनामानन्त्यान्निरोधोऽशक्य इति शङ्कां निवारयितुमियत्तां सूत्रयति—'वृत्तयः पञ्चतय्यः क्लिष्टा अक्लिष्टाः' इति। रागद्वेषादिक्लेशरूपा आसुरवृत्तयः क्लिष्टाः। रागादिरहिता दैववृत्तयोऽक्लिष्टाः। यद्यपि पञ्चस्वेव क्लिष्टानामक्लिष्टानां चान्तर्भावस्तथाऽपि क्लिष्टा एव निरोद्धव्या इति मन्दबुद्धिं वारयितुं ताभिः सहाक्लिष्टा अप्युदाहृताः। नामधेयलक्षणाभ्यां वृत्तीर्विशदयितुं सूत्रषट्कमाह—'प्रमाणविपर्ययविकल्पनिद्रास्मृतयः'। तत्र प्रत्यक्षानुमानागमाः प्रमाणानि'। 'विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम्' 'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः'। 'अभावप्रत्ययालम्बना वृत्तिर्निद्रा'। 'अनुभूतविषयासंप्रमोषः स्मृतिः' इति। वस्त्वभावः प्रतीयते यस्मिंस्तमस्यावरके सति तत्तमोऽभावप्रत्ययः। तमोगुणं विषयीकुर्वती वृत्तिर्निद्रेत्युच्यते। अनुभूतविषयस्यासंप्रमोषस्तदनुभवजन्यमनुसंधानम्। पञ्चविधवृत्तिनिरोधसाधनं सूत्रयति—अभ्यासवैराग्याभ्यां तन्निरोधः' इति। यथा तीव्रवेगोपेतं नदीप्रवाहं सेतुबन्धनेन निवार्य कुल्या[1]नयनेन क्षेत्राभिमुखं तिर्यक्प्रवाहान्तरमुत्पाद्यते। तथा वैराग्येण चित्तनद्या विषयप्रवाहं निवार्य समाध्यभ्यासेन प्रशान्त[2]ः प्रवाहः संपाद्यते। मन्त्रजपदेवताध्यानादीनां क्रियारूपत्वेनाऽऽवृत्तिलक्षणोऽभ्यासः संभाव्यते। सर्वव्यापारोपरमरूपस्य समाधेः साधकः को नामाभ्यास इति शङ्कां वारयितुं सूत्रयति—'तत्र स्थितौ यत्नोऽभ्यासः' इति। स्थितिर्नैश्चल्यं निरोधः। यत्नो मानस उत्साहः। स्वत एव वहिष्प्रवाहशीलं चित्तं सर्वथा निरोधयिष्यामीत्येवंविध उत्साह आ[3]वर्तमानोऽभ्यास इत्युच्यते। अयमभ्यास इदानीं प्रवृत्तः स्वयमदृढः सन्नादिप्रवृत्ता व्युत्थानवासनाः कथमभिभवेदित्याशङ्कामप[4]वादयितुं सूत्रयति—'स तु दीर्घकालनैरन्तर्यसत्का[5]रसेवितो दृढभूमिः' इति।**

नन्वसंख्यातचित्तवृत्तीनां कथं निरोधसंभव इत्यत आह—**वृत्तीना**मित्यादिना। पञ्च-

---

१ क. ख. ग. ङ. च. °ल्याप्रणय°। २ छ. °न्तत्रा°। ३ क. ख. ग. ध. ङ. च. °वर्त्भमा°। ४ क. ख. ग. घ. ङ. च. °पवादितुं। ५ क. ख. ग. घ. ङ. च. °त्कारासे°।

तथ्यः, पञ्चविधा इत्यर्थः । पञ्चानामपि वक्ष्यमाणप्रमाणादिरूपाणां सामान्यतः प्रतिज्ञातं क्लिष्टत्वादि विस्पष्टयति—**रागे**त्यादिना । उक्तद्वैविध्ये हेतुमाशङ्क्य समाधत्ते—**यद्यपी**त्यादिना । ननु कास्ताः पञ्च वृत्तयः सन्तीत्यत आह—**नामधेयेति** । तान्येव षट्सूत्राणि पठति—**प्रमाणे**त्यादिना । तत्र निद्रासूत्रं संदिग्धत्वाद्विवृणोति—**वस्त्वभाव** इत्यादिना । अत एव श्रूयते तमोभिभूत इति सुषुप्तिं प्रकृत्य । एवं स्मृतिसूत्रमपि व्याचष्टे—**अनुभूतविषयस्ये**त्यादिना । अथैतन्निरोधसाधनं किमित्यत्राऽऽह—पञ्चविधेत्यादिना । तत्राभ्यासेत्याद्युदाहृतसूत्रं सदृष्टान्तं स्पष्टयति—**यथे**त्यादिना । तत्राभ्याससस्वरूपं समभिधत्ते—मन्त्रेत्यादिना तान्त्रिकखण्डनपूर्वकम् । **संभाव्यते** । अनुपासितशुद्धवैदिकगुरुसार्वभौमानां भ्रान्तानां प्रसिध्येति शेषः । तत्रेत्युदाहृताभ्याससूत्रं विवृणोति—**स्थितिरि**त्यादिना । नन्वेवमुत्साहवत्त्वेऽपि मे कुतो न वृत्तिनिरोध इत्यत्राऽऽह—**अथमि**त्यादिना तत्कालादिसूचकसूत्रावतरणपूर्वकम् ।

निरुक्तसूत्रं विवृणोति—**लोका ही**तिप्रभृतिना—

**लोका हि मूढस्य वचनमुदाहरन्ति—विद्यमानाश्चत्वार एव वेदास्तानध्येतुं गतस्य माणवकस्य पञ्च दिवसा अतीता अद्याप्यसौ नाऽऽगत इति तादृश एवायं योगी तदा स्याद्यदा दिवसैर्वा मासैर्वा योगसिद्धिं वाञ्छेत् । तस्मात्संवत्सरैर्जन्मभिर्वा दीर्घकालं योगाभ्यासः सेवितव्यः । तथा च स्मर्यते—**

**'अनेकजन्मसंसिद्धस्ततो याति परां गतिम्' इति ।**

**चिरमासेव्यमानोऽपि विच्छिद्य विच्छिद्य यदा सेव्येत तर्ह्युत्पद्यमानानां योगसंस्काराणां समनन्तरमाविभिर्विच्छेदकारिभिर्व्युत्थानकालीनैः[1] संस्कारैरभिभवे सति खण्डनकारोक्तन्याय आपतेत् । अग्रे धावन्पश्चाल्लीयमानो[2] विस्मरणशीलश्रुतवत्किमालम्बेतेति । तस्मान्निरन्तरमासेवितव्यः । सत्कार आदरः । अनादरेण सेव्यमाने वसिष्ठोक्तन्याय आपतेत्—**

**अकर्तृ कुर्वदप्येतच्चेतश्चेत्क्षीणवासनम् ।**
**दूरं गतमना जन्तुः कथासंश्रवणे यथा ॥ इति ।**

---

१ क. ख. ग. घ. ङ. च. °भिर्व्युच्छेदकालीनैर्व्युत्थानसं° । २ क. ख. ग. ङ. च. °श्चाल्लुप्यमा° ।

अनादरे[1] लयविक्षेपकषायसुखास्वादानामपरिहारः । तस्मादादरेण सेवितव्यः । दीर्घकालादित्रैविध्येन सेवितस्य समाधेर्दृढभूमित्वं नाम विषयसुखवासनया दुःखवासनया वा[2] वारयितुमशक्यत्वम् । तच्च भगवता दर्शितम्—

यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।
यस्मिन्स्थितो न दुःखेन गुरुणाऽपि विचाल्यते ॥ इति ।

अपरलाभस्यानाधिक्यं कचवृत्तान्तेन वसिष्ठ उदाजहार—

कचः कदाचिद्व्युत्थाय समाधेः शान्तमानसः ।
एकान्ते समुवाचेदम्[3]को गद्गदया गिरा ॥
किं करोमि क्व गच्छामि किं गृह्णामि त्यजामि किम् ।
आत्मना पूरितं सर्वं महाकल्पाम्बुना यथा ॥
सबाह्याभ्यन्तरे देहे ह्यध ऊर्ध्वं च दिक्षु च ।
इत[4] आत्मतयेहाऽऽत्मा नास्त्यनात्ममयं जगत् ॥
न तदस्ति न यत्राहं न तदस्ति न यन्मयि ।
किमन्यदभिवाञ्छामि सर्वं संविन्मयं ततः[5] ॥
स्फारब्रह्मामलाम्भोधिफेनाः सर्वे कुलाचलाः ।
चिदादित्यमहातेजोमृगतृष्णाजगच्छ्रियः ॥ इति ।

फलितमाह—**तस्मादि**त्यादिना । तत्र स्मृतिं प्रमाणयति—**तथा चे**त्यादिना । एवं दीर्घकालेतिसौत्रपदकृत्यमभिधाय नैरन्तर्येतिपदकृत्यमपि विशदयति—**चिरमि**त्यादिना । ननु कोऽत्र खण्डनकारोक्तन्याय इत्यत्र तमुदाहरति—**अग्रे धावन्नि**त्यादिना । अग्रे धावन्पश्चाल्लीयमान इत्यत्र पश्चाल्लुप्यमान इत्यपि पाठः । निगमयति—**तस्मान्निरन्तर-मि**त्यादिना । योगाभ्यास इत्यार्थिकम् । एवं सत्कारपदप्रयोजनमप्याह—**सत्कार** इत्या-दिना । कोऽसौ वसिष्ठोक्तन्याय इत्यत आह—**अकर्त्रिति** । असत्कारे महानर्थ इत्याह—**अनादर** इत्यादिना । फलितमाह—**तस्मादिति** । योगाभ्यास इति शेषः । ननु भवत्वेवं समाधेर्दीर्घकालादित्रयसेवितत्वेन सूत्रोक्तदृढभूमित्वमथापि तदेव कथमित्यतस्तल्लक्ष-

---

१ क. ख. ग. घ. छ. च. 'दरो ल°' । २ क. ख. ग. घ. छ. च. वा चालयि° । ३ क. ख. ग. घ. च. °मेवं ग° । ४ क. ख. ग. घ. ङ. च. आत्मा तथेहा° । ५ क. ख. ग. ङ. च. ततम् ।

यति—**दीर्घकालादी**त्यादिना। तत्र मानमाह—**तच्चे**त्यादिना। उदाहृतस्मृतिपूर्वार्धानुभवः क्व दृष्ट इत्यतस्तं स्पष्टयति—**अपरे**त्यादिना। तत्रत्यवाक्यान्येवाऽऽह—**क्व च** इत्यादिना।

एवं ' यस्मिन्स्थितो न दुःखेन गुरुणाऽपि विचाल्यते ' इत्युत्तरार्धोदाहरणं क्व दृष्टमित्यत आह—**गुरुणे**त्यादिना।

गुरुणा दुःखेनाप्यविचाल्यत्वं शिखिध्वजस्य संवत्सरत्रयसमाधिवृत्तान्तेनोदाजहार—

निर्विकल्पसमाधिस्थं तत्रापश्यन्महीपतिम्।
[1]स्वपतिं तावदेतस्माद्बोधयामि परात्पदात्॥
इति संचिन्त्य चूडाला सिंहनादं चकार सः।
भूयो भूयः प्रभोरग्रे वनेचरभयप्रदम्॥
न चचाल तदा राम यदा नादेन तेन सा।
भूयो भूयः कृतेनापि तदा सा तं व्यचालयत्॥
चालितः पातितोऽप्येष तदा नो बुबुधे बुधः। इति।

प्रह्लादवृत्तान्तेनाप्येतदेवोदाजहार—

इति संचिन्तयन्नेव प्रह्लादः परवीरहा।
निर्विकल्पपरानन्दसमाधिं समुपाययौ॥
निर्विकल्पसमाधिस्थश्चित्रार्पित इवाऽऽबभौ।
पञ्चवर्षसहस्राणि पीनांसोऽतिष्ठदेकदृक्॥
महात्मन्संप्रबुध्यस्वेत्येवं विष्णुरुदाहरत्।
पाञ्चजन्यं प्रदध्मौ च ध्वनयन्ककुभां गणम्॥
महता तेन शब्देन वैष्णवप्राणजन्मना।
बभूव संप्रबुद्धात्मा दानवेशः शनैः शनैः॥ इति।

एवं वीतहव्यादीनामपि समाधिरुदाहरणीयः। वैराग्यं द्विविधम्। अपरं परं चेति। यतमानव्यतिरेकैकेन्द्रियवशीकारभेदैरपरं चतुर्विधम्। तत्राऽऽद्यत्रयमर्थात्सूत्रयन्साक्षाच्चतुर्थं सूत्रयति—' दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञावैराग्यम् ' इति। स्रक्चन्दनवनितापुत्रमित्र-

---

१ क. ख. ग. घ. ङ. च. राजानं।

क्षेत्रधनादयो दृष्टाः। वेदोक्ताः स्वर्गादय आनुश्रविकाः। तत्रोभयत्र सत्यामपि तृष्णायां विवेकतारतम्येन यतमानादिवैराग्यत्रयं भवति। अस्मिञ्जगति किं सारं किमसारमिति गुरुशास्त्राभ्यां ज्ञास्यामीत्युद्योगो यतमानत्वम्। स्वचित्ते पूर्वं विद्यमानानां दोषाणां मध्येऽभ्यस्यमानेन विवेकेनैतावन्तः पक्वा एतावन्तोऽवशिष्टा इति विवेचनं व्यतिरेकः। दृष्टानुश्रविकविषयप्रवृत्तेर्दुःखात्मत्वबोधेन तां प्रवृत्तिं परित्यज्य मनसश्चौत्सुक्यमात्रेण[1] वितृष्णावस्थानमेकेन्द्रियत्वम्। वितृष्णत्वं वशीकारः। तदिदमपरवैराग्यमष्टाङ्गयोगप्रवर्तकत्वेन संप्रज्ञातस्यान्तरङ्गम्। असंप्रज्ञातस्य तु बहिरङ्गम्। तत्रान्तरङ्गं परं वैराग्यं सूत्रयति—'तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम्' इति। संप्रज्ञातसमाधिपरिपाटवेन गुणत्रयात्मकात्प्रधानाद्वि[2]रक्तस्य पुरुषस्य ख्यातिः साक्षात्कार उत्पद्यते। तस्माच्च साक्षात्कारादशेषगुणत्रयव्यवहारे यद्वैतृष्ण्यं तत्परं वैराग्यम्।

उदाजहार वसिष्ठ इत्यार्थिकम्। तत्रत्यश्लोकानेव लिखति—**निर्विकल्पे**त्यादिना। एवं प्रह्लादोदाहरणमपि तदीयमेव तत्र संवादयति—**प्रह्लादे**त्यादिना। तत्र तद्वाक्यान्यपि संगृह्णाति—**इतिसंचिन्तयन्नेवे**त्यादिना। अत्र वासिष्ठोपाख्यातवीतहव्यसमाध्यादयोऽपि संवादनीया इत्याह—**एवमिति**। एवं सूत्रितं पञ्चविधवृत्तिनिरोधोपायीभूताभ्यासमुपदिश्येदानीं तत्साहचर्येण सूत्रितं तादृशं वैराग्यमपि निरूपयति—**वैराग्यमिति**। तद्वैविध्यं कथमित्यत्राऽऽह—अपरमित्यादिना। तत्राऽऽद्ये चातुर्विध्यं विधत्ते—यतमानेत्यादिना। कीदृक्तदित्यत आह—**तत्रे**त्यादिना तत्सूत्रमवतारयन्। अथ दृष्टानुश्रविकेत्याद्युदाहृतसूत्रं विवृणोति—**स्त्रगि**त्यादिना। एवमपरवैराग्यं निरूप्य तदुपयोगमाह—**तदिदमि**त्यादिना। अथासंप्रज्ञातसमाधेरन्तरङ्गं वैराग्यं कीदृशमित्यपेक्षायां तत्रापि सूत्रमेवावतारयति—**तत्रान्तरङ्गमिति**। अथ तत्परमित्युदाहृतपरवैराग्यसूत्रं विशदयति—**संप्रज्ञातेति**। ननु भवत्वेवं वैराग्यं ततः किं प्रकृत इत्यतः सूत्रमेव तत्फलकथनमवतारयति **तस्ये**त्यादिना—

तस्य तारतम्येन समाधेः शीघ्रत्वतारतम्यं सूत्रयति—'तीव्रसंवेगानामासन्नः समाधिलाभः' इति। संवेगो वैराग्यम्। तद्भेदाद्योगिनस्त्रिविधाः—मृदुसंवेगा मध्यसंवेगास्तीव्रसंवेगाश्चेति। आसन्नोऽल्पेनैव कालेन समाधिर्लभ्यत इत्यर्थः। तीव्रसंवेगेष्वेव समाधितारतम्यं सूत्रयति—'मृदुमध्याधिमात्रत्वात्ततोऽपि विशेषः' इति। मृदुतीव्रो मध्यतीव्रोऽधिमात्रतीव्र इति। तेष्वप्युत्तरोत्तरस्य त्वरया सिद्धिर्द्रष्टव्या। उत्तमो-

---

१ क. ख. ग. घ. ङ. च. °ण तृ°। २ क. ख. ग. घ. ङ. च. °द्विविक्त°।

त्तमा जनकप्रह्लादादयोऽधिमात्रतीव्रा । मुहूर्तमात्रविचारेण दृढसमाधिलाभात् । अधमाधमा उद्दालकादयो मृदुसंवेगाश्चिरप्रयासेन तल्लाभात् । एवमन्येऽपि यथा[1]योग्यमुन्नेयाः । तदेवमधिमात्रतीव्रस्य दृढभूमावसंप्रज्ञातसमाधौ लब्धे सति पुनर्व्युत्थातुमश[2]क्यं सन्मनो नश्यति । मनोनाशेन च वासनाक्षये रक्षिते सति जीवन्मुक्तिः सुप्रतिष्ठिता भवति । न च मनोनाशेन विदेहमुक्तिरेव न तु जीवन्मुक्तिरिति शङ्कनीयम् । प्रश्नोत्तराभ्यां तन्निर्णयात् । श्रीरामः—

विवेकाभ्युदयाच्चितस्वरूपेऽन्तर्हिते मुने ।
मैत्र्यादयो गुणाः कुत्र जायन्ते योगिनां वद ॥

वसिष्ठ उवाच—

द्विविधश्चित्तनाशोऽस्ति सरूपोऽरूप एव च ।
जीवन्मुक्तौ सरूपः स्यादरूपो[3]ऽदेहमुक्तितः ॥
प्राकृतं गुणसंभारं [4]समेत्य बहु मन्येत ।
सुखदुःखाद्यवष्टभ्य विद्यमानं मनो विदुः ॥
चेतसः कथिता सत्ता मया रघुकुलोद्वह ।
अस्य नाशमिदानीं त्वं शृणु प्रश्नविदां वर ॥
सुखदुःखदशा धीरं साम्यान्न प्रोद्धरन्ति यम् ।
निःश्वासा इव शैलेन्द्रं तस्य चित्तं मृतं विदुः ॥
आपत्कार्पण्यमुत्साहो मदो मान्द्यं महोत्सवः ।
यं नयन्ति न वैरूप्यं तस्य नष्टं मनो विदुः ॥
चित्तमाशानिधानं हि यदा नश्यति राघव ।
मैत्र्यादिभिर्गुणैर्युक्तं तदा सत्त्वमुदेत्यलम् ॥
भूयोजन्मविनिर्मुक्तं जीवन्मुक्तस्य तन्मनः ।
सरूपोऽसौ मनोनाशो जीवन्मुक्तस्य विद्यते ॥
अरूपस्तु मनो नाशो यो मयोक्तो रघूद्वह ।
विदेहमुक्तावेवासौ विद्यते निष्कलात्[5]मनः ॥

---

१ क. ख. ग. घ. ङ. च. °योगमु° । २ क. ख. ग. घ. ङ. च. °शक्यं स° । ३ क. ख. ग. घ. ङ. च. °पो देहमुक्तिगः । ४ क. ख. ग. घ. ङ. ममेति । ५ क. ख. ग. घ. ङ. च. °त्मकः । स° ।

समग्राग्र्यगुणाधारमपि सत्त्वं प्रलीयते ।
विदेहमुक्तावमले पदे परमपावने ॥
संशान्तदुःखमजडात्मकमेकरूप-
मानन्दमन्थरमपेतरजस्तमो यत् ।
आकाशकोशतनवोऽतनवो महान्त-
स्तस्मिन्पदे गलितचित्तलवा वसन्ति ॥ इति ।
"*जीवन्मुक्ता न मुह्यन्ति सुखदुःखरसस्थितौ ।
प्राकृतेनार्थकारेण किंचित्कुर्वन्ति वा न वा ॥"

**तस्मात्सरूपो मनोनाशो जीवन्मुक्तिसाधनमिति । इति जीवन्मुक्तिसाधनं मनोनाशप्रकरणं संपूर्णम् ।**

---

तत्सूत्रं विवृणोति—**संवेग** इत्यादिना । ननु तीव्रसंवेगानां यद्यासन्नः समाधिलाभस्तर्हि मध्यमृद्वन्यतरसंवेगानां दीर्घदीर्घतरकालेन समाधिलाभः स्यादेवेत्याशङ्क्य तदाशयसूचकं सूत्रमेवावतारयति—**तीव्रसंवेगेष्वेवेति** । तत्सूत्रं विवृणोति—**मृदुतीव्र** इत्यादिना । तद्भेदफलमाह—**तेष्वपीति** । तत्राधिमात्रतीव्राः केऽतिशीघ्रं समाधिभाजो भवेयुरित्यपेक्षायां तानुदाहरंस्तेषामुत्तमोत्तमत्वं विधत्ते—**उत्तमोत्तमा** इत्यादिना । बृहद्योगवासिष्ठाख्योत्तररामायणप्रसिद्धास्तेऽत्र प्राक्समुदाहृता एव । आदिपदेन बलिः । तत्र हेतुमाह—**मूहूर्तमात्रेति** । उपलक्षणमेवेदमेतदपेक्षया किंचिन्न्यूनानां तत्प्रसिद्धानां वीतहव्यादीनामुत्तमत्वस्यापीति भावः । एवं तर्हि केऽत्रमध्यतीव्रा मृदुतीव्राश्च पर्यवसितमध्यमत्वादय इत्याकाङ्क्षायां सत्यां तत्प्रसिद्धानेव कचादीन्मध्यतीव्रानुपलक्षणविधया संसूच्य मृदुतीव्रानधमत्वेन कण्ठत एव विधत्ते—**अधमा** इत्यादिना सोदाहरणम् । तत्रापि हेतुमाह—**चिरेति** । ननु त्वयोक्तानामुपलक्षणविधयोत्तमानां मध्यमानां तथाऽऽदिशब्दद्वयसिद्धानामुत्तमोत्तमानामधमानां चान्येषां तादृशां ग्राह्यत्वे किं गमकमित्यत आह—**एवमन्येऽपी**त्यादिना । उपसंहरति—**तदेवमि**त्यादिना । तत्फलं वदन्पूर्वप्रकरणेन संगतिं प्रतिपादयति—**मनोनाशेन चे**त्यादिना । तत्राप्याशङ्क्य समाधातुं प्रतिजानीते—**न चे**त्यादिना । तत्र हेतुमाह—**प्रश्नेति** । किंकर्तृके ते इत्यत्राऽऽह—**श्रीराम** इत्यादितद्वाक्यवृन्देनैव । **प्राकृतमिति** । प्रकृत्याख्यमूलाविद्याकार्यमित्यर्थः । एतादृशं गुणसंभारं सत्त्वादिगुणपरिणामप्रपञ्चमिति यावत् । समेत्य साक्ष्यादिप्रत्यक्षीकृत्येत्यर्थः । सुखदुःखादि सुखदुःखमोह-

---

* अयं श्लोकः क. ख. ग. व. च. छ. पुस्तकेषु नास्ति, अधिकश्च ।

कुलम् । बहु अलम् । अवष्टभ्य सत्यत्वेन निश्चित्य । मन्यते, प्रमाता जीवोऽयमित्यार्थिकम् । तदेव तदीयं मननं विद्यमानं मनो विदुरिति संबन्धः । **सुखेति** । सुखदुःखादय इत्यपि पाठः । तत्राऽऽदिपदान्मोहः । साम्यात्, 'निर्दोषं हि समं ब्रह्म' इतिस्मृतेरद्वैतब्रह्मत्वादित्यर्थः । **आपदिति** । आपद्दुःखम् । कार्पण्यं दैन्यम् । सत्त्वं, तदासत्त्वमुदेत्यलमिति प्रागुक्तं रजस्तमोनाक्रान्तं मैत्र्यादिगुणाधारीभूतशुद्धसत्त्वगुणस्वरूपमपीत्यर्थः । उपसंहरन्प्रकृते योजयति—**तस्मादिति** । नन्वयं सरूपो मनोनाशोऽसंप्रज्ञातयोगादिसाध्यो जीवन्मुक्तिसाधनमित्युक्तं तत्सत्यमेव परं तु श्रीमद्भगवत्पादाभिधभाष्यकारचरणसरोजैस्तु तस्य प्रकारान्तरात्मनो निदिध्यासनसाधनत्वमेवोक्तम् । तथा ह्यपरोक्षानुभूतौ—

त्रिपञ्चाङ्गान्यथो वक्ष्ये पूर्वोक्तस्यैव सिद्धये ।
तैश्च सर्वैः सदा कार्यं निदिध्यासनमेव च ॥
नित्याभ्यासादृते प्राप्तिर्न भवेत्सच्चिदात्मनः ।
तस्माद्ब्रह्म निदिध्यासेज्जिज्ञासुः श्रेयसे चिरम् ॥
यमो हि नियमस्त्यागो मौनं देशश्च कालकः ।
आसनं मूलबन्धश्च देहसाम्यं स्वदृक्स्थितिः ॥
प्राणसंयमनं चैव प्रत्याहारश्च धारणा ।
आत्मध्यानं समाधिश्च प्रोक्तान्यङ्गानि वै क्रमात् ॥
सर्वं ब्रह्मेति विज्ञानादिन्द्रियग्रामसंयमः ।
यमोऽयमिति संप्रोक्तोऽभ्यसनीयो मुहुर्मुहुः ॥
सजातीयप्रवाहश्च विजातीयतिरस्कृतिः ।
नियमो हि परानन्दो नियमात्क्रियते बुधैः ॥
त्यागः प्रपञ्चरूपस्य चिदात्मत्वावलोकनात् ।
त्यागो हि महतां पूज्यः सद्यो मोक्षमयो यतः ॥
यस्माद्वाचो निवर्तन्ते अप्राप्य मनसा सह ।
यन्मौनं योगिभिर्गम्यं तद्भवेत्सर्वदा बुधैः ॥
वाचो यस्मान्निवर्तन्ते तद्वक्तुं यन्न शक्यते ।
प्रपञ्चो यदि वक्तव्यः सोऽपि शब्दविवर्जितः ॥
इति तावद्भवेन्मौनं सतां सहजसंज्ञितम् ।
गिरा मौनं हि बालानां प्रयुक्तं ब्रह्मवादिभिः ॥
आदावन्ते च मध्ये च जनो यस्मिन्न विद्यते ।
येनेदं सततं व्याप्तं स देशो विजनः स्मृतः ॥

कलनात्सर्वभूतानां ब्रह्मादीनां निमेषतः ।
कालशब्देन निर्दिष्टो ह्यखण्डानन्दनिर्द्वयः ॥
सुखेनैव भवेद्यस्मिन्नजस्रं ब्रह्मचिन्तनम् ।
आसनं तद्विजानीयान्नेतरत्सुखमासनम् ॥
सिद्धं यत्सर्वभूतादिविश्वाधिष्ठानमव्ययम् ।
यस्मिन्सिद्धाः समाविष्टास्तद्वै सिद्धासनं भवेत् ॥
यन्मूलं सर्वलोकानां तन्मूले चित्तबन्धनम् ।
मूलबन्धः सदा सेव्यो योऽभ्यासो राजयोगिनाम् ॥
अङ्गानां समतां विद्यात्समे ब्रह्मणि लीनता ।
नो चेन्नैव समानत्वमृजुतः शुष्ककाष्ठवत् ॥
दृष्टिं ज्ञानमयीं कृत्वा पश्येद्ब्रह्ममयं जगत् ।
सा दृष्टिः परमोदारा न नासाग्रविलोकिनी ॥
द्रष्टृदर्शनदृष्टीनां विरामो यत्र वा भवेत् ।
दृष्टिस्तत्रैव कर्तव्या न नासाग्रविलोकिनी ॥
चित्तादिसर्वभावानां ब्रह्मत्वेनैव भावनात् ।
निरोधः सर्ववृत्तीनां प्राणायामः स उच्यते ॥
निषेधनं प्रपञ्चस्य रेचकाख्यः समीरणः ।
ब्रह्मैवास्मीति या वृत्तिः पूरको वायुरीरितः ॥
ततः सवृत्तिनैश्चल्यं कुम्भकः प्राणसंयमः ।
अयं चैव प्रबुद्धानामज्ञानां घ्राणपीडनम् ॥
विषयेष्वात्मतां दृष्ट्वा मनसश्चिन्निमज्जनम् ।
प्रत्याहारः स विज्ञेयोऽभ्यसनीयो मुमुक्षुभिः ॥
यत्र यत्र मनो याति ब्रह्मणस्तत्र दर्शनात् ।
मनसो धारणं चैव धारणा सा परा मता ॥
ब्रह्मैवास्मीति सद्वृत्त्या निरालम्बतया स्थितिः ।
ध्यानशब्देन विख्याता परमानन्ददायिनी ॥
निर्विकारतया वृत्त्या ब्रह्माकारतया पुनः ।
वृत्तिविस्मरणं सम्यक्समाधिर्ज्ञानसंज्ञितः ॥

इति तदङ्गान्युक्त्वाऽन्ते—

एभिरङ्गैः समायुक्तो राजयोग उदाहृतः ।
किंचित्पक्वकषायाणां हठयोगेन संयुतः ॥

इति राजयोग एव निर्गुणाहंग्रहोपासनापरपर्याय उपसंहृतः। प्रपञ्चितश्चायं सदाचारप्रकरणे तैरेव भूयस्तराम्।

विवृतश्चमयाऽसौ तट्टीकायां सविस्तरम्। एवं लघुवाक्यवृत्तावपि—

नष्टे पूर्वविकल्पे तु यावदन्यस्य नोदयः।
निर्विकल्पकचैतन्यं स्पष्टं तावद्विभासते॥
एकद्वित्रिक्षणेनैवं विकल्पस्य निरोधनम्।
क्रमेणाभ्यस्यतां यत्नाद्ब्रह्मानुभवकाङ्क्षिभिः॥

इत्याद्युक्त्वाऽग्रेऽभिहितम्—

शक्यः सर्वनिरोधश्चेत्समाधिर्ज्ञानिनां प्रियः।
तदशक्तौ क्षणं रुद्ध्वा श्रद्धया ब्रह्मताऽऽत्मनः॥

तद्वद्बृहद्वाक्यवृत्तावपि—

अहं ब्रह्मेति वाक्यार्थबोधो यावद्दृढी भवेत्।
शमादिसहितस्तावदभ्यसेच्छ्रवणादिकम्॥

इति शमाद्यङ्गपूर्वकं श्रवणमनननिदिध्यासनाभ्यासोऽपि विहितः। तथा वाक्यसुधायामपि—

अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम्।
आद्यत्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम्॥

इत्याद्युक्त्वाऽग्रे—

उपेक्ष्य नामरूपे द्वे सच्चिदानन्दवस्तुनि।
समाधिं सर्वदा कुर्याद्धृदये वाऽथ वा बहिः॥
सविकल्पोऽविकल्पश्च समाधिर्द्विविधो हृदि।
दृश्यशब्दानुवेधेन सविकल्पः पुनर्द्विधा॥
कामाद्याश्चित्तसादृश्यास्तत्साक्षित्वेन चेतनम्।
ध्यायेद्दृश्यानुविद्धोऽयं समाधिः सविकल्पकः॥
असङ्गः सच्चिदानन्दः स्वप्रभो द्वैतवर्जितः।
अस्मीतिशब्दविद्धोऽयं सविकल्पः समाधिकः॥
स्वानुभूतिरसावेशाद्दृश्यशब्दावुपेक्ष्य तु।
निर्विकल्पः समाधिः स्यान्निर्वातस्थितदीपवत्॥
हृदीव बाह्यदेशेऽपि यस्मिन्कस्मिंश्च वस्तुनि।
समाधिराद्यः सन्मात्रे नामरूपपृथक्स्थितेः॥

अखण्डैकरसं वस्तु सच्चिदानन्दलक्षणम् ।
इत्यवच्छिन्नचिन्तेयं समाधिर्मध्यमो भवेत् ॥
स्तब्धीभावो रसास्वादात्तृतीयः पूर्ववन्मतः ।
एतैः समाधिभिः षड्भिर्नयेत्कालं निरन्तरम् ॥
देहाभिमाने गलिते विज्ञाते परमात्मनि ।
यत्र यत्र मनो याति तत्र तत्र समाधयः ॥

इति समाधिषट्कमपि परमात्मविज्ञानार्थमेव व्यधायि । एवं च किमत्र तात्पर्यमिति चेन्न । एतत्समाधानस्याग्रिमप्रकरणविवरणे सविस्तरमभिधास्यमानत्वाद्दिङ्मात्रेण प्रागपि तत्र तत्राभिहितत्वाच्चेत्यलं पल्लवितेन ।

इति श्रीमत्परम०पूर्णानन्देन्दुकौमुद्यां जीवन्मुक्तिविवेकाख्यषोडषकलाप्रकाशे मनोनाशाभिधसप्तमप्रकरणोल्लासः संपूर्णः ॥ ७ ॥

---

व्याकरणक्षीराब्धौ न्यायमयाद्रौ तरति विहारपरान् ।
सन्त्वगणितप्रणतयः श्रीमन्नारायणात्मसूरिवरान् ॥

अथ ग्रन्थकृदाचार्यः पूर्वसंगतिं वक्ष्यमाणेन सह सूचयन्वृत्तानुवादपूर्वकं तत्प्रतिजानीते **केयमि**त्यादिना—

**केयं जीवन्मुक्तिः, किंवा तत्र प्रमाणं कथं वा तत्सिद्धिरित्येतस्य प्रश्नत्रयस्योत्तरं निरूपितम् । सिद्धौ वा किं प्रयोजनमित्यस्य चतुर्थप्रश्नस्योत्तरमिदानीमभिधीयते ज्ञानरक्षातपोविसंवादाभावदुःखनाशसुखाविर्भावाः सन्ति पञ्च प्रयोजनानि । ननु प्रमाणोत्पन्नस्य तत्त्वज्ञानस्य को नाम बाधप्रसङ्गो येन रक्षाऽपेक्ष्यत इति चेदुच्यते । चित्तविश्रान्तेरभावे संशयविपर्ययौ प्रसज्जेयाताम् । तथा हि तत्त्वविदो राघवस्य विश्रान्तेः पूर्वं संशयं विश्वामित्र उदाजहार—**

**न राघव तवास्त्यन्यज्ज्ञेयं ज्ञानवतां वर ।
स्वयैव सूक्ष्मया बुद्ध्या सर्वं विज्ञातवानसि ॥
भगवद्व्यासपुत्रस्य शुकस्येव मतिस्तव ।
विश्रान्तिमात्रमेवात्र ज्ञातज्ञेयाऽप्यपेक्षते ॥ इति ।**

**शुकस्तु स्वयमेवाऽऽदौ तत्त्वं विदित्वा तत्र संशयानः पितरं पृष्ट्वा पित्राऽपि तथैवानुशिष्टस्तत्रापि संशयानो जनकमुपासाद्य तेनापि तथैवानुशिष्टस्तं प्रत्येवमुवाच—**

श्रीशुकः—

स्वयमेव मया पूर्वमेतज्ज्ञातं विवेकतः।
एतदेव हि पृष्टेन पित्रा मे समुदाहृतम् ॥
भवताऽप्येष एवार्थः कथितो वाग्विदां वर।
एष एव च वाक्यार्थः शास्त्रेषु परिदृश्यते ॥
यथाऽयं स्वविकल्पोत्थः स्वविकल्पपरिक्षयात्।
क्षीयते दग्धसंसारो निःसार इति निश्चयः ॥
तत्किमेतन्महाबाहो सत्यं ब्रूहि ममाचलम्।
त्वत्तो विश्रान्तिमाप्नोमि चेतसा भ्रामितं जगत् ॥

जनकः—

नातः परतरः कश्चिन्निश्चयोऽस्त्यपरो मुने।
स्वयमेव त्वया ज्ञातं गुरुतश्च पुनः श्रुतम् ॥
अव्युच्छिन्नश्चिदात्मैकः पुमानस्तीह नेतरः[1]।
स्वसंकल्पवशाद्बद्धो निःसंकल्पस्तु मुच्यते ॥
मुने त्वया स्फुटं ज्ञातं ज्ञेयं स्वस्य महात्मनः।
भोगेभ्योऽप्यरतिर्जाता दृश्याद्वा सकलादिह ॥
प्राप्तं प्राप्तव्यमखिलं भवता पूर्णचेतसा।
न दृश्ये यतसि(से) ब्रह्मन्मुक्तस्त्वं भ्रान्तिमुत्सृज ॥
अनुशिष्टः स इत्येवं जनकेन महात्मना।
विशश्राम शुकस्तूष्णीं स्वस्थे परमवस्तुनि ॥
वीतशोकभयायासो निरीहश्छिन्नसंशयः।
जगाम शिखरं मेरोः समाध्यर्थमनिन्दितम् ॥
तत्र वर्षसहस्राणि निर्विकल्पसमाधिना।
दश स्थित्वा शशामासावात्मन्यस्नेहदीपवत् ॥ इति।

किंतदित्यपेक्षायां तान्युद्दिशन्नाह—**ज्ञानरक्षे**त्यादिना। तत्र प्रथमे स्वयमेवाऽऽशङ्क्य समाधातुं प्रतिजानीते—**नन्वि**त्यादिना। तदुपपादयति—**चित्ते**त्यादिना। **रक्षाऽपेक्ष्यत** इत्यन्तेन। तावुदाहरति—**तथा ही**त्यादिना। उदाजहार, वासिष्ठरामायणीयवैराग्यप्रकरण इति शेषः। तद्वाक्यमेव पठति—**न राघवे**त्यादिद्वाभ्याम्। नन्वत्र दृष्टान्तीकृतस्य शुकस्य कथं संशय इत्यत्राऽऽह—**शुकस्त्वि**त्यादिना। इदमपि प्रसिद्धं तत्रैवाग्रे मुमुक्षुव्यवहारप्रकरणे। किमुवाचेत्याकाङ्क्षायां तद्वाक्यमेव संगृह्णाति—**स्वयमेवे**त्यादिना। वाक्यार्थः,

---

[1] क. ङ. च. °तरत्। स्व°।

महावाक्यार्थः । यथाऽयमिति । इदं हि प्रतिजीवं प्रपञ्चभेदं सर्वस्यापि द्वैतस्य प्रातिभासिकत्वं बुद्ध्यवच्छिन्नजीवचैतन्याश्रितनानाज्ञानविषयीभूतब्रह्मेश्वरत्वं च वदतां भामतीकृतां मते मूलम् । त्वत्तो विश्राममित्यपि पाठः । तत्र हेतुः—चेतसेत्यादि । तत्तज्जीवान्तःकरणेन तं तं जीवं प्रति प्रपञ्चकल्पनयेति यावत् । जनक इत्यादिरवशिष्टो ग्रन्थः स्पष्ट एव ।

फलितमाह—

तस्माद्विदितेऽपि तत्त्वे विश्रान्तिरहितस्य शुकराघवयोरिव संशय उत्पद्यते । स चाज्ञानमिव मोक्षप्रतिबन्धकः । अत एव भगवतोक्तम्—

अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।
नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥ इति ।

अश्रद्धा विपर्ययः । स तूत्तरत्रोदाहरिष्यते । अज्ञानविपर्ययौ मोक्षमात्रविरोधिनौ । संशयस्तु भोगमोक्षयोरुभयोरपि विरोधी । तस्य परस्परविरुद्धकोटिद्वयावलम्बित्वात् । यदा संसारसुखाय प्रवृत्तिस्तदा मोक्षमार्गे बुद्धिस्तां निरुणद्धि । यदा च मोक्षमार्गे प्रवृत्तिस्तदा संसारबुद्धिस्तां प्रतिबध्नाति । तस्मात्संशयात्मनो न किंचित्सुखमस्तीति मुमुक्षुणा सर्वथा संशयश्छेत्तव्यः । अत एव श्रूयते—'छिद्यन्ते सर्वसंशयाः' इति । विपर्ययस्यापि निदाघ उदाहरणम् । ऋभुः परमकरुणया निदाघस्य गृहमेत्य बहुधा तं बोधयित्वा निर्जगाम । बुद्धेऽपि तदुपदिष्टे वस्तुन्यश्रद्दधानो निदाघः कर्माण्येव परमपुरुषार्थहेतुरिति विपर्ययं प्राप्य कर्मानुष्ठाने यथापूर्वं प्रवृत्तः । सोऽपि शिष्यस्य परमपुरुषार्थभ्रंशो मा भूदिति कृपया गुरुः पुनरागत्य बोधयामास । तदपि विपर्ययं न जहौ । तृतीयेन तु बोधेन विपर्ययं परित्यज्य विश्रान्तिमलभत । संशयविपर्ययाभ्यामसंभावनाविपरीतभावनारूपाभ्यां तत्त्वज्ञानस्य फलं प्रतिबध्यते । तदुक्तं पराशरेण—

मणिमन्त्रौषधैर्वह्निः सुदीप्तोऽपि यथेन्धनम् ।
प्रदग्धुं नैव शक्तः स्यात्प्रतिबद्धस्तथैव च ॥
ज्ञानाग्निरपि संजातः सुदीप्तः सुदृढोऽपि च ।
प्रदग्धुं नैव शक्तः स्यात्प्रतिबद्धस्तु कल्मषम् ॥
भावना विपरीता या या चासंभावना शुक ।
कुरुते प्रतिबन्धं सा तत्त्वज्ञानस्य नापरम् ॥ इति ।

---

१ छ. सा खलु ज्ञा° ।

**तस्मादविश्रान्तचित्तस्य संशयविपर्ययप्रसङ्गेन तत्त्वज्ञानस्य फलप्रतिबन्धलक्षणाद्बाधाद्रक्षाऽपेक्ष्यते ।**

**तस्मादिति** । ननु तत्त्वविद्यया ह्यविद्याध्वंसोपलक्षिताद्वैतब्रह्मचिन्मात्रात्मैक्यलक्षणमोक्षाभिव्यक्तौ स्वप्रकाशत्वेन यावद्दृश्यमिथ्यात्वपूर्वकं सार्वदिक्यां सत्यां संशयोऽपि यावत्प्रारब्धं प्रतिभासमानदृश्यवदस्तु का नः क्षतिरित्यत आह—**स चेति** । तत्र मानाकाङ्क्षां प्रतिक्षिपति—**अत एवे**त्यादिना । तद्वाक्यं संक्षेपतो विवृणोति—**अश्रद्धे**त्यादिना । संशयस्याज्ञानविपर्ययोभयापेक्षयाऽप्यधिकाधिक[त]रत्वमाह—**अज्ञाने**त्यादिना । तत्र हेतुमाह—**तस्येति** तत्रोदाहरणं स्पष्टयति—**यदे**त्यादिना । निगमयति—**तस्मादि**त्यादिना । तत्र श्रुतिं प्रमाणयति—**अत एवे**त्यादिना । ननु भवत्येवं संशयस्य सामान्यतः सर्वदृश्यविलक्षणमहानर्थकरत्वेनावश्यनाश्यत्वमथापि तत्साम्येन प्रतिज्ञातविपर्ययस्य तु न तथात्वमनुभूयत इत्यत्र तदुदाहरणोक्त्या तस्य तथात्वमनुभावयति—**विपर्ययस्यापी**त्यादिना । ननु भवत्वेवं संशयादिप्रसक्तिस्तथाऽपि ततः कथं प्रमाणोत्पन्नस्य तत्त्वज्ञानस्य बाध इत्यत्राऽऽह—**संशये**त्यादिना । तत्र पराशरपुराणाख्योपपुराणवाक्यानि प्रमाणयति—**तदुक्तमिति** । तान्येव पठति—**मणी**त्यादिना । तृतीयेऽयं प्रतिबद्धः सन्यथा प्रदग्धुं नैव शक्तः स्यादित्यत्रान्वेति । तथैवं चेत्युत्तरान्वयि । कल्मषमविद्यादिद्वैतमित्यर्थः । शिष्टं तु स्पष्टमेव । अथ फलितं कथयन्नुपसंहरति—**तस्मादि**त्यादिना । ननु सर्वोऽप्ययं संदर्भः प्रबलमद्बुद्धिप्रतिबन्धात्पूर्वोत्तरविरुद्ध एव परिस्फुरति । तथा ह्यत्र तावद्विद्वत्संन्यासप्रस्तावे प्रतिपादितम्—'सम्यगनुष्ठितैः श्रवणमनननिदिध्यासनैः परं तत्त्वं विदितवद्भिः संपाद्यमानो विद्वत्सन्यासः' इति विद्वत्संन्यासस्वरूपम् । तथा तत्रोदाहरणाकाङ्क्षायां 'तं च याज्ञवल्क्यः संपादयामास' इत्युदाहरणम् । तद्वदग्र एतत्प्रकरणोपसंहारे—'नन्वेवं सति विविदिषासंन्यासफलेन तत्त्वज्ञानेनैवाऽऽगामिजन्मनां निवारितत्वाद्वर्तमानजन्मशेषस्य भोगमन्तरेण निवारयितुमशक्यत्वात्कृतमनेन विद्वत्संन्यासप्रयासेनेति चेन्मैवम् । विद्वत्संन्यासस्य जीवन्मुक्तिहेतुत्वात्' इत्यादिना तत्प्रोजनं च । प्रकृते तु पुनः—'विदितेऽपि तत्त्वे विश्रान्तिरहितस्य शुकराघवयोरिव संशय उत्पद्यते' इत्युक्तमिति स्फुट एव विरोधः । न च वेदनं तत्परोक्षमेवेति वाच्यम् । तदवधेरपि दृढतमापरोक्षत्वेन तत्रैव सप्रमाणं दर्शितत्वात् । तद्यथा विद्वत्ताया अवधिरुपदेशसाहस्यामभिहितः—

> देहात्मज्ञानवज्ज्ञानं देहात्मज्ञानबाधकम् ।
> आत्मन्येव भवेद्यस्य स नेच्छन्नपि मुच्यते ॥ इति ।

श्रुतावपि—'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।

> क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' ॥ इति ।

तस्मादयं प्रथमो विरोधः । एवमग्रे जीवन्मुक्तिप्रमाणप्रस्तावे—

ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते ।
सङ्गात्संजायते कामः कामात्क्रोधोऽभिजायते ॥
क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः ।
स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति' इति ॥

असति समाध्यभ्यासे प्रमादप्रकार उपन्यस्तः । सङ्गो ध्येयविषयसंनिधिः । संमोहो विवेकपराङ्मुखत्वम् । स्मृतिविभ्रमस्तत्त्वानुसंधानाभावः । बुद्धिनाशो विपरीतभावनोपचयदोषेण प्रतिबद्धस्य ज्ञानस्य मोक्षप्रदत्वसामर्थ्याभाव इति निर्णीतम् । तत्र सम्यगनुष्ठितैः श्रवणमननिदिध्यासनैरित्यादौ प्राक्तनग्रन्थे श्रवणादीनां सम्यगितिविशेषणेनासंभावनाविपरीतभावनाख्यसंशयविपर्ययनिरसात्मकफलपर्यन्तत्वेऽवश्यवक्तव्ये तदनन्तरोत्पन्नस्य तत्त्वज्ञानस्य कथं विपरीतभावनोपचयदोषेण प्रतिबन्धसंभव इति द्वितीयो विरोधः । उपलक्षणमिदम् ।

तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः ।
अविद्या सह कार्येण नासीदस्ति भविष्यति ॥

इति वार्तिकेण सह, तथा शुद्धं ब्रह्मेति विषयीकुर्वाणा वृत्तिः स्वस्वेतरोपाधिनिवृत्तिरुदयत इति कल्पतरुणा च सार्धं विरोधस्यापि । एवमग्रे जीवन्मुक्तिसाधननिरूपणप्रकरणे जीवन्मुक्तिसाधनानि तत्त्वज्ञानमनोनाशवासनाक्षयात्मकानि विस्तरेणोपपाद्य मनोनाशादेर्ज्ञानसाधनत्वमप्यस्तीत्यस्तु तत्त्वज्ञानमात्रेणैव जीवन्मुक्तिरित्याशङ्क्य भूरितरग्रन्थेन तत्समाधानं प्रपञ्च्य फलितमलेखि । तदेवं तत्त्वज्ञानादीनां त्रयाणां विदेहमुक्तिजीवन्मुक्तिवशाद्गुणप्रधानभावव्यवस्था सिद्धेति । अथ तत्राप्याशङ्क्य व्यवस्थाप्यते—ननु विविदिषासंन्यासिना संपादितानामेतेषां किं विद्वत्संन्यासादूर्ध्वमनुवृत्तिमात्रं किंवा पुनरपि संपादनप्रयत्नोऽपेक्षितः । नाऽऽद्यः । तत्त्वज्ञानस्येवान्ययोरप्ययत्नसिद्धत्वे प्राधान्यप्रयुक्तादराभावप्रसङ्गात् । न द्वितीयः । इतरयोरिव ज्ञानस्यापि प्रयत्नसापेक्षत्वे सत्युपसर्जनत्वप्रयुक्तौदासीन्याभावप्रसङ्गात् । नायं दोषः । ज्ञानस्यानुवृत्तिमात्रमितरयोर्यत्नसाध्यत्वमित्यङ्गीकारात् । तथा हि विद्याधिकारी द्विविधः कृतोपास्तिरकृतोपास्तिश्चेति । तत्रोपास्यसाक्षात्कारपर्यन्तामुपास्तिं कृत्वा यदि ज्ञाने प्रवर्तते तदा वासनाक्षयमनोनाशयोर्दृढतरत्वेन ज्ञानादूर्ध्वं विद्वत्संन्यासजीवन्मुक्ती स्वत एव सिध्यतः । तादृश एव शास्त्राभिमतो मुख्यो विद्याधिकारी । ततस्तं प्रति शास्त्रेषु सहोपन्यासात्स्वरूपेण विविक्तावपि विद्वत्संन्यासविविदिषासंन्यासौ संकीर्णाविव प्रतिभासेते । इदानींतनास्तु प्रायेणाकृतोपास्तय एवौत्सुक्यमात्रात्सहसा विद्यायां प्रवर्तन्ते । वासनाक्षयमनोनाशौ च तात्कालिकौ संपादयन्ति । तावता श्रवणमननिदिध्यासनानि निष्पाद्यन्ते । तैश्च दृढाभ्यस्तै-

रज्ञानसंशयविपर्ययनिरासात्तत्त्वज्ञानं सम्यगुदेति । तस्य बाधकप्रमाणाभावान्निवृत्तायाम- विद्यायां पुनरुत्पत्तिकारणाभावाच्च नास्ति तस्य शैथिल्यम् । वासनाक्षयमनोनाशौ तु दृढाभ्यासाभावाद्भोगप्रदेन प्रारब्धेन तदा तदा बाध्यमानत्वाच्च सवातप्रदेशदीपवत्सहसा निवर्तेते इत्यादिना वासिष्ठवचनप्रमाणप्रदर्शनपूर्वकम् । तत्र पूर्वग्रन्थे तावत्स्मृतिभ्रंशाद्बु- द्धिनाश इत्यस्य व्याख्याने ह्यसति समाध्यभ्यासे विपरीतभावनोपचयदोषेण प्रतिबद्धस्य ज्ञानस्य मोक्षप्रदत्वसामर्थ्याभाव इति निर्णीतम्, इदानीं तु तैश्च दृढाभ्यस्तैरित्यादिग्रन्थे- नाकृतोपास्तीनामपि तत्त्वज्ञानं सम्यगुदेति । तस्य बाधकप्रमाणाभावान्निवृत्तायामविद्यायां पुनरुत्पत्तिकारणाभावाच्च नास्ति तस्य शैथिल्यमित्युच्यत इति तृतीयो विरोधः । यद्यत्र तत्त्वज्ञानस्य सम्यगिति श्रवणादीनां च दृढाभ्यस्तैरिति विशेषणाच्च बुद्धिनाशपदेष्टप्रतिब- द्धतत्त्वज्ञानापेक्षयाऽत्रत्यतत्त्वज्ञाने परिपाकातिशयसंभवान्नैवायं विरोधो विभिन्नविषयत्वादिति ब्रूषे, तर्हि प्रमारूपे हि तत्त्वज्ञाने त्वपक्वत्वं वक्तव्यं बुद्धिनाशपदेष्टे । तच्चापक्वत्वं किं कोमलकण्टकन्यायेन दार्ढ्याभावो वा भूच्छायाप्रतिबिम्बविशिष्टसकलङ्कचन्द्रज्ञानवदुक्तप्र- तिबिम्बाधारावच्छिन्नचन्द्रबिम्बांशाग्रहणवद्ब्रह्मात्मैक्यविषये किंचिद्विशेषाग्रहणं वा । नाऽऽद्यः सर्वत्र प्रसिद्धयावदपरोक्षप्रमात्वावच्छेदकावच्छिन्नप्रमानियतस्य स्वोत्पत्तिमात्रेण स्वसमानाश्र- यविषयकावरणविनिवारणस्य बाधप्रसङ्गात् । नाप्यन्त्यः । निरुक्तविषयेंऽशाद्यसंभवात्तदङ्गी- कारे सावयवत्वव्याप्यदृश्यत्वेन तत्र मिथ्यात्वापत्तेश्च । यदि चेत्परोक्षज्ञानं तत्र वदसि तर्हि तस्याऽऽदौ मोक्षप्रदत्वसामर्थ्यमेव क्व प्राप्तं यत्पश्चादसति समाध्यभ्यासे विपरीतभावनोपचयदोषेण बाध्येत । तस्मादयमुक्ततृतीयविरोधोऽतिध्रुव एव । किंच विद्वत्संन्यासोदाहरणीभूतस्य याज्ञवल्क्यस्य संशयोदाहरणीभूतयोः शुकराघवयोश्च कृतो- पास्तित्वमावश्यकमेव प्राच्यत्वान्महानुभावत्वाच्च । तथा च तेषां वासनाक्षयम- नोनाशयोर्दृढतरत्वेन तत्त्वज्ञानाव्यवहितोत्तरक्षणमेव विद्वत्संन्यासजीवन्मुक्ती कुतो न स्वत एव सिध्यत इति वक्तव्यम् । यद्यर्जुनं निमित्तीकृत्य सकलं मुमुक्षुजनमुद्दिधीर्षुर्भगवा- निति श्रीमद्भगवद्गीताभाष्ये श्रीमद्भगवत्पूज्यपादाभिधभाष्यकारोक्तेः कथायामर्थवादत्वेन शास्त्रस्य तात्पर्यमेव नास्तीति चेत्तर्हि ' तदुपर्यपि बादरायणः संभवात् ' इतिभूतार्थवाद- प्रामाण्यवादिदेवताधिकरणन्यायबाधेन जित प्राभाकरादिभिः प्रतारकैः । एवं तर्ह्युक्तभाष्यस्य का गतिरिति चेत्, अर्जुनस्य नरावतारत्वेन नित्यसिद्धज्ञानत्वाभिप्रायकत्वं वा क्षत्रि- यत्वेन पारमहंस्यानधिकारात्तदेकपूर्वकाद्वैतब्रह्मविद्यामुख्याधिकारित्वविरहाभिप्रायकत्वमेव वेति गृहाण । किंच मलिनवासनाप्रस्तावेऽग्रे याज्ञवल्क्यस्यैव शास्त्रवासनया विद्यामदं प्रकृत्योक्तम् । स्वयं च क्रोधपरवशः शाकल्यं शापेन मारयामास । न चास्य ब्रह्मघ्नो मोक्षाभावः शङ्कनीयः । यतः कौषीतकिनः समामनन्ति—' नास्य केनापि कर्मणा लोको हीयते न मातृवधेन

न पितृवधेन न स्तेयेन न भ्रूणहत्यया ' इति । शेषोऽपि स्वकृतायामार्यापञ्चाशीत्यामिदमाह—

हयमेधशतसहस्राण्यथ कुरुते ब्रह्मघातलक्षाणि ।
परमात्मविन्न पुण्यैर्न च पापैः स्पृश्यते विमलः ॥

इतिग्रन्थेन बुद्धिपूर्वकब्रह्मवधप्रभृतिमहापातकैरप्यपरोक्षतत्त्वसाक्षात्कारक्षणैकासिद्धाविद्याध्वंसलक्षणमोक्षस्य बाधो नास्तीति सप्रमाणं सोदाहरणं साशङ्कानिराकरणं च । पूर्वग्रन्थे तु विपरीतभावनोपचयदोषेण प्रतिबद्धस्य तत्त्वज्ञानस्य मोक्षप्रदानसामर्थ्याभावः समाध्यभ्यासाभावे स्पष्टमेवाभिहितोऽतः फलीभूतवैराग्यादिना जीवन्मुक्तिसिद्ध्यर्थं विद्वत्संन्यासं विधाय तत्रोदाहरणमपि याज्ञवल्क्यस्यैवाभ्यधायि । अथोत्तरग्रन्थेऽत्र ज्ञानरक्षाया एव जीवन्मुक्तेः प्रथमप्रयोजनत्वं सप्रमाणं सोदाहरणं च निरूप्यते तदयं चतुर्थः पूर्वोत्तरविरोधः । न च संदंशन्यायेनोपक्रमोपसंहारयोरसति समाध्यभ्यासे ज्ञानस्य मोक्षदानप्रतिबन्धवादिभ्यां पूर्वोत्तरग्रन्थाभ्यां सह विरोधेन मध्ये वर्णितमेवं सप्रमाणं सोदाहरणं ज्ञानमहिम्ना ब्रह्महत्यान्तकर्मभिरपि लेपनिराकरणमुक्ततत्त्वज्ञानवैभववर्णनपरायणमेव भवत्विति कोक्तविरोधोपस्थितिरिति सांप्रतम् । तथा सति समानाश्रयविषयकत्वैकावच्छिन्नप्रमात्वेनैवापरोक्षज्ञानस्य समानाश्रयविषयकाज्ञानध्वंसितरूपमुक्तिप्रदानवाद्यद्वैतशास्त्रस्यैव बाधापत्तेर्जितं भेदवादिभिः । किंचाग्रिमग्रन्थेऽपि वासिष्ठोक्तं भूमिकासप्तकं प्रपञ्च्य तात्पर्यमाचार्यः स्वयमेव ज्ञानरक्षाख्यजीवन्मुक्तिप्रथमप्रयोजनोपसंहारे प्राह । तत्रायं संग्रहः—पञ्चम्यादिभूमित्रयरूपायां जीवन्मुक्तौ संपद्यमानायां द्वैतप्रतिभासाभावेन संशयविपर्ययप्रसङ्गाभावादुत्पन्नं तत्त्वज्ञानमबाधेन रक्षितं भवति । सेयं ज्ञानरक्षा जीवन्मुक्तेः प्रथमं प्रयोजनमिति । तत्र चतुर्थभूमिकायास्तत्त्वज्ञानैकरूपत्वेन तत्सत्त्वेऽपि द्वैतप्रतिभासमात्रेण संशयविपर्ययाङ्गीकारः पूर्वोक्तेन ।

'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥

इति श्रुतितद्व्याख्याननिर्णीतेन ज्ञानसमकालसंशयाद्युच्छेदेन सार्धं विरुद्ध एवेति सोऽयं पञ्चमोऽपि पूर्वापरविरोधः । अत्र श्रुत्युक्तज्ञानस्य चतुर्थभूमिरूपत्वमावश्यकमेव । एवमुपसंहारग्रन्थेऽप्युपक्रान्तविद्वत्संन्यासं विस्तरेण प्रकटीकर्तुं परमहंसोपनिषदं व्याकुर्वन्विदुषाऽपि प्रैषोच्चारणादिसकलं क्रियाजातं विधिवदेव विविदिषुवद्विधेयमित्युक्त्वा, ननु तत्त्वविदोऽपि विध्यङ्गीकारे सति तेनापूर्वेण देहान्तरमारभ्येत । मैवम् । तस्यापूर्वस्य चित्तविश्रान्तिप्रतिबन्धनिवारणलक्षणस्य दृष्टफलस्य संभवे सत्यदृष्टफलकल्पनाया अन्याय्यत्वादिति सिद्धान्तितम् । तत्र यदि चित्तविश्रान्तिप्रतिबन्धस्तत्त्वविदः प्रागुक्तरीत्या दृढतरवासनाक्षयमनोनाशाभाव-

प्रयुक्तसंशयविपर्ययप्रयोजकद्वैतप्रतिभास एव तर्हि तन्निवारणं निरुक्तरीत्यैव तादृशमनोनाशादिजन्यपञ्चम्यादिभूमिकात्रयात्मकजीवन्मुक्त्यादिजन्यद्वैतप्रतिभासाभावेनैव वक्तव्यम् । तथा च संभवति दृष्टफलकत्वे ह्यदृष्टफलकल्पनाया अन्याय्यत्वन्यायस्यात्रैव संचारसंभवेन यथाविधि विद्वत्संन्यासजन्येश्वरपरितोषलक्षणपुण्यापूर्वस्य पुनरकिंचित्करत्वतादवस्थ्यमेव । अथाऽपि तदङ्गीकारे किमपराद्धं पुनः प्रागुदाहृतयाज्ञवल्क्यास्यब्रह्मवित्कर्तृकब्रह्महत्याजन्येनेशरोषरूपेण पापापूर्वेणैव । तथा चायमप्यन्तिमः षष्ठः पूर्वोत्तरविरोधः सिद्ध एव । ननु यथा प्रावृट्कालाख्याया दृष्टाया एव वृष्टिसामग्र्याः सत्त्वेऽप्यवग्रहाभिधादृष्टसामग्रीविशेषेण तत्प्रतिबन्धः क्रियते, तत्र कारीरीष्ट्या स्वजन्येशतोषणलक्षणपुण्यापूर्वाख्यादृष्टविशेषेण निरुक्तावग्रहनिवारणद्वारा वृष्टिः संपाद्यत एव परं तु तत्र प्रावृट्काललक्षणदृष्टवृष्टिसामग्रीसमेपक्षितैव । यथा च पुत्रेष्ट्या स्वजन्येशपरितोषलक्षणपुण्यापूर्वेणैव पुत्रोत्पत्तिप्रतिबन्धकीभूतदुरितनिराकरणद्वारा पुत्रो जन्यत एव परं तु तत्र तरुणयोर्दंपत्योः संयोगलक्षणदृष्टसामग्र्यप्यपेक्षितैव । अन्यथा प्रावृट्कालेतरकालेऽपि तद्वन्निरुक्तदंपत्योर्वियोगकालेऽपि क्रमाद्वृष्टिः पुत्रसृष्टिश्च स्यात् । सा च कारीरीपुत्रेष्ट्योः सहस्रधाऽनुष्ठानेऽपि निरुक्तदृष्टसामग्रीविरहे नैव संपद्यते । तद्वद्विद्वत्संन्यासस्य यथाविध्यनुष्ठानजन्येशतोषलक्षणपुण्यापूर्वस्यादृष्टद्वारा चित्तविश्रान्तिप्रतिबन्धकीभूतदुरितविशेषनिरासपूर्वकमुक्तचित्तविश्रान्तिजन्यसुखविशेषं प्रति सापेक्षत्वेऽप्युक्तमनोनाशवासनाक्षयादिलक्षणाया दृष्टसामग्र्याः सार्थक्यमेवेति चेन्न । वैषम्यात् । तद्यथा—न हि रज्जुभुजङ्गोपशमः सहस्रधा गारुडादिमन्त्रजपैर्दृश्यते विना दीपाद्यालोकसहकृतचक्षुःसंनिकर्षजन्यरज्जुसाक्षात्कारं, तद्वदसति समाध्यभ्यासे जायमानदृश्यावभासप्रयुक्तसंशयादेः संन्यासाद्यपूर्वशतेनापि निराकरणासंभव एव स्वप्नेऽपीति दिक् । तस्मान्निरुक्तविरोधस्तु ध्रुवायत एव । तत्रेदं तावद्विज्ञाप्यते पामरेणाप्यनन्यशरणेन सूरीश्वरचरणसरोजपरागव्रजान्प्रत्येव मया—

षट्तन्त्रीसारपारंगतचतुरमहाचक्रवर्तीश्वरैर्नः
किंचिद्भ्रान्त्या विरोधाः परमकरुणया साधु निर्मूलनीयाः ।
श्रीविद्यारण्यवाक्ये मुकुर इव महानिर्मलेऽप्यक्षिदोषा-
त्सव्यासव्यावभासा इव गुरुभिरिवान्तः स्वमादर्शयद्भिः ॥ १ ॥

किंच—

क्षंतव्योऽविनयोऽस्मदीय इह वै श्रीदेशिकेशाङ्घ्रिभिः
पूर्वाचार्यवचः स्वतोऽमलमपि भ्रान्त्या यदाक्षेपि तत् ।
स्वान्तर्दोषविशोषणैकफलकं यस्मादतः साधुभि-
र्दीने मादृशि चारुपूर्णकरुणाकारैः सुधीरैरपि ॥ २ ॥

क्व नु वच इदं वैद्यारण्यं गभीरतरं स्वतः·
क्व च वयमिहास्यैदंपर्यं प्रकाशयितुं क्षमाः ।
तदपि मलिनोऽप्यल्पः सिद्धाञ्जनस्य कणो न किं
गुरुकरुणया भूमौ गूढं निधिं परिदर्शयेत् ॥ ३ ॥

शृण्वत्रेदं रहस्यम्—सर्वोऽप्ययं विरोधस्तत्त्वज्ञानस्य ।

ज्ञानाग्निरपि संजातः सुदीप्तः सुदृढोऽपि च ।
प्रदग्धुं नैव शक्तः स्यात्प्रतिबद्धस्तु कल्मषम् ॥

इति पराशरवचनादिसिद्धसंभावितप्रतिबन्धमूलक एवेति स एवाऽऽदौ तावद्विचार्यते यच्चैतस्मिन्स्मृतिवाक्ये पाराशराख्योपपुराणीयत्वेन प्रसिद्धे समाद्युपसर्गत्रयदृढपदाभ्यां तत्त्वज्ञाने परोक्षत्वांशिकत्वप्रमाणाभासजन्यत्वापातिकत्वानि क्रमात्स्वर्गे सुधाऽस्ति, प्रादेशमात्रश्चन्द्रः, 'पीतः शङ्खः, कामिनीयमित्यादिवदेव निवारयितुं विशेषणाभ्यां निर्बाधापरोक्षप्रमात्वमभिव्यज्यापि प्रतिबद्धत्वाभिधानं कृतम्, तथा तन्मूलके प्रागुक्ते गीतावाक्यगतबुद्धिनाशपदव्याख्याने बुद्धिनाशो विपरीतभावनोपचयदोषेण प्रतिबद्धस्य ज्ञानस्य मोक्षप्रदत्वसामर्थ्याभाव इति मूलवाक्यादिष्वपि तत्किमभिप्रायकमिति । तत्र प्रथमवाक्यस्य तात्पर्यं भगवद्भिः सर्वज्ञात्ममुनीश्वरचरणैः संक्षेपशारीरकारम्भ एव सदृष्टान्तं सान्वयव्यतिरेकं च प्रकटितम्—

पुरुषापराधमलिना धिषणा निरवद्यचक्षुरुदयाऽपि यथा ।
न फलाय भर्जुविषया भवति श्रुतिसंभवाऽपि तु तथाऽऽत्मनि धीः ॥
पुरुषापराधविगमे तु पुनः प्रतिबन्धकव्युदसनात्सफला ।
मणिमन्त्रयोरपगमे तु यथा सति पावकाद्भवति धूमलता । इति ॥

अत्र प्रथमे माधुसूदनी टीका— पुरुषस्य प्रमातुरसंभावनादिलक्षणेनापराधेन मलिनाऽप्रामाण्यशङ्काकलङ्किता न तु प्रमाणस्यापराधेन। तस्य दृष्टान्ते दार्ष्टान्तिके च निर्दोषत्वात्। ननु निर्दुष्टप्रमाणजन्यज्ञानमप्रामाण्यशङ्कावशादध्यासं न निवर्तयतीति क्व दृष्टमित्याशङ्क्य दृष्टान्तमाह—निरवद्येति । भर्जुनामा कश्चित्कस्याचिद्राज्ञोऽत्यन्तवल्लभो ब्राह्मणो राजोपजीविभिर्मात्सर्याद्विष्यमाण आसीत् । स कदाचिद्दैवयोगान्नेत्रे पिधायारण्ये क्षिप्तश्चिरं तत्र स्थितो दैवयोगेनाऽऽरण्यकैः सह पुरसमीपमागतोऽपि विद्वेषिराजकीयावरुद्धपुरमार्गः पुरं प्रवेष्टुं न शशाक । राजा । च भर्जुर्मृतः प्रेतो जात इति तैः प्रबोधितः संस्तथैव निश्चयमकरोत् । दैवात्कदाचिद्बहिर्गतो बाह्योपवने तं दृष्ट्वाऽपि ब्रह्मराक्षसं मेन इति । 'पुरुषं सोम्य गन्धारेभ्योऽभिनद्धाक्षमानीय तं ततोऽतिजने विसृजेत्' इति श्रुतिमूला ग्रन्थकर्तृदेशप्रसिद्धिः । यथा भर्जुविषया निर्दोषचक्षुर्ज-

निता प्रमाणभूताऽपि मतिर्मृतो भर्तुर्द्रष्टुमयोग्य एव किंतु प्रेत एवायं दृश्यत इत्यसंभावनाविपरीतभावनारूपदोषेणाभिभूता भर्तुरेवायमिति निश्चयफलाय पर्याप्ता न भवति तथा निर्दोषवेदान्तमहावाक्यजन्या प्रमाणभूताऽप्यहं ब्रह्मास्मीति धीर्वेदान्ता ब्रह्मपरा न भवन्त्येव, अद्वितीयं ब्रह्म न संभवत्येव संसार्यसंसारिणोरैक्यं न संभवत्येवेत्यसंभावनादिरूपपुरुषदोषाभिभूता विचारात्प्रागज्ञानादिनिवृत्तिफलाय न पर्याप्ता भवतीत्यर्थ इति। द्वितीयश्लोकस्तु सरल एव । एवं चोक्तविशेषणविशिष्टज्ञानस्यापि प्रतिबन्धः संभवत्येवेति सिद्धम् । तत्र प्रतिबन्धसामान्यलक्षणं तु यावत्कारणसत्त्वेऽपि कार्याजननमेव । अस्य विस्तरस्तु प्रतिबन्धोऽस्ति भातीति व्यवहारार्हवस्तुनि तं निरस्य विरुद्धस्य तस्योत्पादनमिष्यत इति तत्त्वविवेकश्लोकटीकायामेतदाख्यायामेव । मया प्रादर्श्येव । तदत्र तत्त्वज्ञानेऽपि योऽयं विपरीतभावनोपचयदोषादिप्रयुक्तः प्रतिबन्धः कैवल्यप्रदानसामर्थ्याभावात्मोक्तस्तद्बीजं तु ज्ञानोत्पत्तेः प्रागेव मूल एव प्रसिद्धमकृतोपास्तित्वात्मकं समुदाहृतसंक्षेपशारीरकतट्टीकोक्तभर्तृदृष्टान्तेनैव पर्यवसन्नम् । तथा हि—तत्र राज्ञे राजकीयैर्भर्तुर्द्वेषिभिर्भर्तुर्मृतः प्रेतोऽभूदित्युपवने तत्साक्षात्कारतः पूर्वमेव निवेदितमिति तन्मूलक एव निर्दोषचक्षुः प्रत्यक्षीकृतोऽपि भर्तुरयं ब्रह्मराक्षस एव स तु मृत इति राज्ञो निश्चयो यथाऽभूत्तथाऽत्रापीदानींतनमुमुक्षोस्तात्कालिकश्रवणादिसाधनैर्योऽयं ब्रह्मात्मैक्यविषयकः साक्षात्कारः संपद्यते स तावदकृतोपास्तित्वमूलकविपरीतभावनाद्युपचयप्रयुक्तकैवल्यदानादक्षत्वलक्षणप्रतिबन्धवानेव भवतीत्यवसीयते । ननु मोक्षप्रदानसामर्थ्याभाव इति समुदाहृतमूलवाक्य एव मोक्षशब्देन जीवन्मुक्तिरेव वक्तव्या तत्प्रदानसामर्थ्याभावस्तु तत्त्वज्ञाने विपरीतभावनोपचयादिदोषेण सुप्रसिद्ध एव । तथा च

वक्ष्ये विविदिषान्यासं विद्वन्न्यासं च भेदतः ।
हेतू विदेहमुक्तेश्च जीवन्मुक्तेश्च तौ क्रमात् ॥

इति मूलारम्भप्रतिज्ञाकारिकाऽप्यनुगृहिता भवति। तत्र हि तत्त्वज्ञानद्वारा विदेहकैवल्यकारणत्वं त्यागदण्डधारणपूर्वकपारमहंस्यान्यतरलक्षणविविदिषासंन्यासे स्पष्टमेव । तथा जीवन्मुक्तिकारणत्वमपि विद्वत्संन्यासे मनोनाशादिद्वारेति न कोऽपि पूर्वापरविरोधः स्यादिति चेन्न । 'अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति' इति गीतावाक्यव्याख्याने मूलकारैरेवाज्ञानवत्संशयविपर्यययोरपि प्रत्येकं बन्धकत्वोक्तेः । तस्मादुक्तसंक्षेपशारीरकाद्यनुसारेणोक्तरीतिकव्यवस्थैव ज्यायसीति दिक् । न चैवं तर्हि तादृशतत्त्वज्ञानेन मोक्षदानासमर्थेनापि कथं ज्ञानिनि पापालेपः प्रागुदाहृते याज्ञवल्क्य एव ब्रह्महत्यां शापेन कुर्वाण इति वाच्यम् । अपरोक्षज्ञानस्योक्तरीत्या विदेहमुक्तिजीवन्मुक्त्योर्दाने प्रतिबद्धत्वेऽप्यप्रतिबद्धेन परोक्षज्ञानेनैव तस्य संभवात् । तदुक्तं स्कान्दसूतसंहितावचनेनैव तत्त्वविवेके—

परोक्षं ब्रह्मविज्ञानं शाब्दं देशिकपूर्वकम् ।
बुद्धिपूर्वकृतं पापं कृत्स्नं दहति वह्निवत् ॥ इति ।

एवं तर्ह्यपरोक्षज्ञानस्य किं फलमिति चेत्तदप्युक्तं तत्रैव तद्वचसैव—

अपरोक्षात्मविज्ञानं शाब्दं देशिकपूर्वकम् ।
संसारकारणाज्ञानतमसश्चण्डभास्करः ॥ इति ।

अत एवोक्तं सर्वमिदं शास्त्रार्थजातं क्रोडीकृत्य मया तावदद्वैताधिकरणचिन्तामणिमालायां चतुर्थे फलकाण्डे प्रथमे जीवन्मुक्तिगुच्छे नवमाधिकरणसारश्लोकतत्प्रकाशाख्यटीकयोः—

ब्रह्मज्ञस्याघलेपोऽस्त्युत न न चरमः क्षीयते कर्म नैवा-
भुक्तं कल्पैरपीति स्मृतिषु नियमनादाद्य एवेति चेन्न ।
यज्ज्ञस्याऽऽत्मावबोधादुभयमपि तदश्लिष्टनष्टं क्रमात्स्या-
दद्वैतं शंकरं तं परमगुरुमहं सच्चिदानन्दमीडे ॥ इति ।

नन्वेवमामरणमुपासकवत्तत्त्वज्ञानिनाऽपि संचितपापनाशार्थमग्रे संभावितपापालेपार्थं चाहं ब्रह्मास्मीति वृत्तिसातत्यमवश्यमनुष्ठेयमेव । तत्र ब्रह्मज्ञस्याघलेपः पापलेपोऽस्त्युताथ वा नेति संशये सति चरमः, नास्ति पापालेप इत्यन्तिमः पक्षो न भवति । कुतः । अभुक्तं कर्म कल्पैरपि नैव क्षीयत इति स्मृतिषु—

नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ।
अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ॥

इत्यादिषु नियमनात्, कर्मणां भोगमन्तरा सर्वथा क्षयाभावनिर्णयात् । तथा चाऽऽद्य एव ब्रह्मज्ञस्याघलेपोऽस्तीति पूर्वपक्ष एव समुचित इति चेन्न । कुतः । यतो यज्ज्ञस्य, यमद्वैतमित्यादिवक्ष्यमाणलक्षणं जानातीति यज्ज्ञस्तस्याद्वैतब्रह्मात्मैक्यविदः । आत्मावबोधात्, विचारिततत्त्वमस्यादिवाक्यमात्रकरणकाप्रतिबद्धब्रह्मात्मैक्यविषयकद्वैतमिथ्यात्वानुभवफलकसाक्षात्कारात् । उभयमपि ज्ञानप्रागूर्ध्वकालिकत्वभेदेन द्विविधमपि । तत्, संचितक्रियमाणाख्यम् । क्रमात्, व्युत्क्रमात् । अश्लिष्टनष्टम्, अश्लिष्टं च नष्टं चानयोः समाहारस्तथा । क्रियमाणमश्लिष्टं श्लेषशब्दितलेपानापादकं संचितं तु नष्टं ध्वंसप्रतियोगि । स्यात्तमित्यादियोजनया 'तदधिगम उत्तरपूर्वाघयोरश्लेशविनाशौ तद्व्यपदेशात्' इत्यधिकरणाशयं सूचयन्प्राग्वदेव श्रीगुरुं स्तौति ब्रह्मज्ञस्येति । ननु *माधवाचार्यै+स्त्वत्राघाश्लेषविनाशयोः सगुणब्रह्मज्ञपरत्वमेव व्याख्यातम् । तद्यथा—

---

* छ.—विद्यारण्यैरेव पूर्वाश्रमस्थत्वेनोक्तसंज्ञैरित्यर्थः । + अत्रास्मिन्नेवाधिकरणेऽधिकरणमालाभिधानुष्टुप्श्लोकतट्टीकात्मकग्रन्थ इति यावत् ।

तत्र तावन्निर्गुणब्रह्मात्मविदः पापलेपशङ्काऽपि नोदेति। नाकार्षं न करोमि न कारिष्यामीति कालत्रयेऽप्यकर्तृब्रह्मस्वरूपत्वेन निश्चितत्वात्। न ह्यकर्तुर्लेपं मन्दा अपि शङ्कन्ते नापि सगुणब्रह्मविदो लेपोऽस्ति। अश्लेषविनाशयोः श्रुतत्वात्। ब्रह्मसाक्षात्कारादूर्ध्वं देहेन्द्रियव्यवहारवशात्संभावितस्य पापस्याश्लेषः श्रूयते तद्यथा—'पुष्करपलाश आपो न श्लिष्यन्ते एवमेवं विदि पापं कर्म न श्लिष्यते' इति। साक्षात्कारात्पूर्वं त्विह जन्मनि जन्मान्तरेषु च संचितस्य पापस्य विनाशः श्रूयते तद्यथा—'इषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते' इति। 'नाभुक्तं क्षीयते' इत्यादिशास्त्रं तु सगुणनिर्गुणब्रह्मज्ञानरहितविषयम्। तस्मान्नास्ति ज्ञानिनः पापलेप इति। तत्कथं त्वया निर्गुणब्रह्मवित्परत्वेन ज्ञानपूर्वोत्तरयोः पापयोरश्लेषविनाशौ व्युत्क्रमेणोच्येते इति चेत्। सत्यम्। यदाऽन्त*र्यामिपरमेश्वराख्यसगुणब्रह्मसाक्षात्कारवतोऽपि तत्साक्षात्कारात्पूर्वोत्तरभाविनोरघयोः क्रमाद्विनाशोऽश्लेषश्च भवति तदा निर्गुणब्रह्मविदस्तु स्वदृष्ट्याखण्डमेवाकर्त्रद्वैतात्मानुभवेन कर्मण एव तदुपलक्षितद्वैतस्यापि वस्तुत्वेनासंभवेऽपि लोकदृष्ट्या संभावितयोस्तयोस्तौ कैमुत्यसिद्धावेवेत्याशयेनैव तैस्तथोक्तमिति तत्र तावदित्यारभ्य मन्दा अपि शङ्कन्त इत्यन्तोक्तग्रन्थस्वारस्यादेवावसीयते। मया तु—क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' इति श्रुत्या।

> यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन।
> ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा॥

इति स्मृत्या च ज्ञानपूर्वक्षणपर्यन्तसंचितकर्मणां नाशः। तथा—'एष नित्यो महिमा ब्राह्मणस्य न वर्धते कर्मणा नो कनीयान्। तस्यैव स्यात्पदवित्तं विदित्वा न लिप्यते कर्मणा पापकेन' इति च श्रुत्या 'लिप्यते न स पापेन पद्मपत्रमिवाम्भसा' इति स्मृत्या च ज्ञानोत्तरक्षणमारभ्य यावत्प्रारब्धपरिसमाप्ति लोकदृष्ट्या प्रतिभासमानदेहेन्द्रियादिसंभावितक्रियमाणकर्मणामश्लेषश्च भवतीत्यभिप्रेत्य तथोक्तम्। न चैवमपि निरुक्तग्रन्थविरोधः पुनस्तव तदवस्थ एवेति वाच्यम्। मयाऽपि निरुक्ततदाशयमेव विवृण्वता बोधैक्यसिद्धावविरोधस्य यथेष्टचेष्टानिरोधस्य च साधितत्वात्। तथा हि—

> नाकार्षं नो कारिष्याम्यपि किल न करोमीति तत्त्वप्रमातो
> यस्याकर्तृत्वबुद्धिर्दृढतरमुदिताऽस्तीह कालत्रयेऽपि॥
> तस्याऽऽत्मज्ञस्य शङ्काऽपि खलु भवति का कर्मलेपस्य शास्त्रं
> ध्वंसालेपादि सर्वं सगुणविदि परं सार्थकं वस्तुदृष्ट्या॥

---

* वार्तिकमते साक्षिण एवेश्वरत्वं तस्य तु स्वप्रकाशचित्त्वादिना नित्यापरोक्षत्वेऽपि विचारादिना तत्साक्षात्कारस्तु जन्यजगज्जन्माद्यभिन्ननिमित्तोपादानत्वेनान्तर्यामितया तद्विषयकप्रमैवेति द्योतयितुमेवान्तर्यामीति।

इह वस्त्वित्याद्युक्तेर्व्यवहारदृष्ट्या तु निर्गुणविद्यपि निरुक्तरीत्या तत्सार्थकमेवेति भावः ।

सोऽपि भ्रामितचक्रवद्वितनुते सद्धर्ममेवानिशं
नानाजन्मतदीयसंस्कृतिवशात्तस्मान्नृणां संग्रहः ॥
अर्थादेव भवेद्यथेष्टविहृतेः कुत्र प्रसङ्गस्ततः ।
पश्चाद्यैः समता तु या व्यवहृतौ युक्ताऽस्ति सैवं न किम् ॥ इति ।

विस्तरस्त्वेतट्टीकायामेव द्रष्टव्य इति दिक् । नन्वष्टाङ्गयोगाभ्यासपरिपाकपूर्वकं तत्तदुपासकानामर्चिरादिमार्गेण ब्रह्मलोकं गतानां भवतु सगुणब्रह्मसाक्षात्कारेणोक्तफलमथापि सूतसंहितायां श्रीमद्बादरायणाचार्यचरणैः ।

परोक्षं ब्रह्मविज्ञानं शाब्दं देशिकपूर्वकम् ।
बुद्धिपूर्वकृतं पापं कृत्स्नं दहति वह्निवत् ॥

इति परोक्षब्रह्मविदोऽपि निरुक्तफलं कथमुक्तं कथं वा माधवाचार्यैस्तट्टीकायामिदं व्याख्याय तत्त्वविवेकेऽपि यथाश्रुतमेवोदाहृतमिति चेत् । बाढम् । 'अस्ति ब्रह्मेति चेद्वेद । सन्तमेनं ततो विदुः' इतिश्रुतेर्यावदेकादशदर्शनवादितदेकदेशिमततुच्छत्वबुद्धिनिर्धारणपूर्वकाद्वैतशास्त्रमात्रसिद्धमृगजलादिवदध्यस्तजगदधिष्ठानसत्यज्ञानानन्तानन्दात्मरूपब्रह्माद्वैतविषयकत्रैकालिकाबाधितत्वप्रकारकप्रमाया एव तप्तपरशुग्रहणप्रतिज्ञापर्यन्तायाः प्रकृते परोक्षज्ञानत्वेन विवक्षितत्वात्तद्वतस्तूक्तसगुणविदोऽप्यधिकत्वाच्च युक्तमेवोक्तवचनमिति तत्त्वमिति । एवम् 'अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति' इति भगवद्गीतावाक्यसारस्यानुसारेणात्र मूलकारैरेवाऽऽचार्यैरज्ञानवत्संशये विपर्यये च यद्बन्धकत्वमभ्यधायि तदपि द्वैतं मिथ्या न वेत्यादिवृत्त्या भोगमोक्षोभयाप्रवृत्त्या कषायात्मकदुःखैकफलकत्वेन दृश्यं सत्यमेवेति निर्धारणतः शब्दाद्यनन्तेष्टविषयककाम्यकर्मादिप्रवृत्त्या परमदुरवगाहलौकिकादितत्साधनसहस्रासादनविपदेकमूलकत्वेन चेत्यवश्यमेव वाच्यम् । तथा चेदिदं द्वयमज्ञानकार्यीभूतविक्षेपकुक्षिनिक्षिप्तमेवेति तु निर्विवादमेव । एवं चाविद्याया आवरणविक्षेपशक्तिद्वयवत्याः प्रकृतेऽयं विक्षेपांशः स्फुट एव । सोऽपि कार्यक्षमत्वप्रतिभासमानत्वाभ्यां धर्मविशेषाभ्यां द्विविध एव । तत्राऽऽद्यस्य कार्यक्षमत्त्वेनैवाविद्यावदनन्तदुःखदत्वलक्षणं बन्धकत्वमुचितमेव । अत एवोक्तं स्वात्मानुभवादर्शे 'तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः' इतिश्रुत्याशयं विशदयितुम्—

शास्त्रेण नश्येत्परमार्थसत्त्वं कार्यक्षमं नश्यति चापरोक्षात् ।
प्रारब्धनाशात्प्रतिभासनाश एवं त्रिधा नश्यति चाऽऽत्ममाया । इति ।

ननूपादानीभूतस्याज्ञानस्यैवाऽऽदौ नाशे सति कथं वा तत्कार्यीभूतयोः संशयविपर्यययोरवस्थितिरेव । न च संक्षेपशारीरके जीवन्मुक्तिपक्षं प्रकृत्य—

जीवन्मुक्तिस्तावदस्तिप्रतीतेर्द्वैतच्छाया तत्र चास्ति प्रतीतेः।
द्वैतच्छायारक्षणायास्ति लेशस्तस्मिन्नर्थे स्वानुभूतिः प्रमाणम्॥

इत्यङ्गीकृतस्य ज्ञानोत्तरमप्याप्रारब्धपरिसमाप्ति प्रतिभासमानद्वैतोपादानीभूतस्याज्ञानलेशस्य 'पश्यामि दग्धरशनामिव च प्रपञ्चम्' इति तदीयाग्रिमवाक्येनैव दग्धरशनान्यायेनावशिष्टस्य सत्त्वेन युक्तैवोक्तसंशयविपर्ययादिकार्याद्यवस्थितिरिति सांप्रतम्। दग्धरशनानिदर्शनेनैव तस्य कार्यक्षमत्वासत्त्वात्प्रकृतसंशयविपर्ययादेस्तु कार्यक्षमत्वेन विवक्षितत्वाच्चेति चेन्न। 'कार्यक्षमं नश्यति चापरोक्षात्' इति तन्नाशस्यैवापरोक्षज्ञानेनाभिहितत्वान्मूले तु ज्ञानोत्तरमपि शुकराघवनिदर्शनेन संशयाद्यभिधानं भर्जुज्ञानवत्प्रतिबद्धज्ञानाभिप्रायेणैवेत्युपपादितत्वाच्च। तस्मात्संशयादेः प्रतिबद्धज्ञानोत्तरमेव जायमानत्वमज्ञानवदनन्तदुःखदत्वलक्षणं बन्धकत्वं प्रमाणदोषशून्यत्वेन प्रमारूपस्यापि ज्ञानस्य प्रमात्रैकदोषेण प्रतिबद्धत्वं च युक्तमेवेति संक्षेपः। एतेन प्रथमविरोधोद्धारः साधुतर एव। तथा हि—तत्र तावद्दृढतमप्रमारूपापरोक्षतत्त्वज्ञानोत्तरमपि शुकादिनिदर्शनेन संशयाद्युपपादनं विरोधबीजं तत्तु भर्जुनिदर्शनपुरुषदोषैकमूलकतयोपपन्नतममेवेति क्वोक्तविरोधावसरः। अत एव द्वितीयोऽप्यसौ परास्तः। तत्रापि श्रवणादीनां सम्यगनुष्ठानेऽपि पुरुषदोषेणैवाकृतोपास्तित्वाख्येन सम्यगनुष्ठितैरपि श्रवणादिभिस्तात्कालिकासंभावनाविपरीतभावनानिरासलक्षणफलाभाससंभवेऽपि तत्संस्काराणामनुन्मूलितत्वात्कालान्तरे भरतवद्विषयध्यानसङ्गकामक्रोधसंमोहस्मृतिविभ्रमक्रमेण निरुक्तासंभावनादिसंस्कारैरेव विषयध्यानमहिम्ना स्वकार्यं कुर्वाणैर्हरिणममत्वाख्यविपरीतभावनोपचयलक्षणविपर्ययपरिपोषेण हरिणैकविषयकान्तकालिकस्मरणेन तज्जन्मवत्प्रतिबद्धस्य ज्ञानस्य मोक्षप्रदत्वसामर्थ्याभावः समुपपन्नतम एवेति नैव निरूपितद्वितीयविरोधस्याप्यवकाशः। निरुक्तवार्तिकादिकं तु संशयादिसंस्कारैरपि विधुराधिकारिपरमेवेति ध्येयं धीरैः। एवं तृतीयोऽपि विरोधोऽस्त्यविचारितरमणीय एव। तद्यथा—तत्र हि तत्त्वज्ञानस्य विपरीतभावनोपचयदोषेण मोक्षप्रदानसामर्थ्याभावो ह्यसति समाध्यभ्यास इति वादिना सुप्रसिद्धपूर्वग्रन्थेन सहाकृतोपास्तीनामपि मूलाविद्योच्छेदलक्षणमोक्षं साधयत्तत्त्वबोधं विदधतोत्तरग्रन्थेन च सार्धं परस्परं विरोध इत्येव मुख्योंऽशः। तत्र निरुक्तरीत्याऽकृतोपास्तित्वेऽपि येषां श्रीमच्छंकरगुरुवरचरणसरोजकरुणा वशादेव नैव विषयध्यानादिना संशयविपर्ययसंस्कारोपचयः संपन्नस्तत्पर एवोत्तरग्रन्थोऽस्तु, येषां तु कृतोपास्तीनामपि समुदाहृतभरतादीनामिवासौ दुरदृष्टवशात्संपन्नस्तत्पर एव पूर्वग्रन्थ इति नैवोक्ततृतीयविरोधोऽपि। तद्वच्चतुर्थविरोधोऽप्युक्तरीत्याऽर्थसिद्धबाध एव। तथा हि—तत्र कृतोपास्तीनामपि महामहिम्नां याज्ञवल्क्यादीनां कुतो न तत्त्वज्ञानतुल्यकालमेव विद्वत्संन्यासजीवन्मुक्त्यादीति तथा तन्निदर्शनेन ज्ञानिनो ब्रह्महत्यान्तपापैरप्यलेपो निरूपितोऽस्त्युपक्रमो-

पसंहारयोस्तु विपरितभावनोपचयदोषेण प्रतिबन्धस्तत्त्वज्ञाने कथमविरुद्धस्तेनेत्येवाऽऽक्षेपलक्ष्यम् । तत्तु कृतोपास्तेरपि भरतनिदर्शनेन दैवाद्विषयध्यानादिना प्रतिबन्धः संभवतीति न ज्ञानसमकालमेव विद्वत्संन्यासजीवन्मुक्त्यादेः प्रायोभिप्रायेण प्राक्तनग्रन्थे प्रतिपादनं विरुध्यतीति तद्वत्पापालेपस्तु परोक्षं ब्रह्मविज्ञानमित्यादिप्रागुपन्यस्तस्कान्दादिवाक्यैः परोक्षज्ञानेऽपि संभवतीति च सुसमाधेयमेवेति नायं चतुर्थोऽपि विरोधः । पञ्चमे तु विरोधे वासिष्ठोक्तभूमिकासप्तकमध्ये चतुर्थभूमिकाया एव तत्त्वज्ञानरूपत्वं तत्पूर्वोत्तरत्रिकयोस्तु क्रमात्तत्साधनत्वं फलत्वं चाभिहितम् । तत्र ज्ञानरूपचतुर्थभूमौ द्वैतप्रतिभासमात्रेण संशयविपर्ययाङ्गीकारः सुप्रसिद्धैः श्रुत्यादिभिः सह विरुद्ध इति सारस्तु पूर्वोक्तप्रतिबद्धज्ञानाप्रतिबद्धज्ञानाभ्यां विभिन्नविषयतयैव निराकरणीयः । प्रतिबद्धज्ञानपरं हि वासिष्ठवाक्यमप्रतिबद्धज्ञानपरं तु श्रुत्यादिवाक्यमिति विषयभेदः । द्वेधा हि ज्ञानक्रमः, योगविभागभेदात् । योगः प्रसिद्ध एव चित्तवृत्तिनिरोधरूपः । विभागस्त्वत्र चिज्जडयोरेकीभावावभासात्तद्विवेचनात्मा विचार एव । तदुक्तमत्रैवाधस्ताद्वासिष्ठवचसैव—

द्वौ क्रमौ चित्तनाशस्य योगो ज्ञानं च राघव ।
योगस्तद्वृत्तिरोधः स्याज्ज्ञानं सम्यगवेक्षणम् ॥
असाध्यः कस्य चिद्योगः कस्य चिज्ज्ञाननिश्चयः ।
प्रकारौ द्वौ ततो देवो जगाद परमेश्वरः ॥ इति ।

तेन तद्भूमिकासप्तकमपि प्रत्येकं द्विविधम् । तत्राऽऽद्यं त्वत्रैव प्रागुक्तमग्रे प्रपाञ्चितं च द्राङ्मूलकारैरेव—

ज्ञानभूमिः शुभेच्छाख्या प्रथमा समुदाहृता ।
विचारणा द्वितीया स्यात्तृतीया तनुमानसी ॥
सत्त्वापत्तिश्चतुर्थी स्यात्ततोऽसंसक्तिनामिका ।
पदार्थाभाविनी षष्ठी सप्तमी तुर्यगा स्मृता ॥ इति ।

द्वितीयं तु प्रतिपादितं तृप्तिदीपे—

अज्ञानमावृतिस्तद्वद्विक्षेपश्च परोक्षधीः ।
अपरोक्षमतिः शोकमोक्षस्तृप्तिर्निरङ्कुशा ॥ इति ।

एवं च सत्त्वापत्त्याख्यचतुर्थभूमौ ज्ञानरूपायामपि द्वैतप्रतिभासवशात्संशयविपर्ययसंस्कारैः प्रतिबद्धत्वसंभवादेव श्रीमद्भारतीतीर्थचरणैस्तत्स्थाने परोक्षधीरेव नियोजिता । पञ्चम्यादियोगभूमित्रये तु जीवन्मुक्तिरूपत्वमेवेति तत्स्थाने तैरपरोक्षमतिशोकमोक्षनिरङ्कुशतृप्तिलक्षणावस्थात्रयमेव निवेशितमिति रहस्यम् । नन्वेवं चेत्तर्हि कः क्रमोऽत्र भूमिकानां मुमुक्षुभिरादरणीय इति चेदुभयविधोऽपि । तद्यथा—

शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुं
न चेदेवं देवो न खलु कुशलः स्पन्दितुमपि ॥
अतस्त्वामाराध्यां हरिहरविरिञ्चादिभिरपि ।
प्रणन्तु स्तोतुं वा कथमिह समर्थो नरपशुः ॥

इति सौन्दर्यलहर्याद्यपद्य एव भगवद्भिर्भाष्यकारैरेव मायिमहेश्वरलीलाविग्रहार्धनारीश्वरेतर-विष्णुरुद्रब्रह्माख्यसत्त्वादिगुणमूर्तिलीलाविग्रहत्रयं कण्ठत एवोक्तम् । अत्र श्रुत्यादिप्रमाणप्रपञ्चन-व्यवस्थापनं तु सरस्वतीशृङ्गाराख्येऽस्मदीयैतद्व्याख्यान एव द्रष्टव्यं· विस्तरभयान्मया नैवेह प्रत-न्यते । ननु भवत्वेवमथापि किं प्रकृत इति चेदुच्यते । सूतसहितान्तर्गतसूतगीताप्रसिद्धमाधवाचा-र्यकृततट्टीकाविवृतरीत्याऽत्रान्तःसत्त्वबहिस्तमःप्रधानरुद्रलीलाविग्रहस्यान्तस्तमःपूर्वकबहिःसत्त्व-प्रधानविष्णुलीलाविग्रहस्य चेश्वरत्वेन स्वस्वसंस्कारबलादनन्तजन्मसूपासका जीवा अपि द्विविधा मुमुक्षवो दृश्यन्ते । केचिच्छैवप्रकृतयोऽन्तःसत्त्वप्रकृतिकत्वे नातीवनिर्मलाशयाः परं बहिरेव तमःप्रकृतिकत्वेन क्रूरा इव भासमानाः । परे तु वैष्णवप्रकृतयोऽन्तस्तमोवच्छिन्नाः परं तु बहिरेव सत्त्वप्रकृतिकत्वेन शान्ता इव भासमानाः । हरिहरयोरेव सत्त्वोपहितत्वादीश्वरत्वे-नोपास्यत्वं न तु चतुराननस्य । तस्य सबाह्याभ्यन्तरमपि रजःप्रकृतिकत्वात् ‘श्रेयांसि तत्र खलु सत्त्वतनोर्नृणां स्युः ’ इतिभागवतवचनाच्च । तथा च ये शैवप्रकृतयो मुमुक्षवस्तेषामन्तः-करणवैमल्याच्छीघ्रमेव चिज्जडविवेचनं बुद्धिमारोहतीति ते विचारमार्गमेवावलम्ब्य तद्भूमिका-क्रमेणैव कार्तार्थ्यभाजो भवन्ति । ये तु वैष्णवप्रकृतयो मुमुक्षवस्तेषामन्तःकरणजाड्यात्क्षिप्रं चिज्जडविवेचनं नैव बुद्धिमधिरोहतीति ते योगमार्गमेवावलम्ब्य तद्भूमिकाक्रमेणैव कार्तार्थ्यभाजो भवन्तीति तत्त्वम् । ननु भवत्वेवं व्यवस्था सर्वाऽपि तथाऽपि कोऽनयोः सुगमः शीघ्रेष्टदः सतां संमतो मार्ग इति चेदेवमेव बृहद्योगवासिष्ठनिर्वाणप्रकरणपूर्वार्धगत्रयोदशसर्गे श्रीरामेण पृष्टो भगवान्वसिष्ठः स्वाशयमविशदयत्—

श्रीराम उवाच—सम्यग्ज्ञानविलासेन वासनाविलयोदये ।
जीवन्मुक्तपदे ब्रह्मन्वद विश्रम्यते कथम् ॥

श्रीवसिष्ठ उवाच—संसारोत्तरणे युक्तिर्योगशब्देन कथ्यते ।
तां विद्धि द्विप्रकारां त्वं चित्तोपशमधर्मिणीम् ॥
आत्मज्ञानं प्रकारोऽस्या एकः प्रकथितो भुवि ।
द्वितीयः प्राणसंरोधः शृणु सोऽयं मयोच्यते ॥

श्रीराम उवाच—सुलभत्वाद्दुःखत्वात्कतरः शोभनोऽनयोः ।
येनावगतमात्रेण भूयः क्षोभो न बाधते ॥

श्रीवसिष्ठ उवाच—प्रकारौ द्वावपि प्रोक्तौ योगशब्देन यद्यपि ।

तथाऽपि रूढिमायातः प्राणयुक्तावसौ भृशम् ॥
एवं योगस्तथा ज्ञानं संसारोत्तारणक्रमे ।
समावुपायौ द्वावेव प्रोक्तावेकफलप्रदौ ॥
असाध्यः कस्यचिद्योगः कस्यचिज्ज्ञाननिश्चयः ।
मम त्वभिमतः साधो सुसाध्यो ज्ञानजः क्रमः ॥
यज्ज्ञानं न तदज्ञानं स्वप्नेष्वपि पुनर्भवेत् ।
ज्ञानं सर्वास्ववस्थासु नित्यमेव प्रवर्तते ॥
धारणासनदेशादिसाध्यत्वेन सुसाधताम् ।
नाऽऽयाति योगो ह्यथवा विकल्पेनैष शोभनः ॥
द्वावेव किल यत्नोत्थौ ज्ञानयोगौ रघूद्वह ।
तत्रोक्तं भवतो ज्ञानमन्तःस्थज्ञेयनिर्मलम् ॥
प्राणापानरथारूढो रूढदेशगुहाशयः ।
अनन्तसिद्धिदः साधो योगोऽयं प्रोच्यते शृणु ॥

मुखानिलस्फुरणनिरोधसंभवे स्थितिं गते नृपसुत चेतसः क्षये ।
समाहितस्थितिरिह योगयुक्तितः परे पदे विगलितभीर्निवत्स्यसि ॥ इति ।

अथ षष्ठविरोधस्तु विद्वत्संन्यासिनोऽपि विध्यङ्गीकारात्मा प्रागुपपादितरीत्या प्रतिबद्धज्ञानशालिविद्वत्त्वेनैव सुसमाधेयश्चित्तविश्रान्तेस्तस्य साध्यत्वात् । याज्ञवल्क्यब्रह्मवधपापप्रतिबन्दीग्रहणं त्वधस्तादेवोपपादितस्कान्दवाक्येन तदधिगमाधिकरणन्यायेन च परोक्षज्ञानादिमहिम्नैव निरस्तमिति नात्र ग्रन्थे कश्चिदप्यणुमात्रोऽपि भाति सतां विरोध इति शिवम् ।

ननु भवत्वेवमविश्रान्तचित्तस्य ज्ञाने संशयादिलक्षणफलप्रतिबन्धरूपाद्बाधाद्रक्षासापेक्षत्वं परं तु प्रकृते ज्ञानं विचारिततत्त्वमस्यादिमहावाक्यजन्यमहं ब्रह्मास्मीत्याकारकचरमप्रमारूपान्तःकरणवृत्त्यात्मकमेवेति तु निर्विवादमेव । तस्य तु चित्तवृत्तिविशेषत्वात्त्रिक्षणावस्थायित्वेन स्वयमेव नष्टत्वादियं क्व स्यादिति चेत् । सत्यम् । एवं हि प्रमाप्रक्रिया सर्वोपनिषदसंमता यत्प्रमायाः पूर्वक्षणे समुत्पत्तिर्द्वितीयक्षणे स्थितिस्तृतीयक्षणे स्वसमानाश्रयविषयाविद्यया सहैव स्वस्या अपि च समाप्तिः । ‘ शुद्धं ब्रह्मेति विषयीकुर्वाणा वृत्तिः स्वस्वेतरोपाधिनिवृत्तिरुदयते ’ इति कल्पतरूक्तेः क्षणभङ्गवादप्रसङ्गभङ्गार्थं यथा लघुचन्द्रिकायां ब्रह्मानन्दाचार्यैः प्रकृतं व्याख्यातं तथैव तु वास्तविकम् । तद्यथा—शुद्धं

ब्रह्मेतीति। इतिशब्दोऽत्र वृत्तिविषयसमाप्तौ। शुद्धब्रह्मेति शुद्धब्रह्मणो वृत्त्युपहितं रूपमित्यर्थः। तथा च वृत्त्युपहितं ब्रह्मैव विषयीकुर्वाणेत्यर्थः। अथवेतिशब्दो वृत्त्युपहितार्थकः। तथा च शुद्धशब्देनैव वृत्त्युपहितान्याविषयकत्वलाभः। स्वस्वेतरोपाधिनिवृत्तिः, स्वं स्वेतरश्चोपाधिर्दृश्यं तदुच्छेदव्याप्येत्यर्थः। इत्यत्रोदयत इति पदमविवृतमपि तत्तात्पर्यान्निरुक्तवृत्त्युदयतत्तदितरदृश्यध्वंसानां तुल्यकालिकत्वमेवेत्यभिप्रायकमिति प्रतिभाति। तत्रोत्पत्तिप्रतिबन्धस्य वह्नेररण्यार्द्रत्वादिवच्चित्तवैमल्यवैकल्ययुगुलस्याभावेऽपि प्रकृते संशयविपर्ययसंस्कारसंचयलक्षणप्रतिबन्धस्य मणिमन्त्रादेरिव सत्त्वे स्वकार्यीभूतदाहशक्तेः प्रतिबन्धेऽपि प्रकाशशक्तेः काष्ठेऽवस्थित्यावश्यकत्ववदिहापि स्वकार्यीभूतनिरुक्ताविद्याध्वस्तिप्रतिबन्धेऽपि संस्कारात्मना स्वावस्थितिसंभवान्नैवोक्तशङ्कावकाशः। अत्र विस्तरस्त्वद्वैतरत्नरक्षणीयमदीयव्याख्यायां मुक्तिरमालंक्रियाख्यायां मङ्गलवाद एवानुसंध्येयः। परं तु विश्रान्तिरपि चित्तस्य काचिन्निरुद्धैकाग्रान्यतराऽवस्थैव वाच्या। तथा च तत्रापि जन्यभावत्वेन विनाशित्वध्रौव्याद्घट्टकुटीप्रभातन्यायापत्तिरित्याशङ्कां प्रत्याह। **विश्रान्तचित्तस्य त्वि**त्यादिना—

**विश्रान्तचित्तस्य तु मनोनाशेन यदा जगदेव प्रलीयते तदा संशयविपर्ययोः कः प्रसङ्गः। जगत्प्रतिभासरहितस्य ब्रह्मविदो देहव्यवहारोऽपि विनैव स्वप्रयत्नं परमेश्वरप्रेरितेन प्राणवायुना निष्पाद्यते[1]। अत एव च्छन्दोगा आमनन्ति—'नोपजनं स्मरन्निदं शरीरं स यथा प्रयोग्य आचरणे युक्त एवमेवायमस्मिञ्छरीरे प्राणो युक्तः' इति।**

तुशब्दः प्रोक्तशङ्काशान्त्यर्थः। ननु प्रलयो हि स्वोपादाने संस्कारात्मकसूक्ष्मावस्थयाऽवस्थानमेव, पुराणप्रसिद्धप्राकृतिकवैकृतिकदैनंदिनाभिधप्रलयत्रये तथैव दृष्टत्वात्। आत्यन्तिकस्य तु तस्य वस्तुतोऽप्रतिबद्धतत्त्वज्ञानसमसमयसिद्धत्वेऽपि व्यवहारतः प्रारब्धपरिसमाप्तिक्षण एव मोक्षाख्यस्य संभवात्। तथा चात्र जगदेव बाध्यत इति स्वाभिसंध्यनभिज्ञाक्षेपं तद्ध्वननात्प्रतिक्षिपति—**जगत्प्रतिभास**इत्यादिना। अत्र ह्याचार्यस्य 'दृष्टिसृष्टिमिमां ब्रह्मानुभवी बहु मन्यते' इत्यनुभूतिप्रकाशे प्रकाशितत्वान्नानाजीववादेऽपि भामतीकृतां मत इव दृष्टिसृष्टिवाद एवाभिसंधित इति ब्रह्मविदो देहव्यवहारेऽपीत्यादिग्रन्थेन ध्वन्यते। एवं च स्वदृष्ट्या संकल्पैकरूपस्य जगतोऽप्रतिभासेऽप्यन्यदृष्ट्या तत्संभवेन प्रलयपदप्रयोगो युक्त एवेति भावः। तत्र मानमाह—**अत एवे**त्यादिना सावतरणम्।

अथोक्तश्रुतिं विवृणोति **उपजनमि**त्यादिना—

---

१ क. ख. ग. छ. च. निष्पद्य°।

उपजनं जनानां समीपे वर्तमानमिदं शरीरं न स्मरन्ब्रह्मविद्वर्तते। पार्श्वस्था जना एव तत्त्वविदः शरीरं पश्यन्ति । स्वयं तु निर्मनस्कत्वान्मदीयमिदं शरीरमिति न स्मरति । प्रयोग्यो रथशकटादिवहने प्रयोक्तुमर्हः शिक्षितोऽश्वबलीवर्दादिः स यथा सारथिना मार्गस्याऽऽचरणे प्रेरितः पुनः पुनः सारथिप्रयत्नमनपेक्ष्य स्वयमेव रथशकटादिकं पुरोवर्तिग्रामे नयति, एवमेवायं प्राणवायुः परमेश्वरेणास्मिञ्शरीरे नियुक्तः सत्यसति वा जीवप्रयत्ने व्यवहारं निर्वाहयति । भागवतेऽपि स्मर्यते—

देहं विनश्वरमवस्थितमुत्थितं वा
सिद्धो न पश्यति यतोऽध्यगमत्स्वरूपम् ।
दैवादुपेतमथ दैववशादपेतं
वासो यथा परिकृतं मदिरामदान्धः । इति ।

वसिष्ठोऽप्याह—पार्श्वस्थबोधिताः सन्तः पूर्वाचारक्रमागतम् ।
आचारमाचरन्त्येव सुप्तबुद्धवदक्षताः ॥ इति ।

सिद्धो न पश्यत्याचारमाचरन्तीत्युभयोः परस्परविरोध इति चेत् । न । विश्रान्तितारतम्येन व्यवस्थोपपत्तेः । तदेव तारतम्यमभिप्रेत्य श्रूयते—'आत्मक्रीड आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठः' इति । अत्र चत्वारः प्रतीयन्ते । ब्रह्मवित्प्रथमः, ब्रह्मविद्वरो द्वितीयः, ब्रह्मविद्वरीयांस्तृतीयः, ब्रह्मविद्वरिष्ठश्चतुर्थ इति । एते सप्तसु योगभूमिषु चतुर्थीं योगभूमिमारभ्य क्रमेण भूमिकाचतुष्टयं प्राप्ता इत्यवगन्तव्यम् ।

इदं हि 'जक्षत्क्रीडन्नममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजनं स्मरन्' इतिवाक्यशेषीभूतमिति बोध्यम् । तेन तद्वाक्यं भरतादेरप्रवृत्तिः पुराणोक्तेति चेत्तदा 'जक्षत्क्रीडन्रतिं विन्दन्नित्यश्रौषीर्न किं श्रुतिम् । इति चित्रदीपानुसारेण यथेष्टचेष्टाप्रतिष्ठापकमिति प्रजल्पन्तो भ्रान्ताः प्रत्यस्ताः । अत्र चित्रदीपकारैरेवैतद्वाक्यशेषस्यास्य द्वैतप्रतिभासशून्यऋषभदेवदेवहूत्याख्यजीवन्मुक्तपरतयैव व्याख्यातत्वात्' अनुभूतिप्रकाशेऽपि तैरेव तद्वाक्यस्य 'इन्द्रराजादिदेहेषु नाना खाद्यानि भक्षयन्' इत्यादिना सार्वात्म्यपरतयैव विवृतत्वाच्च । **सत्यसति वेति** । एवं चाजीवन्मुक्तानामपि देहनिर्वाहमीश्वरप्रेरितप्राणवायुरेव करोतीत्येव सिद्धान्तः परं तु भ्रान्ता देहेन्द्रियादितादात्म्याध्यासेनाहं करोमीत्यभिमन्यन्ते । तथा च भगवद्भारतीतीर्थप्रणीततृप्तिदीपप्रपञ्चितप्राग्दर्शितचिज्जडविभागभूमिकास्वप्यपरोक्षमतिशो-

---

१ क. ख. ग. च. छ. निर्वह° ।

क्रमोक्षनिरङ्कुशतृप्त्याख्यपञ्चम्यादिसप्तम्यन्तजीवन्मुक्तिभूमिकात्रयं समधिरूढानामपि स्वप्रयत्नाध्यासबाधेऽप्युक्तरीत्यैव देहनिर्वहणमिति द्योत्यते । तत्र भागवतमपि प्रामाणयति—**भागवतेऽपी**त्यादिना सावतरणम् । एवं च पुराणादेः स्मृतित्वेनैव प्रामाण्यमिति ध्वन्यते । एतेन भागवतमिदं बोपदेवकृतं न तु वैयासकं तत्तु देवीभागवतमेवेत्युपपुराणान्तर्गतं देवीभागवतमेव महापुराणान्तर्गतत्वेन मन्यमानाः शाक्ता अपि प्रत्युक्ताः । अवास्थितमुपविष्टम् । सिद्धः, ऋषभदेवदेवहूत्यादिः । उक्तेऽर्थे वसिष्ठवाक्यमपि संवादयति—**वसिष्ठोऽपी**त्यादिना सावतरणम् । एतयोर्विरोधमाशङ्क्य समाधत्ते—**सिद्ध** इत्यादिना । किं तत्तारतम्यमित्यतः श्रुत्यैव तत्प्रदर्शयति **तदेव**त्यादिना । तत्तात्पर्यमाह—**अत्रे**त्यादिना । शिष्टं तु स्पष्टमेव ।

कास्ताः प्रतिज्ञानभूमिका इत्यतः सप्रमाणं सावतरणं ताः प्रपञ्चयति **भूमयश्चे**त्यादिना।

**भूमयश्च वसिष्ठेन दर्शिताः—**

ज्ञानभूमिः शुभेच्छा स्यात्प्रथमा समुदाहृता ।
विचारणा द्वितीया स्यात्तृतीया तनुमानसा ॥
सत्त्वापत्तिश्चतुर्थी स्यात्ततोऽसंसक्तिनामिका ।
पदार्थाभाविनी षष्ठी सप्तमी तुर्यगा स्मृता ॥ इति ।
स्थितः किं मूढ एवास्मि प्रेक्षेऽहं शास्त्रसज्जनैः ।
वैराग्यंशुभयोरिच्छा प्रथमा प्रोच्यते बुधैः ॥
शास्त्रसज्जनसंपर्कवैराग्याभ्यासपूर्वकम् ।
सद्विचारप्रवृत्तिर्या प्रोच्यते सा विचारणा ।
विचारणाशुभेच्छाभ्यामिन्द्रियार्थेष्वसक्तता ॥
यत्र सा तनुतामेति प्रोच्यते तनुमानसा ।
भूमिकात्रितयाभ्यासाच्चित्तेऽर्थविरतेर्वशात् ॥
सत्त्वात्मनि स्थितिः शुद्धे सत्त्वापत्तिरुदाहृता ।
दशाचतुष्टयाभ्यासादसंसर्गफला च या ॥
रूढसत्त्वचमत्कारा प्रोक्ताऽसंसक्तिनामिका ।
भूमिकापञ्चकाभ्यासात्स्वात्मारामतया भृशम् ॥
आभ्यन्तराणां बाह्यानां पदार्थानामभासनात् ।
परप्रयुक्तेन चिरप्रयत्नेनावबोधनम् ॥
पदार्थाभाविनी नाम षष्ठी भवति भूमिका ।

---

१ ङ. च. °ग्यपूर्वमिच्छेति । शुभेच्छेत्युच्य° । २ क. ख. ग. घ. ङ. च. स्थिते ।

भूमिषट्कचिराभ्यासाद्भेदस्यानुपलम्भनात् ॥
यत्स्वभावैकनिष्ठत्वं सा ज्ञेया तुर्यगा स्थितिः । इति ।

अत्र भूमिकात्रितयं ब्रह्मविद्यायाः साधनमेव न तु विद्याकोटावन्तर्भवति । भूमित्रये भेदसत्यत्वबुद्धेरनिवर्तितत्वात्[1] । अत एवैतज्जागरणमिति व्यपदिश्यते । तदुक्तम्—

भूमिकात्रितयं त्वेतद्राम जाग्रदिति स्थितम् ।
यथावद्भेदबुध्द्येदं जगज्जाग्रति दृश्यते ॥ इति ।

* ततो वेदान्तवाक्यान्निर्विकल्पको ब्रह्मात्मैक्यसाक्षात्कारश्चतुर्थी भूमिका फलरूपा सत्त्वापत्तिः । चतुर्थभूमौ सर्वजगदुपादानस्य ब्रह्मणो वास्तमद्वितीयसत्तास्वभावं निश्चित्य तस्मिन्ब्रह्मण्यारोपितयोर्जगच्छब्दाभिधेययोर्नामरूपयोर्मिथ्यात्वमवगच्छति । मुमुक्षोः पूर्वोक्तं जागरणमपेक्ष्य सेयं भूमिः स्वप्नः । तदाह—

अद्वैते स्थैर्यमायाते द्वैते च प्रशमं गते ।
पश्यन्ति स्वप्नवल्लोकं चतुर्थीं भूमिकामिताः ॥
विच्छिन्नशरदभ्रांशं[2] विलाप्यं प्रविलीयते ।
सत्तावशेष एवाऽऽस्ते चतुर्थीं भूमिकामितः ॥
+ स्वस्वेतरं च सन्मात्रं यत्प्रबोधादुपासते ।
योगिनः सर्वभूतेषु सद्रूपान्नौमि तं हरिम् ॥
सत्तावशेष एवाऽऽस्ते चतुर्थीं भूमिकामितः । " इति ॥

सोऽयं चतुर्थीं भूमिकां प्राप्तो योगी ब्रह्मविदित्युच्यते । पञ्चम्यादयस्तिस्रो भूमयो जीवन्मुक्तेरवान्तरभेदाः । ते च निर्विकल्पसमाध्यभ्यासं[3]कृतेन विश्रान्तितारतम्येन संपद्यन्ते । पञ्चमभूमौ निर्विकल्पकात्स्वयमेव व्युत्तिष्ठते । सोऽयं योगी ब्रह्मविद्वरः । षष्ठभूमौ पार्श्वस्थैर्बोधितो व्युत्तिष्ठते । सोऽयं ब्रह्मविद्वरीयान् । तदेतद्भूमिकाद्वयं सुषुप्तिर्गाढसुषुप्तिरिति चाभिधीयते । तदाह—

---

* क. ख. ग. घ. ङ. च. छ. पुस्तकेषु तत इत्यारभ्य सत्त्वापत्तिरित्यन्तो विषयो नास्ति ।
+ क. ख. ग. घ. पुस्तकेष्वयं श्लोको नास्ति । अयं चाधिकोऽप्युक्तश्च ।

---

१ क. ङ. °निवारित° । २ क. ख. ग. घ. ङ. च. भ्रांशविलयं प्र° । ३ क. ङ. च. °सबलेन ।

**पञ्चमीं भूमिकामेत्य सुषुप्तिपदनामिकाम् ।
शान्ताशेषविशेषांशस्तिष्ठत्यद्वैतमात्रके ॥
अन्तर्मुखतया नित्यं बहिर्वृत्तिपरोऽपि सन् ।
परिश्रान्ततया नित्यं निद्रालुरिव लक्ष्यते ॥**

असंसक्तिनामिका पञ्चमीति शेषः । एतासामन्वर्थकान्येव नामानि तथैव विवरणात् । **इन्द्रियार्थेष्विति ।** इन्द्रियैरर्थ्यमानेष्वभिलषितशब्दादिविषयेष्वित्यर्थः । असक्तता, अनासक्तिरप्रीतिरिति यावत् । उदेतीत्यार्थिकम् । यत्रेत्यनेन संबध्यते । सा, सद्विचारप्रवृत्तिः पूर्वभूमिकोक्ताऽपीत्यर्थः । तनुतां स्वल्पतामित्येतत् । **रूढसत्त्वेति ।** बुध्याधिरूढसत्त्वगुणजन्यपुनःपुनर्निर्विकल्पस्थितिचमत्कारेत्यर्थः । अपरं त्वतिसरलमेव ।

ततः किं तत्राऽऽह । **कुर्वन्नि**त्यादिना—

**कुर्वन्नभ्यासमेतस्यां भूमिकायां विवासनः ।
षष्ठीं गाढसुषुप्त्याख्यां क्रमात्पतति भूमिकाम् ॥
यत्र नासन्न सद्रूपो नाहं नाप्यनहंकृतिः ।
केवलं क्षीणमनन आस्ते द्वैतै[1]क्यवर्जितः ॥
अन्तः शून्यो बहिः शून्यः शून्यकुम्भ इवाम्बरे ।
अन्तः पूर्णो बहिः पूर्णः पूर्णकुम्भ इवार्णवे ॥ इति ।**

**गाढं निर्विकल्पसमाधिं प्राप्तस्य संस्कारमात्रशेषस्य चित्तस्य मनोराज्यं कर्तुं बाह्यपदार्थान्ग्रहीतुं वा सामर्थ्याभावादाकाशावस्थितकुम्भवदन्तर्बहिःशून्यत्वम् । स्वयंप्रकाशसच्चिदानन्दैकरसे ब्रह्मणि निमग्नत्वे[2]न बहिश्च सर्वत्र ब्रह्मदृष्ट्या समुद्रमध्यस्थापितजलपूर्णकुम्भवदन्तर्बहिःपूर्णत्वम् । तुरीयाभिधां सप्तमभूमिं प्राप्तस्य योगिनः स्वतः परतो वा व्युत्थानमेव नास्ति । तादृशमेवोद्दिश्य 'देहं विनश्वरमवस्थितमुत्थितं वा' इत्यादिभागवतवाक्यं प्रवृत्तम् । असंप्रज्ञातसमाधिप्रतिपादकानि योगशास्त्राण्यत्रैव पर्यवसितानि सोऽयमीदृशो योगी पूर्वोदाहृतश्रुतौ ब्रह्मविद्वरिष्ठ इत्युच्यते । तदेवं पार्श्वस्थबोधितः सिद्धो न पश्यतीत्यनयोर्भूमिद्व[3]ये व्यवस्थितत्वान्न कोऽपि विरोधः । तत्रायं संग्रहः—पञ्चम्यादिभूमित्रयरूपायां जीवन्मुक्तौ सं[4]पद्यमानायां द्वैतप्रतिभासाभावेन**

---

१ क. ख. ग. घ. ङ. च. °क्यनिर्गतः । २ ग. घ. ङ. छ. °न स° । ३ क. ख. घ. च. °येन व्य° । ४ घ. संपाद्य° ।

**संशयविपर्ययप्रसङ्गाभावादुत्पन्नं तत्त्वज्ञानमबाधेन रक्षितं भवति। सेयं ज्ञानरक्षा जीवन्मुक्तेः प्रथमं प्रयोजनम्।**

अन्तःपूर्ण इत्यादेरर्थमाह—**गाढं निर्विकल्पसमाधिमिति**। फलितमाह—**तत्रायं संग्रह** इत्यादिना। उपसंहरति—**सेयमिति**। जीवन्मुक्तेः, प्रकृतपञ्चम्यादित्रिभूमिकयोगाभ्यासासादितावस्थाविशेषस्येत्यर्थः। उपलक्षणमिदं प्रागुक्तचिज्जडविभागीयभूमिकासप्तकान्तर्गतापरोक्षज्ञानमोक्षमोक्षनिरङ्कुशतृप्त्याख्यपञ्चम्यादिभूमिकात्रयात्मकस्वाभिमतजीवन्मुक्तेरपि। अत एवोक्तमधस्तान्मूल एव। ननु विजिगीषोरात्मबोध एव नास्ति।

रागो लिङ्गमबोधस्य चित्तव्यायामभूमिषु।
कुतः शाद्वलता तस्य यस्याग्निः कोटरे तरोः॥

इत्याचार्यैरभ्युपगमादिति चेन्न।

रागादयः सन्तु कामं न तद्भावोऽपराध्यते॥
उत्खातदंष्ट्रोरगवदविद्या किं करिष्यति।

इत्यत्र तैरेव रागाद्यभ्युपगमात्। न च परस्परव्याहतिः। स्थितप्रज्ञे ज्ञानिमात्रे च वचनद्वयस्य व्यवस्थापनोपयुक्तत्वात्। ननु ज्ञानिनो रागाद्यभ्युपगमे धर्माधर्मद्वारेण जन्मान्तरप्रसङ्ग इति चेन्नैवम्। अदग्धबीजवदविद्यापूर्वककामादेरेव मुख्यरागादित्वेन पुनर्जन्महेतुत्वात्। ज्ञानिनस्तु दग्धबीजवदाभासमात्रा एव रागादयः। एतदेवाभिप्रेत्योक्तम्—

उत्पद्यमाना रागाद्या विवेकज्ञानवह्निना।
तदा तदा प्रदह्यन्ते कुतस्तेषां प्ररोहणम्। इति॥

तर्हि स्थितप्रज्ञस्यापि ते सन्त्विति चेन्न। तत्काले मुख्यवदेवाऽऽभासमानानां बाधकत्वात्। रज्जुसर्पोऽपि मुख्यसर्पवदेव तदानीं भीषयन्नुपलभ्यते तद्वत्। तर्ह्याभासत्वानुसंधानानुवृत्तौ न कोऽपि बाध इति चेत्। चिरं जीवतु भवान्, इयमेवास्मदभिमता जीवन्मुक्तिः याज्ञवल्क्यस्तु विजिगीषुदशायां नहीदृशः, चित्तविश्रान्तये विद्वत्संन्यासस्य तेन करिष्यमाणत्वादिति। सदेवं द्वैते मिथ्यात्वानुसंधानमेव जीवन्मुक्तिरिति। वास्तविकः संन्यासोऽपि परमात्मबोध एव। तदुक्तं गीताभाष्ये—न हि केवलसम्यग्दर्शननिष्ठा विद्यादिसंसारबीजं नोन्मूलयति कदाचिदित्यर्थः॥ १२॥ परमार्थदर्शिन एवाशेषकर्मसंन्यासित्वं भवति। अविद्याध्यारोपितत्वादात्मनि क्रियाकारकफलानामित्यष्टादशाध्यायभाष्य इति।

एवं जीवन्मुक्तेः प्रतिज्ञातपञ्चप्रयोजनेषु मध्ये ज्ञानरक्षाख्यं प्रथमं तन्निरूप्योद्देशक्रमप्राप्तं तपः संज्ञं द्वितीयं तदुपक्रमते—

तपो द्वितीयं प्रयोजनम् । योगभूमीनां देवत्वादिप्राप्तिहेतुतया तपस्त्वं द्रष्टव्यम् । तद्धेतुत्वं चार्जुनभगवतोः श्रीरामवसिष्ठयोश्च प्रश्नोत्तराभ्यामवगम्यते । अर्जुन उवाच—

अयतिः श्रद्धयोपेतो योगाच्चलितमानसः ।
अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ॥
कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति ।
अप्रतिष्ठो महाबाहो विमूढो ब्रह्मणः पथि ॥
* एतन्मे संशयं कृष्ण च्छेत्तुमर्हस्यशेषतः ।
त्वदन्यः संशयस्यास्य च्छेत्ता न ह्युपपद्यते ॥

श्रीभगवानुवाच—

पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते ।
न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति ॥
प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः ।
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥
अथ वा योगिनामेव कुले भवति धीमताम् ।
एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥
तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् ।
यतते च ततो भूयः संसिद्धौ कुरुनन्दन । इत्यादि ॥

श्रीराम उवाच—

एकामथ द्वितीयां वा तृतीयां भूमिकामुत ।
आरूढस्य मृतस्याथ कीदृशी भगवन्गतिः ॥

श्रीवसिष्ठ उवाच—

योगभूमिकयोत्क्रान्तजीवितस्य शरीरिणः ।
भूमिकांशानुसारेण क्षीयते पूर्वदुष्कृतम् ॥
ततः सुरविमानेषु लोकपालपुरेषु च ।
मेरूपवनकुञ्जेषु रमते रमणीसखः ॥
भुक्ते सुकृतसंभारे दुष्कृते च पराकृते ।

---

* क. ख. ग. घ. छ. पुस्तकेषु एतदादिश्लोकद्वयं नास्ति । च. पुस्तके त्वयमेक एव श्लोको नास्ति । ङ. पुस्तके चैतदादिश्लोकद्वयं व्यत्यासेन वर्तते, किं चैतन्म इत्यस्मात्पूर्वमर्जुन उवाचेति, पार्थ नैवेहेत्यस्मात्प्राणेत्यस्माच्च पूर्वं भगवानुवाचेति च वर्तते ।

भोगक्षयपरिक्षीणे जायन्ते योगिनो भुवि ॥
शुचीनां श्रीमतां गेहे गुप्ते गुणवतां सताम् ।
तत्र प्राग्भावनाभ्यस्तयोगभूमित्रयं बुधाः ॥
स्पृष्ट्वा परिपतन्त्युच्चैरुत्तमं भूमिकाक्रमम् । इति ।

अस्त्वेवं योगभूमिकानां देवलोकप्राप्तिहेतुत्वं, तावता तपस्त्वं कुत इति चेच्छ्रुतेरिति ब्रूमः। तथा च तैत्तिरीया आमनन्ति—'तपसा देवा देवतामग्र आयन्। तपसर्षयः सुवरन्वविन्दन्' इति ।

तत्त्वज्ञानात्प्राचीनस्य भूमिकात्रयस्य तपस्त्वे सति तत्त्वज्ञानोत्तरकालीनस्य निर्विकल्पसमाधिरूपस्य पञ्चम्यादिभूमिकात्रयस्य तपस्त्वं कैमुतिकन्यायसिद्धम् । अत एव स्मर्यते—

मनसश्चेन्द्रियाणां च ऐकाग्र्यं परमं तपः ।
तज्ज्यायः सर्वधर्मेभ्यः स धर्मः पर उच्यते ॥ इति ।

यद्यप्यनेन न्यायेन तपसा प्राप्यं जन्मान्तरं नास्ति तथाऽपि लोकसंग्रहार्थेदं तपो युज्यते ।

**तप इति** । ननु प्रथमादियोगभूमित्रयस्य ज्ञानसाधनत्वाच्चतुर्थ्यास्तद्रूपत्वात्पञ्चम्यादित्रयस्य तु तत्फलत्वात्कथमुक्तेतरसुखसाधकतपस्त्वमुपपद्यत इत्यत्राऽऽह—**योगभूमीनामिति** । एवं च भोगमोक्षोभयसाधकत्वमत्र ज्ञानभूमीनां तु तन्मात्रसाधकत्वमिति मनसि निधायैव प्रागुदाहृतोभयप्रतिपादकवासिष्ठवाक्ये 'मम त्वभिमतः साधो सुसाध्यो ज्ञानजः क्रमः' इति भगवद्वसिष्ठस्य तथैतदाद्यखिलाद्वैतशास्त्राशयविदोः श्रीभारतीतीर्थविद्यारण्यगुर्वोश्च तृप्तिदीपोपन्यस्तेनाज्ञानमावृत्तिस्तद्वदित्यादितदेकभूमिकाक्रमेण तथेयमेवेत्यनुपदोक्तवाक्येन च तत्रैवाऽऽदरः समुपपद्यत इत्याकूतम् । तत्र मानमाह—**तद्धेतुत्वं चे**त्यादिना । **दुष्कृते चेति । भोगक्षयेति** । एवं च दुष्कृते योगजधर्मेण पराकृते तथा तदनिरस्ये महेन्द्रादेः सहस्रभगप्राप्त्यादिरूपभोगस्य यः क्षयस्तेन परिक्षीणे च सतीत्यर्थः । गुप्ते, तपसा रक्षित इत्यर्थः । **उत्तममिति** । एतेन चतुर्थ्या मध्यमत्वं प्राथमिकत्रिकस्याधमत्वं च ध्वनितम् । तत्राप्याशङ्क्य समाधत्ते—**अस्त्वेवमि**त्यादिना । एवमपि ज्ञानोत्तरकालिकभूमिकात्रये कथं तपस्त्वं तत्राऽऽह—**तत्त्वज्ञानादि**त्यादिना । तत्रापि मानमाह—**अत एवे**त्यादिना सावतरणम् । नन्वेवमप्यस्य तपसः क्वोपयोग इत्यत आह—**यद्यपी**त्यादिना ।

तत्र मानमाह**ात एवे**त्यादिना—

**अत एव भगवानाह—**

**'लोकसंग्रहमेवापि संपश्यन्कर्तुमर्हसि' इति ।**

**संग्राह्यश्च लोकस्त्रिविधः, शिष्यो भक्तस्तटस्थश्चेति । तत्र शिष्यस्यान्तर्मुखे योगिनि गुरौ प्रामाणिकत्वबुद्ध्यातिशयेन तदुपदिष्टे तत्त्वे परमं विश्वासं प्राप्य चित्तं सहसा विश्राम्यति । अत एव श्रूयते ।**

**यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।**
**तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ इति ।**

**स्मर्यते च—**

**श्रद्धावाल्ँलभते ज्ञानं तत्परः संयतेन्द्रियः ।**
**ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥ इति ।**

**अन्नप्रदाननिवासस्थानकल्पनादिना योगिनं सेवमानो भक्तस्तदीयं तपः स्वयमेवाऽऽदत्ते । तथा च श्रूयते—'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इति ।**

ननु के वाऽस्य लोकाः संग्राह्या इत्यत आह—**संग्राह्यश्चे**त्यादिना । तत्रास्य शिष्यस्य संग्रहप्रकारं प्रकाशयति—**तत्र शिष्यस्ये**त्यादिना । तत्र श्रुतिमनुकूलयति—**अत एवे**त्यादिना सावतरणम् । अथोद्देशक्रमप्राप्तस्य भक्तस्य लक्षणमनुग्रहं चाऽऽह—**अन्नप्रदाने**त्यादिना । तत्र मानमाह—**तथा चे**त्यादिना । अत्रोपपत्तिस्तु प्रपञ्चिता मदीयाद्वैताधिकरणचिन्तामणिमालायां साधनकाण्डे तृतीयगुच्छे पञ्चदशाधिकरणविवरणपद्ये—

ज्ञानित्यक्तं हि पुण्याद्यपर उपभुनक्तीह नो वाऽन्त्य आप्तो
विद्याभेदात्तदीयैस्तदुपभुगुदिताऽस्तीशविद्येव वेदे ॥
तत्त्यागोऽद्वैतविद्याग इति नयदिहोभे अपीष्टे यदैक्या-
दद्वैतं शंकरं तं परमगुरुमहं सच्चिदानन्दमीडे ॥

टीका नन्वेवमपि ज्ञानित्यक्तं हि पुण्यादि 'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य' इत्यादिसगुणविद्याप्रकरणे ताण्डिसमाम्नातम् । तथा 'तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इत्याथर्वणिकपठितम् । निरञ्जनः, भाविजन्मकारणरहितः । साम्यं, ब्रह्मस्वरूपमित्यर्थ इति श्रीमाधवाचार्याः । एवं सगुणविदा पुण्यादि तथा निर्गुणविदा च तत्त्यक्तम् । इह, लोके शास्त्रे च । अपर उपभुनक्ति नो वा । 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इति शाट्यायनिपठिता । अस्यायमर्थः—ज्ञानिनः पुत्रस्थानीयाः सर्वेऽपि प्राणिनस्तदीयं वित्तस्थानीयं कर्म यथायोग्यं

गृह्णन्तीति श्रीमाधवाचार्याः । एवं चेदं निर्गुणविद्याप्रकरणस्थमेव । 'ज्ञानी त्वात्मैव मे मतम्' इत्यादिस्मृतौ ज्ञानिपदस्य तत्रैव रूढिदर्शनात्, सर्वप्राणिप्रयुक्तपितृत्वस्य सर्वाधिष्ठानत्वेन तत्रैव संभवाच्च । तथा 'तत्र सुकृतदुष्कृते विधूनुते । तस्य प्रिया ज्ञातयः सुकृतमुपयन्त्यप्रिया दुष्कृतम्' इति कौषीतकिसमाम्नाता च तस्य पुत्रादिशब्दितभक्तादिशब्दितसुकृताद्युपभुक्तिः । तत्र, ब्रह्मलोकप्राप्तिवेलायामित्यर्थ इति श्रीमाधवाचार्या एव । इति वचनचतुष्टयेन संदेहे सति । विद्याभेदात् । तथा हि—तदीयैर्ज्ञानिसंबन्धिभिः प्रियजनादिभिः । तदुपभुक्, तत्कर्मस्वीकृतिः । वेद ईशविद्येव, सगुणविद्यायामेव । उदिता, उक्ताऽस्ति । तथा तत्त्यागः, ज्ञानिकर्तृकपुण्यादित्यागः । अद्वैतविद्यागः, निर्गुणविद्याप्रकरणपठितोऽस्ति । निरुक्तकौषीतकिश्रुतावितरस्वीकारवाक्यस्य सगुणविद्याप्रकरणस्थत्वम् । 'तदा विद्वान्पुण्यपापे विधूय' इत्यादित्यागवाक्यं तु मुण्डकशाखायामाथर्वणिकैर्निर्गुणविद्याप्रकरण एवाधीयत इति विद्याभेदोऽस्तीति हेतोरन्त्यो नैवोपभुनक्तीति चरमः पक्ष आप्तः प्राप्त इति चेन्न । कुतः । यद्यस्माद्धेतोरिहाद्वैतशास्त्रे मानान्तरप्रसिद्धिविरोधयोरभावेन भूतार्थवादत्वात् । उभे अपि, ब्रह्मवित्कर्तृकपुण्यादित्यागतत्पुत्रादिकर्तृकतदुपभुक्ती अपि । यदैक्यात्, यस्य परमात्मन ऐक्यात्त्वो * पलक्षितसवेदृश्यमिथ्यात्वपूर्वकं स्वावच्छेद्यचिन्मात्राभेदबोधात् । तमित्यादियोजनया प्राग्वदेव । 'हानौ तूपायनं शब्दशेषत्वात्कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम्' इत्यधिकरणाशयेन श्रीगुरुं स्तौति—ज्ञानीति । नन्वेवं निर्गुणज्ञानिना जाग्रता देवदत्तेन स्वप्नकृताश्वमेधब्रह्मवधजन्यपुण्यपापे इव तत्त्वापरोक्षप्राक्क्षणपर्यन्तमनादिकालमारभ्य संचिते पुण्यपापे मिथ्यात्वेन परित्यक्ते स्यातां नाम तथाऽपि तयोस्तद्भक्तादिभिर्ग्रहणं श्रुत्युक्तमपि कथं सूपपन्नं स्यात् । न च नेयं श्रुत्याद्युक्तिर्ब्रह्मविदः संचितस्य । तस्य तु निरुक्तयुक्त्या 'क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' इति श्रुत्या 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा' इति स्मृत्या चाद्वैतब्रह्मात्मैक्यसाक्षात्कारक्षण एव तन्मात्रविषयकमूलाज्ञानबाधनान्तरीयकसिद्धतत्कार्यीभूततज्ज्ञाप्यतापन्नाकाशादीश्वरादियावद्द्वैतबाधान्यथानुपपत्त्यैव तथात्वस्येष्टत्वात् । किंतु तदन्तःपातिनः फलप्रदानाय प्रवृत्तस्य तत्त्वेनैव प्रारब्धाख्यस्य कर्मविशेषस्य यावत्फलोपभोगं तदुपयुक्तदेहेन्द्रियादिसकलदृश्यसंघातं संस्थापयतः प्रतीयमानत्वेन मुक्तेषु न्यायाद्यावत्तद्वेगपरिसमाप्तिसंभावितलोकदृष्टिकल्पितज्ञाताज्ञातपुण्यपापयोरेव गङ्गास्नानसूर्यदर्शनादिपिपीलिकामरणधृतस्त्रीवेषदर्शनादिक्रियादिजन्ययोः क्रियमाणयोरिति सांप्रतम् । एवमपि तदीयदृष्ट्या क्रियमाणपुण्यपापयोरपि स्वप्नानुष्ठिताश्वमेधादिन्यायेन मिथ्यात्वस्य सुतरामिष्टत्वाद्वक्ष्यमाणतदधिगमाधिकरणन्यायाच्च ज्ञानिकर्तृकाश्लेषलक्षणत्यागसंभवेऽपि निरुक्ततद्भक्तादिकर्तृकतद्ग्रहणोपपत्तिप्रश्नतादवस्थ्यमेवेति चेन्न । तत्त्वज्ञदृष्ट्या स्वपुण्यपापयोर्मिथ्या-

---

* ज्ञानिशरीरं ।

त्वेऽपि तद्भक्तादिदृशा तत्र सत्यत्वेन तदीयश्रद्धाद्यतिशयेन च तदुपसंग्रहणादेः सुतरां संभवात् । तथा चोक्तमिदं साक्षेपं सनिदर्शनं च मदीयबोधैक्यसिद्धौ—

नन्वात्मज्ञक्रिया प्राग्गुरुभिरभिहिता भर्जितव्रीहितुल्या ।
नैतद्दावाग्निदग्धादपि वनकदलीवेतसानां तु बीजात् ॥
आस्ते प्रारम्भवृष्ट्येत्यपि सुनिगदितं शास्त्र एवेति तस्मा-
त्तद्बीजं मां निवेद्यं गुरुवरचरणैः संशयध्वान्तसूर्यैः ॥
सत्यं तद्वेतसानां जनयति न तरूंन्किंतु वन्यैकरम्भाः
प्रावृट्प्रारम्भवृष्ट्या भवति खलु तथा ब्रह्मवित्सर्वकर्म ।
तद्भक्ताद्येषु नैजाकृति जनयति तत्स्फीतरत्यादिरीत्या
तस्मात्तत्तत्सुखादि द्विगुणमपि भवेद्वन्यरम्भोपमानम् । इति ॥

भवति ब्रह्मविद्याग्निना मिथ्यात्वरूपभर्जनमापादितमिति शेषः। एवं सत्तद्भक्ताद्येषु ब्रह्मविद्भक्तप्रभृतिषु नैजाकृति स्वदृशं कर्मान्तरं जनयति । तदित्यादि । ब्रह्मविद्भक्तादिकृतविपुलप्रीत्यादिसरण्या । तस्माद्ब्रह्मवित्कर्मणा तद्भक्तादिषु निर्मितस्वसमानकर्मणः सकाशादित्यर्थः । तत्तादित्यादि । वन्येति । यथा वनकदल्याः पत्रपुष्पफलानि द्विगुणं महान्ति भवन्ति तद्वदित्यर्थः । द्विगुणमपीत्याद्यन्वयः । विस्तरस्तु तट्टीकायामेव ज्ञेयः । सगुणज्ञस्याप्येतद्भूतार्थवादत्वात्संभवत्येवेति । नन्वेवमपि स्वदृष्ट्या मिथ्यैव सत्परत्र स्वसंबद्धे तदादिदृष्ट्या सत्सत्स्वसमतयैव तत्र सदेव कार्यं जनयतीति विवक्षिते प्रकृतेऽर्थे निदर्शनं नैवाऽऽयातमिति चेन्न । तस्यापि तत्रैवाग्र उक्तत्वात् । तद्यथा—

आदर्शप्रतिबिम्बितार्करुचितोऽप्यन्तःपुरान्तस्तम-
स्तद्वातायनयाततात्किरणतस्तत्संनिधेः शाम्यति ॥
तद्वद्ब्रह्मविदाहितं तु सुकृताद्येतत्प्रियद्वेषिणो-
रन्तः संप्रति बिम्बति प्रतिदिनं तत्संनिकर्षात्किल ॥ इति ।

अथ क्रमप्राप्तं तटस्थस्य योग्यनुग्राह्यत्वं विशदयितुं तं भिनत्ति—

**तटस्थोऽपि द्विविधः, आस्तिको नास्तिकश्चेति । तत्राऽऽस्तिको योगिनः सन्मार्गाचरणं दृष्ट्वा स्वयमपि सन्मार्गे प्रवर्तते । तथा च स्मर्यते—**

**यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।**
**स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ इति ।**

**नास्तिकोऽपि योगिना दृष्टः पापान्मुच्यते । तदुक्तम्—**

यस्यानुभवपर्यन्ता तत्त्वे बुद्धिः प्रवर्तते ।
तद्दृष्टिगोचराः सर्वे मुच्यन्ते सर्वपातकैः ॥ इति ।

अनेन प्रकारेण सर्वप्राण्युपकारित्वं योगिनो विवक्षित्वा पठ्यते—

* "स्नातं तेन समस्ततीर्थसलिले सर्वाऽपि दत्ताऽवनि-
र्यज्ञानां च सहस्रमिष्टमखिला देवाश्च संपूजिताः ।
संसाराच्च समुद्धृताः स्वपितरस्त्रैलोक्यपूज्योऽप्यसौ
यस्य ब्रह्मविचारणे क्षणमपि स्थैर्यं मनः प्राप्नुयात् ॥

कुलं पवित्रं जननी कृतार्था विश्वंभरा पुण्यवती च तेन ।
अपारसंवित्सुखसागरेऽस्मिँल्लीनं परे ब्रह्मणि यस्य चेतः ॥ इति ।

न केवलं योगिनः शास्त्रीयव्यवहारस्यैव तपस्त्वं किंतु सर्वस्यैव लोकव्यवहारस्यापि । तथा च तैत्तिरीयाः स्वशाखायां नारायणस्यान्तिमेनानुवाकेन विदुषोऽपि महिमानमामनन्ति । तस्मिंश्चानुवाके पूर्वभागे योगिनोऽवयवा यज्ञाङ्गद्रव्यत्वेनाऽऽम्नाताः—'तस्यैवं विदुषो यज्ञस्याऽऽत्मा यजमानः श्रद्धा पत्नी शरीरमिध्ममुरो वेदिर्लोमानि बर्हिर्वेदः शिखा हृदयं यूपः काम आज्यं मन्युः पशुस्तपोऽग्निर्दमः शमयिता दक्षिणा वाग्घोता प्राण उद्गाता चक्षुरध्वर्युर्मनो ब्रह्मा श्रोत्रमग्नीत्' इति । अत्र च दानं दक्षिणेति दानपदमध्याहर्तव्यम् । 'अथ यत्तपो दानमार्जवमहिंसासत्यवचनमिति ता अस्य दक्षिणाः' इति च्छन्दोगैराम्नातत्वात् । उक्तानुवाके मध्यमभागेन योगिव्यवहारास्तज्जीवनकालाश्च ज्योतिष्टोमावयवक्रियारूपत्वेनोत्तरभागे सर्वयज्ञावयवक्रियारूपत्वेन चाऽऽम्नाताः 'यावद्ध्रियते सा दीक्षा यदश्नाति तद्धविर्यत्पिबति तदस्य सोमपानं यद्रमते तदुपसदो यत्संचरत्युपविशत्युत्तिष्ठते च स प्रवर्ग्यो यन्मुखं तदाहवनीयो या व्याहृतिराहुतिर्यदस्य विज्ञानं तज्जुहोति यत्सायं प्रातरत्ति तत्समिधं यत्प्रातर्मध्यंदिनꣳ सायं च तानि सवनानि ये अहोरात्रे ते दर्शपूर्णमासौ येऽर्धमासाश्च मासाश्च ते चातुर्मास्यानि य ऋतवस्ते पशुबन्धा ये संवत्सराश्च परिवत्सराश्च तेऽहर्गणाः सर्ववेदसं वा एतत्सत्रं यन्मरणं तदवभृथः' इति । सर्ववेदसं सर्वस्वदक्षिणाकम् । अत्रैतच्छब्देन प्रकृताहोरात्रादिपरिवत्सरान्तं सर्वकालसम-

* अयं श्लोको ङ. पुस्तक एव वर्तते

**इत्युपलक्षितं योगिन आयुर्विवक्ष्यते। यदायुस्तत्सर्वस्वदक्षिणोपेतं सत्रमित्यर्थः।**

**तटस्थोऽपीति**। तत्राऽऽद्ये योग्यनुग्रहमाह—**तत्रेत्यादिना**। तत्र मानमवतार्याऽऽह—**तथा चे**त्यादिना। अन्त्येऽपि तमाह—**नास्तिकोऽपी**त्यादिना सप्रमाणम्। फलितं कथयंस्तत्र प्राचां संमतिमाह—**अनेने**त्यादिना। ननु भवतु जीवन्मुक्तस्य शास्त्रीयव्यवहारस्तपः परं लौकिकस्त्वसौ पशुतुल्य एव। तदुक्तमध्यासभाष्य एव 'पश्वादिभिश्चाविशेषात्' इति। तथा चास्मदादीनामप्यविशेष एव शास्त्रीयलौकिकव्यवहारयोस्तपस्त्वपशुतौल्याभ्यां योगिनीत्यत्राऽऽह—**न केवल**मित्यादिना। तत्र मानमाह—**तथा चे**त्यादिना। तत्रापि भागत्रयस्य तात्पर्यं प्रत्येकं वदन्नादावाद्यस्य तदाह—**तस्मिंश्चे**त्यादिना। तमेव पूर्वभागं पठति—**तस्यैव**मित्यादिना। **श्रोत्रमग्नी**दित्यन्तेन। अत्राक्षरार्थस्तु प्रायः सरल एव, विस्तरापेक्षा चेदेतदीयदीपिकायामेव ज्ञेयः। तत्रापेक्षितमाचार्यः स्वयमेव पूरयति। **अन्न दान**मित्यादिना। तत्र श्रुत्यन्तरं संवादयंस्तत्पठति—**अथे**त्यादिना। ननु भवत्वेवं प्रथमभागतात्पर्यमथापि किं तद्द्वितीयभागस्येत्यत्राऽऽह—**उक्तानुवाक** इत्यादिना। तमेव भागं पठति—**यावद्ध्रियत** इत्यादिना। **तदवभृथ** इत्यन्तेन। शिष्टं तु स्पष्टमेव।

अथ तृतीयभागतात्पर्यमाहो**क्तानुवाक** इत्यादिना।

**[1]उक्तानुवाके चरमभागेन(ण) सर्वयज्ञात्मकं योगिनमुपासीनस्य क्रममुक्तिरूपं सूर्याचन्द्रमसोः कार्यकारणब्रह्मणोस्तादात्म्यलक्षणं फलमाम्नायते—एतद्वै जरामर्यमग्निहोत्रꣳ सत्रं य एवं विद्वानुदगयने प्रमीयते देवानामेव महिमानं गत्वाऽऽदित्यस्य सायुज्यं गच्छत्यथ यो दक्षिणे प्रमीयते पितृणामेव महिमानं गत्वा चन्द्रमसः सायुज्यꣳ सलोकतामाप्नोत्येतौ वै सूर्याचन्द्रमसोर्महिमानौ ब्राह्मणो विद्वानभिजयति तस्माद्ब्रह्मणो महिमानमाप्नोति तस्माद्ब्रह्मणो महिमानमित्युपनिषत्। इति। जरामरणावधिकं यद्योगिचरितमस्ति तदेतद्वेदोक्ताग्निहोत्रादिसंवत्सरसत्रान्तकर्मस्वरूप[2]मेवेत्येवमुपासीनो भावनातिशयेन सूर्याचन्द्रमसोः सायुज्यं तादात्म्यं प्राप्नोति। भावनामान्द्येन समानलोकं प्राप्य तस्मिँल्लोके सूर्याचन्द्रमसोर्विभूतिमनुभूय तत ऊर्ध्वं सत्यलोके चतुर्मुखस्य ब्रह्मणो महिमानमाप्नोति। तत्रोत्पन्नतत्त्वज्ञा[3]नेन तत ऊर्ध्वं सत्यज्ञानानन्दस्वरूपस्य परब्रह्मणो महिमानं कैवल्यमाप्नोति। इत्युपनिष-**

---

१ क. ख. ग. घ. ङ. च. उत्तरानु°। २ क. ख. ग. घ. ङ. च. °पमित्ये°। ३ क. ख. ग. ङ. च. °ज्ञानस्तत।

**दित्यनेन यथोक्तविद्यायास्तत्प्रतिपादकग्रन्थस्य चोपसंहारः क्रियते । तदेवं जीवन्मुक्तेस्तपोरूपं द्वितीयं प्रयोजनं सिद्धम् ।**

**कार्यकारणब्रह्मणो** इत्यादि । एतत्तु मूलदीपिकायामेवाग्रे स्पष्टीभविष्यत्यनुपद-मेव—'एतद्वै' इत्यादि 'महिमानमित्युपनिषत्' इत्यन्तम् । अत्र दीपिका माधवाचार्याणामेव—जरामरणावधिकं यद्योगिचरितमस्ति तदेतद्वेदोक्ताग्निहोत्रादिसंवत्सरसत्रान्तकर्मस्वरूपमित्येव यः पुमान्विद्वानुपासीन उत्तरायणे म्रियते स उपासको देवानामिन्द्रादीनां महिमानमैश्वर्यं प्राप्य तदूर्ध्वमादित्यस्य सायुज्यं सहवासं तादात्म्यं वा भावनातारतम्येन प्राप्नोति । अथ पूर्वोक्तवैलक्षण्येन य उपासको दक्षिणायने म्रियते स उपासकः पितृणामग्निष्वात्तादीनामै-श्वर्यं प्राप्य चन्द्रमसः सायुज्यं पूर्ववत्प्राप्नोति । य एवमेतौ सूर्याचन्द्रमसोर्महिमानावनुभवन्ब्र-ह्मणस्तत्र सगुणब्रह्मरूपं हिरण्यगर्भं विद्वांस्तल्लोकवासिनामुपदेशिनामुपासीनोऽभिजयति हिर-ण्यगर्भसाक्षात्काररूपं प्राप्नोति तस्मात्साक्षात्कारात्तल्लोकवासिदेहपातादूर्ध्वं हिरण्यगर्भलोकं गत्वा तत्र ब्रह्मणो हिरण्यगर्भस्य महिमानमैश्वर्यं प्राप्नोति । तत्रोत्पन्नब्रह्मतत्त्वसाक्षात्कारस्त-स्माज्ज्ञानाद्ब्रह्मलोकविनाशादूर्ध्वं सत्यज्ञानादिलक्षणस्य ब्रह्मणो महिमानं महत्त्वं च प्राप्नोति । इत्युपनिषदिति वाक्येन यथोक्तविद्यायास्तत्प्रतिपादकग्रन्थस्य चोपसंहारः क्रियत इति । अत्राप्याचार्यः संक्षेपेणार्थं कथयति—**जरामरणावधिकमि**त्यादिना । निरुक्तदीपिका-ग्रन्थ एवायं संक्षिप्त इति तत्त्वम् । अथाऽऽचार्यस्तावज्जीवन्मुक्तेर्द्वितीयं प्रयोजनं निगम-यति—**तदेवमि**त्यादिना ।

अथ जीवन्मुक्तेस्तृतीयं प्रयोजनमुद्दिष्टक्रमायातमुपक्रमते—

**विसंवादाभाव[1]स्तृतीयं प्रयोजनम् । न खल्वन्तर्मुखे बाह्यव्यापारम-पश्यति योगीश्वरे लौकिकस्तैर्थिको वा कश्चिद्विसंवदते । लौकिको विसंवादो द्विविधः, कलहरूपो निन्दारूपश्च । तत्र क्रोधादिरहितेन योगिना सह कथं नाम लौकिकः कलहायते । तद्राहित्यं च स्मर्यते—**

**क्रुध्यन्तं न प्रतिक्रुध्येदाक्रुष्टः कुशलं वदेत् ।**
**अतिवादांस्तितिक्षेत नावमन्येत कंचन ॥ इति ।**

**ननु जीवन्मुक्तेः प्राचीनो विद्वत्संन्यासस्ततोऽपि प्राचीनं तत्त्वज्ञानं तस्मादपि प्राचीनो विविदिषासंन्यासः । तत्रैते क्रोधादिराहित्यादयो धर्माः[2] स्मृता इति चेत् । बाढम् । अत एव जीवन्मुक्तस्य क्रोधादयः शङ्कितुमप्यशक्याः । अत्यर्वाचीनपदे विविदिषासंन्यासेऽपि यदा क्रोधादयो न सन्ति तदोत्तमपदे तत्त्वज्ञाने कुतस्ते स्युः, कुतस्तरां विद्व-**

---

१ क. ख. ग. घ. ङ. च. °भावात्तस्यास्तृ° । २ ग. घ. ङ. च. °र्माः कथं स्मृ° ।

त्संन्यासे कुतस्तमां च जीवन्मुक्तौ । अतो न योगिना सह लौकिकस्य कलहः संभवति । नापि निन्दारूपो विसंवादः शङ्कनीयः, निन्द्यत्वस्यानिश्चितत्वात् । तथा च स्मर्यते—

यन्न सन्तं न चासन्तं नाश्रुतं न बहुश्रुतम् ।
न सुवृत्तं न दुर्वृत्तं वेद कश्चित्स वै यतिः ॥ इति ।

सदसत्त्वे उत्तमाधमजाती । तैर्थिकोऽपि किं शास्त्रप्रमेये विसंवदते किंवा योगिचरिते । आद्ये न तु योगी परशास्त्रप्रमेयं दूषयति—'तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ । नानुध्यायेद्बहूञ्शब्दान्वाचो विग्लापनं हि तत्' इत्यादिश्रुत्यनुरोधात् । नापि स्वशास्त्रप्रमेयं प्रतिवादिनोऽग्रे समर्थयते, ।

'पलालमिव धान्यार्थी त्यजेद्ग्रन्थमशेषतः ।
परमं ब्रह्म विज्ञाय उल्कावत्तान्यथोत्सृजेत्' ॥

इत्यादिश्रुत्यर्थपरत्वात् । यदा योगी प्रतिवादिनमपि स्वात्मतया वीक्षते तदा विजिगीषायाः का कथा । नापि लोकायतिकव्यतिरिक्तः सर्वोऽपि तैर्थिको[2] मोक्षमङ्गीकुर्वन्योगिचरितेऽपि विसंवदितुमर्हति ।

विसंवादेति । ननु ज्ञानिमात्रेऽपि सर्वजीवाविसंवाद एव वर्तते तस्य सर्वात्मत्वात्, ततः कोऽयं पञ्चम्याद्यन्यतमभूमिकाधिरूढे जीवन्मुक्त एव तद्विशेष इत्यत आह—**न खल्वि**त्यादिना मनोराज्यं कुर्वन्तं व्युदसितुं—**बाह्येत्यादि** । तत्राप्यज्ञसमाहितादिं निराकर्तुं—**योगीत्यादि** । एवं चानीदृशि याज्ञवल्क्यादौ ज्ञानिमात्रेऽपि विदग्धशाकल्यादेर्विरुद्धसंवाददर्शनादिदं युक्तमेवेति भावः । तत्राऽऽद्यस्य विसंवादस्य द्वैविध्यं विधत्ते—**लौकिको विसंवाद** इत्यादिना । तत्राऽऽद्यं प्रत्याह—**तत्र क्रोधादीति** । नन्वत्र क्रोधादिराहित्यनैयत्ये किं मानमित्याशङ्क्य तदाह—**तद्राहित्यमिति** । तत्राप्याशङ्क्य समाधत्ते—**नन्वि**त्यादिना **कुतस्तमां च जीवन्मुक्ता**वित्यन्तेन । फलितमाह—**अत** इत्यादिना । एवं कलहं परिहृत्य निन्दां निराकरोति—**नापी**त्यादिना । तत्र हेतुः **निन्द्यत्वस्येति** । तत्र स्मृतिमनुकूलयति—**यमिति** । एवं तैर्थिकविसंवादपक्षमपि प्रतिक्षिपति—**तैर्थिकोऽपीत्यादि** ।

ननु निरुक्तरीत्या योगिनश्चरिते कस्यापि भेदवादिनो माऽस्तु विसंवादः परं तु तत्तद्दर्शनसिद्धान्तानां विभिन्नरूपत्वात्तदभिमानिनां तेषामद्वैतमात्रनिष्ठेऽस्मिन्भूयादेव स इत्याशङ्कां प्रत्याह—

१ छ. °जातिरिति । तै° । २ छ. °को योगि° ।

आर्हतबौद्धवैशेषिकनैयायिकशैववैष्णवशाक्तसांख्ययोगादिमोक्षशास्त्रेषु प्रतिपाद्यप्रमेयस्य नानाविधत्वेऽपि मोक्षसाधनस्य यमनियमाद्यष्टाङ्गयोगस्यैकविधत्वात् । तस्मादविसंवादेन सर्वसंमतो योगीश्वरः । एतदेवाभिप्रेत्य वसिष्ठ आह—

यस्येदं जन्म पाश्चात्यं तमाश्वेव महामते ।
विशन्ति विद्या विमला मुक्ता वेणुमिवोत्तमम् ॥
आर्यता हृद्यता मैत्री सौम्यता मुक्तता ज्ञता ।
समाश्रयन्ति तं नित्यमन्तःपुरमिवाङ्गनाः ॥
पेशलाचारमधुरं सर्वे वाञ्छन्ति तं जनाः ।
वेणुं मधुरनिध्वानं वने वनमृगा इव ॥
सुषुप्तवत्प्रशमितभाववृत्तिना
स्थितः सदा जाग्रति येन चेतसा ।
फलान्वितो विधुरिव यः सदा बुधै-
र्निषेव्यते मुक्त इतीह स स्मृतः ॥ इति ।
मातरीव शर्म यान्ति विषमाणि मृदूनि च ।
विश्वासमिह भूतानि सर्वाणि शमशालिनि ॥
तपस्विषु बहुज्ञेषु याजकेषु नृपेषु च ।
बलवत्सु गुणाढ्येषु शमवानेव राजते ॥ इति ।

तदेवमबाधं जीवन्मुक्तेर्विसंवादाभावरूपं तृतीयं प्रयोजनं सिद्धम् । दुःखनाशसुखाविर्भावरूपे चतुर्थपञ्चमप्रयोजने विद्यानन्दात्मकेन ब्रह्मानन्दगतेन चतुर्थाध्यायेन निरूपिते । तदुभयमत्र संक्षिप्योच्यते—

'आत्मानं चेद्विजानीयादयमस्मीति पूरुषः ।
किमिच्छन्कस्य कामाय शरीरमनु संज्वरेत् ॥'

इत्यादिश्रुत्या दुःखस्यैहिकस्य विनाश उक्तः । 'एतꣳह वाव न तपति । किमहꣳसाधु नाकरवं किमहं पापमकरवम्' इत्यादिश्रुतय आमुष्मिकहेतुपुण्यपापचिन्तारूपस्य दुःखस्य नाशमाहुः । सुखाविर्भावस्त्रेधा—सर्वकामावाप्तिः, कृतकृत्यत्वं, प्राप्तप्राप्तव्यत्वं चेति । सर्वकामावाप्तिस्त्रेधा—सर्वसाक्षित्वं, सर्वज्ञाकामहतत्वं, सर्वभोक्तृरूपत्वं चेति । हिरण्यगर्भादिस्थावरान्तदेहेष्वनुगतं साक्षिचैतन्यरूपं यद्ब्रह्म तदेवाह-

मस्मीति जानतः स्वदेह इव परदेहेष्वपि सर्वकामसाक्षित्वमस्ति। तदेतदभिप्रेत्य श्रूयते—'सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता' इति। लोके भुक्तेषु भोगेष्वकामहतत्वं यत्सा कामाप्तिरुच्यते। तथा च सर्वभोगदोषदर्शिनस्तत्त्वविदः सर्वत्राकामहतत्वादस्ति सर्वकामावाप्तिः। अत एव सार्वभौमोपक्रमेषु हिरण्यगर्भपर्यन्तेषूत्तरोत्तरशतगुणेष्वानन्देषु 'श्रोत्रियस्य चाकामहतस्य' इति श्रुतम्। सद्रूपेण चिद्रूपेणाऽऽनन्दरूपेण च सर्वत्रावस्थितं स्वात्मानमनुसंदधतः सर्वभोक्तृत्वमस्तीत्यभिप्रेत्यैवं श्रूयते-' अहमन्नमहमन्नमहमन्नम्। अहमन्नादो३हमन्नादो३हमन्नादः' इति। कृतकृत्यत्वं तु स्मर्यते—

ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः।
नैवास्ति किंचित्कर्तव्यमस्ति चेन्न स तत्त्ववित्॥
यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः।
आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते॥ इति।

प्राप्तप्राप्तव्यताऽपि श्रूयते 'अभयं वै जनक प्राप्तोऽसि' इति। 'तस्मात्तत्सर्वमभवत्' इति। 'ब्रह्मवेद ब्रह्मैव भवति' इति च। नन्वेतौ द्वौ दुःखविनाशसुखाविर्भावौ तत्त्वज्ञानेनैव सिद्धत्वान्न जीवन्मुक्तिप्रयोजनतामर्हतः। मैवम्। सुरक्षितयोस्तयोरत्र विवक्षितत्वात्। यथा तत्त्वज्ञानं पूर्वमेवोत्पन्नमपि जीवन्मुक्तौ[2] सुरक्षितं भवति, एवमेतावपि सुरक्षितौ भवतः।

आर्हतेत्यादि। फलितमाह—**तस्मादिति**। तत्र वासिष्ठं संवादयति—**एतदि**त्यादिना। अथ तृतीयं प्रयोजनं निगमयति—**तदेवमबाधमि**त्यादिना। ततश्चतुर्थपञ्चमे ते उपन्यसति—**दुःखनाशे**त्यादिना। अथ प्रतिज्ञातं तदुभयसंक्षेपकथनं प्रपञ्चयति—**आत्मानं** चेदित्यादिना। तत्राप्याशङ्क्य यथा ज्ञानस्य दृश्यमिथ्यात्वपूर्वकमद्वैतब्रह्मात्मैक्यानुसंधानसातत्यमेव सुरक्षितत्वमेवमेवैतयोरपि तज्जन्ययोर्दुःखनाशसुखाविर्भावयोरपीत्याशयेन समाधत्ते—**नन्वि**त्यादिना।

अथात्रापि वासिष्ठवाक्यावष्टम्भेन शङ्कते। **नन्वेवं जीवन्मुक्ते**रित्यादिना—

नन्वेवं जीवन्मुक्तेः पञ्चप्रयोजनत्वे सति समाहितो योगीश्वरो लोकव्यवहारं कुर्वतस्तत्त्वविदोऽपि श्रेष्ठ इति वक्तव्यम्। तच्च रामवसिष्ठयोः प्रश्नोत्तराभ्यां निराकृतम्।

---

१ व. छ. °ह्मविद्ब्रह्मै°। २ क. ख. ग. ङ. च. °न्मुक्त्या सु°।

श्रीरामः—

भगवन्भूतभव्येश कश्चिज्जातु[1] समाहितः ।
प्रबुद्ध इव विश्रान्तो व्यवहारपरोऽपि सन् ॥
कश्चिदेकान्तमाश्रित्य समाधिनियमे स्थितः ।
तयोस्तु कतरः श्रेयानिति मे भगवन्वद ॥

श्रीवसिष्ठ उवाच—

इमं गुणसमाहारमनात्मत्वेन पश्यतः ।
अन्तःशीतलता याऽसौ समाधिरिति कथ्यते ॥
दृश्यैर्न मम संबन्ध इति निश्चित्य शीतलः ।
कश्चित्संव्यवहारस्थः कश्चिध्द्यानपरायणः ॥
द्वावेतौ रामसुसमावन्तश्चेत्परिशीतलौ ।
अन्तः शीतलता या स्यात्तदनन्ततपःफलम् ॥ इति ।

नैष दोषः । अत्र वासनाक्षयरूपत्वे[2] सत्यन्तःशीतलत्वमवश्यं संपादनीयमित्येव[3] संपाद्यते । न तु तदनन्तरभाविनो मनोनाशस्य श्रेष्ठत्वं निवार्यते । शीतलत्वं तु तृष्णायाः प्रशमनमिति तादृशीं विवक्षां स्वयमेव स्पष्टी चकार—

अन्तःशीतलतायां तु लब्धायां शीतलं जगत् ।
अन्तस्तृष्णोपतप्तानां दावदाहमयं[4] जगत् ॥ इति ॥

ननु समाधिनिन्दा व्यवहारप्रशंसा चात्रोपलभ्यते—

समाधिस्थानकस्थस्य चेतश्चेद्वृत्तिचञ्चलम् ।
तत्तस्य तु समाधानं सममुन्मत्तताण्डवैः ॥
उन्मत्तताण्डवस्थस्य चेतश्चेत्क्षीणवासनम् ।
तदस्योन्मत्तनृत्यं तु समं ब्रह्मसमाधिना ॥ इति ।

मैवम् । अत्र हि समाधिप्राशस्त्यमेवाङ्गीकृत्य वासना निन्द्यते । इयमत्र वचनव्यक्तिः—यद्यपि व्यवहारात्तु समाधिः प्रशस्तस्तथाऽप्यसौ

---

१ क. ख. ग. ङ. च. °ज्जातसमाधिकः । प्र° । २ क. ख. ग. घ. ङ. च. °पमन्तः° । ३ क. ख. ग. घ. ङ. च. °त्येतावदेव प्रतिपाद्य° । ४ क. ख. ग. घ. च. °हमिदं ज° ।

**सवासनश्चेत्तदा निर्वासनव्यवहारादधम एव । यदि समाहितव्यवहर्तारावुभावप्यतत्त्वज्ञौ सवासनौ च तदा समाधेरुत्तमलोकप्राप्तिहेतुपुण्यत्वेन प्राशस्त्यम् । यदा तूभौ ज्ञाननिष्ठौ निर्वासनौ च तदाऽपि वासनाक्षयरूपां जीवन्मुक्तिं परिपालयन्नयं मनोनाशरूपः समाधिः प्रशस्त एव । तस्माद्योगीश्वरस्य श्रेष्ठत्वात्पञ्चप्रयोजनोपेताया जीवन्मुक्तेर्न कोऽपि विघ्न इति सिद्धम् ।**

**इति जीवन्मुक्तिविवेकप्रकरणे स्वरूपप्रमाणसाधनप्रयोजनैर्जीवन्मुक्तिर्निरूपिता ।**

---

प्रतिज्ञात प्रश्नादिकमेव प्रकाशयति—**श्रीराम** इत्यादिना । जातु समाहितः कदाचिदेव समाधिं कुर्वाण इत्येव पाठो वाक्यशेषीभूतविकल्पद्वितीयकोटयनुगुणा न तु जातसमाधिक इति । **प्रबुद्ध इवेति** । कश्चित्स्वप्ने दुष्टव्याघ्रभीत्या पलायमानस्तत्रैव त्वं स्वप्नमिमं पश्यसि मा भैषीः प्रबुद्धो भवाऽऽश्विति वदता तत्रैव दृष्टेन केनचिदाप्तेन प्रबोधितः सन्यथा तत्क्षणावच्छेदेनैव जागरं प्राप्य सुखशय्यायां व्याघ्राद्यखिलानर्थनिवृत्त्या विश्रान्तो भवति तद्वदित्यर्थः । **समाधीति** । समाधेः प्रत्यहमनुष्ठाननियमे तत्पर इत्यर्थः । समाधत्ते—**नैष** इत्यादिना । तत्र वासिष्ठवाक्यमेवानुकूलयति—**शीतलत्वं** त्वित्यादिना सावतरणम् । पुनरपि वासिष्ठवाक्यान्तरावष्टम्भेन शङ्कते—**नन्विति** । समाधत्ते—**मैवमिति**प्रभृतिना । एवमन्योन्यविरुद्धवचनतात्पर्यं वक्तुं प्रतिजानीते—**इयमत्रेति** । तत्प्रकटयति—**यद्यपी**त्यादिना फलितं कथयन्निगमयति—**तस्मा**दित्यादिना ।

इति पञ्चप्रयोजननिरूपणप्रकरणविवरणं संपूर्णम् ।

---

अथ वृत्तानुवादपूर्वकं वर्तिष्यमाणत्वेन चिकीर्षितं प्रतिजानीत **एवमि**त्यादिना—

**एवं स्वरूपप्रमाणसाधनप्रयोजनैर्जीवन्मुक्तिर्निरूपिता । अथ तदुपकारिणं विद्वत्संन्यासं निरूपयामः । विद्वत्संन्यासश्च परमहंसोपनिषदि प्रतिपादितः । तां चोपनिषदमनूद्य व्याख्यास्यामः । तत्राऽऽदौ विद्वत्संन्यासयोग्यं प्रश्नमवतारयति—' अथ योगिनां परमहंसानां कोऽयं मार्गस्तेषां का स्थितिरिति नारदो भगवन्तमुपगत्योवाच ' इति । यद्यप्यथशब्दापेक्षित आनन्तर्यप्रतियोगी न कोऽप्यत्र प्रतिभाति तथाऽपि प्रष्टव्यार्थोऽत्र विद्वत्संन्यासः । तस्मिंश्च विदिततत्त्वो लोकव्यवहारैर्विक्षिप्यमाणो मनोविश्रान्तिं कामयमानोऽधिकारी । ततस्तादृशाधि-**

---

१ क. ख. ग. घ. ङ. च. एवेति स न समाधिः । यद्वा स' । २ क. ख. ग. घ. ङ. च. °नौ चेत्तदा ।

कारिसंपत्त्यानन्तर्यमथशब्दार्थः। केवलयोगिनं केवलपरमहंसं च वारयितुं पदद्वयमुक्तम्। केवलयोगी तत्त्वज्ञानाभावेन त्रिकालज्ञानाकाशगमनादिषु योगेश्वर्यचमत्कारव्यवहारेष्वासक्तः संयमविशेषैस्तत्र तत्रो[2]द्युङ्क्ते। ततः परमपुरुषार्थाद्भ्रष्टो भवति। तस्मिन्नर्थे सूत्रं पूर्वमेवोदाहृतम्—'ते समाधावुपसर्गा व्युत्थाने सिद्धयः' इति। केवलपरमहंसस्तु तत्त्वविवेकेनैश्वर्येष्वसारतां बुद्ध्वा विरज्यति। तदप्युदाहृतम्—

चिदात्मन इमा इत्थं प्रस्फुरन्ति हि शक्तयः।
इत्यस्याऽऽश्चर्यजालेषु नाभ्युदेति कुतूहलम्। इति॥

विरक्तोऽप्यसौ ब्रह्मविद्याभरेण विधिनिषेधानुल्लङ्घयति। 'तदुक्तम्—'निस्त्रैगुण्ये पथि विचरतां को विधिः को निषेधः' इति। तथा च श्रद्धालवः शिष्टास्तमेवं निन्दन्ति—

सर्वे ब्रह्म वदिष्यन्ति संप्राप्ते तु कलौ युगे।
नानुतिष्ठन्ति मैत्रेय शिश्नोदरपरायणाः॥ इति।

योगिनि तु परमहंसे दोषद्वयं नास्ति। अन्योऽप्यस्यातिशयः प्रश्नोत्तराभ्यां दर्शितः।

ननु विद्वत्संन्यासस्तु प्राग्द्वितीये तन्नामकप्रकरण एव प्रपञ्चित इति चेत्सत्यम्। संक्षेपविस्तराभ्यां हि शास्त्रस्य प्रवृत्तिरिति न्यायेन तत्रोक्तदण्डधारणादिलक्षणस्य गौणविद्वत्संन्यासस्य जीवन्मुक्तिसाधनीभूतवासनाक्षयमनोनाशहेतुत्वेन निरूपितत्वेऽपि मुख्यस्य पारमहंस्यरूपस्य तस्य तत्रानिरूपणात्तस्य तु फलीभूतत्वेन जीवन्मुक्त्युपकारकविद्वत्संन्यासस्य परमहंसोपनिषद्येव प्रतिपादितत्वाच्च। एवं तर्हि तद्व्याख्यानमपि कर्तव्यं स्यादिति चेदोमिति ध्वनयंस्तत्प्रतिजानीते—**विद्वत्संन्यासश्चे**त्यादिना। यतः प्रतिपादितोऽतः। चोऽवधारणे। तामेवोपनिषदमनूद्य व्याख्यास्याम इति यत्तत्पदाध्याहारेण संबन्धः। अथोक्तोपनिषद्व्याख्यानमेवाऽऽरभते—**तत्रादा**वित्यादिना। इत आरभ्य बहुधा स्फुटतमतात्पर्यक एवाग्रिमग्रन्थस्तथाऽपि तत्र तत्रास्मद्बुद्ध्या संदिग्धं तु विवेचयिष्याम्येव। प्रतियोगी निरूपकः। उद्युङ्क्ते, युजिर् योगे, उद्योगं करोतीत्यर्थः। विध्याद्युल्लङ्घने हेतुः—**निस्त्रैगुण्य** इत्यादि। ननु निन्दन्तु श्रद्धालवः शिष्टा अपि किं तत इति चेन्न। ततस्तेषां नरकपातेऽस्यैव प्रयोजकत्वापत्तेरित्याशयः।

१ क. ख. ग. घ. ङ. च. °कारसं°। २ क. ग. ङ. च. °त्रोपयुङ्क्ते।

अथ प्रतिज्ञातप्रकृतयोगिपरमहंसनिष्ठातिशयान्तरप्रकाशके प्रश्नोत्तरे एव प्रकटयति **श्रीराम** इत्यादिवासिष्ठवाक्योपन्यासेन—

श्रीरामः—एवं स्थितेऽपि भगवञ्जीवन्मुक्तस्य सन्मतेः।
अपूर्वोऽतिशयः कोऽसौ भवत्यात्मविदां वर।
वसिष्ठः—ज्ञस्य कस्मिंश्चिद[1]प्येषा भवत्यतिशये न धीः।
नित्यतृप्तः प्रशान्तात्मा स आत्मन्येव तिष्ठति॥
मन्त्रसिद्धैस्तपः सि[2]द्धैर्योगसिद्धैश्च भूरिशः।
कृतमाकाशयानादि तत्र का स्यादपूर्वता॥
एक एव विशेषोऽस्य न समो मूढबुद्धिभिः।
सर्वत्राऽऽस्थापरित्यागान्नीरागममलं मनः॥
एतावदेव खलु लिङ्गमलिङ्गमूर्तेः
संशान्तसंसृतिचिरभ्रमनिर्वृतस्य।
तज्ज्ञस्य यन्मदनकोपविषादमोह-
लोभापदामनुदिनं निपुणं तनुत्वम्॥ इति।

अनेनातिशयेनोपेतानां दोषद्वयरहितानां मार्गस्थिती पृच्छ्येते। वेषभाषादिरूपो व्यवहारो हि मार्गः। चित्तोपरमरूप आन्तरो धर्मः स्थितिः। भगवांश्चतुर्मुखो ब्रह्मा। यथोक्तप्रश्नोत्तरमवतारयति—

'तं भगवानाह' इति।

वक्ष्यमाणमार्गे श्रद्धातिशयमुत्पादयितुं तं मार्गं प्रशंसति—

[3]सोऽयं परमहंसमार्गो लोके दुर्लभतरो न तु बाहुल्यः। इति।

यः पृष्टः सोऽयमिति योजना। अयमित्युत्तरग्रन्थे वक्ष्यमाण आच्छादना[4]दिः स्वशरीरोपभोगेन लोकोपकारेण च निरपेक्षो मुख्यो मार्गः परामृश्यते। तादृशस्य परमकाष्ठां प्राप्तस्य वैराग्यस्यादृष्टचरत्वात्तस्य मार्गस्य दुर्लभतरत्वम्। न चैतावताऽत्यन्ताभावः शङ्कनीय इत्यभिप्रेत्य बाहुल्यमेव प्रति[5]षेधति—न तु बाहुल्य इति। लिङ्गव्यत्ययश्छान्दसः।

नन्वयं मार्गो दुर्लभतरश्चेत्तर्हि तदर्थं प्रयासो न कर्तव्यः, तेन प्रयोजनाभावादित्याशङ्क्याऽऽह—

'यद्येकोऽपि भवति स एव नित्यपूतस्थः स एव वेदपुरुष इति विदुषो मन्यन्ते' इति।

---

१ क. ख. ग. ङ. च. °श्चिदेवाङ्ग भ°। २ क. ङ. च. °द्धैस्तन्त्रासि°। ३ घ. छ. योऽयं। ४ छ. °दिस्व°। ५ छ. °षेध्यते। न।

मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥

इति न्यायेन यत्र क्वापि यदाकदाचिद्योगी परमहंसो यदि[1] कश्चिल्लभ्यते तर्हि स एव नित्यपूतस्थो । भवति । नित्यपूतः परमात्मा । 'य आत्माऽपहतपाप्मा ' इति श्रुतेः । एवकारेण केवलयोगी केवलपरमहंसश्च व्यावर्त्यते । केवलयोगी नित्यपूतं न जानाति । केवलपरमहंसो जानन्नपि चित्ते विश्रान्त्यभावाद्बहिर्मुखो ब्रह्मणि न तिष्ठति । वेदप्रतिपाद्यः पुरुषो वेदपुरुषः । विदुषो विद्वांसो ब्रह्मानुभवचित्तविश्रान्तिप्रतिपादकशास्त्रपारंगतायोगिनः । परमहंसस्य ब्रह्मनिष्ठत्वं सर्वजना मन्यन्ते । यथोक्तविद्वांसस्तु तदप्यसहमाना ब्रह्मत्वमेव मन्यन्ते । तथा च स्मर्यते––

दर्शनादर्शने हित्वा स्वयं केवलरूपतः ।
यस्तिष्ठति स तु ब्रह्मन्ब्रह्म न ब्रह्मवित्स्वयम् ॥ इति ।

अतो न प्रयोजनाभावः शङ्कितुमपि शक्यते । नित्यपूतस्थत्वं वेदपुरुषत्वं च मुखतो विशदयन्नर्थात्का स्थितिरिति प्रश्नस्योत्तरं सूत्रयति[2]––

' महापुरुषो यच्चित्तं तत्सदा मय्येवावतिष्ठते, तस्मादहं च तस्मिन्नेवाव[3]स्थितः ' इति ।

अलिङ्गेति । अलिङ्गा, एकदण्डधारणादिलिङ्गहीना मूर्तिर्मुख्यपरमहंसत्वसूचिका यथाजातरूपधराऽऽकृतिर्यस्य ।

महापुरुषपदं निर्वक्ति वैदिकेत्यादिना—

वैदिकज्ञानकर्माधिकारिषु पुरुषेषु मध्ये योगिनः परमहंसस्यात्यन्तमुत्तमत्वान्महापुरुषत्वम् । स च महापुरुषो यच्चित्तं स्वकीयं तत्सर्वदा मय्येवावस्थापयति, संसारगोचराणां तदीयचित्तवृत्तीनामभ्यासवैराग्याभ्यां निरुद्धत्वात् । अत्र[4] भगवान्प्रजापतिः शास्त्रसिद्धं परमात्मानं स्वानुभवेन परामृशन्मयीति व्यपदिशति । यस्माद्योगी चित्तं मय्येव स्थापयति तस्मादहमपि परमात्मस्वरूपत्वेन तस्मिन्नेव योगिन्याविर्भूतोऽवस्थितोऽस्मि नेतरेष्वज्ञानिषु, तेषामविद्यावृतत्वात् । तत्त्ववित्स्वप्ययोगिषु बाह्यचित्तवृत्तिभिरावृतत्वान्नास्त्याविर्भावः ।

---

१ ख. ग. घ. छ. यः । २ क. ख. ग. घ. छ. सूचय° । ३ क. ख. ग. घ. ङ. च. 'वस्थीयते ' इ° । ४ क. ख. ग. ङ. अत एव भ° ।

इदानीं कोऽयं मार्ग इति पृष्टं मार्गमुपदिशति—

'असौ स्वपुत्रमित्रकलत्रबन्ध्वादीञ्शिखायज्ञोपवीते स्वाध्यायं च सर्वकर्माणि संन्यस्यायं ब्रह्माण्डं च हित्वा कौपीनं दण्डमाच्छादनं च स्वशरीरोपभोगार्थाय च लोकस्योपकारार्थाय च परिग्रहेत्' इति।

यो गृहस्थः पूर्वजन्मसंचितपुण्यपुञ्जपरिपाके सति मातृपित्राज्ञा[1]दिना निमित्तेन विविदिषासंन्यासरूपं परमहंसाश्रममस्वीकृत्यैव श्रवणादिसाधनान्यनुष्ठाय तत्त्वं सम्यगवगच्छति। ततो गृहस्थस्य प्राप्तैर्लौकि[2]कवैदिकव्यवहारसहस्रैश्चित्ते विक्षिप्ते सति विश्रान्तिसिद्धये विद्वत्संन्यासं चिकीर्षति, तं प्रति स्वपुत्रमित्रेत्याद्युपदेशः। पूर्वमेव विविदिषासंन्यासं कृत्वा तत्त्वं विदितवतो विद्वत्संन्यासं चिकीर्षोः पुत्रकलत्रादिप्रसङ्गाभावात्। नन्वयं विद्वत्संन्यासः किमितरसंन्यासवत्प्रैषोच्चारणादिविध्युक्तप्रकारेण संपादनीयः, किंवा जीर्णवस्त्रसोपद्रवग्रामादित्यागवल्लौकित्यागमात्ररूपः। नाऽऽद्यः। तत्त्वविदः कर्तृत्वराहित्येन विधिनिषेधानधिकारात्। अत एव स्मर्यते—

ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः।
नैवास्ति किंचित्कर्तव्यमस्ति चेन्न स तत्त्ववित्। इति।

न द्वितीयः। कौपीनदण्डाद्याश्रमलिङ्गविधानश्रवणात्। नैष दोषः। प्रतिपत्तिकर्मवदुभयरूपत्वोपपत्तेः। तथा हि। ज्योतिष्टोमे दीक्षितस्य दीक्षाङ्गनियमानुष्ठानकाले कण्डूयितं हस्तं प्रतिषिध्य कृष्णविषाणा विहिता 'यद्धस्तेन कण्डूयेत पामानंभावुकाः प्रजाः स्युर्यत्स्मयेत नग्नंभावुकाः' इति, 'कृष्णविषाणया कण्डूयते' इति च। तस्याश्च कृष्णविषाणायाः समाप्ते नियमे प्रयोजनाभावाद्धोढुमशक्यत्वाच्च त्यागः स्वत एव प्राप्तः। तं च त्यागप्रकारं वेदो विदधाति—'नीतासु दक्षिणासु चात्वाले कृष्णविषाणां प्रास्यति' इति। तदिदं प्रतिपत्तिकर्म लौकिकं वैदिकं चेत्युभयरूपम्। एवं विद्वत्संन्यासोऽप्युभयरूपः। न च तत्त्वविदि कर्तृत्वस्यात्यन्ताभावः शङ्कनीयः। चिदात्मन्यारोपितस्य कर्तृत्वस्य विद्ययाऽपोहितत्वेऽपि चिच्छायोपेतान्तःकरणोपाधौ विक्रियासहस्रयुक्ते स्वतः सिद्धस्य कर्तृत्वस्य यावद्द्रव्यभावितयाऽनपोहितत्वात्। न च ज्ञानामृते-

---

१ क. ख. ग. घ. ङ. च. °पितृज्ञात्यादि°। २ क. ख. ग. घ. ङ. च. °तो गार्हस्थ्यप्रा°।

नेत्यादिस्मृतिविरोधः । सत्यपि ज्ञाने विश्रान्तिरहितस्य तृप्त्यभावेन विश्रान्तिसंपादनलक्षणकर्तव्यशेषसद्भावेन कृतकृत्यत्वाभावात् ।

एतेन तान्त्रिकज्ञानाद्यधिकारवतां नृपशुत्वमेवेति ज्ञाप्यते । एवमवतिष्ठत इत्याख्याते यथाश्रुतान्वयार्हं विपरिणामं स्पष्टयति—**अवस्थापयतीति** तत्र हेतुः—**संसारेति** । कृष्णविषाणा, कृष्णसारशृङ्गमित्यर्थः । चात्वाले, यज्ञमण्डपस्थले यस्माद्देशाद्भूमिं खानित्वा ज्योतिष्टोमादावुक्तवेदिः क्रियते स एव भूगर्तभागश्चात्वालसंज्ञक इति याज्ञिकास्तस्मिन्नित्यर्थः । श्रौती संज्ञा ।

तत्राप्याशङ्क्य प्रागुक्तरीत्यैव समाधत्ते **नन्वित्यादिना**—

**ननु तत्त्वविदोऽपि विध्यङ्गीकारे सति तेनापूर्वेण देहान्तरमारभ्येत । मैवम् । तस्यापूर्वस्य चित्तविश्रान्तिप्रतिबन्धनिवारणलक्षणस्य दृष्टफलस्य संभवे सत्यदृष्टफलकल्पनाया अन्याय्यत्वात् । अन्यथा श्रवणादिविधिष्वपि ब्रह्मज्ञानोत्पत्तिप्रतिबन्धनिवारणरूपं दृष्टफलमुपेक्ष्य जन्मान्तरहेतुत्वं कल्प्येत । तस्माद्विध्यङ्गीकारे दोषाभावाद्विविदिषुरिव विद्वानपि गृहस्थो नान्दीमुखश्राद्धोपवासजागरणादिविधिमनुसृत्यैव संन्यसेत् । यद्यप्यत्र श्राद्धादिकं नोपदिष्टं तथाऽप्यस्य विद्वत्संन्यासस्य विविदिषासंन्यासविकृतित्वात् । 'प्रकृतिवद्विकृतिः कर्तव्या' इति न्यायेन तदीया धर्माः सर्वेऽप्यत्र प्राप्नुवन्ति । यथाऽग्निष्टोमस्य विकृतिष्वतिरात्रादिषु तदीयधर्मप्राप्तिस्तद्वत् । तस्मादितरसंन्यासवदत्रापि प्रैषमन्त्रेण पुत्रमित्रादित्यागं संकल्पयेत् । बन्ध्वादीनित्यादिशब्देन भृत्यपशुगृहक्षेत्रादिलौकिकपरिग्रहादिविशेषाः संगृह्यन्ते । स्वाध्यायं चेति चकारेण तदर्थनिर्णयोपयुक्तानि पदवाक्यप्रमाणशास्त्राणि वेदोपबृंहकाणीतिहासपुराणादीनि च समुच्चिनोति । औत्सुक्यनिवृत्तिमात्रप्रयोजनानां काव्यनाटकादीनां त्यागः कैमुतिकन्यायसिद्धः । सर्वकर्माणीति सर्वशब्देन लौकिकवैदिकनित्यनैमित्तिकनिषिद्धकाम्यानि संगृह्यन्ते । पुत्रादित्यागेनैहिकभोगः परिहृतः । सर्वकर्मत्यागेन चाऽऽमुष्मिकभोगाशा चित्तविक्षेपकारिणी परिहृता । अयमिति च्छान्दसविभक्तिलिङ्गव्यत्ययेनेदं ब्रह्माण्डमिति योजनीयम् । ब्रह्माण्डत्यागो नाम तत्प्राप्तिहेतोर्विराडुपासनस्य त्यागः । ब्रह्माण्डं चेति चकारेण सूत्रात्मप्राप्तिहेतोर्हिरण्यगर्भोपासनस्य तत्त्वज्ञानहेतूनां श्रवणादीनां च समुच्चयः । स्वपुत्रादि हिरण्यगर्भोपासनान्तमैहिकमामुष्मिकं च सुखसाधनं सर्वं प्रैषमन्त्रोच्चारणेन परित्यज्य**

कौपीनादिकं परिगृह्णीयात् । आच्छादनं चेति चकारेण पादुकादीनि समाचिनोति । तथा च स्मृतिः—

कौपीनयुगुलं वासः कन्थां शीतनिवारिणीम् ।
पादुके चापि गृह्णीयात्कुर्यान्नान्यस्य संग्रहम् ॥ इति ।

स्वशरीरोपभोगो नाम कौपीनेन लज्जाव्यावृत्तिः । दण्डेन गोसर्पाद्युपद्रवपरिहारः । आच्छादनेन शीतादिपरिहारः । चकारात्पादुकाभ्यामुच्छिष्टदेशस्य स्पर्शादिपरिहारं समुच्चिनोति ।

प्रतिबन्धाऽपि दृष्टफलत्वसंभवन्यायं द्रढयति—**अन्यथे**त्यादिना । निगमयति—**तस्मा**दि्त्यादिना । तत्रापि कर्तव्यविशेषांशे तदपेक्षया न्यूनत्वौचित्यमाशङ्क्य समाधत्ते—**यद्यपी**त्यादिना । फलितमाह—**तस्मादि**त्यादिना बन्ध्वादीनित्याद्यारभ्य लोकस्योपकारो नामेत्यतः प्राक्तनो ग्रन्थः स्पष्टार्थः ।

लोकस्योपकाराय चेति श्रुत्यर्थमाह—**लोकस्योपकारो नामे**त्यादिना—

लोकस्योपकारो नाम दण्डादिलिङ्गेनैतदीयमुत्तमाश्रमं परिज्ञाय तदुचिताभिवन्दनभिक्षाप्रदानादिप्रवृत्त्या सुकृतसिद्धिः । चकाराभ्यामाश्रममर्यादायाः शिष्टाचारप्राप्तायाः पालनं समुच्चिनोति ।

कौपीनादिपरिग्रहस्यानुकूल्यमभिप्रेत्य मुख्यत्वं प्रतिषेधति—

'तच्च न मुख्योऽस्ति' इति ।

यत्कौपीनादिपरिग्रहणमस्ति तदस्य योगिनः परमहंसस्य मुख्यः कल्पो न भवति । किं त्वनुकल्प एव । विविदिषासंन्यासिनस्तु दण्डग्रहणं मुख्यमिति कृत्वा दण्डवियोगस्य निषेधः स्मर्यते—

दण्डात्मनोस्तु संयोगः सर्वदैव विधीयते ।
न दण्डेन विना गच्छेदिषुक्षेपत्रयं बुधः । इति ॥

प्रायश्चित्तमपि दण्डनाशे प्राणायामशतं स्मर्यते—

'दण्डत्यागे शतं चरेत्' इति ।

योगिनः परमहंसस्य मुख्यं कल्पं प्रश्नोत्तराभ्यां दर्शयति—

'कोऽयं मुख्य इति चेदयं मुख्यो न दण्डं न शिखं न यज्ञोपवीतं नाऽऽच्छादनं चरति परमहंसः' इति ।

न शिखमिति च्छान्दसो लिङ्गव्यत्ययोऽनुसंधेयः । यथा विविदिषुः परमहंसः शिखायज्ञोपवीताभ्यां रहितो मुख्यस्तथा योगी दण्डाच्छादनाभ्यां रहितः सन्मुख्यो भवति । दण्डस्य वैणवत्वादिलक्षणमाच्छाद-

नस्य कन्थात्वादिलक्षणं च परीक्षितुं दण्डादिकं संपादयितुं रक्षितुं च चित्ते व्यापृते[1] सति चित्तवृत्तिनिरोधलक्षणो योगो न सिध्येदिति । तन्न न युक्तम् । 'न हि वरविघाताय कन्योद्वाहः' इतिन्यायात् ।

आच्छादनाद्यभावे शीतादिबाधायाः कः प्रतीकार इत्याशङ्क्याऽऽह—

'न शीतं न चोष्णं न दुःखं न सुखं न मानावमानौ[2] च षडूर्मिवर्जम्' इति ।

निरुद्धाशेषचित्तवृत्तेर्योगिनः शीतं नास्ति । तत्प्रत्ययाभावात् । यथा लीलायामासक्तचित्तस्य बालकस्याऽऽच्छादनादिरहितस्यापि हेमन्तशिशिरयोः प्रातःकालेऽपि शीतं नास्ति तथा परमात्मन्यासक्तस्य योगिनः शीताभावः । घर्मकाले तृष्णाभावश्च तथैवावगन्तव्यः । वर्षाभावसमुच्चयार्थश्चकारः । शीतोष्णयोरप्रतीतौ तज्जन्यसुखदुःखयोरभाव उपपन्नः । निदाघे शीतं सुखजनकं हेमन्ते दुःखजनकम् । उक्तविपर्यय उष्णे द्रष्टव्यः । मानः पुरुषान्तरेण संपादितः सत्कारः । अवमानस्तिरस्कारः । यदा योगिनः स्वात्मव्यतिरिक्तं पुरुषान्तरमेव न प्रतीयते तदा मानावमानौ दूरापेतौ । चकारः शत्रुमित्ररागद्वेषादिद्वंद्वाभावं समुच्चिनोति । षडूर्मयः—क्षुत्पिपासे शोकमोहौ जरामरणे च । तेषां त्रयाणां द्वंद्वानां क्रमेण प्राणमनोदेहधर्मत्वादात्मतत्त्वाभिमुखस्य योगिनस्तद्वर्जनं[3] युज्यते ।

नन्वेवं दण्डकौपीनकन्थादिसंग्रहे योगिपरमहंसस्य तद्रक्षणादिना चित्तविक्षेपः स्यादित्यत्राऽऽह—**कौपीनादी**त्यादिना । तर्हि कस्यासौ कौपीनादिपरिग्रहलक्षणो मुख्यः कल्प इत्यत आह—**विविदिषासंन्यासिनस्त्वि**त्यादिना । एवं तर्हि योगिनः परमहंसस्य को वा मुख्यः कल्प इत्यत्राऽऽह—योगिनः परमहंसस्येत्यादिना सावतरणम् ।

पुनरपि योगिपरमहंसस्य विक्षेपमाशङ्क्य समाधातुमग्रिमवाक्यमवतारयति । **नन्वि**त्यादिना—

नन्वस्त्वेवं समाधिदशायां शीताद्यभावः, व्युत्थानदशायां तु निन्द्रादिक्लेशः संसारिणमिवैनं बाधत एवेत्याशङ्क्याऽऽह—

---

१ क. ख. ग. ध. च. °व्यावृत्ते । २ क. ख. ग. घ. ङ. च. °माने च । ३ ङ. °नं न विरुध्यते । न° ।

'निन्दागर्वमत्सरदम्भदर्पेच्छाद्वेषसुखदुःखकामक्रोधलोभमोहहर्षासूयाहंकारादींश्च हित्वा' इति।

विविधैः[1] पुरुषैः स्वस्मिन्नापादिता दोषोक्तिर्निन्दा। अन्येभ्योऽधिकोऽहमिति चित्तवृत्तिर्गर्वः। विद्याधनादिभिरन्यसदृशो भवामीति बुद्धिर्मत्सरः। परेषामग्रे जपध्यानादिप्रकटनं दम्भः। भर्त्सनादिषु दृढबुद्धिर्दर्पः। धनाद्यभिलाष इच्छा। शत्रुवधादिबुद्धिर्द्वेषः। अनुकूलद्रव्यादिलाभेन बुद्धिस्वास्थ्यं सुखम्। तद्विपर्ययो दुःखम्। योषिदाद्यभिलाषः कामः। कामितार्थविघातजन्यो बुद्धिक्षोभः क्रोधः। लब्धस्य धनस्य त्यागासहिष्णुत्वं लोभः। हितेष्वहितबुद्धिरहितेषु हितबुद्धिर्मोहः। चित्तगतसुखाभिव्यञ्जिका मुखविकासादिहेतुर्धीवृत्तिर्हर्षः। परकीयगुणेषु दोषत्वारोपणमसूया। देहेन्द्रियसंघातेष्वात्मत्वभ्रमोऽहंकारः। आदिशब्देन भोग्यवस्तुषु ममकारसमीचीनत्वादयो बुद्धयो गृह्यन्ते। चकारो यथोक्तं निन्दादिविपरीतं स्तुत्यादिकं समुचिनोति। एतान्सर्वान्निन्दादीन्हित्वा पूर्वोक्तवासनाक्षयाभ्यासेन परित्यज्यावतिष्ठत इति शेषः।

ननु विद्यमाने स्वदेहे तत्परित्यागो न संभवतीत्याशङ्क्याह—

'स्ववपुः कुणपमिव दृश्यते यतस्तद्वपुरपध्वस्तम्'॥ इति।

पूर्वं यत्स्वकीयं वपुस्तदिदानीं योगिनः स्वात्मचैतन्यात्पृथग्भूतत्वेन कुणपमिवाऽऽलोक्यते। यथा श्रद्धालुर्भीत्या[3] शवदेहं दूरे स्थितोऽवलोकयति तथाऽयं योगी तादात्म्यभ्रान्त्युदयभीत्या सावधानो देहं चिदात्मनः सकाशान्निरन्तरं विविनक्ति। यतः कारणात्तद्वपुराचार्योपदेशागमानुभवैरपध्वस्तं चिदात्मनः सकाशान्निराकृतम्। ततश्चैतन्यवियुक्तस्य देहस्य शवतुल्यतया दृश्यमानत्वात्सत्यपि देहे निन्दादित्यागो घटत इत्यभिप्रायः।

ननूत्पन्नो दिग्भ्रमः सूर्योदयदर्शनेन विनष्टोऽपि यथा कदाचिदनुवर्तते तथा कदाचिदात्मनि देहात्मत्वसंशयाद्यनुवृत्तौ निन्दादिक्लेशः पुनः पुनः प्रसज्येतेत्याशङ्क्याऽऽह—

---

१ क. ख. ग. ङ. च. विरोधिभिः पु°। २ छ. °स्य स°। ३ क. ख. ग. घ. ङ. च. °लुः स्पर्शनभीत्या।

संशयविपरीतमिथ्याज्ञानानां यो हेतुस्तेन नित्यनिवृत्तः ' इति । आत्मा कर्तृत्वादिधर्मोपेतस्तद्रहितो वेत्यादिकं संशयज्ञानम् । देहादिरूप एवाऽऽत्मेति विपरीतं ज्ञानम् । एतदुभयं कर्तृत्वभोक्तृत्वविषयम् । मिथ्याज्ञानं तु भोग्यविषयमिति[2] विवक्षितम् । तच्चानेकविधं ' संकल्पप्रभवान्कामान् ' इत्यत्र स्पष्टीकृतम् ।

निन्दादीनां स्वरूपमाह—**विविधै**रित्यादिना । पुनरप्येतदंशविशेषमाशङ्क्य समाधत्ते—**ननु विद्यमाने स्वदेह** इत्यादिना । एवमवतारितं वाक्यं विवृणोति—**पूर्वमि**त्यादिना । कुणपमिवेत्युक्तदृष्टान्तं विवृणोति—**यथे**त्यादिना । तत्र हेतुः—**यतः कारणा**दित्यादिना । फलितमाह—**तत** इत्यादिना । तत्राप्याशङ्क्य समादधानोऽग्रिमग्रन्थमवतारयति—**ननूत्पन्नो दिग्भ्रम** इत्यादिना । तद्विवृणोति—**आत्मे**त्यादिना ।

नन्वनेकविधस्य मिथ्याज्ञानस्य को हेतुरित्यत आह—**तद्धे**तुरित्यादिना ।

तद्धेतुश्चतुर्विधः ' अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या ' इति सूत्रणात् । अनित्ये गिरिनदीसमुद्रादौ नित्यत्वभ्रान्तिरेका । अशुचौ पुत्रभार्यादिशरीरे शुचित्वभ्रान्तिर्द्वितीया । दुःखे कृषिवाणिज्यादौ सुखत्वभ्रान्तिस्तृतीया । गौणमिथ्यात्मनि पुत्रभार्यादावन्नमयादावनात्मनि मुख्यात्मत्वभ्रान्तिश्चतुर्थी । एतेषां संशयादीनां हेतुरद्वितीयब्रह्मात्मतत्त्वावरकमज्ञानं तद्वासना च । तच्चाज्ञानं योगिनः परमहंसस्य महावाक्यार्थबोधेन निवृत्तम् । वासना तु योगाभ्यासेन निवृत्ता। उदाहृतायां दिग्भ्रान्तावज्ञाने निवृत्तेऽपि वासनायाः सद्भावाद्यथापूर्वं भ्रान्तिव्यवहारः । योगिनो भ्रान्तिहेतुद्वयराहित्यात्कुतः संशयादीन्यनुवर्तेरन् । तमेवमनुवृत्त्यभावमभिप्रेत्यानेन हेतुद्वयेन योगी नित्यनिवृत्त इत्युक्तम् । सत्यामप्यज्ञानतद्वासनानिवृत्तौ[3] निवृत्तेर्विनाशाभावान्नित्यत्वं द्रष्टव्यम् ।

तस्मिन्नित्यत्वे हेतुमाह—

' तन्नित्यबोधः ' इति ।

सर्वनामत्वात्प्रसिद्धार्थवाची तच्छब्दोऽत्र सर्ववेदान्तप्रसिद्धं परमात्मानमाचष्टे । तस्मिन्परमात्मनि नित्यबोधो यस्य योगिनः सोऽयं तन्नित्यबोधः । योगी हि ' तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः '

---

१ क. ख. ग. घ. ङ. च. °यं भोक्तृवि° । २ क. ख. ङ. °यनत्र वि । ३ क. ग. ङ. च. °वृत्तेरुत्पत्तौ तस्या नि° ।

इति श्रुतिमनुसृत्य चित्तविक्षेपान्प्रयोगेन परिहृत्य नैरन्तर्येण परमात्मविषयामेव प्रज्ञां करोति । अतो बोधस्य नित्यत्वाद्बोधविनाशयोरज्ञानतद्वासनयोर्निवृत्तिर्नित्येत्यर्थः ।

बुध्यमानस्य परमात्मनस्तार्किकेश्वरवत्तटस्थत्वशङ्कां वारयति—

'तत्स्वयमेवावस्थितिः' इति ।

यद्वेदान्तवेद्यं परं ब्रह्मास्ति तत्स्वयं न च स्वस्मादन्यदित्येवं निश्चित्य योगिनोऽवस्थितिर्भवति ।

तस्य योगिनो ब्रह्मानुभवप्रकारं दर्शयति—

'तं शान्तमचलमद्वयानन्दविज्ञानघन एवास्मि तदेव मम परमं धाम' इति ।

तमित्यादिपदत्रये द्वितीया प्रथमार्थे द्रष्टव्या । यः परमात्मा शान्तः क्रोधादिविक्षेपरहितः, अचलो गमनादिक्रियारहितः, स्वगतसजातीयविजातीयभेदशून्यः सच्चिदानन्दैकरसः स एवाहमस्मि । तदेव ब्रह्मतत्त्वं मम योगिनः परमं धाम वास्तवं स्वरूपम् । यत्कर्तृत्वभोक्तृत्वादि तन्न युक्तम् । एतस्य मायाकल्पितत्वात् । नन्वात्मनः परब्रह्मत्व आनन्दावाप्तिरिदानीं कुतो नेत्यत्राऽऽनन्दावाप्तिः सदृष्टान्तमुक्ताऽभियुक्तैः—

गवां सर्पिः शरीरस्थं न करोत्यङ्गपोषणम् ।
तदेव कर्मरचितं पुनस्तस्यैव भेषजम् ॥
एवं सर्वशरीरस्थः सर्पिर्वत्परमेश्वरः ।
विना चोपासनं देवो न करोति हितं नृषु ॥ इति ।

यदि योगिनः पूर्वाश्रमप्रसिद्धा आचार्यपितृभ्रात्रादयः कर्मिणः श्रद्धाजडाः शिखायज्ञोपवीतसंध्यावन्दनादिराहित्येन पाखण्डित्वमारोप्य व्यामोहयेयुस्तदा व्यामोहाद्यनुत्पत्तये योगिनो वर्तमानं निश्चयं दर्शयति—

'तदेव च शिखा तदेवोपवीतं च परमात्मात्मनोरेकत्वज्ञानेन तयोर्भेद एव विभग्नः सा संध्या' इति ।

तत्र मानच्छलेन हेतुमप्याह—**अनित्य** इत्यादिना । तद्विवृणोति—**अनित्य** इत्यादिना । ननु भवत्वेवं मिथ्याज्ञानस्य हेतुचातुर्विध्यमथापि संशयादीनामेव को हेतुरित्यत्राऽऽह—**एतेषा**मित्यादिना । तद्वासनेति जीवन्मुक्ताभिप्रायेणैव । तदुक्तं संक्षेपशारीरके—'द्वैतच्छायारक्षणायास्ति लेशः' इति । अज्ञानसंस्कारात्मक एवाज्ञानलेशस्तद्भिन्नस्य तस्यासंभवा-

१ क. ग. ङ. च. °यद्वैतशू° । २ क. ख. ग. घ. ङ. च. °धाम° ।

दिति भावः । **प्रज्ञां करोतीति** । पूर्वं यथाविधिविचारितवेदान्तमहावाक्यजन्याप्रतिबद्धापरोक्षप्रमासंस्कारसंजातस्मृतिसंततिमेव सर्वदा संपादयतीत्यर्थः । **बोधविनाश्ययोरिति**। निरुक्तरीतिकप्राथमिकप्रमात्मकबोधविनाश्यमज्ञानमेव । 'यतो ज्ञानमज्ञानस्यैव निवर्तकम्' इति पञ्चपादिकावचनात् । तत्संस्कारस्तु यावद्देहं निरुक्तस्मृतिसंतत्येकविनाश्य इत्याशयः । तस्यैव, गवामङ्गस्यैव । उपासनं, प्रकृते निरुक्तस्मृतिसंततिरेव । अपरोक्षज्ञानिनः परोक्षध्यानादिलक्षणोपासनस्यासंभवात् । एवं हितमप्युक्तसंस्कारध्वंसेनाऽऽनन्दाविर्भावमेवेतिभावः । शिष्टं तु स्पष्टमेव ग्रन्थजातमिदम् ।

उक्तश्रुतिमेव विवृणोति **यदित्यादिना**—

**यद्वेदान्तवेद्यस्य परब्रह्मणो ज्ञानं तदेव कर्माङ्गभूतबाह्यशिखायज्ञोपवीतस्थानीयम् । अन्ये च मन्त्रद्रव्यलक्षणे कर्माङ्गभूते चकाराभ्यां समुच्चीयेते । शिखाद्यङ्गसाध्यैः कर्मभिरुत्पन्नं यत्स्वर्गादिसुखं तत्सर्वं ब्रह्मज्ञानेनैव लभ्यते । विषयानन्दस्य सर्वस्य ब्रह्मानन्दलेशत्वात् । 'एतस्यैवाऽऽनन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति श्रुतेः । एतदेवाभिप्रेत्याऽऽथर्वणिका ब्रह्मोपनिषद्यामनन्ति—**

**सशिखं वपनं कृत्वा बहिः सूत्रं त्यजेद्बुधः ।**
**यदक्षरं परं ब्रह्म तत्सूत्रमिति धारयेत् ॥**
**सूचनात्सूत्रमित्याहुः सूत्रं नाम परं पदम् ।**
**तत्सूत्रं विदितं येन स विप्रो वेदपारगः ॥**
**येन सर्वमिदं प्रोतं सूत्रे मणिमणा इव ।**
**तत्सूत्रं धारयेद्योगी योगवित्तत्त्वदर्शिवान् ॥**
**बहिः सूत्रं त्यजेद्विद्वान्योगमुत्तममास्थितः ।**
**ब्रह्मभावमिदं सूत्रं धारयेद्यः सचेतनः ॥**
**धारणात्तस्य सूत्रस्य नोच्छिष्टो नाशुचिर्भवेत् ।**
**सूत्रमन्तर्गतं येषां ज्ञानयज्ञोपवीतिनाम् ॥**
**ते वै सूत्रविदो लोके ते च यज्ञोपवीतिनः ।**
**ज्ञानशिखा[1] ज्ञाननिष्ठा ज्ञानयज्ञोपवीतिनः ॥**
**ज्ञानमेव परं तेषां पवित्रं ज्ञानमुच्यते ।**
**अग्नेरिव शिखा नान्या यस्य ज्ञानमयी शिखा ॥**

---

१ घ. ङ. छ. शिखिनो ज्ञा° ।

स शिखीत्युच्यते विद्वान्नेतरे केशधारिणः ।
कर्मण्यधिकृता ये तु वैदिके ब्राह्मणादयः ॥
तैर्विधार्यमिदं सूत्रं क्रियाङ्गं तद्धि वै स्मृतम् ।
शिखा ज्ञानमयी यस्य चोपवीतं च तन्मयम् ॥
ब्राह्मण्यं सकलं तस्य इति ब्रह्मविदो विदुः ।
इदं यज्ञोपवीतं च परमं यत्परायणम् ॥
विद्वान्यज्ञोपवीती स्यात्तज्ज्ञास्तं यज्विनं विदुः । इति ।

तस्माद्योगिनः शिखायज्ञोपवीते यथा विद्येते तथैव संध्याऽपि विद्यते । यः शास्त्रगम्यः परमात्मा यश्चाहंप्रत्ययगम्यो जीवात्मा तयोरेकत्वज्ञानेन महावाक्यजन्येन भ्रान्तिप्रतीतो भेदो विशेषेण मग्न एव ! पुनर्भ्रान्त्यनुदयो मङ्गस्य विशेषः । येयमेकत्वबुद्धिः सेयमुभयोरात्मनोः संधौ जायमानत्वात्संध्येत्युच्यते । अहोरात्रयोः [2]संध्ययोरनुष्ठेया क्रिया यथा संध्या तद्वत् । एवं सति योगी श्रद्धाजडैर्न व्यामोहयितुं शक्यः ।

कोऽयं मार्ग इति प्रश्नस्यासौ स्वपुत्रेत्यादिनोत्तरमुक्तम् । का स्थितिरित्येतस्य महापुरुष इत्यादिना संक्षिप्योत्तरमुक्त्वा संशयविपरीतेत्यादिना तदेव प्रपञ्चयेदानीमुपसंहरति—

सर्वान्कामान्परित्यज्य अद्वैते प[3]रमा स्थितिः ' इति ।

क्रोधलोभादीनां काम[4]पूरकत्वात्कामपरित्यागेन चित्तदोषाः सर्वेऽपि परित्यज्यन्ते । एतदेवाभिप्रेत्य वाजसनेयिभिराम्नातम्—'अथो खल्वाहुः काममय एवायं पुरुषः ' इति । अतो निष्कामस्य योगिचित्तस्याद्वैते निर्विघ्ना स्थितिरुपपद्यते ।

अन्ये शिखायज्ञोपवीते प्रसिद्धे तु मन्त्रद्रव्यलक्षणे । मन्त्रसंस्कृतकेशविशेषकार्पाससूत्रात्मकवस्तुनी एवेत्यर्थः । तत्र हेतुमाह—**शिखाद्यङ्गे**त्यादिना । तत्र श्रुत्यन्तरं संवादयति—**एतदेवे**त्यादिना । एवं योगिनः संध्याऽपीत्याह—**तस्मादि**त्यादिना । अथ वृत्तानुवादपूर्वकमग्रिमं ग्रन्थमवतारयति—**कोऽयं मार्ग इती**त्यादिना । फलितमाह—**क्रोधलोभादीना**मित्यादिना । क्रोधस्य रावणादिविषयकस्य श्रीरामनिष्ठस्य प्रसिद्धमेव जानकीलाभादिलक्षणकामपूरकत्वम् । एवं लोभस्यापि ध्रुवनिष्ठस्याक्षयराज्यादिविषयकस्य

१ क. ख. ग. घ. ङ. च. एवं पु° । २ क. फ. ग. घ. छ. च. संधावनु° । ३ क. ग. घ. ङ. च. °रमे स्थि° । ४ क. ख. ग. घ. ङ. च. °पूर्वक° ।

च श्रीभगवद्दर्शनद्वारोक्तध्रुवपदावातिलक्षणकामपूरकत्वम् । आदिपदान्मत्सरस्यापि विश्वामित्रनिष्ठस्य ब्रह्मर्षित्वरूपकामपूरकत्वं तपोद्वारा ग्राह्यम् । कामपूर्वकत्वादिति पाठस्तु सरल एव । ततः किं तदाह—**कामपरित्यागेनेति** । तत्र मानमाह—**एतदेवे**त्यादिना सावतरणम् ।

तत्राप्याशङ्क्य समादधानः श्रुतिमवतारयति **नन्वि**त्यादिना—

**ननु दण्डग्रहणविधिबलेनोपेता विविदिषासंन्यासिनो योगिनं दण्डेन रहितं परमहंसं नाभ्युपगच्छन्तीत्याशङ्क्याऽऽह—**

**'ज्ञानदण्डो धृतो येन एकदण्डी स उच्यते ।**
**काष्ठदण्डो धृतो येन सर्वाशी ज्ञानवर्जितः ॥**
**स याति नरकान्घोरान्महारौरवसंज्ञकान् ।**
**तितिक्षाज्ञानवैराग्यशमादिगुणवर्जितः ॥**
**भिक्षामात्रेण यो जीवेत्स पापी यतिवृत्तिहा ।**
**इदमन्तरं ज्ञात्वा स परमहंसः' इति ॥**

**परमहंसस्य योऽयमेकदण्डः स द्विविधः—ज्ञानदण्डः काष्ठदण्डश्चेति । यथा त्रिदण्डिनो वाग्दण्डो मनोदण्डः कायदण्डश्चेति त्रैविध्यं तद्वत् । वाग्दण्डादयो मनुना स्मर्यन्ते—**

**वाग्दण्डोऽथ मनोदण्डः कर्मदण्डस्तथैवच ।**
**यस्यैते नियता[2] बुद्धौ स त्रिदण्डीति चोच्यते ॥**
**त्रिदण्डमेवं[3] निक्षिप्य सर्वभूतेषु मानवः ।**
**कामक्रोधौ तु संयम्य ततः सिद्धिं नियच्छति[4] । इति ॥**

**तेषां स्वरूपं दक्षः स्मरति—**

**वाग्दण्डोऽथ मनोदण्डः कर्मदण्डस्तथैव च ।**
**यस्यैते नियता दण्डास्त्रिदण्डीति स उच्यते ॥**
**वाग्दण्डे मौनमातिष्ठेत्कर्मदण्डे त्वनीहताम् ।**
**मानसस्य च दण्डस्य प्राणायामो विधीयते । इति ।**

**कर्मदण्डोऽल्पभोजनम्' इति स्मृत्यन्तरपाठः । ईदृशं त्रिदण्डित्वं परमहंसस्याप्यस्ति । तदेतदभिप्रेत्य पितामहः स्मरति—**

**यतिः परमहंसस्तु तुर्याख्यः श्रुतिचोदितः ।**

---

१ क. ख. ग. च. °धिवासनयोपे° । २ क. ख. ग. घ. ङ. च. °ता दण्डास्त्रिद° । ३ क. ख. ङ. च. °मेतान्निक्षि° । ४ क. ख. ग. घ. ङ. च. निगच्छ° ।

यमैश्च नियमैर्युक्तो विष्णुरूपी त्रिदण्डभृत् ॥ इति ।

एवं सति मौनादीनां वागादिदमनहेतुत्वाद्यथा दण्डत्वं तथैवाज्ञानतत्कार्यदमनहेतोर्ज्ञानस्य दण्डत्वम् । अयं ज्ञानदण्डो येन परमहंसेन धृतः स एव मुख्य एकदण्डीत्युच्यते । मानसस्य ज्ञानदण्डस्य कदाचिच्चित्तविक्षेपेण विस्मृतिः प्रसज्येतेति तन्निवारणार्थं स्मारकः काष्ठदण्डो ध्रियते ।

तदेतच्छास्त्रार्थरहस्यमबुद्ध्वा वेणुमात्रेण पुरुषार्थसिद्धिमभिप्रेत्य काष्ठदण्डो येन परमहंसेन धृतः स पुरुषो बहुविधयातनोपेतत्वाद्घोरान्महारौरवसंज्ञकान्नरकानाप्नोति । तत्र हेतुरुच्यते—परमहंसवेषं दृष्ट्वा ज्ञानित्वभ्रान्त्या सर्वे जनाः स्वस्वगृहे तं भोजयन्ति । अयं च जिह्वालम्पटो वर्ज्यावर्ज्यविवेकमकृत्वा सर्वमश्नाति तेन प्रत्यवायं प्राप्नोति । यानि तु 'नान्नदोषेण मस्करी' 'चातुर्वर्ण्यं चरेद्भैक्षम्' इत्यादीनि वाक्यानि तानि ज्ञानिविषयाणि । अयं च ज्ञानवर्जित इति युक्तोऽस्य नरकः । अत एव ज्ञानहीनस्य यतेर्भिक्षानियममाह मनुः—

न चोत्पातनिमित्ताभ्यां न नक्षत्राङ्गविद्यया ।
नानुशासनवादाभ्यां भिक्षां लिप्सेत कर्हिचित् ॥
एककालं चरेद्भैक्षं न प्रसज्येत विस्तरम् ।
भैक्षे प्रसक्तो हि यतिर्विषयेष्वपि सज्जति ॥ इति ।

ज्ञानाभ्यासिनं प्रति त्वेवं स्मर्यते—

एकवारं द्विवारं वा भुञ्जीत परहंसकः ।
येन केन प्रकारेण ज्ञानाभ्यासी भवेत्सदा ॥ इति ।

एवं सति ज्ञानदण्डकाष्ठदण्डयोर्यत्तारतम्यमुत्तमाधमत्वरूपं तदिदमवगत्योत्तमं ज्ञानदण्डं यो धारयति स एव मुख्यः परमहंस इत्यवगन्तव्यम् । नन्वमुख्य परमहंसस्यास्तु ज्ञानदण्डो मा भूत्काष्ठदण्डनिर्बन्ध इतरा तु चर्या कीदृशीत्याशङ्क्याऽऽह—'आशाम्बरो निर्नमस्कारो न स्वधाकारो न निन्दा न स्तुतिर्यादृच्छिको भवेद्भिक्षुर्नाऽऽवाहनं न विसर्जनं न मन्त्रं न ध्यानं नोपासनं च न लक्ष्यं नालक्ष्यं न पृथङ्नापृथङ्न चाहं न त्वं न च सर्वं न चानिकेतस्थितिरेव स भिक्षुः सौवर्णादीन्नैव परिग्रहेन्न लोकं नावलोकं च' इति ।

१ क. ख. ग. घ. ङ. च. वेषमा° । २ क. ग. व. ङ. °धसंतापोपे° । ३ क. ख. ग. घ. ङ. च. °सज्जेत विस्तरे । भै° । ४ क. ख. ग. घ. ङ. च. °दीनां नैव ।

उक्तश्रुतितात्पर्यमाह—**परमहंसस्ये**त्यादिना । तत्र दृष्टान्तं स्पष्टयति—**यथे**त्यादिना । तत्र मानमाह—**वाग्दण्डादय** इत्यादिना । सावतरणम् । सर्वभूतेष्विति विषयसप्तमी । एवं च सर्वभूतविषयकं वाग्दण्डादित्रयं निक्षिप्य त्यक्त्वा 'अहिंसा परमो धर्मः' इति वचनात्कायिकादिहिंसात्रयमपि परिवर्ज्येत्यर्थः । नियच्छति संपादयतीति यावत् । स्मृत्यन्तरमप्याह—**तेषामि**त्यादिना । फलितमाह—**एवं सती**त्यादिना । नन्वेवं दिगम्बरः परमहंसः प्राचीनाचार्येषु कोऽपि न प्रसिद्ध इत्यत आह—**मानसस्ये**त्यादिना । **न चोत्पातेति** । उत्पातो भूकम्पविद्युत्पातादिः । निमित्तं क्षुदादि तत्फलकथनाभ्यामित्यर्थः । **न नक्षत्रेति** । नक्षत्रविद्या, ज्योतिःशास्त्रं तदादिर्याऽङ्गविद्या शिक्षादिषडङ्गविद्या तयेत्यर्थः । नानुशासनेति । अध्यापनपाण्डित्याभ्याम् । अपरं तु सरलमेवाखिलम् ।

उक्तश्रुतिं व्याकरोति, **आशा** इत्यादिना—

**आशा दिशस्ता एवाम्बरं वस्त्रमाच्छादनं यस्यासावाशाम्बरः । यत्तु स्मृतिवचनम्—**

**जान्वोरूर्ध्वमधो नाभेः परिधायैकमम्बरम् ।**
**द्वितीयमुत्तरं वासः परिधाय गृहानटेत् ॥ इति ।**

**तदिदमयोगिविषयम् । अत एव पूर्वं तच्च न मुख्योऽस्तीत्युक्तम् । यत्तु स्मृत्यन्तरम्—**

**यो भवेत्पूर्वसंन्यासी तुल्यो वै धर्मतो यदि ।**
**तस्मै प्रणामः कर्तव्यो नेतराय कदाचन ॥ इति ।**

**तस्याप्यन्यविषयत्वान्नास्य नमस्कारः कर्तव्योऽस्ति । अत एव ब्राह्मणलक्षणे 'निर्नमस्कारमस्तुतिम्' इत्याद्युदाहृतम् । गयाप्रयागादितीर्थेषु श्रद्धाजाड्यात्प्राप्तः स्वधाकारो निषिध्यते । पूर्वत्र निन्दागर्वेत्यादिवाक्ये परैः कृतया स्वात्मनिन्दया क्लेशो निवारितः, अत्र तु स्वकर्तृके परविषये निन्दास्तुती निषिध्येते । यादृच्छिकत्वं निर्बन्धराहित्यम् । न क्वचिदपि व्यवहारे निर्बन्धं कुर्यात् । यस्तु देवपूजायां निर्बन्धः स्मर्यते—**

**भिक्षाटनं जपः शौचं स्नानं ध्यानं सुरार्चनम् ।**
**कर्तव्यानि षडेतानि सर्वथा नृपदण्डवत् ॥ इति ।**

---

१ छ. °यमौत्त° । २ क. ख. ङ. च. °प्ययोगिवि° ।

तस्यान्ययोगिविषयत्वमित्यभिप्रेत्य नाऽऽवाहनमित्याद्याम्नातम्। सकृत्स्मरणं ध्यानं, नैरन्तर्येणानुस्मरणमुपासनमिति तयोर्भेदः। यथा योगिनः स्तुतिनिन्दादिलौकिकव्यवहाराभावः, यथा च देवपूजादिधर्मशास्त्रव्यवहाराभावः, तथा लक्ष्यत्वालक्ष्यत्वादिज्ञानशास्त्रव्यवहारोऽपि नास्ति। यत्साक्षिचैतन्यमस्ति तदिदं तत्त्वमसीति वाक्ये त्वंपदेन लक्ष्यम्। देहादिविशिष्टं चैतन्यं लक्ष्यं न भवति किं तु वाच्यम्। तच्च वाच्यं तत्पदार्थात्पृथक्। तल्लक्ष्यं त्वपृथक्। स्वदेहनिष्ठो वाच्योऽर्थोऽहमिति व्यवहारार्हः। परदेहनिष्ठस्त्वमिति व्यवहारार्हः। लक्ष्यं वाच्यमित्युभयविधं चेतनोपेतमन्यज्जडं जगत्सर्वमिति व्यवहारार्हमित्येतादृशो विकल्पो न कोऽपि योगिनोऽस्ति, तदीयचित्तस्य ब्रह्मणि विश्रान्तत्वात्। अत एव स भिक्षुरनिकेतस्थितिरेव। यदि नियतनिवासार्थं कंचिन्मठं संपादयेत्तदानीं तस्मिन्ममत्वे सति तदीयहानिवृद्ध्योश्चित्तं विक्षिप्येत। एतत्सर्वमभिप्रेत्य गौडपादाचार्या आहुः—

निस्तुतिर्निर्नमस्कारो निःस्वधाकार एव च।
चलाचलनिकेतश्च यतिर्यादृच्छिको भवेत्॥ इति।

यथा मठो न परिग्रहीतव्यस्तथा सुवर्णरजतादीनां भिक्षाचमनपात्राणामेकमपि न गृह्णीयात्। तदाह यमः—

हिरण्मयानि पात्राणि कार्ष्णायसमयानि च।
यतीनां[1] तान्यपात्राणि वर्जयेत्तानि भिक्षुकः। इति।

मनुरपि—अतैजसानि पात्राणि तस्य स्युर्निर्व्रणानि च।
तेषामद्भिः[2] स्मृतं शौचं चमसानामिवाध्वरे॥
अलाबुदारुपात्रं वा मृन्मयं वैणवं तथा।
एतानि यतिपात्राणि मनुः स्वायंभुवोऽब्रवीत्॥ इति।

बौधायनोऽपि—स्वयमाहृतपर्णेषु स्वयं शीर्णेषु वा पुनः।
भुञ्जीत न वटाश्वत्थकरञ्जानां च पर्णके॥
आपद्यपि न कांस्येषु मलाशी कांस्यभोजनः।
सौवर्णे राजते ताम्रे मृन्मये त्रपुसीसयोः॥ इति।

---

१ क. ख. ग. घ. ङ. च. °नां नान्य°। २ क. ख. ग. घ. छ. च. °तेषां शुद्धिः।

तथा लोकं जनं शिष्यवर्गं न गृह्णीयात् ।

तदाह मनुः- एक एव चरेन्नित्यं सिध्यर्थमसहायकः ।

सिद्धिमेकस्य संपश्यन्न जहाति न हीयते । इति ।

निरुक्तयोगिव्यवहारे स्मृतिविरोधमाशङ्क्य तस्यामुख्यपरमहंसपरत्वेन समाधाने कृतेऽपि तद्दार्ढ्यार्थं सांप्रदायिकसंमतिमपि तत्राऽऽह—**एतत्सर्वमि**त्यादि ।

उक्तेषु यतिधर्मेषु मेधातिथेः प्रकारान्तरेणापि संमतांस्तद्धर्मान्संगृह्णाति—**मेधातिथिरपी**त्यादिना—

**मेधातिथिरपि—** पात्रलोभ

आसनं पत्रा[1]लोपश्च संचयः शिष्यसंग्रहः ।
दिवा स्वापो वृथाऽऽलापो यतेर्बन्धकराणि षट् ॥
एकाहात्परतो ग्रामे पञ्चाहात्परतः पुरे ।
वर्षाभ्योऽन्यत्र यत्स्थानमासनं तदुदाहृतम् ॥
उक्तालाब्वादिपात्राणामेकस्यापि न संग्रहः ।
भिक्षोर्भैक्षभुजश्चापि पात्र[2]लोपः स उच्यते ॥
गृहीतस्य तु दण्डादेर्द्वितीयस्य परिग्रहः ।
कालान्तरोपभोगार्थं संचयः परिकीर्तितः ॥
शुश्रूषालाभपूजार्थं यशोर्थं वा परिग्रहः ।
शिष्याणां न तु कारुण्यात्स ज्ञेयः शिष्यसंग्रहः ॥
विद्या दिनं प्रकाशत्वादविद्या रात्रिरुच्यते ।
विद्याभ्यासे प्रमादो यः स दिवास्वाप उच्यते ॥
आध्यात्मिकीं कथां मुक्त्वा भैक्षचर्यां सुरस्तुतिम् ।
अनु[3]ग्रहः पथि प्रश्नो वृथाऽऽलापः स उच्यते ॥ इति ।

लोकं शिष्यजनरूपं न गृह्णीयादित्येतावदेव न भवति किं तु तस्य लोकस्यावलोकं दर्शनमपि न कुर्यात्तस्य बन्धहेतुत्वात् । न चेत्यनेनान्यदपि स्मृतिनिषिद्धं न कुर्यादित्यभिप्रेतम् । तच्च निषिद्धं मेधातिथिर्दर्शयति—

स्थावरं जङ्गमं बीजं तैजसं विषमायुधम् ।
षडेतानि न गृह्णीयाद्यतिर्मूत्रपुरीषवत् ॥

---

१ क. ख. ग. घ. छ. च. °लोभश्च । २ क. फ. ग. छ. °लोभः स । ३ क. क. ग. छ. च. °ग्रहात्पथि ।

रसायनं क्रियाचारं ज्योतिषं क्रयविक्रयम्।
विविधानि च शिल्पानि वर्जयेत्परदारवत्। इति॥

योगिनो लौकिकवैदिकव्यवहारगतानि यानि बाधकानि सन्ति तेषां वर्जनमभिहितम्। अथ प्रश्नोत्तराभ्यामत्यन्तं बाधकं प्रदर्श्य तद्वर्जनमाह--

'आबाधकः क इति चेदाबाधकोऽस्त्येव। यस्माद्भिक्षुर्हिरण्यं रसेन दृष्टं चेत्स ब्रह्महा भवेत्। यस्माद्भिक्षुर्हिरण्यं रसेन स्पृष्टं चेत्स पौल्कसो भवेत्। यस्माद्भिक्षुर्हिरण्यं रसेन ग्राह्यं चेत्स आत्महा भवेत्। तस्माद्भिक्षुर्हिरण्यं रसेन न दृष्टं च न स्पृष्टं च न ग्राह्यं च' इति।

आकारोऽभिव्याप्त्यर्थः। 'आङीषदर्थेऽभिव्याप्तौ' इत्यभिहितत्वात्। अभिव्याप्तौ बाधकोऽत्यन्तबाधकस्तस्य सद्भावं प्रतिज्ञाय हिरण्यस्य तथाविधबाधकत्वमुच्यते। रसेनाभिलाषयुक्तेनाऽऽदरेण हिरण्यं यदि दृष्टं स्यात्तदानीं स द्रष्टा भिक्षुर्ब्रह्महा भवेत्। हिरण्यासक्त्या तत्संपादनरक्षणयोः सर्वदा प्रयतमानस्तद्वैयर्थ्यपरिहाराय प्रपञ्चमिथ्यात्वप्रतिपादकान्वेदान्तान्दूषयित्वा तत्सत्यत्वमवलम्बते। ततः शास्त्रसिद्धमद्वितीयं ब्रह्म तेन भिक्षुणा हतमेव भवति। तस्मादसौ ब्रह्महा भवेत्। तथा च स्मर्यते--

ब्रह्म नास्तीति यो ब्रूयाद्द्वेष्टि ब्रह्मविदं च यः।
अभूतब्रह्मवादी च त्रयस्ते ब्रह्मघातकाः। इति॥
* "ब्रह्महा स तु विज्ञेयः सर्वधर्मबहिष्कृतः।"

अभिलाषपूर्वकं हिरण्यं स्पृष्टं चेत्तदा स स्प्रष्टा भिक्षुः पतितत्वात्पौल्कसो म्लेच्छसदृशो भवेत्। पातित्यं च स्मर्यते--

पतत्यसौ ध्रुवं भिक्षुर्यस्य भिक्षोर्द्वयं भवेत्।
धीपूर्वं रेत उत्सर्गो द्रव्यसंग्रह एव च॥ इति।

अभिलाषपुरःसरं हिरण्यं न ग्राह्यं गृहीतं चेत्तदा स भिक्षुर्देहेन्द्रियादिसाक्षिणमसङ्गं चिदात्मानं हतवान्भवेत्। असङ्गत्वमपोह्य स्वात्मनो हिरण्यादिद्रव्यं प्रति भोक्तृत्वेन प्रतिपन्नत्वात्। तस्याश्चान्यथा प्रतिपत्तेः सर्वपापरूपत्वं स्मर्यते--

* ब्रह्महेत्यर्धपद्यं क. ख. ग. घ. च. पुस्तकेषु नास्ति। अधिकं चैतत्।

१ क. ख. ग. घ. ङ. च. °यावादं ज्यो°।

योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चोरेणाऽऽत्मापहारिणा ॥ इति ।

**भैक्षेति** । भिक्षाटने नारायणस्मरणम् । अनुग्रहो मन्त्रोपदेशादिः । पथि मोक्षमार्गे विषये प्रश्न आक्षेपः । आसनं पात्रलोपश्चेत्यादिवदन्यानपि तत्संमतान्यतिधर्मान्संग्रहीतुं श्रुतिगतं न चेति निपातद्वयं तात्पर्यभेदेन विशदयति—**न चेत्यनेने**त्यादिना । स्थावरं रत्नादि । जङ्गमं गवादि । बीजं तुलस्यादेः । तैजसं काचपात्रादि । विषमायुधं च प्रसिद्धमेव । **परदारेति** । यथा पूर्वाश्रमे परदाराः सर्वथा वर्जितास्तद्वदत्राऽऽश्रमे रसायनाद्यखिलमपि वर्जयेदित्यर्थः । इहाऽऽश्रमे तु स्वपुत्रमित्रकलत्रेत्यादिना स्वदाराणामपि त्यक्तत्वेन परदारवर्जनस्य कैमुत्यसिद्धत्वादित्याशयः । एवमाबाधकोऽस्त्येवेति श्रुत्याऽऽबाधकस्य कैमुत्यमपि ज्ञेयम् । तद्वद्ब्रह्महेत्युक्तविवृतिरीत्या तत्र ब्राह्मणवधपापस्यापि संग्रहः । एवमात्महेत्यत्रापि कैमुतिकन्यायः स्पष्टमेवान्यत् ।

उक्तेऽर्थेश्रुतिमपि संवादयति **किं चे**त्यादिना—

**किं चाऽऽत्मघातिनः सुखलेशेनापि रहिता बहुविधदुःखेनाऽऽवृता लोकाः श्रूयन्ते—**

**‘ असुर्या नाम ते लोका अन्धेन तमसाऽऽवृताः ।**
**तांस्ते प्रेत्याभिगच्छन्ति ये के चाऽऽत्महनो जनाः ॥ इति ।**

**दृष्टं चेत्यनेन चकारेण श्रुतं चेति समुच्चीयते । स्पृष्टं चेत्यनेन कथितस्य समुच्चयः । ग्राह्यं चेत्यनेन व्यवहृतं चेति समुच्चीयते । दर्शनस्पर्शनग्रहणवदभिलाषपूर्वकहिरण्यवृत्तान्तश्रवणतद्गुणकथनतदीयक्रियादिव्यवहारा अपि प्रत्यवायहेतव इत्यर्थः । यस्मात्साभिलाषहिरण्यदर्शनादयो दोषकारिणस्तस्माद्भिक्षुणा हिरण्यदर्शनादयो वर्जनीया इत्यर्थः ।**

**हिरण्यवर्जनस्य फलमाह—**

**‘ सर्वे कामा मनोगता व्यावर्तन्ते दुःखेनोद्विग्नः सुखे निःस्पृहस्त्यागो रागे सर्वत्र शुभाशुभयोरनभिस्नेहो न द्वेष्टि न मोदते च सर्वेषामिन्द्रियाणां गतिरुपरमते य आत्मन्येवावस्थीयते ’ इति ।**

**पुत्रभार्यागृहक्षेत्रादिकामानां सर्वेषां हिरण्यमूलत्वाद्धिरण्ये परित्यक्ते सति ते कामा मनोगता मनस्यवस्थानाद्व्यावर्तन्ते व्यावृत्ता भवन्ति । कामनिवृत्तौ सत्यां कर्मप्राप्तयोर्दुःखसुखयोरुद्वेगस्पृहे न भवतः । एतच्च स्थितप्रज्ञप्रस्तावे प्रपञ्चितम् । ऐहिकयोः सुखदुःखयोर्[1]विक्षेपकत्वेनाऽऽमु-**

---

१ क. ख. ग. घ. ङ. च. °योरधिक्षेपकत्वे सत्यामु° ।

ष्मिकविषयरागेऽपि त्यागो भवति। ऐहिकसुखस्पृहायुक्तो हि तद्दृष्टान्तेनानुमित आमुष्मिके सुखे रागवान्भवति। तस्मादैहिके निःस्पृहस्याऽऽमुष्मिके रागाभावो युज्यते। एवं सति सर्वत्र लोकद्वयेऽपि यौ शुभाशुभावनुकूलप्रतिकूलविषयौ तयोरनभिस्नेहः। एतच्च द्वेषराहित्यस्याप्युपलक्षणम्। तादृशो विद्वानशुभकारिणं कंचिदपि पुरुषं न द्वेष्टि शुभकारिणं च दृष्ट्वा न च मोदं प्राप्नोति। द्वेषमोदरहितो यः पुमानात्मन्येव सर्वदाऽवतिष्ठते तस्य सर्वस्य सर्वेषामिन्द्रियाणां गतिः प्रवृत्तिरुपरमते। इन्द्रियोपरतौ न कदाचिदपि निर्विकल्पकसमाधेर्विघ्नो भवति। तेषां का स्थितिरिति प्रश्नस्य संक्षेपविस्तराभ्यामुत्तरं पूर्वमुक्तं तदेवात्र पुनरपि हिरण्यनिषेधप्रसङ्गेन स्पष्टीकृतम्।

अथ विद्वत्संन्यासमुपसंहरति—

'यत्पूर्णानन्दैकबोधस्तद्ब्रह्माहमस्मीति कृतकृत्यो भवति कृतकृत्यो भवति' इति।

यद्ब्रह्म वेदान्तेषु पूर्णानन्दैकबोधः परमात्मेति निरूपितं तद्ब्रह्माहमस्मीत्येवं सर्वदाऽनुभवन्नयं योगी परमहंसः कृतकृत्यो भवतीति।

तथा च स्मर्यते—

ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः।
नैवास्ति किंचित्कर्तव्यमस्ति चेन्न स तत्त्ववित्॥ इति।

दृष्टं चेत्यादिश्रुतचकारत्रयस्वारस्यमाह—**दृष्टं चेत्यनेने**त्यादिना। फलितमाह—**यस्मादि**त्यादिना। ततः किं तदाह—**हिरण्यवर्जनस्येत्यादि**। समुदाहृतश्रुतिं विवृणोति—**पुत्रभार्ये**त्यादिना। **व्यावृत्ता इति**। मनसः सकाशात्सामग्र्यभावादेव निर्गता भवन्तीत्यर्थः। तत्फलमाह—**कामनिवृत्ता**वित्यादिना। **कर्मेति**। प्रारब्धकर्मागतयोरित्यर्थः। तत्रोपपत्त्यपेक्षायां तां स्मारयति—**एतच्चेति**। ततोऽपि किं तदाह—**ऐहिकयोरि**त्यादिना। निगमयति—**तस्मादैहिक** इति। फलितं कथयति—**एवं सती**त्यादिना। अथ वृत्तानुवादपूर्वकमवशिष्टग्रन्थरहस्यमाह—**तेषामि**त्यादिना। उदाहृतोपनिषद्वाक्यं व्याकरोति—**यद्ब्रह्मे**त्यादिना। अव्यावृत्ताननुगतं वस्तु ब्रह्मेति भण्यते। 'ब्रह्मार्थो **दुर्लभोऽत्र** स्याद्द्वितीये सति वस्तुनि' इति वार्तिकोक्तेर्द्वैतबाधोऽर्थादेवेति भावः। कार्तार्थ्ये **वाक्यमाह—तथा चे**त्यादिना।

अथाऽऽचार्यः प्रकरणार्थं संक्षिपन्मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि प्रथन्ते शास्त्राणीत्यादिमहाभाष्योक्तरीत्या ग्रन्थान्तेऽप्याशीर्वादलक्षणं मङ्गलं कुर्वाणः परमकरुणया

श्रीमद्भारतीतीर्थाभिधस्वगुर्वभिन्नं प्रकृतप्रकरणतात्पर्यप्रतिपाद्यमानं परमात्मानमेवाखिलमुमुक्षुनुजिघृक्षया प्रार्थयते जीवन्मुक्तीत्यादिश्लोकेन ग्रन्थानामपि प्रकृतप्रकरणे प्रेक्षावत्प्रवृत्त्यर्थं संग्रथयन्—

जीवन्मुक्तिविवेकेन तमो हार्दं निवारयन् ।
पुमर्थमखिलं देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥*
भेदाभेदौ सपदि गलितौ पुण्यपापे विशीर्णे
मायामोहौ क्षयमधिगतौ नष्टसंदेहवृत्तिः ।
शब्दातीतं त्रिगुणरहितं प्राप्य तत्त्वावबोधं
निस्त्रैगुण्ये पथि विचरतां को विधिः को निषेधः ॥ २ ॥
तीर्थानि तोयपूर्णानि देवान्पाषाणमृन्मयान् ।
योगिनो न प्रपद्यन्ते आत्मज्ञानपरायणाः ॥ ३ ॥
अग्निर्देवो द्विजातीनां मुनीनां हृदि दैवतम् ।
प्रतिमास्वल्पबुद्धीनां सर्वत्र विदितात्मनाम् ॥ ४ ॥
सर्वत्रावस्थितं शान्तं न प्रपद्ये जनार्दनम् ।
ज्ञानचक्षुर्विहीनत्वादन्धः सूर्यमिवोदितम् ॥ ५ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीभारतीतीर्थभगवच्छिष्यश्रीमद्विद्यारण्यगुरुवरविरचितो जीवन्मुक्तिविवेकः संपूर्णः ।

---

विद्येत्याद्यारम्भे व्याख्यातमपीह प्रकारान्तरेणैव व्याक्रियते तथा हि—विद्यातीर्थमहेश्वरः ।

तीर्थं शास्त्राध्वरक्षेत्रोपायनारीरजःसु च ।
अवतारर्षिजुष्टाम्बुपात्रोपाध्यायमन्त्रिषु ’ इति ॥

‘ मह उत्सवतेजसोः ’ इति च मेदिन्याः । ‘ मह उद्धव उत्सवः ’ इत्यमरात् । महनं महः, मह पूजायामिति रामाश्रमीयवचनाच्च विद्याया अपरोक्षाद्वैतब्रह्मविद्यायास्तीर्थमुपाध्यायः स चासौ महेश्वरश्चेति तथा । ‘ ईशानः सर्वविद्यानाम् ’ इति श्रुतेः, ‘ज्ञानं महेश्वरादिच्छेत् ’ इति स्मृतेश्च निरुक्तब्रह्मविद्याप्रदसद्गुर्वभिन्नः श्रीशंकर इत्यर्थः । मुमुक्षुभ्य इत्यार्थिकम् । तथा च केनचिन्निमित्तेन प्रतिबद्धप्रैषोच्चारणादिविधिपूर्वकैकदण्डधारणादिविविदिषासंन्यासित्वेऽपि तीव्रमुमुक्षया ‘ त्यागेनैके अमृतत्वमानशुः ’ इति श्रुत्युक्तगौण-

---

* इत उत्तरं भेदाभेदावित्यारभ्यैतदन्तिमं श्लोकचतुष्कं ङ. पुस्तक एव वर्तते नान्यत्र । तेनैतद्ग्रन्थकर्तुरन्यस्य वेति न विद्मः ।

विविदिषासंन्यासिभ्य इत्यर्थः। अखिलं विदेहकैवल्यलक्षणं पुमर्थं मोक्षम्। देयात्' कृपया विचारितस्वस्वशाखामहावाक्यैककरणकाप्रतिबद्धापरोक्षप्रमाविर्भावक्षण एव द्वैतबाधपूर्वकं मूलाविद्याध्वस्तिरूपं स्वप्रकाशाखण्डानन्दात्मना प्रकाशयत्विति ग्रन्थकृत्कर्तृकप्रार्थना। तत्र हेतुं द्योतयंस्तं विशिनष्टि—**जीवन्नि**त्यादिपूर्वार्धेन। जीवन्मुक्तेः प्राक्प्रपञ्चिताया विवेकः प्रचुरोहापोहपूर्वकः प्रमाणादिविचारो यस्मिंस्तेनानेन द्वारीभूतेन मत्संग्रथितग्रन्थेनेत्यर्थः। हार्दम्, अहमज्ञ इत्यनुभवादन्तःकरणावच्छेदेनैव साक्षिप्रत्यक्षमनादिभावरूपं निचारयन्निर्मूलयन्सन्निति यावत्। अत्राखिलमिति पुमर्थविशेषणेन सगुणसायुज्यादिव्युदासो व्यज्यते। एवं मूले प्रथमोपक्रान्ताधमाधिकार्यनुजिघृक्षया।

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः॥

इतिश्रुतेरीश्वराभिन्नश्रीगुरुप्रार्थनपरत्वेन व्याख्यातमिदं पद्यं व्याख्यायेदानीं क्रमप्राप्तनिरक्तबिध्युक्तदण्डधारणादिशालिपारमहंस्यवद्विविदिषासंन्यास्यभिधामध्यमाधिकारिपरतया तदुच्यते—**विद्येति**। विद्यायाः प्रागुक्तलक्षणायास्तीर्थमुपायः। अयं ह्युपाध्यायापेक्षया साधनमात्रत्वेन न्यूनश्रम एव। प्रकृतविविदिषोः संन्यासिनस्तावत्—'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्यादिश्रवणादिविधिं ब्रह्मचर्येऽधीतसाङ्गस्वाध्यायत्वेन विनिर्णीयैव तद्विज्ञानार्थं 'स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्' इति श्रुतिमनुसृत्यैव चतुर्लक्षण्युत्तरमीमांसाविचारार्थमेवाऽऽचार्यमुपसन्नत्वेन श्रवणोत्तरं मननादौ स्वतःप्रवृत्त्यादिसंभवादाद्यस्याधमादिकारिणस्तु तदसंभवात्तत्राऽऽचार्यस्य श्रमाधिक्याद्युक्तमेवोपाध्यायत्वम्। अत एव याज्ञवल्क्यवाक्यं मैत्रेयीं प्रति—'व्याचक्षाणस्य तु मे निदिध्यासस्व' इति मननैकसाध्यनिदिध्यासनविधायकं बृहदारण्यके। एवं महश्चासावीश्वरश्चेति कर्मधारयं विधाय पूर्वाधिकारिलाभादुत्सवाभिन्नोऽन्तर्यामीति फलिते गुर्वभेदार्थं तस्य विद्यातीर्थं चासौ महेश्वरश्चेति पुनरपि प्राग्वदेव तद्विग्रहः कार्यः। शिष्टं तु प्रागनतिरिक्तमेव। अथेदं पदं त्वियमेवास्मदभिमता जीवन्मुक्तिरित्यादिप्रागुपन्यस्तमूलकारादिवचनध्वनितवैचारिकपञ्चम्यादिभूमिकापन्नगौणविद्वत्संन्याससंपन्नोत्तमाधिकारिपरतयाऽपि विवरणीयम्। तद्यथा—विद्यायाः प्रागुक्तायास्तीर्थं क्षेत्रमुत्पत्तिस्थानमेतादृशो योऽयमुक्तरूपत्वादेवोत्तमाधिकारित्वेन महान्स ईश्वरः प्रारब्धपरिसमाप्त्यवधिप्रतिभासमानदृश्यविषयकखकार्ष्ण्यवत्तुच्छत्वानुसंधानसमर्थो येनेति तथा। इतः परं योगिपरमहंसाख्यमुख्यविद्वत्संन्यास्यभिधोत्तमोत्तमचरमाधिकारिपरतयाऽपि योज्यम्। विद्यायास्तीर्थमध्वरः 'तस्यैवं विदुषो यज्ञस्याऽऽत्मा' इतिप्रभृत्यनुवाकेन पूर्वं व्याख्यातो यज्ञस्तस्य यन्महशब्दवाच्यतपोरूपोत्सवस्तस्येश्वरो निरुक्तनिर्विकल्पसमाध्यतिसातत्यनियामक इत्यर्थः।

श्रीनारायणशंकररघुवरगुरुपादपद्मरेणुभ्यः ।
अस्तु नमोऽत्र मम निखिलदुःखध्वंसात्मसुखदेभ्यः ॥ १ ॥
साक्षित्वेनोपलक्ष्येऽद्वितयसदमितप्रत्यगानन्दसंवि-
द्ब्रह्मात्मैक्यामृते क्वाक्तनकृतजनितं दुःखमाध्यात्मिकादि ।
द्वैतस्यैवात्र बाधाद्यमपि च नभःकार्ष्ण्यतुल्यं मृषात्वा-
त्कामी काम्यश्च कामः क नु स मदितरः पूर्ण एवाच्युतोऽस्मि ॥ २ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदद्वैतसच्चिदानन्देन्द्रसरस्वतीशिष्यश्रीमत्पदवाक्यप्रमाणाक्षीरार्णवविहरणश्रीमदद्वैतविद्येन्दिरारमणश्रीमत्षष्ट्युपनामकश्रीनारायणशास्त्रिचरणसरोजराजहंसायमानमानसेन मोडकोपाह्वयेनाच्युतशर्मणा विद्यार्थिना विरचितायां पूर्णानन्देन्दुकौमुद्यां षोडशः प्रकाशोऽयं जीवन्मुक्तिविवेकव्याख्यात्मकः संपूर्णः ।

———